# भट्टिकाव्यम्

मल्लिनाथविरचितटीकया-भरतमल्लिककृत
मुग्धबोधिन्या टीकया च समेतम् ।

द्वितीयखण्डम्

१०—२१

श्रीहरिपद चट्टोपाध्यायेन सम्पादितम् ।



कलिकातानगर्य्याम्

१२नं हरीतकीबागान स्थित-शास्त्रप्रकाशकार्य्यालयात्
सम्पादकेन प्रकाशितम् ।

१९२८ ।

मूल्यं मुद्राद्वयम् ।

रक्षेत्यादि। अथास्य श्रेष्ठस्य विबुधस्य इन्द्रस्य योऽरिः शत्रुः दशाननः तस्य पुरं लङ्कां स कपिः कलहं युद्धम् कृतवान्। रावणस्य गृहम् ज्वलदग्नि दीप्यमानपावकम् बलात् अर्थ-मार्गोऽपि कृतवान् चकार। रावणगृहम् कीदृशं? कलहंसरामं कलहंसेन कादम्बेन राममभिरामं कलहंसान् रमते रमयतीति अन्तर्भूतण्यर्थाद्रमेः ढात्वर्थक्षिति षण्। वा कल-हंसा रमन्तेऽस्मिन्नित्याधारे घञ्। यद्वा बलेन रूपेण अती अतन्त्यो गच्छन्त्यः कलहंसरामा राजपत्न्यो यत्र गृहे तत्तथा। स कीदृशः? रणपण्डितः युद्धकुशलः राममहितः रामेण महितः पूजितः मह पूजं ज्ञानेच्छार्थेत्यादिना वर्त्तमानविहितः क्तो भूतक्तस्य बाधक इति केचित्। वस्तुतस्तु भूते कर्म्मणि क्तः। अनुबन्धादिभ्यो वर्त्तमानक्तेनातीतक्तस्य बाधेन प्रमाणमिति कातन्त्रटीकाकृताप्युक्तम्। अहितः शत्रुः अर्थाद्राक्षसानाम्, अस्य विष्णोः राम-रूपस्य हित इति वा कृतवान्, कृती कार्य्यज्ञः हिंसावान् वा "बलं गन्धे रसे रूपे स्थामनि स्थौल्यसैन्ययोः" इति रभसः। "कलहंसस्तु कादम्बे राजहंसे नृपोत्तमे" इति। "कृतं युगेऽपि हिंसायां पर्य्याप्ते विहिते कृती" इति विश्वः। युक्पादयमकमिति युजोर्द्वितीयचतु-र्थयोः पादयोर्यमकितत्वात्। तथा च—"द्वितीये च चतुर्थे च यमकं यत्र दृश्यते। युक्-पादयमकं तत्तु विज्ञेयं कविपुङ्गवैः" ॥ इति ॥ २

श्रीराम समादृत, युद्धविशारद, रक्षःकुल-रिपु, कृती हनुमान लङ्कापुरी मध्ये कलह संघटन करिलेन एवं कलहंसाभिरम्य रावणपुरी बल-पूर्व्वक अग्निदाने प्रज्वलित करिलेन। २

## पादान्तयमकम्।

निखिलाभवन्नसहसा सहसा
ज्वलनेन पूः प्रभवता भवता।
वनिताजनेन वियता वियता
त्रिपुरापदं नगमिता गमिता ॥ ३

अन्वयः। सहसा भवता प्रभवता ज्वलनेन असहसा वियता वियता वनिताजनेन नगम् इता निखिला पूः त्रिपुरापदं गमिता अभवत् ॥ ३

मल्लिनाथः। निखिलेति। सहसा हठात् भवता उत्पद्य-मानेन प्रभवता प्रवर्द्धमानेन ज्वलनेन हेतुना सहसा न भवतीति नसहसा हर्षक्षयात् हासरहिता। नञर्थस्य नशब्दस्य सुप्सुपेति समासः। "स्नानहसोर्वा" इत्यप्प्रत्ययः। वियता वियन्मार्गेण वियता दाहभयाद्विविधं गच्छता। विपूर्वादिणः शतृ-प्रत्ययः। वनिताजनेन वनिताभिरुपलक्षिता नगं त्रिकूटाद्रिमिता श्रिता निखिला समस्ता पूर्लङ्का त्रिपुरस्य हरदग्धस्य या आपत् तां तादृगापदमिति निदर्शनालङ्कारः। गमिता प्रापिता अभवद् भूत्। पादान्तयमकम् ॥ ३

भरत: । निखिलेत्यादि । ज्वलनेनाग्निना सहसा तत्क्षणात् निखिला सकला पूर्लङ्का सहसा हास्यसहिता नाभवत् किन्तु सशोकाभवत् हासस्यानन्दकार्य्यत्वात् । ज्वलनेन कीदृशेन ? प्रभवता वृद्धिं गच्छता भवता उत्पद्यमानेन । पू: कीदृशी ? त्रिपुरापदं वनिताजनेन त्रिपुरसम्बन्धिस्त्रीणामापदं विपत्तिं गमिता प्रापिता । स्त्रीजनेन कीदृशेन ? वियता गगनपथेन वियता गच्छता भयात् पलायमानेन, यथा हरशराग्निना सन्दह्यमानेषु त्रिपुरेषु भयाद्वनिता इतोऽन्ततो गच्छन्ति स्म तथा अत्रापीति भाव: । ज्वलनेन त्रिपुरापदं गमिता वनिता जनैर्नोपलक्षितेति केचित् । पुन: कीदृशी ? नगं त्रिकूटपर्वतम् इता प्राप्ता नगेन मिता परिच्छिन्नेति वा । इमंरत्ति वृत्त: विपूर्वादिण: शतृ: वीत ईलवदित्यस्याश इव कान्तिगतिव्याप्तिप्रजनखादने इति । प्रमिताक्षरा नाम वृत्तं, तल्लक्षणं यथा—"प्रमिताक्षरा सजससै: कथिता" इति । पादान्तयमकमिति पादचतुष्टयान्ते यमकितत्वात् ॥ ३

समुৎপন্ন অগ্নি ক্রমশঃ বৃদ্ধিপ্রাপ্ত হইয়া সমুদয় পুরীব্যাপ্ত হইল । পুরী নিরানন্দ হইল । পুরবাসি রাক্ষস রমণীগণ সভয়ে শূন্যপথে ইতস্ততঃ পরি-ভ্রমণ করিতে লাগিল । ত্রিকূটাচল-স্থিত লঙ্কাপুরী যেন দহ্যমান ত্রিপুরাসুর পুরীর ন্যায় বিপন্ন হইল । ৩

## पादादियमकम् ।

सरसां सरसां परिमुच्य तनुं
पततां पततां ककुभो बहुश: ।
सकलै: सकलै: परित: करुणै-
रुदितै: रुदितैरिव खं वित[निचि]तम् ॥ ४

अन्वय: । सरसां सरसा तनुं परिमुच्य बहुश: ककुभ: पततां पततां सकलै: सकलै: करुणै: उदितै: रुदितै: परित: खं विततम् इव ॥ ४

मल्लिनाथ: । सरसामिति । सरसां कासाराणां सरसां आर्द्रां तनुं स्वरूपं परिमुच्य विहाय ककुभो दिश: पततां धावतां पततां पक्षिणां गणानां सकलै: समस्तै: सकलै: मांसै: सविच्छेदैरित्यर्थ: । 'कला स्यान्मूलवृद्धौ च शिल्पादावंशमात्रके' इति विश्व: । करुणै-र्दीनरुदितैरुत्पन्नै: उत्पूर्वादिण: कर्त्तरि क्त: । यद्वा उदितैरुक्तै: । वदे: कर्म्मणि क्त:, यजादित्वात् सम्प्रसारणम् । रुदितै: रोदनै: क्रन्दनै: खमाकाशं विततं व्याप्तमिव । तैरेव व्याप्तमिवेत्यर्थ: । पादादियमकम् ॥ ४

भरत: । सरसामित्यादि । सरसां जलाशयानां सरसाम् आर्द्रां स्निग्धां तनुं शरीरं जलाशयमध्ये परिमुच्य भयात् त्यक्त्वा बहुश: बहून् वारान् ककुभो दिश: पतताम् गच्छताम् पक्षिणाम् उदितै: शब्दितै: खमाकाशं परित: सर्वतो निचितम् व्याप्तं रुदितैरिव क्रन्दितैरिव

मकलः सम्पूर्णः सकलैः अव्यक्तमधुरैः कलशब्दोऽत्र धर्म्मवचनः । किं वा सर्वैः कदितैर्वचनैः अव्यक्तमधुरध्वनियुक्तैरित्यर्थः वाक्समुदायस्यावयवयोगात् करुणैः कारुण्यजनकैः । कीचिन् सरसाम् सम्बन्धिनां पततां सरसाम तनुं परिमृज्य भयात् परिशोष्येत्याहुः । वदं तो यद्दस्वपायोरिति जिः । तोटकनामवृत्तं, तल्लक्षणं यथा—"वद तोटकमब्धिसकार-युतम् ।" पादादियमकमिति चतुर्णां पादानामादौ यमकितत्वात् ॥ ४

পক্ষিকুল সরোবরের সজলস্থান পরিত্যাগ করিয়া নানাদিকে পরিভ্রমণ করিতে লাগিল। তাহাদের করুণ-কূজন-রোদনের ন্যায় আকাশতল পরিব্যাপ্ত হইল। ৪

## पादमध्ययमकम् ।

न च काञ्चन काञ्चनसद्मचितिं
न कपिः शिखिना शिखिना समयौत् ।
न च न द्रवता द्रवता परितो
हिमहानकृता न कृता क्व च न ॥ ५

अन्वय । कपिः काञ्चन काञ्चनसद्मचितिं शिखिना शिखिना न न समयौत् । क्व च परितः न न द्रवता द्रवता हिमहानकृता क्व च न कृता ॥ ५

मल्लिनाथः । न चेति । कपिः काञ्चन काञ्चिदपि काञ्चन-सद्मचितिं सौवर्णगृहरचनां शिखिना ज्वालावता शिखिना अग्निना न न समयौत् किन्तु समयौत् मिश्रितवान् । यु मिश्रणे लङ् । "उतो वृद्धिर्लुकि हलि" इति वृद्धिः । परितः सर्वतो न न द्रवता किन्तु द्रवता गच्छता संक्रामता हिमहानकृता द्रवत्वप्रतिपन्नशैत्य-नाशकारिणा शिखिना द्रवस्य भावो द्रवता द्रवीभावश्च क्व च न क्वाचिदपि न न कृता कृतैव । अदग्धमद्रुतं च काञ्चनसद्म नासी-दित्यर्थः । पादमध्ययमकम् ॥ ५

भरतः । न चेत्यादि । कपिर्हनुमान् काञ्चन काञ्चनसद्मचितिं सौवर्णगृहसंहतिम् शिखिना अतिशयितशिखायुक्तेन जाज्वल्यमानेन शिखिना वह्निना न समयौत् इति न अवश्यमेव समयौत् मिश्रितवान् । युल् मिश्रणे घौः रपिद्वस्युतोऽद्वेरिति त्रिः । अभि-धानात् विभक्त्यन्तात् किमश्चिन्नाविप्येते । हिमहानकृता वह्निना परितः सर्वतो न च न द्रवता अपि तु गच्छता सता क्वचन कुत्रापि काञ्चनसद्मचितेर्द्रवता द्रवत्वम् न कृता अपि तु कृतैव । द्रु गतौ शतः, द्रवस्य भाव इति ता, हिमस्य हानम् नाशम् करोतीति क्विप्, हान-मिति जहातेरनटि रूपम् । पादमध्ययमकमिति चतुर्णां पादानां मध्ये यमकितत्वात् ॥ ५

হনুমান শিখাময় অগ্নির সহিত সমুদয় কাঞ্চন-নির্ম্মিত গৃহের সংযোগ করিয়া দিলেন। হিমনাশী অগ্নি সর্ব্বত্র ব্যাপ্ত হইয়া কাঞ্চন-গৃহ সকল দ্রবীভূত করিতে লাগিল। ৫

## चक्रवालयमकम्।

अवसितं हसितं प्रसित मुदा
विलसितं ल[ह]सितं स्मरभासितम्।
न समदाः प्रमदा हतसम्मदाः
पुरहितं विहितं न समीहितम्॥ ६

अन्वयः। हसितं प्रसितं मुदा विलसितं स्मरभासितं लसितं अवसितं, तथा प्रमदा. समदा. न हतसम्मदाः समीहितं पुरहितं न विहितम्॥ ६

मल्लिनाथः। अवसितमिति। हसितं हासः प्रसितं प्रसक्तं मुदा निमित्तेन विलसितं विजृम्भणं तथा स्मरभासितं मदनजनितं लसितं विकारश्चेति सर्वमवसितमवसन्नम्। स्यतेः कर्त्तरि क्तः। "द्यतिस्यतिमास्थामित्ति किति" इतीत्वम्। तथा प्रमदाः स्त्रियः समदा न किं तु नष्टमदा जाता इत्यर्थः। हतसम्मदा नष्टहर्षाश्च समीहितं तत्कालापेक्षितं पुरहितमग्निनिर्वापणादिहितकृत्यं च न विहितम्। चक्रवालयमकम्।—"पदानामवसाने तु सर्वेषां तुल्यवर्णता। प्रतिपादं भवेद्यत्र चक्रवालं तदुच्यते॥" इति लक्षणात्॥ ६

भरतः। अवेत्यादि। मुदा हर्षेण यद्धसितं हास्यं प्रसितम् अत्यन्तप्रवृत्तमासीत् तदवसितं विनष्टम् तत्रत्यलोकानामप्रमुदितत्वात्। षोय नाशे अकर्म्मकत्वात् गत्यर्थाकर्मकेत्यादिना कर्त्तरि क्तः, दोषोमास्थामिति ङि:, प्रसितमिति षिञ्गञ् बन्धे इत्यस्य रूपम्। किञ्च मुदा यत् विलसितं विलासः शृङ्गारचेष्टितं स्मरेण कामेन भासितम् उद्दीपितं लसितं संश्लिष्टमासीत् तदप्यवसितमिति सम्बन्धः। लषश्लिषिक्रोडेष्वसितमिति पाठे विलसितमल्पीभूतम्। प्रमदाश्च स्त्रियो न समदाः न मदर्पाः यतो हतसम्मदा नष्टहर्षा जाताः। घञलनट इति सम्पदन्। यत्र पुरहितं नगरानुकूलं समीहितं कर्त्तुमिष्टं तन्न विहितं नानुष्ठितम्। चक्रवालयमकमिति मण्डलाकारेण यमकितत्वात्तथा हि सर्वेषां पदानाम् अन्त्यवर्णानां सदृशतया नेमिवदवस्थितत्वात् मध्यस्य वर्णस्य च विसदृशस्य नाभिवदवस्थितत्वात् मण्डलाकारता। लक्षणं यथा—"पदानामवसाने तु सर्वेषां तुल्यरूपता। प्रतिपादं भवेद्यत्र चक्रवालं तदुच्यते॥" इति॥ ६

সদা প্রবৃত্ত হর্ষ হাসি নিবৃত্ত হইল। হর্ষ-লসিত সুরত-চেষ্টা প্রশমিত হইল। প্রমদাগণ দর্পহীন হইল। পুরীর অগ্নিনির্ব্বাণাদি কোন হিতানুষ্ঠান হইল না। ৬

## समुद्गयमकम्।

**समिद्धशरणा दीप्ता देहे लङ्का मतेश्वरा।**
**समिद्धशरणादीप्ता देहेऽलङ्कामतेश्वरा॥ ७**

अन्वय:। समिद्धशरणा दीप्ता मतेश्वरा, समिद्धशरणादीप्ता देहे अलङ्कामतेश्वरा लङ्का देहे (हनूमता)॥ ७

मल्लिनाथ:। समिद्धेति। समिद्धशरणा दीप्तगृहा अत एव दीप्ता प्रकाशा मतेश्वरा अभिमतस्वामिका समिध्यन्त इति समिद्धा अग्नयस्तेषां शरणैरग्निहोत्रगृहैरादीप्ता उज्ज्वला देहे देहविषये अलङ्कामतायां पर्य्याप्तमनोरथत्वे ईश्वरा सम्पादनसमर्था सङ्कल्पोपनीताखिलशरीरसुखसाधनेत्यर्थ:। ईदृशी लङ्का देहे दग्धा। दह भस्मीकरणे इत्यस्मात् कर्म्मणि लिट्॥ "अत एकहल्—" इत्यादिना एत्वाभ्यासलोपौ॥ समुद्गयमकम्॥ ७

भरत:। समिद्धेत्यादि। लङ्का देहे दग्धा अर्थात् हनूमता, कर्मणि ठी। कीदृशी देहे अभ्यन्तरभागे समिद्धशरणा उज्ज्वलगृहा "शरणं गृहरक्षित्रो:" इत्यमर:। अत एव दीप्ता शोभावती मतेश्वरा मतो ज्ञात ईश्वरो महादेवो यस्यां, तत्रान्यदेवस्य नामापि न ज्ञायते इति भाव:। मत: पूजित इति वा। पुन: कीदृशी ? समिद्धशरणादीप्ता समिधो दधातीति आदन्तत्वात् हनजनादिति ड:, किं वा समिधो जुहोतीति तेनैव गमादित्वात् ड:। समिद्धो मुनि: तं शृणन्ति हिंसन्तीति समिद्धशरणा राक्षसा: शॄ शृगि हिंसने कभावेऽसौ इति कर्त्तर्य्यनट् नन्द्यादित्वात् वा। तान् मानदानाभ्यामादीपयतीति कर्त्तरि क्विप्। समिद्धशरणादीप् रावण: तेन ताय्यते पाल्यते इति कर्मणि क्विप्। तायृङ पालनसन्तत्यो: य्वोर्लोपोऽहल्य य इति यलोप:। समिद्धशरणादीपी रावणस्य पालनीयेत्यर्थ:। किं वा समिद्धानां दीप्तिमतां देवादीनां शरणेन हिंसनेन अदीपं दीप्त्यभावं तायते पालयति सन्तनुते वेति भावे क्विप्। दीपनं दिविति भावे क्विप् पश्चान्नञ्समास:। अलङ्कामतेश्वरा अलङ्कामतायां यथेष्टेच्छायाम् ईश्वरा सर्वेच्छाया: सम्पादयित्रीत्यर्थ:। अलमत्यर्थ: कामोऽस्य अलङ्काम: तस्य भावोऽलङ्कामता तस्यामीश्वरेति सप्तमीसमास:। वरप्रत्ययान्तादीश्वरशब्दात् स्त्रियामत आदित्वाप् भवत्येव। औणादिकवरट्प्रत्ययान्तात्तु ईप्प्रत्यय इति बोध्यं श्रीपतिस्वरसात्। नदादावीश्वरशब्द विभाषया पठन्त्यन्ये। शोणादिरयमित्यपरे। यद्वा लङ्काभि: कुलटाभिर्मत: पूजित: ईश्वरो यत्र। यद्वा अलमत्यर्थे कामत ईषन्मत ईश्वरो यत्र कोरीषदर्थे इति कुशब्दस्य कादेश:। "लङ्का रक्ष:पुरीशाखाडाकिनीकुलटासु च" इति विश्व:। समुद्गयमकमिति द्वयोरर्द्धयो: सम्पुटाकारेण यमकितत्वात्। तथा च रुद्रभट्ट:—"अर्द्धं पुनरावृत्तं जनयति यमकं समुद्गकं नाम" इति, "अर्द्धाभ्यास: समुद्ग: स्यात्" इत्यपि दण्डी॥ ७

যে শোভনা লঙ্কাপুরীর মধ্যস্থ গৃহসকল সর্ব্বদা সমুজ্জ্বল; যে পুরীতে সর্ব্বত্র ত্রিলোচন-

তত্র মাত্র আলোচিত হয়,—সম্বৎপাণি ঋষিকুল-বিধ্বংসী রক্ষঃকুল উৎসাহবর্দ্ধনকারী রাবণ-ভুজ প্রতিপালিতা এ হেন পুরী, বানরদ্বারা দগ্ধ হইল। ৭

## काञ्चीयमकम्।

पिशिताशिनामनुदिशं स्फुटतां
स्फुटतां जगाम परिविह्वलता।
ह्वलता जनेन बहुधाचरितं
चरितं महत्त्वरहितं महता ॥८

अन्वयः। अनुदिशं स्फुटतां पिशिताशिनां परिविह्वलता स्फुटतां जगाम। महता ह्वलता जनेन बहुधा आचरितं चरितं महत्त्वरहितम् ॥ ८

मल्लिनाथः। पिशितेति। अनुदिशं प्रतिदिशं दिशि दिशीत्यर्थः। "अव्ययीभावे शरत्प्रभृतिभ्यः" इत्यव्ययीभावसमासान्तष्टच् प्रत्ययः। स्फुटतां प्रभज्य धावतां पिशिताशिनां राक्षसानां परिविह्वलता वैक्लव्यं स्फुटतां स्फुटत्वं जगाम। पलायनेन भीरुत्वं व्यक्तं जातमित्यर्थः। तथा महता ह्वलता चलता जनेन बहुधा आचरितं चरितं महत्त्वरहितं भवेत्। महतोऽपि चापले महदपि चरितं हीनं स्यादित्यर्थः। काञ्चीयमकम् ॥ ८

भरतः। पिशितेत्यादि। पिशिताशिनां राक्षसानां परिविह्वलता व्याकुलता स्फुटतां व्यक्ततां जगाम। किं कुर्वताम्? अनुदिशं दिशि दिशि स्फुटतां पलायनेन विकाशं गच्छतां स्फुटशि विकाशे। अनुशब्देन वीप्सायामव्ययीभावे शरदिपाठय इति अप्रत्ययः। महता शौर्य्यादिगुणयुक्तेनाप्यपरेण जनेन ह्वलता चलता महत्त्वरहितं माहात्म्यविवर्जितं चरितं चेष्टितं बहुधा बहुप्रकारैः आचरितं कृतं भयात्। ह्वलह्वल चाले। काञ्चीयमकमिति रसनाकारेण यमकितत्वात्। तथा च—"एकस्यान्तेऽपरस्यादौ सदृशं दृश्यते यदि। तत्काञ्चीयमकं नाम व्याहृतं कविपुङ्गवैः॥" इति। एतदेव दण्डिना सन्दष्टयमकम् उक्तम्। तथाहि—"सन्दष्टयमकस्थानमन्तादी पादयोर्द्वयो"रिति ॥ ८

নানাদিকে পলায়মান রাক্ষসগণের ব্যাকুলতা ব্যক্ত হইল। মহৎ ব্যক্তিগণও বিচলিত হইলে তাঁহাদের বহুপ্রকার আচরিত উৎকৃষ্ট চরিত্র হীন হইয়া যায়। ৮

## यमकावलिः।

न गजा नगजा दयिता दयिता
विगतं विगतं ललितं ललितम्।

प्रमदाप्रमदा महता महता-
मरणं मरणं समयात् समयात् ॥ ६

अन्वयः । नगजाः दयिताः गजाः न दयिताः, विगतं विगतं, वलितं वलितं प्रमदा अप्रमदाः महता महतां अरणं मरणं समयात् समयात् ॥ ६

मल्लिनाथः । नेति । नगजा गिरिसम्भवा दयिताः प्रिया गजा न दयिता न रक्षिताः । दयतिरत्र रक्षणार्थः । विगतं पक्षिगतिरपि विगतं विरतम् । वलितं प्राणिचेष्टितं च वलितं विगतम् । प्रमदा स्त्री । जातावेकवचनम् । अप्रमदा अविद्यमानहर्षा जाता । महता प्रवृद्धेन अग्निना महतां शूराणामरणं रणरहितं मरणं दुर्मरणं समयात् कालवशात् समयात् संयातं सम्प्राप्तम् । संपूर्वाद्-यातेर्लङ् । यमकावलिः ॥ ६

भरतः । न गजेत्यादि । गजा हस्तिनो न दयिता न रक्षिताः । अदयङ् वहणे गतौ वधे दानेऽवने । कीदृशाः ? नगजाः पर्वतजाः तेनोत्कृष्टा अत एव दयिता इष्टाः । परञ्च विगतं वीनां पक्षिणां गतं गमनं विगतं विनष्टम् अग्निदग्धपक्षत्वात् । ललितमीप्सितं वस्तु हारभेदो वा ललितं चलितं भयाकुलजनसंसर्गादन्यत्र गतमित्यर्थः । ललितं हारभेदे स्यादीप्सिते चलितेऽपि च" इति विश्वः । प्रमदा नारी अप्रमदा प्रमदरहिता हर्षशून्या इत्यर्थः, प्रमत्तमदा वा । आमहता रोगपीडितेव इवशब्दार्थोऽत्र गम्यते । अमक रोगे । यद्वा घञ् अमेन गमनेन हता पीडिता । यद्वा अमेन दाहेन हाहाकारशब्देन वह्निशब्देन वा हता व्याकुला अम गतौ शब्दे । महतां शूराणाम् अरणं युद्धरहितं मरणं समयात कालवशात् समयात् सम्प्राप्तम् । यातेर्लङ् । यद्वा महतां जनानाम् अह खेदेऽद्भुते निश्चये वा तां प्रमदा समया समीपे समयात् कालेन युद्धरहितं मरणम् आत् आगतम् अत सातत्यगमने इत्यस्मात् आङ्पूर्वात् क्विप् । स्त्रियं हित्वा यतो न गच्छन्तीत्यर्थः । यमकावलीति यमकमाला । तथा हि—"पदेषु यत्र सर्वेषु सादृश्यं दृश्यते यदि । यमकावलिरुद्दिष्टा शिष्टा यमककोविदैः ॥" इति ॥ ६

তৎকালে গিরি-সম্ভূত প্রিয় গজ সকলও রক্ষিত হইল না। আকাশগামী পক্ষিগণেরও গতিরোধ হইল। প্রাণিগণের চেষ্টাও রহিত হইল। নারীগণ হর্ষ-হীন হইল এবং কালবশে প্রজ্বলিত অগ্নিদ্বারা বীরগণের বিনা যুদ্ধে মৃত্যু হইতে লাগিল। ৯

अयुग्मपादयमकम् ।

न वानरैः पराक्रान्तां महद्भिर्भीमविक्रमैः ।
न वा नरैः पराक्रान्तां ददाह नगरीं कपिः ॥ १०

अन्वयः । महद्भिः भीमविक्रमैः वानरैः पराक्रान्तां नरैः वा न पराक्रान्तां नगरीं लङ्कां कपिः ददाह ॥ १०

मल्लिनाथ:। नेति। महद्भिर्भीमविक्रमैर्वानरैः न पराक्रान्तां तादृशैर्नरैर्मानुषैर्वा न पराक्रान्तामनाक्रान्तां नगरीं लङ्कां कपिर्ददाह। नरवानराक्रमणादर्वाक् स्वयमेक एव ददाहेत्यर्थः। अयुग्मपादयमकम्॥ १०

भरत:। नवेत्यादि। कपिर्हनूमान् नगरीं ददाह दग्धवान्। नगरीं कीदृशीं? वानरैर्वालिसुग्रीवादिभिर्न पराक्रान्ता न गता सर्वैर्मनुष्यै: कार्त्तवीर्य्यादिभि: न पराक्रान्ता न विगृहीता किं वा वानरैर्मनुष्यभिन्नै: देवयक्षादिभिरपि नवा पराक्रान्ता न च विगृहीताम्। कीदृशै:? महद्भिर्महाप्रमाणैर्भीमविक्रमैर्भीमवीर्य्यै: शिवतुल्यपराक्रमैर्वा। अयुक्पादयमकमिति, अयुजो: प्रथमतृतीययोर्यमकितत्वात्॥ १०

যে লঙ্কাপুরী ভীমবিক্রমশালী শ্রেষ্ঠ নর বা বানরগণ কর্ত্তৃক কখন আক্রান্ত হয় নাই, সেই লঙ্কা হনুমান্ একাকী দগ্ধ করিলেন। ১০

पादाद्यन्तयमकम्।

द्रुतं द्रुतं वह्निसमागतं गतं
महीमहीनद्युतिरोचितं चितम्।
समं समन्तादपगोपुरं पुरं
परैः परैरप्यनिराकृतं कृतम्॥ ११

अन्वय:। चितं वह्निसमागतं द्रुतं द्रुतम् महीं गतं, अहीनद्युतिरोचितं परैः परैः अपि अनिराकृतं पुरम् समं अपगोपुरं समन्तात् कृतम्॥ ११

मल्लिनाथ:। द्रुतमिति। चितं हिरण्येष्टकचितमत एव वह्निसमागतमग्निसंयुक्तं सद्द्रुतं शीघ्रं द्रुतं विलीनमत एव महीं गतं मह्यां स्रुतमहीनतयान्यूनतया द्युत्या रोचितं दीपितं परैरुत्कृष्टैः परैः शक्रादिशत्रुभिरप्यनिराकृतं पुरं समन्तात्समं समतलमपगोपुरं गोपुरशून्यं कृतम्। पादाद्यन्तयमकम्॥ ११

भरत:। द्रुतमित्यादि। पुरं लङ्कां समन्तात् सर्वत: समं भूमितुल्यं कृतम् उच्चानां द्रुतत्वात्। कीदृशं? द्रुतं शीघ्रं द्रवीभूतं यतो वह्निसमागतम् अग्निसंयुक्तं महीं भूमिं गतं प्रवाहेण प्राप्तं अहीनद्युतिरोचितम् अहीनया उत्कृष्टया द्युत्या दीप्त्या रोचितं शोभितम् अहीनद्युतिना रावणेन रोचितं अभिलषितमिति केचित्। चितं स्वर्णगृहादिभिर्व्याप्तम् अत एव वह्नियोगे द्रवत्वमुक्तम्। अपगोपुरम् अपगतपुरद्वारं परैः उत्कृष्टैरपि परैः शत्रुभि: इन्द्रादिभि: अनिराकृतम् अनभिभूतं "द्रुतं शीघ्रे विलीने च विद्राणे चाभिधेयवत्" इति विश्व:। पादाद्यन्तयमकमिति पादस्यादावन्ते च यमकितत्वात्॥ ११

রাবণ বাঞ্ছিত অজীন-প্রভ স্বর্ণপুরী অগ্নিসংযোগে শীঘ্র গলিত হইয়া ভূতলে পড়িতে লাগিল, যে পুরী পূর্ব্বে অতি প্রবল শত্রুরাও আক্রমণ করিতে পারে নাই, আজ সেই পুরী সর্ব্ব দিকে দ্বারশূন্য ও সমতল হইয়া গেল। ১১

मिथुनयमकम् ।

नश्यन्ति ददर्श वृन्दानि कपीन्द्रः ।
हारीण्यबलानां हारीण्यबलानाम् ॥ १२

अन्वयः। कपीन्द्रः हारीणि हारीणि अबलानां अबलानाम् वृन्दानि नश्यन्ति (सन्ति) ददर्श ॥ १२

मल्लिनाथः। नश्यन्तीति। कपीन्द्रो हारिणी मुक्ताहारीणि मनोहारीण्यबलानाम् अनाथानाम् अबलानां स्त्रीणां नश्यन्ति मिथो विश्लिष्यन्ति वृन्दानि ददर्श। मिथुनयमकम्। यत्र षडक्षर-पादं तनुमध्यावृत्तं तत्र मिथुनमिति लक्षणात् ॥ १२

भरतः। नश्यन्तीत्यादि। कपीन्द्रो हनुमान् अबलानां स्त्रीणां वृन्दानि समूहान् ददर्श दृष्टवान्। कीदृशानि? नश्यन्ति नाशं प्राप्नुवन्ति पलायमानानि वा। हारीणि हारयुक्तानि हारीणि मनोहारीणि ग्रहादित्वात् णिन्। अवश्यं हरन्तीति आवश्यके णिनिरिति परः। कीदृशानाम् अबलानाम्? अविद्यमानरक्षकाणाम् अतिकृशानां वा। तनुमध्याच्छन्दः, लक्षणं यथा—'त्यौ चेत्तनुमध्या।' मिथुनयमकमिति पादद्वयस्य चक्रवाकयुगलवत् स्थितत्वात् ॥ १२

হনুমান দেখিলেন, মুক্তাহার-ধারিণী মনোরমা অনাথিনী রমণীগণ পলায়ন করিতেছে বা বিনাশ প্রাপ্ত হইতেছে। ১২

वृन्तयमकम् ।

नारीणामपनुनुदुर्न देहखेदा-
न्नारीणाममलसलिला हिरण्यवाप्यः ।
नारीणामनलपरीतपत्रपुष्पान्
नारीणामभवदुपेत्य शर्म वृक्षान् ॥ १३

अन्वयः। आरीणामलसलिलाः हिरण्यवाप्यः नारीणां देहखेदान् न अपनुनुदुः। अरीणाम् नारीणां अनलपरीतपत्रपुष्पान् वृक्षान् उपेत्य (स्थितानां) शर्म न अभवत् ॥ १३

मल्लिनाथः। नारीणामिति। आरीणान्यास्तुतानि। रिणातेः स्वादित्वान्निष्ठानत्वम्। तान्यमलानि च सलिलानि यासां ता हिरण्यवाप्यो हिरण्मयदीर्घिका नारीणां स्त्रीणां देहेषु खेदान्

सन्तापात्तापमनुनुदुस्तासामपि क्वाथत्वादिति भावः। किं चारीणा-मरिसम्बन्धिनीनाम्। अरिशब्दात् "तस्येदम्" इत्यण्प्रत्यये "यस्येति च" इति लोपे "टिड्ढाणञ्—" इत्यादिना ङीप्। नारीणां स्त्रीणा-मनलपरीतान्यग्निदग्धानि पत्रपुष्पाणि येषां तान् वृक्षानुपेत्य स्थितानामिति शेषः। अन्यथा भिन्नकर्तृकत्वे क्त्वानुत्थानात्। शमं सुखं नाभवत्। पत्रदाहे छायाभावादिति भावः। वृन्तयमकम् ॥१३

भरतः। नारीणामित्यादि। हिरण्मवाप्यः सुवर्णस्थलनिर्मितदीर्घिका नारीणां स्त्रीणां देहखेदान् अग्निसन्तापजनितान् न अपनुनुदुः न अपनीतवत्यः। हिरण्मवाप्यः कीदृश्यः? आरीणामलसलिलाः आरीणं द्रुतम् अमलं निर्मलं सलिलं स्वर्णजलं यासु अग्नितेजसा स्वर्णघटिततीरस्य द्रुतत्वात् स्वर्णजलं तत्र जातमित्यर्थः। आरीङ्य क्षरणे आङ्पूर्वात् क्तः, लूत्वाद्योरिति नः। किं वा शुष्कत्वादारीणम् ईषद्गतं जलं यासु रीगी वधे गतौ गत्यर्थात् कर्त्तरि क्तः, ल्वादित्वात् क्तस्य नः णत्वञ्च। आरीणाम् अरिसम्बन्धिनीनां तासां नारीणां वृक्षान् उपेत्य समीपे गत्वा स्थितानां शमं सुखं नाभवत् न जातं स्थितानामित्य-ध्याहारात् समानकर्तृकता। वृक्षान् कीदृशान्? अनलपरीतपत्रपुष्पान् अनलेनाग्निना परीतं व्याप्तं पत्रञ्च पुष्पञ्च येषां तान् अत एव न शमं। नारीणां कीदृशानां? नारीणाम् आपो नारा इति प्रोक्तास्तत्र भवानां तत्रौ वा आगतानां वरुणलोकादानीतानामित्यर्थः। आरीणामिति अरिशब्दात् तस्येमा इति अः। शमं नाभवदित्यत्र पूर्वतो नञनुषज्यते। केचित् अरीणां शत्रूणां हिरण्मवाप्य इति पूर्वत्र योजयन्ति, नारीणां जलभवानामिति न व्याचक्षते तन्मते परार्द्धेऽपि नञ् विद्यते। क्वचित्तु पुष्पान्नारीणामिति न इयसंयोगवत् पाठो दृश्यते। तत्र पूर्वोक्तव्याख्यायां न नञनुषङ्गस्य विद्यमानत्वात्। केचित्तु आङ्-पूर्वादर्त्तेरौणादिक इप्रत्ययः। आ समन्तात् रीणां गच्छन्तीनामित्याहुः। प्रहर्षिणीच्छन्दः, लक्षणं यथा—"त्र्याशाभिर्मनजरगाः प्रहर्षिणीय" मिति। वृन्तयमकमिति प्रतिपादं पुष्प-फलस्येव मूलिवृन्तवदवस्थितत्वात् तथा हि "पादादौ सदृशं यस्य प्रतिपादं प्रदृश्यते। तद्वृन्त-यमकं नाम कथ्यते कविपुङ्गवै" ॥ इति ॥ १३

স্বর্ণময় দীর্ঘিকার নির্ম্মল জল উত্তপ্ত ও শুষ্ক হওয়ায় নারীগণের দেহের সন্তাপ দূর করিতে পারিল না। এবং তাহারা অগ্নি দগ্ধ পত্র-পুষ্প বৃক্ষ সকল আশ্রয় করিয়াও শান্তি লাভ করিতে পারিল না। ১৩

पुष्पयमकम् ।

अथ लुलितपतत्त्रिमालं रुग्णासनबाणकेशरतमालम्।
स वनं विविक्तमालं सीतां द्रष्टुं जगामालम् ॥ १४

अन्वयः। अथ सः अलं सीतां द्रष्टुं लुलितपतत्त्रिमालं रुग्णासनबाणकेशरतमालं विविक्तमालं वनं जगाम ॥ १४

मल्लिनाथः। अथेति। अथ नगरदाहानन्तरं स हनूमानलं

सीतां द्रष्टुं लुलितपतत्रिमालं विश्लिष्टपक्षिपङ्क्ति रुग्णा भग्ना असनादयो वृक्षविशेषा यस्मिंस्तद्विविक्तमालमसङ्कीर्णपङ्क्ति वनमशोकवनं जगाम पुष्पयमकम् ॥ १४

भरतः । अथेत्यादि । अथ दाहानन्तरं स हनुमान् अलं पर्य्याप्तं सीतां द्रष्टुं वनम् अशोकवनिकां जगाम । वनं कीदृशं? लुलितपतत्रिमालं लुलिता चलिता पतत्रिणां पक्षिणां माला पङ्क्तिर्यत्र, यद्यपि छन्दःशास्त्रे सानुस्वारस्य गुरुत्वमनुशिष्टं तथापि "तथा पादान्तगोऽपि वा" इति वचनात्तस्य लघुत्वात् प्रथमपादे द्वादशमात्रा भवन्ति, किन्तु 'भवति नेह विषमे ज' इत्यार्य्यायां प्रायिकं तृतीयगणस्यात्र मध्यगुरुत्वात् मात्रागणादौ छन्दोऽजीनलघुच्छटघोऽजो विषम इत्यत्र नञः प्रशंसापरत्वमिति टीकाकृतोक्तम् । नागधमत्तो यपञ्चपस षोडशेन हो डगुरुमजस्स गुब्भिणीए गुरुवहि आगही टंमिअआसेइ इत्यनेन अपाशम्प्योक्तत्वात् न तु विषमस्थजगणे लक्षणशतैरभूता गाथा भवतीति । वस्तुतः पत्रिमालमिति पाठः । मध्ये तकारपाठो लेखकप्रमादात् । रुग्णा भग्ना असनादयो यत्र वने, असनः पीतसालः, बाणो झिण्टीविशेषः, "केशरं हिङ्गुलि प्रोक्ता केशरी नागकेशरे । सिंहजटायां किञ्जल्कपुन्नागबकुलेष्वपी"ति विश्वः । तमालः स्वनामख्यातः । विविक्ताः पृथग्भूता मालाः स्रजः पङ्क्तयो यत्र तत्तथा "विविक्तः स्यादसम्पृक्ते विविक्तः शुभपूतयोः । चारुवद्धर्म्मिते धीरैर्विविक्तं रहसि स्मृत" मिति विश्वः । पुष्पयमकमिति प्रतिपादान्ते वृन्तोपरि पुष्पवत् स्थितत्वात् ॥१४

অনুবাদ। লঙ্কা দগ্ধের পর হনুমান্ সীতাদেবীকে দেখিবার নিমিত্ত অত্যন্ত ব্যস্ত হইয়া চকল পক্ষীসমাকুল তমাল-নাগ-কেশর-অসন-বাণাদি বৃক্ষসমাচ্ছন্ন এবং ছিন্ন ভিন্ন পুষ্পমালালঙ্কৃত অশোক-বনে গমন করিলেন। ১৪

पादादिमध्ययमकम् ।

घनगिरीन्द्रविलङ्घनशालिना
वनगता वनजद्युतिलोचना ।
जनमता ददृशे जनकात्मजा
तरुमृगेण तरुस्थलशायिनी ॥ १५

अन्वयः । घनगिरीन्द्रविलङ्घनशालिना तरुमृगेण वनगता वनजद्युतिलोचना जनमता तरुस्थलशायिनी जनकात्मजा ददृशे ॥ १५

मल्लिनाथः । घनेति । घनगिरीन्द्राणां महाशैलानां विलङ्घने शालत इति तच्छालिना तरुमृगेण हनुमता वनमशोकवनं गता वनजस्य जलजस्येव द्युतिर्ययोस्ते लोचने यस्याः सा । "न क्रोडादिबह्वचः" इति ङीषप्रतिषेधः । जनेषु मता विदिता गुणैः प्रशस्तेत्यर्थः । भूते क्तः । यद्वा जनमता मतजना इष्टस्वजनेति बहुव्रीहिः । आहिताग्न्यादित्वान्निष्ठायाः परनिपातः । अन्यथा "मतिबुद्धि—"

इत्यादिना वर्त्तमाने क्तः। पक्षे "क्तस्य च वर्त्तमाने" इति षष्ठ्यां "क्तेन च पूजायाम्" इति समासप्रतिषेधः स्यात्। तरुस्थलशायिनो वृक्षमूलशायिनो जनकात्मजा सीता ददृशे दृष्टा। पादादियमकम्॥ १५

भरतः। घनेत्यादि। तेन तरुमगेण कपिना तरुस्थलशायिनी जनकात्मजा ददृशे कर्मणि रूपम्। तेन कीदृशेन? घनगिरीन्द्रविलङ्घनशालिना घना निविडा ये गिरीन्द्राः पर्वताः तेषां विलङ्घनं विद्यतेऽस्येति मत्वर्थे शालिन्प्रत्ययो बोध्य इति शाब्दिकाः। यद्वा तेषां विलङ्घनेन शालितुं शोभितं शीलं यस्य शाड् श्लाघायां णिनिः। डलयोरलयोश्चेति ललम्। कीदृशी? वनगता अशोकवनिकास्थिता। पुनः कीदृशी? वनजद्युतिलोचना वने जले जायते इति गमादित्वात् डः। वनजं पद्मं कैरवं वा तस्येव द्युतिर्ययोस्तादृशे लोचने यस्याः सा "वनं सलिलकानने" इत्यमरः। पुनः कीदृशी? जनेन मता ज्ञाता पतिव्रतात्वेन पूजिता वा, न तु जनानामिति षष्ठी, तथाचोक्तं—कारकषष्ठी न समस्यते इति न्यायात्। ज्ञानेच्छापूजेति क्तः, तद्योगे प्राप्तापि षष्ठी न स्यात्, यथाप्राप्तानित्यता च दृश्यत इति न्यायात्। यद्वा वर्त्तमाने क्तो नातीतक्तस्य बाधक इति अतीते वा क्तः। तच चकारात् मन् बोधने धातूनामनेकार्थत्वात् पूजार्थेऽप्यस्य प्रयोगः। आदिमध्ययमकमिति प्रतिपादमादिमध्ययोस्तुल्यत्वात्॥ १५

অনুবাদ। মহা-পর্ব্বত অতিক্রমকারী হনুমান্ অশোকবনস্থিতা পঙ্কজ-লোচনা সর্ব্বজনপূজিতা তরুতলশায়িনী জনকনন্দিনী সীতাকে দেখিলেন। ১৫

विपथयमकम्।

कान्ता सहमाना दुःखं च्युतभूषा।
रामस्य वियुक्ता कान्ता सहमाना॥ १६

अन्वयः। कान्ता दुःखं [च]सहमाना च्युतभूषा रामस्य कान्ता वियुक्ता सहमाना [वर्त्तते इति ददृशे]॥ १६

मल्लिनाथः। सीतामेव विशिनष्टि—कान्तेति। कान्ता कमनीया दुःखं वियोगदुःखमसहमानामृष्यमाणा च्युतभूषा त्यक्तभूषणा वियुक्ता विरहिणी. मानेन सह वर्त्तत इति सहमाना मानिनी। "वोपसर्जनस्य" इति विकल्पाच्च सहस्य सभावः। तनुमध्यावृत्तमुक्तम्। विपथयमकम्॥ १६

भरतः। कान्तेत्यादि। जनकात्मजा सीता कीदृशी ददृशे? कान्ता कमनीया दुःखं वियोगजं सहमाना तदुद्वेगं न करोतीत्यर्थः। च्युतभूषणा अपगतभूषा रामस्य कान्ता प्रियावियुक्ता वियोगिनी सहमाना मानेन चित्तसमुन्नत्या पूजया वा सहिता। विपथयमकमिति पादद्वयादिक्रमात्विपर्येन विमागत यमकितत्वात्। तनुमध्याच्छन्दः॥ १६

অনুবাদ। হনুমান্ কমনীয়া বিয়োগ-দুঃখসহনা নিরলঙ্কারা মানিনী ও বিরহিণী রাম-পত্নীকে দেখিতে লাগিলেন। ১৬

मध्यान्तयमकम्।

इद[मित]मवददुदारं तां हनूमान्मुदारं
रघुवृषभसकाशं यामि देवि प्रकाशम्।
तव विदितविषादो दृष्टकृत्स्नामिषादः
श्रियमनिशमवन्तं पर्वतं माल्यवन्तम्॥ १७

अन्वयः। हनूमान् मुदा आरं ताम् उदारम् इदम् अवदत्—हे देवि। तव विदितविषादः दृष्टकृत्स्नामिषादः (अहं) रघुवृषभसकाशम् अनिशं श्रियम् अवन्तं माल्यवन्तं पर्वतं प्रकाशं यामि॥ १७

मल्लिनाथः। इदमिति। हनूमान् मुदा हर्षेणारं द्रुतं तां सीतामुदारं महार्थमिदं वक्ष्यमाणमवदत्। तदेवाह—हे देवि! तव विदितविषादो विदितत्वद्दुःखः, आमिषं मांसमदन्तीत्यामिषादा राक्षसाः। "अदोऽनन्ने" इति विट्प्रत्ययस्यासरूपत्व "वासरूपेऽस्त्रियाम्" इत्यबाधपक्षे कर्मण्यण्प्रत्ययः। दृष्टाः कृत्स्ना आमिषादा येन सः, एवं कृतकृत्योऽहं रघुवृषभसकाशं रामसमीपमनिशं श्रियं शोभामवन्तं पुष्णन्तं माल्यवन्तं नाम पर्वतं प्रकाशं व्यक्तं यथा तथा यामि यास्यामि। भविष्यत् सामीप्ये लट्। मध्यान्तयमकम्॥ १७

भरतः। मितमित्यादि। हनूमान् मुदा हर्षेण मितमल्पाक्षरमुदारं गम्भीरार्थं ताम् अवदत्। किमित्याह—हे देवि! अरं शीघ्रं रघुवृषभस्य रघुश्रेष्ठस्य सकाशं समीपं माल्यवन्तं पर्वतं प्रकाशं यथा स्यात् तथा यामि। तव विदितौ ज्ञातौ विषादौ येन विषादस्य नित्यसापेक्षत्वात् समासः। दृष्टः कृत्स्नः सकल आमिषादो राक्षसो येन स तथा, अनिशं सततं श्रियं शोभाम् अवन्तं माल्यवन्त नाम पर्वतम्। मध्यान्तयमकमिति मध्यान्तपादयोर्यमकितत्वात्। मालिनीवृत्तम्॥ १७

অনুবাদ। হনুমান্ সহর্ষে সীতাদেবীকে এই উদার বাক্য বলিলেন,—হে দেবি! আমি তোমার দুঃখ অবগত হইয়াছি। সমস্ত রাক্ষসকে দেখিয়াছি। এক্ষণে চিরশোভিত মাল্যবান পর্ব্বতবাসী রঘুশ্রেষ্ঠ রামের নিকটে শীঘ্রই প্রকাশ্যভাবে গমন করিব॥ ১৭

गर्भयमकम्।

उदपतद्वियदप्रगमः परै-
र्रुचितमुन्नतिमत्पृथुसत्त्ववत्।

रुचितमुन्नतिमत्पृथुसत्त्ववत्-
प्रतिविधाय वपुर्भयदं द्विषाम् ॥ १८

अन्वयः। रुचितमुत (स) नतिमत् पृथुसत्त्ववत् द्विषां भयदं वपुः प्रतिविधाय अप्रगमः परैः रुचितम् उन्नतिमत् पृथुसत्त्ववत् (ईदृशं) वियत् उदपत् ॥ १८

मल्लिनाथः। उदिति। रुचिर्ताभिष्टजनेषु मोदत इति रुचितमुत्। क्विप्। स हनूमान् नतिमत् सीतापादयोः प्रणतिमत् पृथु विशालं सत्त्ववत्सत्त्वसम्पन्नं द्विषां भयदं वपुः प्रतिविधाय कृत्वा अत एव न प्रगम्यत इत्यप्रगमो दुरासदः सन्। "ग्रहवृदृनिश्चिगमश्च" इति कर्म्मण्यप्प्रत्ययः। परैरुत्कृष्टैः सिद्धचारणादिभी रुचितं दीप्तमुन्नतिमदुच्छ्रायवत्पृथु महत् सत्त्ववत् खेचरानेकप्राणिमदीदृशं वियदाकाशं उदपतदुत्पपात। गर्भयमकम् ॥ १८

भरतः। उदपतदित्यादि। कपिर्वियदाकाशमुदपतत् उत्पपात। कीदृशः? परैः शत्रुभिः अप्रगमोऽनभिभवनीयः। न प्रगम्यतेऽसौ अप्रगमः, यद्वा परैः सह नास्ति प्रकृष्टं गमनं यस्येत्यर्थः, अतिशीघ्रगामित्वात्। कीदृशं? वियतः परैः उत्कृष्टैः अन्तरीक्षगामिभिः रुचिरं दीपितं, पुनः कीदृशम्? उन्नतिमत उच्छ्राययुक्तं पृथुसत्त्ववत् महाप्राणियुक्तम् उन्नतिमत् इति सत्त्वविशेषणं वा। किं कृत्वोदपतदित्याह—द्विषां शत्रूणां भयदं वपुः, रुचिरमुत रुचिरान् इष्टान् मोदते इति क्विप्। नतिमत् तदानीं देवेषु कृतप्रणामत्वात्। गर्भयमकमिति मध्यपादद्वयस्य यमकितत्वात ॥ १८

অনুবাদ। অপরাজেয় প্রীতিকর হনুমান্ সীতাপদে প্রণত হইয়া শত্রুভয়প্রদ বিশাল দেহ ধারণ করিয়া সিদ্ধজনশোভিত মহাপ্রাণিপূর্ণ উচ্চ আকাশে উত্থিত হইলেন। ১৮

## सर्वयमकम्।

बभौ मरुत्वान्विकृतः समुद्रो
बभौ मरुत्वान्विकृतः समुद्रः।
बभौ मरुत्वान्विकृतः समुद्रो
बभौ मरुत्वान्विकृतः समुद्रः ॥ १९

अन्वयः। वि-कृतः समुद्रः मरुत्वान् (सन्) बभौ। (तथा सति) विकृतः मरुत्वान् स-मुद्रः (सन्) बभौ। समुद्रः मरुत्वान् विकृतः (सन्) बभौ। मरुत्वान् विकृतः समुद्रः (सन्) बभौ ॥ १९

मल्लिनाथः। बभाविति। विविधं कृतं करणं वनभङ्गनगरदाहादिकं यस्य स विकृतो विक्रान्त इत्यर्थः। मुद्रयाभिज्ञानरत्नेन

मह वर्त्तत इति समुद्रो मरुद्वायुरस्यास्ति जनकत्वेनेति मरुत्वान् मारुतिः। "झयः" इति मतुपो मकारस्य वत्वम्। बभौ बभासे। इति प्रथमपादार्थः। अथ विकृतो विप्रकृतो रावणेन परिभूतो मरुतो देवा अस्य सन्तीति मरुत्वानिन्द्रः। 'इन्द्रो मरुत्वान्' इत्यमरः। मुदं रातीति मुद्रो हर्षप्रदो हनूमान्। "आतोऽनुपसर्गे कः"। तेन सह वर्त्तत इति समुद्रः सन् बभौ। चिराद्रावणावमानार्थकमिवलाभादिन्द्रोऽप्यमन्दमानन्देत्यर्थः। एष द्वितीयपादार्थः। अथ समुद्रोऽब्धिर्मरुत्वान् वायुमान् हनूमल्लङ्घनवेगवात इत्यर्थः। अत एव विकृतः क्षुभितः उद्वेलः सन् बभौ। सोऽपि तेन हृष्ट इत्यर्थः। इति तृतीयपादार्थः। अथारम्भकत्वेन प्रेरकत्वेन वा मरुदस्यास्तीति मरुत्वान्मेघो विकृतः कपिवेगवाताहत्या क्षुभितो विस्तृतः समुद्रः समुद्रकल्पो बभौ। इति चतुर्थपादार्थः। सर्वयमकम्॥ १८

भरतः। बभावित्यादि। मरुत् वायुः पितृत्वेन वेगजनितत्वेन वा विद्यते यस्य स हनूमान् बभौ शुशुभे इत्यन्वयः। कीदृशः? विविधानि कृतानि वनभङ्गलङ्कादाहादीनि येन सः। समुद्रः मुद्रया प्रत्यभिज्ञानेन चूडामणिना सहितः, "मुद्रा प्रत्ययकारिणी" इति कोषः। इति प्रथमपादार्थः। तस्मिंस्तथाभूते सति मरुत्वान् इन्द्रो बभौ तुतोष, धातूनामनेकार्थत्वात् भातिरत्र तोषे। कीदृशः? विकृतः पराभवात् विगता क्रिया जगत्परिपालनरूपा यस्य सः। समुद्रः मुद्राख्याभिः अप्सरोभिः सहितः इति द्वितीयपादार्थः। समुद्रः सागरोऽपि बभौ चुकोप धातूनामनेकार्थत्वात् भातिरत्र कोपे। पुनःपुनर्वानरेण लङ्घनात्। कीदृशः? मरुत्वान् मरुतो देवा विद्यन्ते यस्य सः। "मरुतौ पवनामरौ" इत्यमरः। अत एव विकृतः अतिक्रान्तमर्यादः। वीन् पक्षिणः कृणत्ति वेष्टने इति विकृतः, कृती च वेष्टे प्रवर्तन कः, अतिक्रान्तमर्यादत्वात्। इति तृतीयपादार्थः। वाचकत्वेन मरुच्छब्दो विद्यतेऽस्य मरुत्वान् वायुर्बभौ वाति स्म, भातिरत्र गत्यर्थः। केचित्तु मरुद्वायुर्वान् गच्छन् बभौ सन्धेरनित्यत्वात् न तस्य दत्वम्। यदुक्तं—"सन्धिरेकपदे नित्यो नित्यो धातूपसर्गयोः। सूत्रेष्वपि तथा नित्यः स चान्यत्र विभाषितः॥" इत्याहुः। स्वमते सन्धेरनित्यत्वम्, पाघ्राध्मा डौरित्यत्र औकरणेनैवेष्टसिद्धौ डित्करणेन ज्ञापितमिति देवीदासचक्रवर्त्तिनोक्तम्। कीदृशः? विकृतः मन्दगतित्वात् पूर्वस्मादन्यथाभूतः। समुद्रः समुत् सहर्षो रोऽग्निर्यस्मात् वायोरग्निसखत्वात्। किं वा स इति विशेष्यपदम्, स लोकपालत्वेन प्रसिद्धो वायुरित्यर्थः। मुदं प्रीतिं गात्रसंसर्गात् राति ददातीति मुद्रः। इत्ययं चतुर्थपादार्थः। सर्वत्र भातेर्दीप्त्यर्थत्वमेव युक्तमिति। केचित् नैकं पदं द्विः प्रयोज्यं प्रायेणैकार्थत्वेन तथापि भातिर्नानार्थत्वेन प्रयुक्तो न दोषावह इत्याहुः। सर्वयमकमिति पादचतुष्टयस्य तुल्यरूपत्वात्। कण्ठाभरणेन महायमकमिदमुक्तम्। तथा हि—"एकाकारचतुष्पादं महायमकमुच्यते" इति। रुद्रटमते

पङ्क्तिरिति नाम। तदुक्तम्—"अन्योन्यं पश्चिमयोरावृत्त्या पादयोर्भवति पुच्छः। सर्वैः सार्द्धं युगपत् प्रथमस्य जायते पङ्क्तिः।" इति॥ १९

অনুবাদ। লঙ্কাদাহী বনভঙ্গকারী হনুমান্ সীতাদত্ত অভিজ্ঞান মণি পাইয়া শোভা পাইতে লাগিলেন। তাহাতে রাবণপরাজিত দেবরাজ ইন্দ্র হনুমান্‌কে বন্ধুরূপে পাইয়া আনন্দিত হইলেন। হনুমানের গতিবেগে চঞ্চল ক্ষুব্ধ জলধি শোভা পাইতে লাগিল। হনুমানের গতিজনিত বায়ুবেগে সঞ্চালিত মেঘ সমুদ্রের ন্যায় প্রকাশিত হইয়াছিল॥ ১৯

## महायमकम्।

'अभियाता वरं तुङ्गं भूभृतं रुचिरं पुरः।
कर्कशं प्रथितं धाम ससत्त्वं पुष्करे चणम्॥
अभियाता वरं तुङ्गं भूभृतं रुचिरं पुरः।
कर्कशं प्रथितं धाम ससत्त्वं पुष्करेचणम्॥२०

अन्वयः। (हनुमान्) वरं तुङ्गं रुचिरं कर्कशं प्रथितं धाम ससत्त्वं भूभृतम् पुरः पुष्करे चणम् अभियाता। वरं तुङ्गं रुचिरं पुरः कर्कशं प्रथितं धाम ससत्त्वं पुष्करेचणं भूभृतम् अभि याता॥ २०

मल्लिनाथः। अभियातेति। वरं श्रेष्ठं तुङ्गं शृङ्गोन्नतं रुचिं रातीति रुचिरं प्रीतिदम्। "आतोऽनुपसर्गे कः"। कर्कशं सानुमत्वात्काठिनं प्रथितं विस्तृतं धाम सिद्धविद्याधरादीनां विहारस्थानं ससत्त्वमनेकप्राणियुक्तं भूभृतं महेन्द्राद्रिं यत्राङ्गदादयः प्रतीक्षमाणाः स्थिता इति भावः। पुरो लङ्कापुरात् पुष्करे व्योम्नि चणमभियाता आकाशमार्गे चणादायाता इत्यर्थः।

अन्यच्च।—वरमभीष्टं सर्वलोकप्रियं तुङ्गं गुणोन्नतं रुचिरं सुन्दरं पुरः पुरोभागे वक्षसि कर्कशं भाग्यलक्षणत्वादिति भावः, प्रथितं प्रख्यातं धाम सर्वाश्रयं तेजोमयं वा, ससत्त्वं सत्त्वसम्पन्नं सात्त्विकं वा, पुष्करेक्षणं पुण्डरीकाक्षं भूभृतं राजानं राममभि रामं प्रति याता। पादार्धावृत्तिवच्छ्लोकावृत्त्या यमकं महायमकमुच्यते॥ २०

भरतः। अभीत्यादि। अर्थात् अत्र हनुमान् कर्ता भूभृतं राजानं रामम् अभियाता अभिगमिष्यति ऌटो रूपम्। यद्वा भूभृतम् अभियाता आभिमुख्येन गन्ता हनुमान् बभौ भाति स्म इति पूर्वेणान्वयः। क्वचिदपवादविषयेऽप्युत्सर्गोऽपि प्रवर्त्तते इति क्रुदयोगेऽपि कर्मणि द्वितीया। किं वा शीलार्थत्वं विवक्षितम्, किं वा अभियोगे द्वितीया। भूभृतम्

कीदृशं ? वरं श्रेष्ठं तुङ्गं सर्वेषाम् उपरि स्थितं महाकुलीनत्वात् । रुचिरं सर्वाङ्गसुन्दरं पुरीऽग्रे वक्षःस्थले कर्कशं महापुरुषत्वात् कठिनं लोमशं वा प्रथितं लोकविख्यातं धाम गृह गुणानाम् इत्यर्थः । तेजःस्वरूपं वा, ससत्त्वं सपराक्रमं सत्त्वगुणयुक्तं वा पुष्करेक्षणं पुष्करवत् पद्मवत् ईक्षणे लोचने यस्य तम्। किं वा युद्धार्थं पुष्करं शरम् ईक्षते पश्यति इति नन्द्यादित्वात् ल्युः । अभि थादि । तेन हनूमता पुरी लङ्कायाः सकाशात् यत्र भद्रादयः सन्ति तं भूभृत पर्वतम् अभि लक्ष्यीकृत्य याता गच्छता पुष्करे आकाशे धाम तेजः तत्र मुहूर्त्तं प्रथित विस्तारितम् यातेति यातेः शतृ । भूभृतं कीदृशं ? वरं व्रियतेऽसौ वरं कर्मण्यप् । देवादिभिः भद्रादिभिर्वा वृतमित्यर्थः । किं वा वरं श्रेष्ठं, किं वा भूभृतम् अभि लक्ष्यीकृत्य या गच्छता, यातीति या कर्त्तरि क्विप् । धीरालोपीऽस्यचाविति टापरं आलोपः । अतावरम् अतति सातत्येन गच्छतीति अतो वायुः सूर्यादिर्वा । अत सातत्यगमने पचादित्वादच् । आवृणोतीत्यावरः । अत्रापि पचादित्वादच् । अतस्यावरमिति समासः । पर्वतविशेषणं । यतस्तुङ्गम् अत्युच्चं । किं वा भूभृतम् अता गच्छता अततीति अत् कर्त्तरि क्विप् । अभिया अविद्यमानभयेन हनूमद्विशेषणम् । आवरम् आवृणोति अर्थात् सूर्यादीन् तुङ्गत्वात् इत्यावरं पूर्ववत् । पुनःकीदृशःपर्वतं रुचिरं तुष्टिदं रुचिं राति ददाति इनजनादिति डः । कर्कशं कठिन पाषाणमयत्वात् । ससत्त्वं प्राणिभिर्हिंस्रादिभिर्युक्तम् । "पुष्करं पङ्कजे व्योम्नि पय करिकराग्रयोः । औषधद्वीपविहगतीर्थराजोरगान्तरे । पुष्करं तूर्य्यवक्त्रे च काण्डे खड्गफलेऽपि च ॥" इति विश्वः । महायमकमिति आद्य श्लोकस्य द्वितीयश्लोकेन यमकितत्वात् । तथा च रुद्रटः—"अर्द्धं पुनरावृत्तं जनयति यमकं समुद्गकं नाम ।" श्लोकस्तु महायमकमिति ॥ २०

अनुवाद । হনুমান্ লঙ্কাপুর হইতে আকাশে উঠিয়া শ্রেষ্ঠ উন্নত শৃঙ্গ সুন্দর কঠিন বিশাল সিদ্ধবিদ্যাধরাদির বিহারভূমি বহুজীবপূর্ণ মহেন্দ্র পর্ব্বতে গমন করিলেন এবং নরশ্রেষ্ঠ সর্ব্বগুণোন্নত সুন্দর দূরবক্ষ লোকবিখ্যাত সর্ব্বলোকাশ্রয় সত্ত্বগুণশালী কমললোচন রাজা রামচন্দ্রের নিকটে উপস্থিত হইলেন ॥ २०

## आद्यन्तयमकम् ।

### चित्रं चित्रमिवायातो विचित्रं तस्य भूभृतम् ।
### हरयो वेगमासाद्य सन्त्रस्ता मुमुहुर्मुहुः ॥ २१

अन्वयः । चित्रं विचित्रं चित्रमिव भूभृतम् आयातः तस्य वेगम् आसाद्य हरयः सन्त्रस्ताः मुहुः मुमुहुः ॥ २१

**मल्लिनाथः । चित्रमिति । चित्रमद्भुतं विचित्रं गैरिकादिनानावर्णमत एव चित्रमिवालेख्यमिव स्थितम् । 'आलेख्याश्चर्ययोश्चित्रम्' इत्यमरः । भूभृतं पर्वतम् आयाता आगच्छतः । यातेर्लटः शतरि ङस् । तस्य हनूमतो वेगमासाद्य प्राप्य हरयः कपयः सन्त्रस्ता मुहुः पुनः पुनर्मुमुहुर्मोहं गताः । श्लोकाद्यन्तयमकम् । इति यमकाधिकारः शब्दालङ्कारभेदः ॥ २१**

भरतः। चित्रमित्यादि। तस्य हनूमतः चित्रम् अद्भुत वेगं यत्नं आसाद्य प्राप्य प्लवगः कपयः मन्दलाः सन्तो मह्वारं वारं समुद्रमाहम् उपगताः। तस्य कीदृशस्य? अगतं पर्वतम् आयातः आगच्छतः यानैः यत्नः। कीदृशं भूभृतं? विचित्रं गैरिकादिभिर्नानावर्णम् अत एव चित्रमिव आलेख्यमिव। आयन्तयमकमिनि श्लोकस्यादावन्ते च यमकितत्वात्॥ २१

অনুবাদ। বানরগণ চিত্রিত পটের ন্যায় গৈরিকাদি নানাবর্ণে রঞ্জিত বিচিত্র পর্ব্বতের অভিমুখে আগমনকারী হনুমানের গতিবেগে ভীত হইয়া বারংবার মূর্চ্ছিত হইতে লাগিল॥ ২১

गच्छन् स वारीण्यकिरत् पयोधेः
कूलस्थितांस्तानि तरूनधुन्वन्।
पुष्पास्तरांस्तेऽङ्गसुखानतन्वन्
तान् किन्नरा मन्मथिनोऽध्यतिष्ठन्॥ २२

अन्वयः। सः गच्छन् पयोधेः वारीणि अकिरत्, तानि कूलस्थितान् तरून् अधुन्वन्, ते अङ्गसुखान् पुष्पास्तरान् अतन्वन्, तान् मन्मथिनः किन्नराः अध्यतिष्ठन्॥ २२

मल्लिनाथः। अर्थालङ्कारः। गच्छन्निति। स हनूमान् गच्छन् वेगेन पतन् पयोधेर्वारीण्यकिरद्विक्षिप्तवान्। तानि विक्षिप्तवारीणि कूले स्थितांस्तरूनधुन्वनकम्पयन्। ते धूता वृक्षा अङ्गानां सुखयन्तीति सुखान् सुखकरान्। पचाद्यच्। पुष्पास्तरान् कुसुमतल्पान्यतन्वन्। तान् पुष्पास्तरान् मन्मथिनः कामिनः किन्नरा अध्यतिष्ठन्नधिष्ठितवन्तः। अत्र वारावक्षेपादीनां पूर्वपूर्वस्योत्तरोत्तरं प्रति क्रमेण कारणत्वात् कारणमालाख्योऽलङ्कारः। तथाच सूत्रम्—"पूर्वपूर्वस्योत्तरोत्तरहेतुत्वे कारणमाले"ति॥ २२

भरतः। गच्छन्नित्यादि। स हनूमान् गच्छन् वेगजेन वायुना पयोधेर्वारीणि अकिरत कॄ य विक्षेपे। तानि वारीणि विक्षिप्तानि सन्ति कूलस्थितान् तरून् अधुन्वन् अकम्पयन् धुञ कम्पे। ते तरवः कम्पिताः सन्तः पुष्पाणामास्तरणानि अतन्वन् विस्तारितवन्तः। तन दुञ् विस्तारे। अङ्गसुखान् शरीरे सुखजनकान् मदुस्पर्शत्वात् तान् पुष्पास्तरान् किन्नरा मन्मथिनः कामिनः सन्तः अध्यतिष्ठन् अध्यवात्सुः कर्मक्रियेत्यादिना कस्य द्वत्वम्। आदिदीपकमिव गच्छन् इत्यादौ उपादानात् तदेव सर्वां क्रियां दीपयति अन्यासां तन्मूलत्वात्। अकिरत् इति यत्रादौ दत्तं तेनैव अन्यासामपि क्रियाणाम् उद्दीपनादिति केचित्। तथाहि अकिरदिति क्रियापदेन कीर्णानि वारीणि इति योजना। एवं सर्वत्र॥ २२

অনুবাদ। পবনপুত্র বেগে গমন করিয়া সমুদ্রের জলরাশি বিক্ষিপ্ত করিলেন। ঐ জলরাশি তীরস্থিত তরুগণকে কম্পিত করিল। সেই কম্পিত বৃক্ষসকল সুখকর পুষ্পাস্তরণ বিস্তার করিল এবং কামাসক্ত কিন্নরবৃন্দ সেই পুষ্পাস্তরণে উপবেশন করিল॥ ২২

स गिरिं तरुषण्डमण्डितं
समवाप्य त्वरया लतामृगः
स्मितदर्शितकार्य्यनिश्चयः
कपिसैन्यैर्मुदितैरमण्डयत् ॥ २३

अन्वयः। सः लतामृगः (हनूमान्) तरुषण्डमण्डितं गिरिं त्वरया समवाप्य स्मितदर्शितकार्य्यनिश्चयः (सन्) मुदितैः कपिसैन्यैः (आत्मानं) अमण्डयत् ॥ २३

मल्लिनाथः। स इति। स लतामृगो हनूमान् तरुषण्डमण्डितं गिरिं महेन्द्रं त्वरया समवाप्य स्मितेन हासेन दर्शितकार्य्यनिश्चयः सूचितकार्य्यसिद्धिः सन् अत एव मुदितैर्हृष्टैः कपिसैन्यैरमण्डयदात्मानमलंचकार, सद्यस्तैः परिवेष्टितोऽभूदित्यर्थः। तत्तस्य मण्डनमिति भावः। अत्र स्मितदर्शितेत्यादिपदार्थस्य विशेषणगत्या चतुर्थपादार्थे हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्। 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्' इति लक्षणात्। २३

भरतः। स गिरिमित्यादि। स लतामृगः कपिर्हनूमान् प्रयोजककर्त्ता, अङ्गदादिभिः अध्यासितं गिरिं त्वरया वेगेन समवाप्य मुदितैर्हृष्टैः कपिसैन्यैः प्रयोज्यैः अमण्डयत् शोभयामास। गिरिमिति काकाक्षिगोलकन्यायेन उभयत्र सम्बध्यते। मण्डादिकमण्डिधातो प्रेरणे णिः। किं वा स लतामृगः कर्त्ता त्वरया गिरिं समवाप्य कपिसैन्यैः करणभूतैः अमण्डयत् शोभते स्म, चौरादिकमण्डिधातो रूपम्। किं मण्डिभूषे। गिरिम् कीदृश? तरुषण्डैः वृक्षसमूहैर्मण्डितम्। कपिसैन्यानां मुदितत्वे हेतुमाह—स्मितेति। स्मितेन ईषद्धास्येन दर्शितो ज्ञापितः कार्य्यस्य सीतादर्शनरूपस्य निश्चयो येन। "षण्ड पद्मादिसङ्घाते "षण्डः स्यात गोपतावपि" इति विश्वः। सुन्दरीच्छन्दः। तल्लक्षणं यथा— "अयुजोर्यदि सौ जगौ युजोः सभरालगौ यदि सुन्दरी तदा" इति। अत्र 'वाक्यभेदाभावेऽपि अमण्डयत इति अन्तिमक्रियापदेन सम्पूर्णवाक्योपकारात् अन्तदीपकम्। किं वा गिरिम् अवाप्य ं स्वयम् अमण्डयत् कपिसैन्यैश्च अमण्डयदिति वाक्यभेदोऽत्र मन्तव्यः ॥ २३

অনুবাদ। সেই শাখামৃগ সত্বর মহেন্দ্র পর্ব্বতে গমন করিয়া কার্য্যসিদ্ধিব্যঞ্জক ঈষৎ হাস্য করিল এবং আনন্দিত বানরসৈন্যগণ বেষ্টিত হইয়া শোভা পাইতে লাগিল। ২৩

গরুড়ানিলতিগ্মরশ্ময়ঃ

गरुड़ानिलतिग्मरश्मयः
पततां यद्यपि सम्मता जवे।
अचिरेण कृतार्थमागतं
तममन्यन्त तथाप्यतीव ते ॥ २४

अन्वयः। पततां जवे गरुड़ानिलतिग्मरश्मयः सम्मता यद्यपि, (तथापि) ते अचिरेण कृतार्थम् आगतं तम् अतीव अमन्यन्त ॥ २४

मल्लिनाथः। गरुड़ेति। पततां गच्छतां मध्ये जवे वेगविषये गरुड़ानिलतिग्मरश्मयस्तार्क्ष्यवायुसूर्य्याः सम्मताः यद्यपि प्रसिद्धा एवेत्यर्थः। 'यद्यपीत्यवधारणे' इति केशवः। तथापि ते वानरा अचिरेणाविलम्बेन कृतार्थं कृतकार्यं सन्तमागच्छन्तं हनूमन्तमतीवामन्यन्त तेभ्योऽप्यधिकजवं मेनिर इत्यर्थः। तदधिकजवत्वेऽचिरेण कृतार्थमागतमिति विशेषणेन हेतूक्तेः पूर्ववत्पदार्थहेतुकं काव्यलिङ्गमलङ्कारः। तन्मूला च तदधिकजवासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिरित्यलङ्काराङ्गाङ्गिभावेन सङ्करः। अत्र गच्छन्नित्यादिश्लोकत्रये क्रमादाद्यन्तमध्यावसानेषु क्रियापदप्रयोगादाद्यन्तमध्यदीपकानीत्युक्तं जयमङ्गलाकारेण तत्परममङ्गलं लक्षणापरिज्ञानात्। अत्र "प्रस्तुताप्रस्तुतानां च सामस्त्यं तुल्यधर्मतः। औपम्यं गम्यते यत्र दीपकं तन्निगद्यते ॥" इति लक्षणगन्धस्याप्यसंभवादित्यलं वृथालापैः ॥ २४

भरतः। गरुड़ेत्यादि। गरुड़वायुसूर्य्या यद्यपि पततां गच्छतां मध्ये जवे वेगविषये लोकस्य सम्मता अभिमताः तथापि ते कपयः तं हनूमन्तम् अतीव जववन्तम् अमन्यन्त ज्ञातवन्तः, मन्यतेर्ङ् बोधे। यतोऽचिरेणैव कालेन कृतार्थम् आगतम्। मध्यदीपकमिति सम्मता इत्यस्यामन्यन्तेत्यस्य वा क्रियापदस्य मध्ये निर्दिष्टत्वात्। विद्यासागरस्तु जव इति कारकपदं मध्ये श्रूयमाणम् अतीव इत्यपि दीपयतीति कारकदीपकमिदमित्याह ॥ २४

अनुবাদ। যদি ও দ্রুতগামীদিগের মধ্যে গরুড় পবন ও সূর্য্য শ্রেষ্ঠ, তাহা হইলেও দ্রুত কৃতকার্য্য প্রত্যাগত হনুমানকেই অত্যন্ত বেগশালী মনে করিয়াছিল ॥ ২৪

व्रणकन्दरलीनशस्त्रसर्पः
पृथुवक्षःस्थलकर्कशोरुभित्तिः।
च्युतशोणितबद्धधातुरागः
शुशुभे वानरभूधरस्तदासौ ॥ २५

अन्वयः। व्रणकन्दर-लीनशस्त्रसर्पः पृथुवक्षःस्थलकर्कशोरुभित्तिः च्युतशोणितबद्धधातुरागः असौ वानरभूधरः तदा शुशुभे ॥ २५

मल्लिनाथः। व्रणेति। व्रणाः प्रहारमार्गाः तेषु एव कन्दरेषु दरीषु लीनाः शस्त्राणि बाणा एव सर्पा यस्य सः। पृथुवक्षःस्थल-

मेव कर्कशोरुः भित्तिस्तटं यस्य सः। च्युतं स्रुतं शोणितमेव बद्धो घनीभूतो धातुरागो यस्य सः। असौ वानर एव भूधरोऽद्रिस्तदा शुशुभे। सावयवरूपकम्॥ २५

भरतः। व्रणेत्यादि। असौ वानरस्वरूपभूधरस्तदा वानरमध्यगमनकाले शुशुभे दीप्यते स्म। कीदृशः? व्रणानि शस्त्रक्षतस्वरूपाणि कन्दराणि तेषु लीनाः शस्त्रस्वरूपाः सर्पा यस्य पृथु विस्तीर्णं वक्षःस्थलमेव कर्कशोरुः कठिनोरुः भित्तिः यस्य, शोणितमेव बद्धधातुरागः श्लिष्टगैरिकादिरागः च्युतो यस्य। रूपकमिति व्रणादीनां कन्दरादिभिः इह सादृश्यं न वाच्यं, किन्तु अभेद एव विवक्षितः। स च यद्यपि बाधितः तथापि सादृश्यातिशयव्यञ्जनात् तथात्वं गम्यते। यदुक्तम्—"उपमैव तिरोभूतभेदा रूपकमिष्यते" इति। "उपमानेन यत्तुल्यमुपमेयस्य रूप्यते। गुणानां समतां दृष्ट्वा रूपकस्यैव तद्विदुः॥" इति च। यदि व्रणानि कन्दराणि इव वानरो भूधर इव इत्युपमानसमासे उच्यते तदैतत् एव लुप्तोपमोदाहरणं बोद्धव्यम्। यद्वा उपमानसमासेऽपि रूपकत्वमिति मते उदाहरणमिदम्। तथाच सरस्वतीकण्ठाभरणे—"यदोपमानशब्दानां गौणवृत्तिव्यपाश्रया। उपमेये भवेद्वृत्तिस्तदा तद्रूपकं विदुः॥" इति॥ २५

অনুবাদ। যাহার প্রহার চিহ্নরূপ গহ্বরে শস্ত্ররূপ সর্পসকল বর্ত্তমান রহিয়াছে, যাহার বিশাল বক্ষঃস্থল, কঠিন,উরুদেশ ভিত্তিরূপে শোভা পাইতেছে,এবং ক্ষরিত রক্তসকল গৈরিকাদি ধাতুরাগের ন্যায় অঙ্গে সন্নিহিত রহিয়াছে, তাদৃশ কপিরূপ পর্ব্বত শোভা পাইতে লাগিল। ২৫

चलपिङ्गकेसरहिरण्यलताः
स्फुटनेत्रपङ्क्ति[चारु] मणिसंहतयः।
कलधौतसानव इवाथ गिरेः
कपयो बभुः पवनजागमने॥ २६

अन्वयः। अथ पवनजागमने (सति) चलपिङ्गकेसरहिरण्यलताः स्फुटनेत्रपङ्क्तिमणिसंहतयः कपयः गिरेः कलधौतसानवः इव बभुः॥ २६

मल्लिनाथः। चलेति। अथ पवनजागमने हनूमत्समागमे सति चलाः पिङ्गाः पिशङ्गाः केसराः सटा एव हिरण्यलता येषां ते, स्फुटानि विकासवन्ति नेत्राण्येव चारवो मणिसंहतयो येषां ते। कपयोऽङ्गदादयो गिरेर्हनूमानेव गिरिस्तस्यैव कलधौतसानवः कनकप्रस्था इव बभुरित्युत्प्रेक्षा॥ २६

भरतः। चलेत्यादि। अथानन्तरं कपयोऽङ्गदादयः पवनजस्य हनूमत आगमने बभुः शोभन्ते स्म। तस्यैव गिरेः कलधौतसानव इव स्वर्णसानव इव। "कलधौतं रूप्यहेम्नोः" इति विश्वः। कीदृशाः? पिङ्गलकेशराणि कपिलसटा एव हिरण्यलताः ताः चलाश्चला येषाम्। नेत्रपङ्क्तय एव मणिसंहतयस्ताः स्फुटा उज्ज्वला येषाम्। इदमपि रूपकमेव

केशराणां लतात्वेन नेत्राणां मणित्वेन च रूपणात्, किन्तु कलधौतसानुना विशिष्टत्वाद्-विशिष्टोपमायुक्तमिति ॥ २६

অনুবাদ। অনন্তর হনুমানের আগমনে চঞ্চল পিঙ্গল বর্ণ কেশররূপ স্বর্ণলতাশালী বিকশিত নেত্ররূপ মনোহর মণিসমূহসম্পন্ন বানরবৃন্দ হনুমানরূপ গিরির সুবর্ণময় সানুদেশের ন্যায় বিরাজিত হইল ॥ ২৬

कपितोयनिधीन् प्लवङ्गमेन्दु-
र्मदयित्वा मधुरेण दर्शनेन।
वचनामृतदीधितीर्वितन्व-
न्नकृतानन्दपरीतनेत्रवारीन् ॥ २७

अन्वयः। प्लवङ्गमेन्दुः कपितोयनिधीन् मधुरेण दर्शनेन मदयित्वा वचनामृतदीधितीः वितन्वन् आनन्दपरीतनेत्रवारीन् अकृत ॥ २७

मल्लिनाथः। कपीति। प्लवङ्गमो हनुमानेवेन्दुः कपीनङ्गदादीनेव तोयनिधीन् समुद्रान् मधुरेण मनोहरेण दर्शनेन दर्शनदानेन मदयित्वा हर्षयित्वा वचनान्येवामृतदीधितीरमृतकिरणान् वितन्वन् विस्तारयन्नानन्देन परीतानि प्रवृद्धानि नेत्रवारीणि येषां तानुद्भूतानन्दबाष्पान् क्षुभितजलांश्चाकृत कृतवान्। अत्र वारिद्वयस्याभेदाध्यवसायादतिशयोक्तिः। सा च रूपकोपेतेति सङ्करः ॥ २७

भरतः। कपीत्यादि। प्लवङ्गमो हनुमानेव इन्दुः कपीनेव समुद्रान् मधुरेण प्रेमदर्शनेन मदयित्वा हर्षयित्वा वचनान्येव अमृतदीधितीः सुधासम्बन्धिकिरणान् वितन्वन् युद्धवृत्तान्तबोधकमाह्लादकवचनमुदाहरन् आनन्देन हर्षेण परीतं सञ्जातं नेत्रवारि येषां तान् एवंविधान् अकृत कृतवान्। मदी हर्षग्लपनयोः घटादित्वात् ह्रस्वः। एतच्छेषार्थान्ववसितमवतंसकमिति एतद्रूपकम्, उक्तादन्यः शेषः रूपकादन्य इत्यर्थः। कपितोयेत्यादन्यार्थमनान्दपरीतनेत्रवारीन् अकृत इत्येवंरूपः तेनान्ववसितं युक्तम्, अवतंसकं नाम विसदृशस्यार्थस्याङ्गत्वात्। एतदेवान्यैः खण्डरूपकमित्युक्तम् ॥ २७।

অনুবাদ। হনুমানরূপচন্দ্র কপিসমুদ্রকে মনোরম দর্শনদানে আনন্দিত করিয়া বাক্যামৃত-কিরণ প্রকাশে তাহাদিগকে আনন্দাশ্রু দ্বারা প্লাবিত করিয়াছিল ॥ ২৭

परिखा [खे] दितहृद्य [विन्ध्य] वीरुधः
परिपीतामलनिर्झराम्भसः।
दधुवुर्मधुकाननं ततः
कपिनागा मुदिताङ्गदाज्ञया ॥ २८

अन्वयः । ततः कपिनागाः परिखादितहृद्यवीरुधः परिपीतामलनिर्झराम्भसः मुदितः सन्‌ अङ्गदाज्ञया मधुकाननं दुधुवुः ॥ २८

मल्लिनाथः । परीति । ततो हनूमत्समागमनानन्तरं कपयो नागा इव कपिनागाः कपिश्रेष्ठाः । उपमितसमासः । अत एवोपमालङ्कारः । परिखादितहृद्यवीरुधः परिपीतामलनिर्झराम्भसो विन्ध्याचले जलविहारफलभक्षणापनुन्नश्रमाः सन्त इत्यर्थः । मुदितस्य हृष्टस्याङ्गदस्याज्ञया मधुकाननं मधुवनाख्यं सुग्रीवोद्यानं दुधुवुरिच्छाविहारेणोपदुद्रुवुरित्यर्थः ॥ २८

भरतः । परीत्यादि । ततोऽनन्तरं कपय एव नागा हस्तिनो मुदितस्य हृष्टस्य अङ्गदस्य आज्ञया मधुकाननं सुग्रीवस्योद्यानं दुधुवुः कम्पितवन्तः । मधुवनं भङ्क्त्वा भुक्तवन्त इत्यर्थः । कीदृशाः ? परिखेदिता मर्दिता विन्ध्यपर्वतस्य वीरुधो लता यैः ते । तथा परिपीत निर्मलं निर्झरजलं यैः । नागाः काननं धुन्वन्तीव इति रूपणमङ्गरूपकमित्युक्तं कपिनागा इत्युत्तरार्द्धे रूपितं न तु पूर्वार्द्धे ॥ २८

অনুবাদ। অনন্তর শ্রেষ্ঠ কপিগণ মনোরম লতাসকল ভক্ষণ করিতে লাগিল এবং নির্মল নির্ঝরের জলপান করিতে লাগিল ও আনন্দিত অঙ্গদের আজ্ঞানুসারে মধুবন কাঁপাইয়া তুলিল। ২৮

विटप[पि]मृगविषादध्वान्तनुद्वानरार्कः
प्रियवचनमयूखैर्बोधितार्थारविन्दः ।
उदयगिरिमिवाद्रिं संप्रमुच्याभ्यगात् खं
नृपहृदयगुहास्थं घ्नन् प्रमोहान्धकारम् ॥ २९

अन्वयः । विटपमृगविषादध्वान्तनुत्‌ प्रियवचनमयूखैः बोधितार्थारविन्दः वानरार्कः अद्रिम् उदयगिरिम् इव संप्रमुच्य नृपहृदयगुहास्थं प्रमोहान्धकारं घ्नन् खम् अभ्यगात् ॥ २९

मल्लिनाथः । विटपेति । विटपमृगाणां कपीनां विषादो वैदेह्यदर्शनप्रयुक्तस्तमेव ध्वान्तं नुदतीति तन्नुत् । क्विप् । प्रियवचनैः प्रियसन्देशैरेव मयूखैर्बोधितं ज्ञापितं विकासितं चार्थः कार्यसिद्धिरेवारविन्दं येन स वानरो हनूमानेवार्कोऽद्रिं महेन्द्राद्रिमुदयगिरिमिव संप्रमुच्य नृपस्य रामस्य हृदयमेव गुहा तत्र तिष्ठतीति तत्स्थम् ॥ "सुपि स्थः" इति कः । प्रमोहः शोकमूर्च्छा तमेवान्धकारं घ्नन् हनिष्यन् । सामीप्ये लट् । खमाकाशमभ्यगादुत्पपातेत्यर्थः । उपमागर्भितरूपकम् ॥ २९

भरत:। विटपीत्यादि। स वानरकपोऽर्कं उदयाचलमिव अद्रिं महेन्द्राद्रिं सम्प्रमुच्य खम् आकाशम् अभ्यगात् आभिमुख्येन गतवान्। कीदृश:? विटपिमृगाणां वानराणां यो विषाद: सीतानुपलब्धिजनित: स एव ध्वान्तम् अन्धकारस्तं नुदति अपसारयतीति क्विप्। प्रियवचनरूपैर्मयूखैर्बोधितानि विकाशितानि अर्थरूपाणि सीतोपल अकपाणि पद्मानि येन। नृपस्य रामस्य हृदयरूपायां गुहायां तिष्ठन्तं प्रमोहरूपम् अन्धकारं घ्नन् विनाशयिष्यन्। व र्तमानसामीप्ये वर्त्तमानलोपचारात् शतृ:। एतदपि रूपकम् अन्वर्थोपमायुक्तं ललामकं नाम। तथाहि उदेत्यस्मात् इत्युदय: अपादानेऽल्। स चासौ गिरिश्चेति अनुगतार्थत्व-मुदयगिरिशब्दस्य यौगार्थस्यान्वयात् उदयगिरिमिव इत्युपमा दर्शिता। विषादादीनां ध्वान्त-त्वादिना रूपकम्॥ २९

অনুবাদ। কপিগণের জানকী অদর্শনজনিত বিষাদমোদের বিনাশক প্রীতিকর সংবাদ-রূপ কিরণদ্বারা কার্য্য সিদ্ধিরূপ পদ্মের বিকাশকারী হনুমান্‌রূপ সূর্য্য উদয় গিরির ন্যায় মহেন্দ্র পর্ব্বত পরিত্যাগ করিয়া রামের হৃদয় গুহা হত সীতাশোকরূপ মোহান্ধকার দূর করিতে করিতে আকাশে উত্থিত হইল। ২৯

रघुतनयमगात्तपोवनस्थं
विधृतजटाजिनवल्कलं हनूमान्।
परमिव पुरुषं नरेण युक्तं
समशमवेषसमाधिनानुजेन॥ ३०

अन्वय:। हनूमान् तपोवनस्थं विधृतजटाजिनवल्कलं समशमवेषसमाधिना अनुजेन युक्तं रघुतनयं नरेण युक्तं परं पुरुषम् इव अगात॥ ३०

मल्लिनाथ:। रघ्विति। हनूमांस्तपोवनस्थमन्यत्र बदरीवनस्थं विधृतानि जटाजिनवल्कलानि येन तं, समा: शमवेषसमाधयो यस्य तेनानुजेन लक्ष्मणेन युक्तं रघुतनयं रामं नरेण युक्तं रघुतनयं परम-पुरुषं नारायणमिवागात् प्रापत्। अत्रोपमानोपमेयसमानधर्म-सादृश्यप्रतिपादकशब्दरूपचतुरङ्गयोगात् पूर्णोपमा, तत्रापि साक्षात् सादृश्यप्रतिपादकेवशब्दयोगाच्छ्रौती॥ ३०

भरत:। रघ्वित्यादि। हनूमान् रघुतनयं रामम् अगात् प्राप्तवान्। कीदृशं? तप:-प्रधानं वनं तपोवनं, तत्र स्थितं, विधृतं जटा मृगचर्म वल्कलञ्च येन। समा: तुल्या: शम: शान्तिर्वेशो जटावल्कलादिधारणं समाधिर्ध्यानञ्च यस्य तादृशेन अनुजेन कनीयसा लक्ष्मणेन युक्तं परं नरेण मुनिना युक्तं पुरुषमिव नारायणमिव नरनारायणयो: बदरिकाश्रमे तपश्चर्य्यायां स्थितवात्। पुष्पिताग्रा छन्द:। लक्षणं यथा—"अयुजि न युगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रे"ति। इवोपदेति इवशब्देन उपमाया गम्यमानत्वात्। उपमा-लक्षणं यथा— विरुद्धेनोपमानेन देशकालक्रियादिभि:। उपमेयस्य साम्यं यद्गुणलेशेन

सीमपा ॥" इति ।" अत्र विरुद्धदेशकालक्रियादिगुणयुक्तः पुरुषोत्तम उपमानं, तेन रामस्य उपमेयस्य तपोवनस्थत्वेन विधृतजटत्वेन लक्ष्मणानुचरत्वेन च गुणमात्रेण साम्यात् उपमा। इवशब्द उपमाद्योतकः। तथाच दण्डी—"इववत् वा यथाशब्दा ज्ञेयाः सादृश्यसूचकाः।" इति ॥ ३०

অনুবাদ। হনুমান্ তপোবনস্থিত জটা মৃগচর্ম্ম ও বল্কলধারী সমান শান্তবেশ ও সমাধি সম্পন্ন অনুজযুক্ত রামচন্দ্রকে বদরিকাশ্রমে অর্জ্জুনসহ স্থিত পরম পুরুষ নারায়ণের ন্যায় প্রাপ্ত হইলেন। ৩০

करपुटनिहितं दधत् स रत्नं
परितविरलाङ्गुलिनिर्गताल्पदीप्ति।
तनुकपिलघनस्थितं यथेन्दुं
नृपमनमत्परिभुग्नजानुमूर्धा ॥ ३१

अन्वयः। करपुटनिहितं परितविरलाङ्गुलिनिर्गताल्पदीप्ति रत्नं दधत् (हनुमान्) परिभुग्नजानुमूर्द्धा (सन्) तनुकपिलघनस्थितम् इन्दुं यथा (तथा) नृपम् अनमत् ॥ ३१

मल्लिनाथः। करेति। करपुटे निहितं परितो विरलाभ्योऽङ्गुलिभ्यो निर्गता अल्पदीप्तयो यस्य तद्रत्नमभिज्ञानरत्नं दधत् स हनुमान् परिभुग्नमवनतं जानुनी च मूर्धा च जानुमूर्धं यस्य स सन्। तनावल्पे कपिले पिङ्गले घने मेघे स्थितमिन्दुं यथेन्दुमिव स्थितं हनुमत्सन्निधानादिति भावः। नृपं राममनमत् प्रणतः। अत्रापि पूर्ववत्पूर्णोपमा यथाशब्दप्रयोगाच्छ्रौती ॥ ३१

भरतः। करेत्यादि। परिभुग्ने कुटिलीकृते जानुनी मस्तकश्च यस्य तथाभूतः सन् स हनुमान् नृपं रामम् अनमत् प्रणतवान्। कीदृशः? रत्नं सीताचूडामणिं दधत् धारयन्। कीदृशं? करपुटे निहितम् अपरं परितो विरलाभ्यः अङ्गुलिभ्यो निर्गता अल्पा दीप्तिर्यस्य तथा। अत एव तनुरल्पः कपिलो यो घनो मेघस्तत्र स्थितम् इन्दुं यथा येन रूपेण दधाति तथा रत्नं दधत् इति सम्बन्धः। पूर्णोपमेति यथाशब्देन उपमानस्य गम्यमानत्वात् ॥ ३१

অনুবাদ। করপুটস্থিত চারিদিকে অঙ্গুলি সকল হইতে মন্দ মন্দ জ্যোতিঃ বিকিরণকারী অভিজ্ঞান মণি ধারণ করিয়া অবনত জানু মস্তকে হনুমান্ পিঙ্গলবর্ণ অল্প মেঘস্থিত চন্দ্রের ন্যায় রামচন্দ্রকে প্রণাম করিল। ৩১

रुचिरोन्नतरत्नगौरवः
परिपूर्णामृतरश्मिमण्डलः।

समदृश्यत जीविताशया
सह रामेण वधूशिरोमणिः॥ ३२

अन्वयः। रुचिरोन्नतरत्नगौरवः परिपूर्णामृतरश्मिमण्डलः वधूशिरोमणिः रामेण जीविताशया सह समदृश्यत॥ ३२

मल्लिनाथः। रुचिरेति। उन्नतं महद्रत्नेभ्यो गौरवमुत्कर्षो यस्य सः, रुचिर उज्ज्वलः स चासावुन्नतरत्नगौरवश्चेति वैवक्षिको विशेषणसमासः। आशापक्षे रुचिरा प्रीतिदोन्नतं रत्नेष्विव गौरवमादरो यस्यास्तयेति लिङ्गविभक्तिविपरिणामः। परिपूर्णामृतरश्मेः पूर्णेन्दोरिव मण्डलं यस्य सः। अन्यत्र परिपूर्णममृतममरणमेव रश्मिमण्डलं सारो यस्यास्तयेति पूर्ववद्विपरिणामः। एवंविधो वधूशिरोमणी रामेण कर्त्रा जीविताशयेतः परं जीविष्यामीति मनीषया सह समदृश्यत संदृष्टः तद्वत्सदृष्ट इत्यौपम्यगम्यतायां सहोक्तिभेदोऽलङ्कारः। "सहार्थेनान्वयो यत्र भवेदतिशयान्वितः। कल्पितौपम्यपर्यन्ता सा सहोक्तिरिहेष्यते॥" इति लक्षणात्। अत्र कर्मसाहित्यम्। आशाशिरोमणिसन्दर्शनयोः समीचाचात्प्रस्थानलक्षणयोर्भेदेऽभेदाध्यवसायादतिशयोक्तिमूलम्। अनयोरुभयोरपि प्रकृतत्वाद्वस्तुनः समप्राधान्येऽप्याशायाः सहार्थेनान्वयात् प्रस्तरप्रहरणे शाखायां इव शाब्दमप्राधान्यम्। एतच्च षष्ठीचतुर्थीशाबरे सुव्यक्तं प्रस्तरे शाखाश्रयवादित्यत्रेति संक्षेपः॥ ३२

भरतः। रुचिर इत्यादि। रामेण वध्वाः सीतायाः शिरोमणिः समदृश्यत सन्दृष्टः कर्मणि घी। जीवितोऽस्मीति या प्रत्याशा तया सहगः सहशब्दोऽत्र साहश्यार्थः। उभयसाधर्म्यमाह—रुचिरोन्नतरत्नगौरवः उन्नतं महद्रत्नगौरवं बहुमूल्यत्वादिलक्षणं गुरुत्वाख्यगुणविशेषो वा यस्य स तथा, ततो रुचिरः शोभायुक्तश्चासौ उन्नतरत्नगौरवश्च इति कर्मधारयः। जीविताशापि रुचिं तुष्टिं राति ददातीति रुचिरा। उन्नतरत्नेषु इव गौरवं बहुमाना यस्याम् इति भावः। परिपूर्णस्य अमृतरश्मेः चन्द्रस्य इव मण्डलं वर्तुलाकारत्वं यस्य स तथा, आशापक्षे परिपूर्णम् अमृतम् इव रश्मिमण्डलं यस्या जीविताशायां सत्यां शरीरस्य तेजस्वित्वसम्भवात्। परिपूर्णम् अमृतेन अमरणेन रश्मिमण्डलं यस्याम् इति कश्चित्। सहोपमेति सहशब्देन जीविताशा साहश्यसूचनात् चूडामणिदर्शनेन तस्य जीविताशा जातेति व्यङ्ग्यार्थः॥ ३२

অনুবাদ। মনোরম মহারত্নাধিকগৌরবশালী পূর্ণচন্দ্রমণ্ডল সদৃশ জীবনের আশাস্বরূপ সীতার শিরোমণিকে রামচন্দ্র দেখিতে লাগিলেন। ৩২

अवसन्नरुचिं वनागतं
तमनामृष्टरजोविधूसरम्।
समपश्यदपेतमैथिलिं
दधतं गौरवमात्रमात्मवत्॥ ३३

अन्वयः। (रामः) अवसन्नरुचं वनागतं अनामृष्टरजोविधूसरं अपेतमैथिलिं आत्मवत् गौरवमात्रं दधतं तं (मणिं) समपश्यत्॥ ३३

मल्लिनाथः। अवसन्नेति। अवसन्नरुचिमेकत्र संस्काराभावादन्यत्र विरहदुःखाच्च क्षीणकान्तिमेकत्र वनादशोकवनादागतमन्यत्र वनमागतं प्राप्तम्। अनामृष्टेनानपनुन्नेन रजसा विधूसरं मलिनम्। अपेता मैथिली यस्मात्तमपेतमैथिलिम्। समासान्तविधेरनित्यत्वात् "नद्यृतश्च" इति कप्रत्ययाभावः। "गोस्त्रियोरुपसर्ज्जनस्य" इति ह्रस्वत्वम्। गौरवमात्रं गुरुत्वमात्रं बहुमानमात्रं च दधतं मणिमात्मवदात्मना तुल्यम्, समपश्यत्। "तेन तुल्यं—" इति तुल्यार्थे वतिप्रत्ययः। अत एव धर्म्मिव्यवधानेन सादृश्यप्रतीतेरार्थी तद्धितगा पूर्णोपमा॥ ३३

भरतः। अवेत्यादि। रामः तं शिरोमणिम् आत्मवत् आत्मानमिव समपश्यत् सन्दृष्टवान्। उभयसाधर्म्यमाह—अवसन्नरुचि मन्दप्रभं वैवर्ण्यं च मलिनत्वात् अमार्जनात् वा, आत्मपक्षे मशोकत्वात्। वनागतम् अशोकवनिकायाः समागतं पक्षे पितुः आदेशात् वनम् आयातम्। अनामृष्टरजोविधूसरम् अनामृष्टम् अनपनीतं यत् रजो भूमौ शय्यनात् लग्नं तेन विधूसरं पाण्डरं, धूसरशब्दो दन्तमध्यः "महिषधूसरितः सरितस्तटः" इति प्रयोगात्। अपेतमैथिलिम् अपेता मैथिली यस्मात्, बहुप्रेयसी इति उदाहरणेन ऋतः कप्रत्ययस्य प्रायिकत्वसूचनात् न कप्रत्ययः, "गवावादेः" इति ह्रस्वः। किं वा मैथिल्याः सकाशात् अपेतं भ्रष्टम्, अपेतस्य पूर्वनिपाताऽभिधानात्, राजदन्तादित्वात् इति परः। गौरवमात्रं केवलं गुरुत्वाख्यगुणविशेषं दधतं धारयन्तं न दीपनादि, आत्मपक्षे महात्म्यम्। तद्धितोपमा इति तद्धितसंज्ञकेन "तुल्याप्ये" इति कृतवतप्रत्ययेन सादृश्याभिधानात् एवं कल्पबादयोऽपि सादृश्यसूचकाः, स्वमते तद्धितस्य तसंज्ञा॥ ३३

অনুবাদ। ক্ষীণকান্তি অশোকবন হইতে আগত অপরিষ্কৃত ধূলিধূসরিত সীতাবিমুক্ত গৌরব মাত্রধারী সেই রত্নকে রামচন্দ্র নিজের মত দেখিতে লাগিলেন। ৩৩

सामर्थ्यसम्पादितवाञ्छितार्थ-
श्चिन्तामणिः स्यान्न कथं हनूमान्।

सलक्ष्मणो भूमिपतिस्तदानीं
शाखामृगानीकपतिश्च मेने ॥ ३४

अन्वयः । स समर्थं सम्पादितवाञ्छितार्थः हनूमान् कथं चिन्तामणिः न स्यात् ( इति ) सलक्ष्मणः भूमिपतिः शाखामृगानीकपतिश्च तदानीं मेने ॥ ३४

मल्लिनाथः । सामर्थ्येन स्वशक्त्या सम्पादितवाञ्छितार्थः सम्पादितमनोरथो हनूमान् कथं चिन्तामणिर्न स्यादिति सलक्ष्मणो भूमिपती रामस्तदानीं मणिदर्शनकाले मेने । शाखामृगानीकपतिः कपिसेनापतिः सुग्रीवश्च तथा मेने । चिन्तितार्थदानाच्चिन्तामणिरेवायमित्युत्प्रेक्षा ॥ ३४

भरतः । सामर्थ्येत्यादि । तदानीं तस्मिन् चूडामणिप्राप्तिसमये लक्ष्मणसहितो भूमिपतिः रामः शाखामृगानीकस्य कपिसैन्यस्य पतिः सुग्रीवश्च इति मेने ज्ञातवान् । किम् इत्याह —हनूमान् कथं चिन्तामणिरिव न स्यात् ? स्यादेव,यतः सामर्थ्येन स्वशक्त्या सम्पादितो वाञ्छितार्थो येन । लुप्तोपमा इति इवशब्दस्य गम्यमानत्वात् अनुस्वारात् तथा च काव्यादर्शेण, "लोपे सामान्यधर्म्माणां द्योतकस्य च योपमा । प्रतीयमाने सादृश्ये द्वयोः लुप्तेति तां विदुः" ॥ इति ॥ ३४

অনুবাদ। তখন লক্ষ্মণসহ রামচন্দ্র এবং বানরাধিপতি সুগ্রীব ইহাই মনে করিতে লাগিলেন, স্বকীয় প্রভাবে বাঞ্ছিতাবষয় সম্পাদনে সমর্থ হনুমান্ কেন চিন্তামণি-স্বরূপে গণ্য হইবে না ? । ৩৪

युष्मानचेतन् क्षयवायुकल्पान्
सीतास्फुलिङ्गं परिगृह्य जाल्मः ।
लङ्कावनं सिंहसमोऽधिशेते
मर्त्तुं द्विषन्नित्यवदद्धनूमान् ॥ ३५

अन्वयः । सिंहसमः जाल्मः द्विषन् ( रावणः ) युष्मान् क्षयवायुकल्पान् अचेतन् सीतास्फुलिङ्गं परिगृह्य लङ्कावनं मर्त्तुं अधिशेते—इति हनूमान् अवदत् ॥ ३५

मल्लिनाथः । युष्मानिति । सिंहसमोऽत एव जाल्मोऽसमीक्ष्यकारी श्वापदचेष्टितः इत्यर्थः । द्विषन्नमित्रो रावणः । "द्विषोऽमित्रे" इति शतृप्रत्ययः । युष्मानीषदसमाप्तः क्षयवायुः प्रलयमारुतस्तत्कल्पांस्तद्वदग्निसन्धुक्षकानचेतनजानन् । चितेर्भौवादिकाल्लटः शत्रादेशः । सीता स्फुलिङ्गोऽग्निकण इव तं परिगृह्यादाय लङ्कां वनमिवेत्युभयत्रोपमितसमासः स्पष्टोपमान्तरसाहचर्य्यात् । अत

एवात्रानुक्तेवाच्यौ लुप्तोपमाभेदौ तद्वनं मर्त्तुमधिशेते। स्वावासवने स्फुलिङ्गनिभा सिंह इव त्वयैव वायुना सन्धुक्षिताग्निना तेनैव सह भक्ष्यत इत्यर्थः। इति हनूमानवदत्। अत्र कल्पवादीनां सम-सदृशादिशब्दानां "तेन तुल्यम्—" इति वतेश्च धर्म्मिद्वारा सादृश्य-प्रतिपादकत्वादार्थ्येवोपमा। "तत्र तस्येव" इवेतीवार्थे वतेरिववा-यथादिशब्दानां च साक्षात्सादृश्यबोधकत्वात्तत्प्रयोगे श्रौतीति विवेकः॥ ३५

भरतः। युष्मानित्यादि। हनूमान् इति अवदत्। किम् इत्याह—सिंहसमः सिंह इव आन्मोऽसमीक्ष्यकारी विषन् शत्रुः रावणः सीतां स्फुलिङ्गमिव अग्निकणमिव परिगृह्य युष्मान् रामादीन् चयवायुकल्पान् प्रलयकालसम्बन्धिवायुसदृशान् अचेतन् अजानन् मर्त्तुं प्राणान् त्यक्तुं लङ्कां वनमिव अधिशेते अधिवसति। सिंहोऽपि उग्रत्वात् अन्यमगणयित्वा वने वसति इति सादृश्यम्। समोपमेति समशब्देन उपमाया अभिधानात् एवं निभसदृशादयो द्रष्टव्याः॥ ३५

অনুবাদ। সিংহ সদৃশ বলশালী অবিবেচক শত্রু রাবণ আপনাদিগকে প্রলয়-প্রভঞ্জন সদৃশ বুঝিতে না পারিয়া অগ্নি-স্ফুলিঙ্গ তুল্য সীতাকে গ্রহণ করিয়া নিজ মৃত্যুর জন্যই লঙ্কা-রূপ অরণ্যে বাস করিতেছে॥ ৩৫

अहृत धनेश्वरस्य युधि यः समेतमायो धनं
तमहमितो विलोक्य विबुधैः कृतोत्तमायोधनम्।
विभवमदेन निह्नुतह्रियातिमात्रसम्पन्नकं
व्यथयति सत्पथादतिगताथवेह सम्पन्न कम्॥३६

अन्वयः। समेतमायः यः युधि धनेश्वरस्य धनं अहृत, विबुधैः (सह) कृतोत्तमायो-धनं निह्नुतह्रिया विभवमदेन अतिमात्रसम्पन्नकं तं विलोक्य अहं इतः। अथवा इह अति-गता सम्पत् कं सत्पथात् न व्यथयति?॥ ३६

मल्लिनाथः। अहृतेति। समेताः सङ्गता माया यं स समेत-मायो मायावी यो रावणो युधि युद्धे धनेश्वरस्य कुबेरस्य धनमहृत हृतवान्। हरतेः कर्त्तरि लुङि तङि "ह्रस्वादङ्गात्" इति सिच्-सलोपः। विबुधैर्देवैः सह। "वृद्धो यूना" इतिवत् सहार्थाप्रयोगे-ऽपि सहार्थे तृतीया। कृतमुत्तममायोधनं महायुद्धं येन तं, किं च निह्नुतह्रिया त्याजितलज्जेन विभवमदेन सम्पद्गर्वेणातिमात्रं भृशं सम्पन्नमेव सम्पन्नकं युक्तम्। स्वार्थे कः। सम्पन्मदात्त्यक्तलज्ज-मित्यर्थः। तं रावणं विलोक्याहमितः प्राप्तः इण् कर्त्तरि क्तः।

अथवा तथाहीत्यर्थः। इह लोकेऽतिगतातिप्रवृद्धा सम्पद्विभूतिः कं सत्पथात्सन्मार्गान्न व्यथयति न चलयति। व्यथ भयचलनयोः। सम्पन्मदान्निर्लज्ज उत्पथप्रवृत्तः सर्वथायमुच्छेत्तव्य इत्यर्थः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। 'कार्य्यकारणसामान्यविशेषाणां परस्परम्। समर्थनं यत्र सोऽर्थान्तरन्यास उदाहृतः"॥ इति लक्षणात्। तस्य यमकेन शब्दालङ्कारेण संसृष्टिः॥ ३६

भरतः। 'हृतेत्यादि। यो द्विषन् शत्रुः धनेश्वरस्य कुवेरस्य धनम् अहृत हृतवान् इगन्तसंयोगादिति किस्वात् न गुणः झलझादिति सिलोपः। कीदृशः? युधि संग्रामे समन्ता प्रासा माया येन सम्बद्धा माया यत्रेति वा, तं विलोक्य अहमित आगतः। कीदृश? विबुधैः देवैः सह कृतोत्समायोधनं कृतमहायुद्ध निह्नुतक्रिया अपनीतलज्जेन विभवमदेन ऐश्वर्य्यमत्ततया अतिमात्रम् अतिशयेन सम्पन्नकं युतं. विकारसङ्घेत्यादिना कुत्सायां कः, परस्त्रियमपहृत्याप्यानयतीति निर्लज्जत्वं विभवमदो लज्जां त्याजयतीति। अर्थान्तरन्यासमाह— अथवा यस्मात् अतिगता प्रवृद्धा सम्पत् विभूतिः इह लोके कं जनं सत्पथात् सदाचारात् न व्यथयति न चालयति अपि तु सर्वमेव। व्यथङ् दुःखे भये चाले अत्र चलनार्थः। अथशब्दस्त्वयं यस्मादर्थे। नन्दनं नाम छन्दः। लक्षणं यथा—"नजभजरैस्तु रेफसहितैः शिवैर्हयैर्नन्दनम्" इति। अत्र तृतीयपादे नवमाक्षरस्य प्रह्वे वा इति पिङ्गलसूत्रेण (?) गुरुत्वविकल्पविधानात् लघुत्वम्, तथा च माघे "प्रासनाभिहृदमज्जनमाशुः" इति। "यदा तीव्रप्रयत्नेन संयोगादेरगौरवम्। न छन्दोभङ्गमप्याहुस्तदा दोषाय सूरयः॥" इति कल्पलतायाम्। केचित् संयोगे गुरुत्वात् छन्दोभङ्गः स्यात् इति शङ्कया निह्नुतक्रिया इत्यत्र निहुतक्रिया इति पाठं कल्पयन्ति। अर्थान्तरन्यास इति ग्रन्थः। '—सोऽर्थान्तरन्यासो योऽन्यत् प्रस्तुत्य किञ्चन। तत्साधनसमर्थस्य न्यासो भिन्नस्य वस्तुनः॥' इति। 'उपन्यसन् समर्थस्य प्रकान्तादपरस्य यत्। ग्रंथः सोऽर्थान्तरन्यासः पूर्वार्थानुगतो यथा॥' इति अन्योऽपि॥ ३६

অনুবাদ। যে মায়াবী রাবণ যুদ্ধস্থলে কুবেরের ধন হরণ ও অমরদিগের সহিত প্রবল যুদ্ধ করিয়াছিল, লজ্জানাশক ঐশ্বর্য্যমদে অতি প্রমত্ত সেই রাবণকে দেখিয়া আমি আসিয়াছি। এই জগতে অতি বর্দ্ধিত সম্পত্তি কাহাকে না সৎপথ হইতে বিচলিত করিয়া থাকে? ৩৬

ऋद्धिमान् राक्षसो मूढ़श्चित्रं नासौ यदुद्धतः।
को वा हेतुरनार्य्याणां धर्म्ये वर्त्मनि वर्त्तितुम्॥३७

अन्वयः। ऋद्धिमान् राक्षसः मूढः असौ उद्धतः इति यत् (तत्) न चित्रं। (तथाहि) अनार्य्याणां धर्म्ये वर्त्मनि वर्त्तितुं को वा हेतुः॥ ३७

मल्लिनाथः। ऋद्धिमानिति। ऋद्धिमान् सम्पन्मत्तो राक्षसो जात्या क्रूरो मूढोऽविवेकस्तथाविधोऽयमसौ रावण उद्धतो दुर्विनीत इति यत्तन्न चित्रम्। तथाह्यनार्य्याणामसाधूनां धर्म्ये धर्म्मादनपेते वर्त्मनि वर्त्तितुं को वा हेतुर्न कोऽपीत्यर्थः। प्रस्तुतार्य्यादिविपरीत-

हेतुसद्भावादौद्धत्यमेव युक्तमिति सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । ऋद्ध्यादिपदार्थानां विशेषणगत्यौद्धत्यहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गं चेत्यनयोरङ्गाङ्गिभावेन सङ्करः ॥ ३७

भरतः । ऋद्धिमानित्यादि । असौ रावणो यत् उद्धतो दुर्दान्तो भवति तत् न चित्रं न आश्चर्य्यं, यस्मात् असौ ऋद्धिमान् सम्पत्तियुक्तो रावणश्च उभयथापि मूढो विचारशून्य एव । एतदुक्तं प्रतिषेधयन्नाह—को वेति । अथवा किम् अनेन उक्तेन, यस्मात् अनार्य्याणाम् उद्धतानां तादृशानां धर्म्ये धर्मात् अनपेते वर्त्मनि सदाचारे वर्त्तितुं स्थातुं को वा हेतुः न कोऽपि इत्यर्थः । अत एव असौ उद्धतः किं ऋद्ध्यादिहेतुचिन्तयेति भावः । वाग्भटः आक्षेपमाह—आक्षेपप्रतिषेध इति । "निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया । वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः ॥" इति । अयन्तु उक्ताक्षेपः पूर्वार्द्धेन उक्तो य इष्टस्तस्य को वेत्यादिना विशेषाभिधानेच्छया प्रतिषेधात् ॥ ३७

অনুবাদ । সেই রাক্ষস ঐশ্বর্য্য-মত্ত এবং অবিবেকী, রাবণ যে দুর্বিনীত হইবে, ইহাতে আর আশ্চর্য্য কি ? কেন না অনার্য্যগণ যে ধর্ম্মপথে চলিবে, তাহার কি হেতু আছে ? । ৩৭

तस्याधिवासे तनुरुत्सुकासौ
दृष्टा मया रामपतिः प्रमन्युः ।
कार्य्यस्य सारोऽयमुदीरितो वः
प्रोक्तेन शेषेण किमुद्धतेन ॥ ३८

अन्वयः । तस्य अधिवासे तनुः उत्सुका रामपतिः, प्रमन्युः असौ ( सीता ) मया दृष्टा, अयं कार्य्यस्य सारः वः उदीरितः, शेषेण उद्धतेन प्रोक्तेन किम् ? ॥ ३८

मल्लिनाथः । तस्येति । तस्य रावणस्याधिवासे लङ्कायां तनुः कृशोत्सुका त्वयि सोत्कण्ठा, राम एव पतिर्यस्याः सा रामपतिः पतिव्रतेत्यर्थः । "विभाषा सपूर्वस्य" इत्यत्र पत्युः सपूर्वात् उपसर्जनसमास उपसंख्यानमिति विकल्पात्पक्षे ङीब्नकारयोरभावः । प्रमन्युः प्रवृद्धशोकासौ सीता मया दृष्टा । अयं कार्य्यस्य सारः सारांशो वो युष्मभ्यमुदीरित उक्तः । शेषेणावशिष्टेनोद्धतेन वनभङ्गाद्युद्धतकृत्येन प्रोक्तेन सता किं, न किञ्चित् । अतो नोच्यत इत्यर्थः । अत्रांशोक्तौ वक्ष्यमाणांशान्तरोक्तिनिषेधरूप आक्षेपालङ्कारः । 'विशेषबाधायोक्तस्य वक्ष्यमाणस्य वा भवेत् । निषेधाभासकथनमाक्षेपः स उदाहृतः' ॥ इति सामान्यलक्षणात् ॥ ३८

भरतः । तस्येत्यादि । तस्य रावणस्य अधिवासे लङ्कायां रामपतिः सीता मया दृष्टा । रामः पतिः यस्या इति बहुव्रीहिः, परमते बहुव्रीहौ पत्युरिकारस्य नकार इपप्रत्ययश्च विभा-

षित:, तेन रामपत्नी रामपतिश्चेति पदद्वयं, समने बहुव्रीहौ रामपति: इत्यादि भवत्येव, रामपत्नी इत्यादौ तु नारीसखी इत्यादिना निपातितस्य पत्नीशब्दस्य ग्रहणं पत्नीशब्दो रूढ़ौ भार्य्यावाचक: तेन षष्ठीसमास:। 'तामेकपत्नीं व्रतदु:खशीलाम्' इत्यादौ कर्मधारयश्च बाच्य:। कीदृशी ? तनु: कृशाङ्गी गुणादीत इति पत्ते ङप्प्रत्ययाभाव:। उत्सुका उत्कण्ठावती त्वयीत्यर्थात् त्वत्सङ्गमभिलषमाणा इत्यर्थ:। केचिदाहु:—तनुना शरीरेणापि उत्सुका, किं पुन: मनसा। तथा च स्यात् तनुस्तनुषा सार्द्धं धनुषा च धनु: तथा इति शब्दभेद:। प्रमन्यु: प्रकृष्टशोका। अयं कार्य्यस्य मद्विधेयस्य सारं उत्कृष्टभागो वो युष्मभ्यम् उदीरित उक्त:, अशेषेण अपरेण उद्धतेन उच्चावचेन प्रोक्तेन किं ? न किञ्चित् प्रयोजनम्। स एव इति आक्षेप एव किन्तु वक्ष्यमाणविषयक इति भेद:। पूर्वार्द्धेन उक्तस्य इष्टार्थस्य विशेषाभिधित्सया प्रोक्तेन इत्यादिना शेषार्थप्रतिषेधात् ॥ ३८

অনুবাদ। আমি কৃশাঙ্গী আপনার জন্য উৎকুণ্ঠিতা, আপনার সহধর্ম্মিণী, প্রবল শোকান্বিতা সীতাকে সেই রাবণের বাস-ভূমি লঙ্কা-নগরে দর্শন করিয়াছি। ইহাই আমার কার্য্যের সার অংশ কথিত হইল। অপর উদ্ধত অংশ লঙ্কাদাহন রাক্ষস-নিধনাদি ব্যাপার কথনে কোনই প্রয়োজন নাই। ৩৮

समतां शशिरे[ले]खयोपयाया-
दवदाता प्रतनु: क्षयेण सीता।
यदि नाम कलङ्क इन्दुरे[ले]खा-
मतिवृत्तो लघयेन्न चापि भावी ॥ ३९

अन्वय:। अवदाता क्षयेण प्रतनु: सीता शशिरेखया समतां उपयायात्, यदि नाम कलङ्क: अतिवृत्त: (सन्) इन्दुरेखां लघयेत् तथा न भावी च ॥ ३९

मल्लिनाथ:। समतामिति। अवदाता शुभ्रा क्षिणोतीति क्षय: शोकोऽन्यत्र राजयक्ष्मा तेन प्रतनुरतिकृशा सीता शशिरेखया समतां साम्यं यायाद्गच्छेद्यदि नाम कलङ्कोऽतिवृत्तोऽपक्रान्त: सन्निन्दुरेखां लघयेत् स्वापगमेन लघूकुर्य्यात् तथा न भावी न पुनरावर्त्ती चेत्यर्थ:। अत्रोपमानादिन्दुरेखाया: पुन: कलङ्कदोषवत्त्वा उपमेयस्य मुखस्यावदातत्वादिना साम्येऽपि नित्यनिष्कलङ्कत्वेनाधिक्योक्तेर्व्यतिरेकालङ्कार:। 'भेदप्रधानसामान्यमुपमानोपमेययो:। आधिक्याल्पत्वकथनाद्व्यतिरेक: स उच्यते' ॥ इति लक्षणात् ॥ ३९

भरत:। समतामित्यादि। सीता शशिलेखया चन्द्रकलया समतां तुल्यताम् उपयायात् प्राप्नुयात्। कीदृशी ? अवदाता शुभ्रा चन्द्रलेखापि अवदाता शुक्ला क्षयेण दौर्बल्येन प्रतनु: अतिकृशा शशिलेखापि क्षयेण रोगविशेषेण प्रतनु:। यदि नामातिवृत्तोऽतीतो

भावी भविष्यंश्च कलङ्कः तीम् इन्दुलेखां न लघयेत् न अतिशयेन न्यूनां कुर्य्यात् । कलङ्कस्य मूलत्वात् भावित्वाच्च सा चन्द्रलेखयापि न समेति भावः । लघुशब्दात् णिः कृत्याख्याने णिरिति णि, औमश्च डिदिति डित्वात् टेर्लोपः । नाम इति अव्ययम्, प्रकाशसम्भावनाक्रोधाभ्युपगमकुत्सनेषु । व्यतिरेक इति । 'उपमानाद्यदन्यस्य व्यतिरेकः स एव सः' इति । अन्यस्य उपमेयस्य व्यतिरेक आधिक्यम् ॥ ३९

অনুবাদ। যদি চন্দ্রের কলঙ্ক সম্পূর্ণরূপে চন্দ্রকে ত্যাগ করিয়া লঘু ( নির্দোষ ) করে এবং আর তাহাকে স্পর্শ না করে, তবে ঐ চন্দ্রলেখার সহিত শুভ্রবর্ণা শোকক্ষয়কৃশা সীতা দেবীর সহিত উপমা হইতে পারে ॥ ৩৯

**अपरीक्षितकारिणा गृहीतां**
**त्वमनासेवितवृद्धपण्डितेन ।**
**अविरोधित[बाधित]निष्ठुरेण साध्वीं**
**दयितां त्रातुमलं घटस्व राजन् ॥ ४०**

अन्वयः । अपरीक्षितकारिणा अनासेवितवृद्धपण्डितेन अविरोधितनिष्ठुरेण ( अमुना) गृहीतां साध्वीं दयितां त्रातुं हे राजन् अलं घटस्व ॥ ४०

मल्लिनाथः । अपरीक्षितेति । अपरीक्षितमनालोचितं तत्कारिणाऽवमृश्यकारिणेत्यर्थः । अनासेवितवृद्धोऽनुपासितज्ञानवृद्धः स चासौ पण्डितश्च तेन पण्डितम्मन्येनेत्यर्थः । अविराधितोऽनपकृतः सन्नेव निष्ठुरो हिंस्रस्तेनाकारणद्वेषिणेत्यर्थः । अमुना रावणेन हृतामपहृतां साध्वीं पतिव्रतां दयितां प्रेयसीं त्रातुं, हे राजन् ! अलं भृशं घटस्व यतस्व । अत्र रावणविशेषणैः सीताविशेषणैश्च सीतात्राणस्यावश्यकत्वसमर्थनात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ४०

भरतः । अपेत्यादि । हे राजन् ! दयितां सीतां प्रियां त्रातुं रक्षितुं त्वम् अलम् अत्यर्थं यतस्व चेष्टस्व, यतः साध्वीं पतिव्रताम् अपरीक्षितकारिणा अविचारितकरणशीलेन अनासेवितवृद्धपण्डितेन वृद्धमनुपास्य एव पण्डितेन पण्डितम्मन्येन अविबाधितेन अनपकृतेनापि सता निष्ठुरेण क्रूरेण रावणेन इत्यर्थात् गृहीताम् इति अवदत् हनुमान् इति सम्बन्धः । विभावनेति परीक्षावृद्धसेवाविबाधनैः विनापि तत्पाण्डित्यनैष्ठुर्य्याणां तत्फलानां स्वाभाविकत्वेन प्रकाशनात् । तथाच,—"क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना" इति काव्यप्रकाशः । 'प्रसिद्धहेतुव्यावृत्त्या यत्किञ्चित् कारणान्तरम् । यत्र स्वाभाविकत्वं वा विभाव्यं सा विभावना ॥" इति दण्डी ॥ ४०

অনুবাদ। অবিমৃশ্যকারী জ্ঞানবৃদ্ধসঙ্গবর্জ্জিত অকারণবিদ্বেষপরায়ণ রাবণ সীতাকে লইয়া গিয়াছে, অতএব হে রাজন্! আপনার সেই পতিব্রতা দয়িতাকে উদ্ধার করিতে চেষ্টা করুন ॥ ৪০

स च विह्वलसत्त्वसङ्कुलः
परिशुष्यन्नभवन्महाह्रदः।
परितः परितापमूर्च्छितः
पतितं चाम्बु निरभ्रमीप्सितम्॥ ४१

अन्वयः। सः (राम एव) महाह्रदः विह्वलसत्त्वसङ्कुलः परिशुष्यन् परितः परितापमूर्च्छितः च अभवत्। (अथ) ईप्सितं निरभ्रम् अम्बु च पतति॥ ४१

मल्लिनाथः। स इति। स राम एव महाह्रद इति व्यस्तरूपकम्। विह्वलेन क्षुभितेन सत्त्वेनान्तःकरणेनान्यत्र सत्त्वैर्जलजन्तुभिश्च सङ्कुलः सङ्कीर्णः परिशुष्यन्मुखोऽन्यत्र शुष्यज्जलः परितः सर्वतः परितापमूर्च्छितश्चाभवत्। अथेप्सितं तत्कालाकाङ्क्षितं निरभ्रमम्बु च पतितम्। अत्र प्रियोदन्तस्यानभ्रवृष्टित्वेनाध्यवसायाद्भेदेऽभेदलक्षणातिशयोक्तिः, सा पूर्वोक्तरूपकमापेक्षेति सङ्करः। विषयनिगरणेनाभेदप्रतिपत्तिरध्यवसायः॥ ४१

भरतः। स चेत्यादि। स च रामो महाह्रद इव अभवत्। अथ निरभ्रं मेघं विनापि आकस्मिकम् ईप्सितम् अभिलषितं सीतावार्त्तारूपम् अम्बु जलं पतितं प्राप्तम् अभवच्च पतितश्च इति चकारद्वयं तुल्यकालतासूचनार्थम्। कीदृशः? विह्वलेन विरहव्याकुलेन सत्त्वेन चेतसा संकुलो व्याप्तः परिशुष्यन् कार्श्यम् उपगच्छन् परितः समन्तात् परितापेन शोकसन्तापेन मूर्च्छितः मोहं प्राप्तः। महाह्रदोऽपि परिशुष्यन् विह्वलैः सत्त्वैः जन्तुभिः मत्स्यादिभिः सङ्कुलः परितापेन सूर्य्यतापेन मूर्च्छितो यदा भवति तदा ईप्सितम् अम्बु विना मेघेन पतितम्। "सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः। आत्मनि व्यवसाये च चित्ते प्राणिषु जन्तुषु॥" इति विश्वः। समासोक्तिरिति साक्षात् महाह्रदस्यानुपादानेऽपि तत्तुल्यविशेषणतया रामस्य गम्यमानत्वात् सङ्क्षेपेण अन्यस्य उक्तिः इत्यर्थः। यदुक्तं—"यत्रोक्ते गम्यतेऽन्योऽर्थस्तत्समानविशेषणः। सा समासोक्तिरुदिता संक्षेपार्थतया तथा॥" इति। अन्यत्रापि—"वस्तु किञ्चिदभिप्रेत्य तत्तुल्यस्यान्यवस्तुनः। उक्तिः संक्षिप्तरूपत्वात् समासोक्तिरितीष्यते॥" इति। अतएव न स्यात् भेदः, तत्र द्वयोरपि श्रूयमाणत्वात्॥ ४१

अनुवाद। হ্রদের জল শুষ্ক হইলে মৎস্যাদি প্রাণিগণের ব্যাকুলতায় হ্রদ যেমন চঞ্চল হয়, সেইরূপ হ্রদরূপী রামও শোকাকুলহৃদয়ে পরিতাপে মূর্চ্ছিত হইলেন। অনন্তর বিনা মেঘে পতিত জলধারার ন্যায় বাঞ্ছিত সীতার সংবাদও প্রাপ্ত হইলেন। ৪১

অথ লক্ষ্মণরূপতুল্যবেশং
গমনাদেশবিনির্গতাগ্রহস্তম্।

कपयोऽनुययुः समेत्य रामं
नतसुग्रीवगृहीतसादराज्ञम् ॥ ४२

अन्वयः। अथ कपयः लक्ष्मणरूपतुल्यवेशं गमनादेशविनिर्गताग्रहस्तं नतसुग्रीवगृहीत-सादराज्ञं रामं समेत्य अनुर्ययुः ॥ ४२

मल्लिनाथः। अथेति। अथ हनूमद्वाक्यश्रवणानन्तरं कपयो लक्ष्मणेन तुल्यौ रूपवेशावाकारनेपथ्ये यस्य तं, गमनादेशे प्रस्थापनाज्ञापने विनिर्गतः प्रसृतोऽग्रहस्तो यस्य तं, नतेन प्रणतेन सुग्रीवेण गृहीता स्वीकृता सादरादरपूर्विकाज्ञा यस्य तं रामं समेत्य सम्भूयानुययुः। अत्र प्रास्थानिकरूपवेशभाषाक्रियावर्णनात् स्वभावोक्तिरलङ्कारः। 'स्वभावोक्तिरलङ्कारो यथावद्वस्तुवर्णनम्'। इति लक्षणात् ॥ ४२

भरतः। अथेत्यादि। सीतावार्त्ताश्रवणानन्तरं कपयः समेत्य मिलित्वा रामम् अनुययुः अनुगतवन्तः। कीदृशं? लक्ष्मणेन तुल्यं रूपं वेशश्च यस्य तं रामदुःखेन लक्ष्मणोऽधिकं दुःखितः सीतावार्त्ताश्रवणाच्च रामात् अपि अधिकं हृष्ट इति लक्ष्मणेन तुल्यता उक्ता। कपीनां गमनाय प्रस्थानाय आदेश आज्ञा तदर्थं विनिर्गतोऽग्रहस्तो यस्य तं, हस्तशब्दस्यैक-देशवृत्तितया अग्रशब्देन कर्मधारयः, अन्ये तु राजदन्तादौ पठन्ति। प्रणतेन सुग्रीवेण गृहीता सादराज्ञा यस्य तम्। अतिशयोक्तिः इति अतिशयार्थप्रतिपादनात्। अत्र हि आज्ञानन्तर-मेव कपीनामनुगमनेनैव भक्त्यतिशयत्वं लक्ष्मणतुल्यताभिधानेन तद्गतहर्षशोकातिशयत्वञ्च। तथाच,—"विवक्षाया विशेषस्य लोकसीमातिवर्त्तिनी। असावतिशयोक्तिः स्यात् अलङ्कारोत्तमा च सा॥ सा तु प्रायो गुणानाञ्च क्रियाणाञ्चोपकल्प्यते। न हि द्रव्यस्य जातेर्वा भवत्यतिशयः क्वचित् ॥" इति ॥ ४२

অনুবাদ। অনন্তর লক্ষ্মণের তুল্যবেশধারী গমনাদেশ-ব্যঞ্জককরপ্রসারী রামচন্দ্রের আজ্ঞা সুগ্রীব নতভাবে সাদরে গ্রহণ করিলেন এবং কপিগণ সমবেত হইয়া শ্রীরামের অনুগমন করিল। ৪২

कपिपृष्ठगतौ ततो नरेन्द्रौ
कपयश्च ज्वलिताग्निपिङ्गलाक्षाः।
मुमुचुः प्रययुर्द्रुतं समीयु-
र्वसुधां व्योम महीधरं महेन्द्रम् ॥ ४३

अन्वयः। ततः कपिपृष्ठगतौ नरेन्द्रौ ज्वलिताग्निपिङ्गलाक्षाः कपयश्च वसुधां मुमुचुः, व्योम प्रययुः, द्रुतं महेन्द्रं महीधरं समीयुः ॥ ४३

मल्लिनाथः। कपीति। ततः कपिचलनानन्तरं कप्योर्वायु-वालिनन्दनयोः पृष्ठगतौ पृष्ठारूढौ नरेन्द्रौ रामलक्ष्मणौ ज्वलि-

नाग्निपिङ्गलाङ्गाः कपयस्ततो वसुधां मुमुचुर्व्योम प्रययुर्व्योम्नि प्रयाता इत्यर्थः । द्रुतं शीघ्रं महेन्द्रं महीधरं महेन्द्राद्रिं समीयुः सङ्गताः । अत्रोद्देशिनामनुद्देशिनां च मोचनादीनां वसुधादीनाञ्च यथासंख्यसम्बन्धाद्यथासंख्यमलङ्कारः । 'उद्दिष्टानां पदार्थानां पूर्वं पश्चाद्यथाक्रमम् । अनुद्देशो भवेद्यत्र तद्यथासंख्यमुच्यते' ॥ इति लक्षणात् ॥ ४३

भरत । कपीत्यादि । ततोऽनन्तरं कपिपृष्ठगतौ वानरपृष्ठस्थौ नरेन्द्रौ रामलक्ष्मणौ ज्वलदग्निवत् पिङ्गलशरीराः कपयश्च वसुधां पृथ्वीं मुमुचुः त्यक्तवन्तः, व्योम आकाशं प्रययुः प्राप्तवन्तः, महेन्द्राख्यं पर्वतं द्रुतं समीयुः सङ्गतवन्तः । यथासंख्यमिति क्रियापदानां कर्मपदानाञ्च क्रमेण अन्वयात् । यदुक्तं काव्यप्रकाशे,—"यथासंख्यक्रमेणैव क्रमिकाणां समन्वयः" इति । अन्यत्रापि उक्तं,—भूयसामुपदिष्टानामर्थानां समधर्मिणाम् । क्रमशो योऽनुनिर्देशो यथासंख्यं तदुच्यते ॥" इति ॥ ४३

अनुवाद । তাহার পর হনুমান্ ও অঙ্গদের পৃষ্ঠারূঢ় নরশ্রেষ্ঠ রাম ও লক্ষ্মণ প্রজ্বলিত অগ্নির ন্যায় পিঙ্গল বর্ণ কপিসকল পৃথিবীকে ত্যাগ করিয়া আকাশে উঠিল ও অতিশীঘ্র মহেন্দ্র পর্ব্বতে উপস্থিত হইল ॥ ৪৩

स्थितमिव परिरक्षितुं समन्ता-
दुदधिजलौघपरिप्लुतां धरित्रीम् ।
गगनतलवसुन्धरान्तराले
जलनिधिवेगसहं प्रसार्य देहम् ॥ ४४

अन्वयः । उदधिजलौघपरिप्लुतां धरित्रीं समन्तात् परिरक्षितुम् इव गगनतलवसुन्धरान्तराले जलनिधिवेगसहं देहं प्रसार्य स्थितम् ॥ ४४

मल्लिनाथः । अथ षड्भिर्महेन्द्राद्रिं वर्णयति—स्थितमित्यादिभि । उदधिजलौघैः समन्तात् परिप्लुतां परिभूतां धरित्रीं परिरक्षितुमिवेति फलोत्प्रेक्षा । गगनतलवसुन्धरान्तराले द्यावापृथिव्योरन्तराले जलनिधिवेगं सहत इति तत्सहं तत्क्षमम् । मूलविभुजादित्वात् कः । देहं प्रसार्य स्थितमन्यथा दुर्द्धरवेगो वारिधिर्वसुन्धरामाक्रमेदिति भावः ॥ ४४

भरतः । स्थितमित्यादि । कीदृशं महेन्द्रम् ? उदधेः जलौघेन परिप्लवात् विनाशात् समन्तात् आप्लवनात् वा धरित्रीं परिरक्षितुमिव समन्तात् त्रातुमिव गगनतलवसुन्धरयोराकाशपृथिव्योरन्तराले मध्ये जलनिधिवेगसहं देहं प्रसार्य विस्तार्य स्थितम् । सहेः पचादित्वात् अन् । परिप्लुता आविला । परिप्लवामिति पाठे पचादित्वात् अन् । चञ्चलां व्याकुलां वा ।

परिप्लवश्चञ्चल: स्यात् आकुलेऽपि परिप्लव:” इति विश्व: । उत्प्रेक्षेति, “अन्यथावस्थिता वृत्ति-श्चेतनस्येतरस्य वा । अन्यथोत्प्रेक्ष्यते यत्र तामुत्प्रेक्षां विदुर्बुधा: ॥” इति । अत्र स्वाभाविकी द्यावापृथिव्यो: अन्तराले स्थिति: पृथिवीरक्षणार्थतया सम्भाव्यते । अन्यस्त्वाह,—“अविवक्षित-सामान्यात् किञ्चिच्चोपमया सह । अतद्गुणक्रियायोगात् उत्प्रेक्षातिशयान्विता ॥” इति । तत्र महीधरसामान्यस्यापि विवक्षितत्वात्, अत्राविवक्षितसामान्यत्वं परिरक्षितुमिव इति प्रयोगात् किञ्चित् उपमया सहयोगित्वं महेन्द्रगिरेरतद्गुणतया रक्षणक्रियायोग: गगनतल-वसुन्धरान्तरालं व्याप्य स्थितमिति अतिशयान्वितत्वम् । इत्थमुत्प्रेक्षाप्युत्प्रेक्षाव्यञ्जक: ॥ ४४

অনুবাদ। ঐ মহেন্দ্র পর্ব্বত সিন্ধুবারিপ্লাবিত ধরণীকে রক্ষা করিবার জন্যই যেন পৃথিবী ও আকাশের অন্তরালে জলধিবেগসহনশীল দেহকে প্রসারিত করিয়া বর্ত্তমান রহিয়াছে ॥ ৪৪

**विषधरनिलये निविष्टमूलं**
**शिखरशतै: परिमृष्टदेवलोकम् ।**
**घनविपुलनितम्बपूरिताशं**
**फलकुसुमाचितवृक्षरम्यकुञ्जम् ॥ ४५**

अन्वय: । विषधरनिलये निविष्टमूलं शिखरशतै: परिमृष्टदेवलोकं घनविपुलनितम्ब-पूरिताशं फलकुसुमाचितवृक्षरम्यकुञ्जम् ( स्थितं ) ॥ ४५

**मल्लिनाथ: । विषधरेति । पुन: विषधरनिलये पाताले निविष्ट-मूलं प्रविष्टतलं, शिखरशतै: परिमृष्टदेवलोकमुल्लिखितसुरालयं घनैर्निविडैर्विपुलैश्च नितम्बैर्मध्यभागै: पूरिताशं व्याप्तदिक्कं, फलै: कुसुमैश्चाचितैराढ्यैर्वृक्षै रम्यकुञ्जम् । अत्र मूलादीनां पातालाद्य-सम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्ति: ॥ ४५**

भरत: । विषधरेत्यादि । पुन: कीदृशं महेन्द्रं ? विषधरनिलये पाताले निविष्टं मूलं यस्य तं, शिखराणां शतै: करणभूतै: परिमृष्ट: स्पृष्टो देवलोक: स्वर्गो येन, घनै: निरन्तरालै-र्विपुलै: विशालै:,घनेन मध्येन विपुलैर्वा नितम्बै: मध्यभागै: पूरिता व्याप्ता आशा दिशो येन । फलेन पुष्पेण च आचितै: व्याप्तै: वृक्षै: रम्यं कुञ्जं लतादिपिहितस्थलं यत्र तं तथा । वार्त्ता इति तत्त्वार्थकथनात् सा द्विविधा, विशिष्टा निर्विशिष्टा च, तत्र पूर्वा स्वभावोक्ति: उच्यते । यदुक्तं,—“स्वभावोक्तिरलङ्कार इति केचित् प्रचक्षते । अर्थस्य तादवस्थ्यञ्च स्वभाव इति कथ्यते ॥” इति । निर्विशिष्टा तु सैव वार्त्तालङ्कार: । यथोक्तं—“गतोऽयमस्तमादित्यो याति वासाय पक्षिण: । इत्येवमादिकं काव्यं वार्त्तामेतां प्रचक्षते ॥” इति । प्रकृते तु स्वभावोक्तिरूपैव वार्त्ता बोध्या ॥ ४५

অনুবাদ। যাহার মূলদেশ পাতাল প্রদেশে প্রবিষ্ট, যাহার শতশৃঙ্গ স্বর্গলোক স্পর্শী, এবং যাহার নিবিড় বিশালাকার মধ্যাবয়বসমূহ দিক্‌ব্যাপী, যাহার কুঞ্জসকল ফলপুষ্পসমন্বিত তরুরাজি দ্বারা রমণীয় হইয়াছে— ॥ ৪৫

मधुकरविरुतैः प्रियाध्वनीनां
सरसिरुहैर्दयितास्यहास्यलक्ष्म्याः ।
स्फुटमनुहरमाणमादधानं
पुरुषपतेः सहसा परं प्रमोदम् ॥ ४६

अन्वयः । मधुकरविरुतैः प्रियाध्वनीनां स्फुटम् अनुहरमाणम् आदधानं (तथा) सरसिरुहैः दयितास्यहास्यलक्ष्म्याः अनुहरमाणं, (अतः) पुरुषपतेः सहसा परं प्रमोदं दधानम् ॥ ४६

मल्लिनाथः । मधुकरेति । पुनः मधुकरविरुतैः प्रियाया ध्वनीनामालापानामनुहरमाणं तामनुकुर्वन्तमित्यर्थः । सम्बन्धसामान्ये षष्ठी । तथा सरसिरुहैः पद्मैर्दयितास्यस्य प्रियामुखस्य हास्यलक्ष्म्याः स्मितशोभाया अनुहरमाणम्, अत एव पुरुषपतेः पुरुषोत्तमस्य रामस्य सहसा परं प्रमोदमानन्दं दधानं कुर्वाणम् । अत्र मधुकरविरुतानां सरसिरुहाणां चोपमानानामुपमेयत्वकल्पनाद्द्वितीयप्रतीपालङ्कारः । "आक्षेप उपमानस्य कैमर्थ्येन कल्प्यते । यद्वोपमेयभावः स्यात् तत्प्रतीपमुदाहृतम् ॥" इति लक्षणात् ॥ ४६

भरतः । मधुकरेत्यादि । पुनः कीदृशं महेन्द्रं ? मधुकराणां भ्रमराणां विरुतैः शब्दैः प्रियायाः सीतायाः जल्पितानां स्फुटं व्यक्तम् अनुहरमाणं सादृश्यं दर्शयन्तम् । धातोः अनेकार्थत्वात् अनुहरमाणमनुकुर्वन्तमित्यन्ये । सरसिरुहैः पद्मैः दयितायाः सीतायाः आस्यस्य मुखस्य हास्यस्य च लक्ष्म्या अपि अनुहरमाणम् । पद्मविकाशस्य अत्र हास्यसाम्येन पद्मैस्तदनुहरणमुक्तम् । अन्ये तु—सरसिरुहपदेन कुमुदमप्युच्यते तस्यापि सरःसम्भूतत्वात्, तेन पद्मैरास्यलक्ष्म्याः कुमुदैर्हास्यलक्ष्म्याश्च अनुहरमाणमित्याहुः । अत एव पुरुषपतेः रामस्य सहसा तत्क्षणम् आगतमात्रस्यैव परम् उत्कृष्टं प्रमोदम् आनन्दं दधानं कुर्व्वन्तम् जनयन्तम् इत्यर्थः । एतेन यात्रायां मङ्गलमपि सूचितम् । प्रेय इति प्रियतरवस्त्वभिधानात् ॥ ४६

অনুবাদ। যে পর্ব্বত ভ্রমরগুঞ্জনে প্রিয়তমার কণ্ঠস্বরের ও পদ্মাবলী বিকাশে দয়িতার হাস্য শোভার অনুকরণ করিতেছে এবং সহসা নরনাথ শ্রীরামের সাতিশয় হর্ষ সমুৎপাদন করিতেছে। ৪৬

ग्रहमणिरश[स]नं दिवो नितम्बं
विपुलमनुत्तमलब्धकान्तियोगम् ।
च्युतघनवसनं मनोऽभिरामं
शिखरकरैर्मदनादिव स्पृशन्तम् ॥ ४७

अन्वयः । ग्रहमणिरशनं विपुलम् अनुत्तमलब्धकान्तियोगं च्युतघनवसनं मनोऽभिरामं दिवः नितम्बं मदनात् शिखरकरैः स्पृशन्तम् इव ( महेन्द्राचलं ) ॥ ४७

मल्लिनाथः । ग्रहेति । ग्रहा नक्षत्राण्येव मणिरशना मणिमेखला यस्य तं, विपुलं विस्तृतं, नास्त्युत्तमं यस्मात् सोऽनुत्तमः सर्वोत्तमो लब्धः कान्तियोगो येन सः कान्तिमानित्यर्थः, तयोर्विशेषणसमासः, तं, च्युतं स्रस्तं घनो मेघ एव वसनं यस्मात्तं, मनोऽभिरामं मनोज्ञं, दिवः कान्ताया इति भावः, नितम्बमिव नितम्बमधोभागं, मदनात् कामाच्छिखरैरेव करैः स्पृशन्तमिवेति क्रियास्वरूपोत्प्रेक्षा ग्रहमणीत्यादिरूपकानुप्राणितेति सङ्करः ॥ ४७

भरतः । ग्रहेत्यादि । पुनः कीदृशं महेन्द्रं ? शिखररूपकरैः मदनात् कामात् हेतोरिव दिव आकाशस्य नितम्बं मध्यभागं स्पृशन्तम् । कीदृशं नितम्बं " ग्रहमणिरसनं ग्रहाः चन्द्रादयो मणिनिर्मिता रसना काञ्ची यत्र, विपुलं विस्तीर्णम् अनुत्तमलब्धकान्तियोग न विद्यते उत्तमो यस्मात् लब्धः कान्तियोगो येन पश्चात् कर्मधारयः । च्युतघनवसनं च्युतो घनो मेघो वसनमिव यस्मात् एतेन प्रावृट्कालोऽपि सूचितः । अत एव मनोऽभिरामं चित्तानन्दकरम् । अत्र दिवो नायिकासाम्यं तथा महेन्द्रस्य नायकसाम्यं च व्यक्तम् । रसवदिति दिवो गिरेश्च स्त्रीपुंसयोरिव शृङ्गाररसस्य अभिधानात् । तथाच दण्डी—'रसवत् रसमाश्रयम्' इति ॥४७

অনুবাদ। চন্দ্রনক্ষত্রাদিরূপ রত্নময় কাঞ্চিধারী, বিশাল সর্কোত্তমকান্তিসম্পন্ন, মেঘরূপ বসনচ্যুত, মনোরম, স্বর্গলক্ষ্মীর নিতম্বদেশ মহেন্দ্র পর্ব্বত মদনাতুর হইয়াই যেন শৃঙ্গরূপ হস্ত দ্বারা স্পর্শ করিতেছে। ৪৭

प्रचपलमगुरुं भरासहिष्णुं
जनमसमानमनूर्जितं विवर्ज्य ।
कृतवसतिमिवार्णवोपकण्ठे
स्थिरमतुलोन्नतिमूढतुङ्गमेघम् ॥ ४८

अन्वयः । स्थिरम् अतुलोन्नतिम् ऊढतुङ्गमेघं ( महेन्द्राचलं ) ( अतएव ) प्रचपलम् अगुरुं भरासहिष्णुम् अनूर्जितं असमानम् जनं विवर्ज्य अर्णवोपकण्ठे कृतवसतिं इव ॥४८

मल्लिनाथः । प्रचपलेति । पुनः स्थिरं प्रतिष्ठितमतुलोन्नतिं सर्वोन्नतमूढतुङ्गमेघं परभरणक्षममित्यर्थः । अत एव प्रचपलमस्थिरमगुरुं लघु तुच्छमित्यर्थः । भरमसहिष्णुं भरासहिष्णुं परभरणाक्षममित्यर्थः । अनूर्जितमसमृद्धमत एवासमानं जनं पृथग्जनं विवर्ज्य संसर्गानर्हत्वाद्वर्जयित्वार्णवस्योपकण्ठे समीपे कृतवसतिमिवेत्युत्प्रेक्षा । उक्तदोषाभावात् स्वसमानगुणत्वेन च संसर्गार्हत्व-

निश्चयादिति भावः। चपलादिपदार्थानां विशेषणगत्या संसर्गवर्जने स्थिरत्वादिपदार्थानां संसर्गे च हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गं, तदनुप्राणिता चार्णवसमीपवासोत्प्रेक्षा इति सङ्करः॥ ४८

भरतः। प्रचपलमित्यादि। पुनः कीदृशं महेन्द्रं ? जनं लोकं विवर्ज्य त्यक्त्वा विजनत्वात्। अर्णवस्य समुद्रस्य उपकण्ठे समीपे आत्मसदृशत्वात् कृता वसतिः येन, स्थिरम् अचलम्, अतुलोन्नतिं महोच्छ्रायम्, एतेन गुरुत्वम् ऊर्जितत्वञ्च सूचितम्। ऊढतुङ्गमेघं धृत महाभ्रम्। भारसहत्वात् जनवर्जने हेतुमाह—प्रचपलेति। कीदृशं जनम् ? असमानं स्वस्य अतुल्यम्। असमानत्वं दर्शयन्नाह—प्रचपलम् अस्थिरम्, अगुरुं लघुम्, अत एव भारासहनशीलम्, अनूर्जितं दर्पशून्यं दुर्बलं वा ; जनस्य असदृशत्वात् त्यागः, स्वसदृशस्य अर्णवस्य समीपे वासश्च युक्तः। ऊर्जस्वि इति साहङ्कारवस्त्वभिधानात्। यदुक्तं—"ऊर्जस्वि कान्तहङ्कारम्" इति॥ ४८

अनुवाद। চিরস্থির অতুল উন্নত ও সমুন্নতমেঘধারী ঐ পর্ব্বত অতি চপল লঘুভাব সহনাক্ষম অসদৃশ সমৃদ্ধিশূন্য ইতর লোককে পরিত্যাগ করিয়া সমুদ্রের সমীপে বাস করিতেছে ।৪৮

स्फटिकमणिगृहैः सरत्नदीपैः
प्रतरुणकिन्नरगीतनिस्वनैश्च।
अमरपुरमतिं सुराङ्गनानां
दधतमदुःखमनल्पकल्पवृक्षम्॥ ४९

अन्वयः। सरत्नदीपैः स्फटिकमणिगृहैः प्रतरुणकिन्नरगीतनिस्वनैश्च सुराङ्गनानाम अमरपुरमतिं दधतं अदुःखं अनल्पकल्पवृक्षम्॥ ४९

मल्लिनाथः। स्फटिकेति। सरत्नदीपैः स्फटिकमणिगृहैः प्रकृष्टैस्तरुणकिन्नरगीतनिस्वनैश्च सुराङ्गनानाममरपुरमतिं स्वर्गभ्रान्तिं दधतं कुर्वाणं, नास्ति दुःखमत्रेत्यदुःखमनल्पकल्पवृक्षमिति च भ्रान्तिकारणान्तरोक्तिः। अत्र भ्रान्तिमदलङ्कारः। 'कविसम्मतसादृश्याद्विषये पिहितात्मनि। आरोप्यमाणानुभवो यत्र स भ्रान्तिमान्मतः॥' इति लक्षणात्॥ ४९

भरतः। स्फटिकेत्यादि। पुनः कीदृशं महेन्द्रं ? रत्नदीपसहितैः स्फटिकमणीनां गृहैः प्रकृष्टतरुणानां किम्पुरुषाणां गीतनादैश्च हेतुभिः सुराङ्गनानां देवस्त्रीणाम् अमरपुरमतिं स्वर्गबुद्धिं दधतं जनयन्तम्। अदुःखं नास्ति दुःखं यत्र सुखहेतुमित्यर्थः। अनल्पा बहवः कल्पवृक्षा यत्र तम् एवम्भूतं महेन्द्रं समीयुः इत्यन्वयः। पर्य्यायोक्तमिति अमरपुरमतिं दधतम् इति पर्य्यायेण वचनभङ्ग्या तदेव अमरपुरमिति प्रतिपादनात् : यदुक्तम्—'अर्थमिष्टमनाख्याय साक्षात्तस्यैव सिद्धये। यत् प्रकारान्तराख्यानं पर्य्यायोक्तं तदुच्यते॥' इति।

अन्यत्रापि—'पर्य्यायोक्तं यदन्येन प्रकारेणाभिधीयते ॥' इति। काव्यप्रकाशेऽपि—"पर्य्यायोक्तं विना वाच्यवाचकत्वेन वस्तु यत्।" इति ॥ ४९

অনুবাদ। কল্পবৃক্ষবহুল দুঃখলেশসম্পর্কহীন মহেন্দ্র পর্ব্বত, স্ফটিকমণি ও রত্নদীপময় গৃহে এবং নব যৌবনা কিন্নরবধূগণের গীতিস্বরে সুরবালাগণেরও (ঐ স্থানকে) স্বর্গ বলিয়া ভ্রম জন্মাইতেছে। ৪৯

**अथ ददृशुरुदीर्णधूमधूम्रां**
**दिशमुदधिव्यवधिं समेतसीताम् ।**
**सहरघुतनयाः प्लवङ्गसेनाः**
**पवनसुताङ्गुलिदर्शितामुदक्षाः ॥ ५०**

अन्वयः। अथ सहरघुतनयाः प्लवङ्गसेनाः पवनसुताङ्गुलिदर्शितां धूमधूम्रां उदधिव्यवधिं समेतसीतां दिशं उदक्षाः ददृशुः ॥ ५०

मल्लिनाथः। अथेति। अथ महेन्द्राद्रिप्राप्त्यनन्तरं रघुतनयाभ्यां सह वर्त्तन्त इति सहरघुतनयाः। "वोपसर्जनस्य" इति पक्षे न सहस्य सभावः। प्लवङ्गसेनाः पवनसुतेनाङ्गुल्या दर्शितामुदीर्णेनोद्गतेन धूमेन धूम्रां धूम्रवर्णाम्। उदकानि धीयन्तेऽस्मिन्नित्युदधिः। "कर्म्मण्यधिकरणे च" इत्यधिकरणार्थे कर्म्मण्युपपदे किप्रत्ययः। स एव व्यवधीयते अनेनेति व्यवधिर्व्यवधायको यस्यास्तामुदधिव्यवहितामित्यर्थः। "उपसर्गे घोः किः"। समेता सीता यस्यास्तां दिशं दक्षिणाशामुदक्षाः। उदञ्चिताक्षाः। "बहुव्रीहौ—" इत्यादिना षच्। ददृशुः। अत्र स्वभाववर्णनात् स्वभावोक्तिः। 'स्वभावोक्तिरलङ्कारो यथावद्वस्तुवर्णनात्।' इति लक्षणात् ॥ ५०

भरतः। अथेत्यादि। महेन्द्रप्राप्त्यनन्तरं रघुतनयाभ्यां रामलक्ष्मणाभ्यां सहिता वानरसेनाः उदक्षाः उद्गताक्षाः सत्यः समुद्रव्यवधानां दक्षिणां दिशं ददृशुः। कीदृशीम्? उदीर्णेन महता धूमेन धूम्रां कृष्णलोहिताम्, कटि गत्यां कं रूपम्। समेता सङ्गता सीता यत्र वा, पवनसुतस्य हनूमतोऽङ्गुल्या दर्शितां निर्दिष्टाम्। उदक्षा इति उद्गतम् ऊर्द्ध्वीकृतम् अक्षं चक्षुः यासाम्, इन्द्रियसामान्यवाचिनोऽपि अक्षशब्दस्य विशेषपरत्वात् नैवावाचकत्वम्, किं वा शकृध्यक्ष्णः षः स्वाङ्ग इति षप्रत्ययान्तस्य उदक्षशब्दस्य स्वाङ्गादौ पाठस्तेन नमनसंख्यास्वस्रजादेरिति ईप्रत्ययनिषेधः नदादिपाठस्य अनित्यत्वात् इति कालापाः, मानादित्वादिति वासवताः। प्लवङ्गसैन्या इति पठन्ति अन्ये। समाहितमिति दक्षिणदिगवलोकनं स्वत एव जायमानं हनूमदङ्गुलिदर्शितत्वेन सुकरत्वात् समाहितम्। यदुक्तं,—'समाधिः सुकरं कार्य्यं कारणान्तरयोगतः' इति। अन्यत्रापि—"किञ्चिदारभमाणस्य कार्य्यं

हेवयस्मात् पुनः। तत्साधनसमापत्तिर्यदाहुस्तत्समाहितम्॥" इति। अत्र सकलायास्तु एकचित्ततया दिशोऽवलोकनात् समाहितम् इत्युक्तम्। ५०

অনুবাদ। অনন্তর রাম লক্ষ্মণ এবং বানরসৈন্যগণ, হনূমানের অঙ্গুলিসঙ্কেতনির্দ্দিষ্ট সাগরপারাবস্থিত ধূম ধূম্র সীতাধিষ্ঠিত দিকের প্রতি ঊর্দ্ধদৃষ্টিপাত করিয়া অবলোকন করিতে লাগিল। ৫০

**जलनिधिमगमन्महेन्द्रकुञ्जात्**
**प्रचयतिरोहिततिग्मरश्मिभासः।**
**सलिलसमुदयैर्महातरङ्गै-**
**र्भुवनभरक्षममप्यभिन्नवेलम्॥ ५१**

अन्वयः। (अथ कपिसेनाः) प्रचयतिरोहिततिग्मरश्मिभासः महेन्द्रकुञ्जात् महातरङ्गैः सलिलसमुदयैः भुवनभरक्षमम् अपि अभिन्नवेलं जलनिधिं अगमन्॥ ५१

मल्लिनाथः। जलेति। अथ कपिसेनाः प्रचयेनोच्छ्रायेण तिरोहिततिग्मरश्मिभासः पिहितार्कप्रभा महेन्द्रस्य कुञ्जात् गुल्मात् महातरङ्गैः सलिलसमुदयैरुदकलहरिभिर्भुवनस्य भरे भरणे पूरणे क्षमं शक्तमप्यभिन्नवेलमनतिक्रान्तसीमम्। महान्तः शक्ता अपि नाकार्य्यं कुर्वन्तीति भावः। जलनिधिमगमन्। अत्रापि यथावद्वस्तुवर्णनात् स्वभावोक्तिः॥ ५१

भरतः। जलनिधिमित्यादि। सरघुतनयाः प्लवङ्गसेना महेन्द्रकुञ्जात् जलनिधिम् अगमन्, गमॢ गत्याम् लृदित्वात् च्लेः अङ्। प्रचयेन समूहेन तिरोहिता आच्छादिताः तिग्मरश्मेः सूर्य्यस्य भासो दीप्तयो याभिः ताः, प्लवङ्गसेनानां विशेषणम्। प्रचयेन उच्चतया तिरोहिताः तिग्मरश्मिभासो येन तस्मादिति कुञ्जविशेषणं वा। कीदृशं जलनिधिं? महान्तस्तरङ्गा ऊर्म्मयो येषु तैः सलिलसमुदयैः जलसमूहैः भुवनस्य पृथिव्या भरणे पूरणे क्षमं शक्तमपि अभिन्नवेलम् अनतिक्रान्तमर्य्यादम्। उदात्तमिति महानुभावताप्रतिपादनात्, महानुभावत्वन्तु महातरङ्गजलसमूहैः भुवनभरक्षमस्यापि अभिन्नवेलत्वात्। तथा च उक्तम्—
"आशयस्य विभूतेर्वा यत् महत्त्वमनुत्तमम्। उदात्तं नाम तं प्राहुरलङ्कारं मनीषिणः॥"
इति। उदारमिति पाठेऽपि अयमेवार्थः। द्विविधमिदं महानुभावत्वात् नानारत्नयोगित्वाच्च आद्यमत्रोक्तम्। ५१

অনুবাদ। উত্তাল তরঙ্গময় জলরাশি দ্বারা ভুবনপ্লাবনক্ষম হইয়াও যে সাগর বেলাভূমি অতিক্রম করে না, বানরগণ সূর্য্যকরাচ্ছাদী উচ্চতাযুক্ত মহেন্দ্রকুঞ্জ হইতে সেই সাগরে গমন করিল। ৫১

पृथुगुरुमणिशुक्तिगर्भभासा
ग्लपितरसातलसंभृतान्धकारम् ।
उपहतरविरश्मिवृत्तिमुच्चैः
प्रलघुपरिप्लवमानवज्रजालैः ॥ ५२

अन्वयः । पृथुगुरुमणिशुक्तिगर्भभासा ग्लपितरसातलसम्भृतान्धकारं उच्चैः प्रलघुपरिप्लवमानवज्रजालैः उपहतरविरश्मिवृत्तिं ( जलधिं अगमत् ) ॥ ५२

मल्लिनाथः । अथ श्लोकत्रयेण समुद्रं वर्णयति—पृथ्वित्यादि । पृथवो विपुला गुरवो गुरुत्वगुणयोगिनश्च ये मणयस्त एव शुक्तीनां गर्भाः शुक्तिगर्भस्थमणय इत्यर्थस्तेषां तलवर्त्तिनां भासा ग्लपितं रसातलसंभृतान्धकारं पातालस्थध्वान्तं येन तमुच्चैरुपरि प्रलघुति-लघु यथा तथा परिप्लवमानैर्वज्रजालैर्माणिक्यपुञ्जैरुपहता निवारिता रविरश्मीनां वृत्तिः प्रसारो येन तम् । अथ समृद्धिमद्वस्तुवर्णनादुदात्तालङ्कारः । समृद्धिमद्वस्तुवर्णनमुदात्तम् । इति सौत्रं लक्षणम् ॥ ५२

भरतः । द्वितीयं दर्शयति—पृथ्वित्यादि । कीदृशं जलनिधिं ? पृथवो महान्तो गुरवो गुरुत्वाख्यगुणविशेषयुक्ता ये मणयो मौक्तिकानि तेषां याः शुक्तयः तासां गर्भभासा अन्तर्निहितदीप्त्या ग्लपितं नाशितं रसातले पाताले सम्भृतम् उपचितमपि अन्धकारं येन सः (तम्) । "मुक्तास्फोटः स्त्रियां शुक्तिः" इत्यमरः । उच्चैः उपरि प्रलघूनां लघुतमानाम् अत एव परिप्लवमानानां तरतां वज्राणां हीरकाणां जालैः समूहैः उपहता रविरश्मिवृत्तयो येन यत्र वा ं, यत् वज्रं जले तरति तत् प्रशस्तम् । यदुक्तं रत्नपरीक्षायाम्—"गुरूणि सर्वरत्नानि वज्रमेकं र लघु । भिद्यन्तेऽन्यानि वज्रेण तन्न केनापि भिद्यते" ॥ इति । उदात्तमेवेति विविधसमृद्धियुक्तत्वात् । यदुक्तं—पूर्ववाक्यमाहात्म्यमथाभ्युदयगौरवम् । विवक्षितमिति व्यक्तमुदात्तं द्वयमप्यदः" ॥ इति । अन्यत्रापि—"नानारत्नादियुक्तं यत् तच्चोदात्तं निगद्यते" । इति ॥ ५२

অনুবাদ । ঐ সাগরের স্থূলতার মণিযুক্ত শুক্তি সমূহের অন্তর্নিহিত কিরণপ্রভায় রসাতল-স্থিত অন্ধকার-রাশি বিদূরিত হইতেছে এবং উপরিস্থ লঘুতায় ভাসমান হীরকসমূহ সূর্য্য-কিরণকে উপহত করিতেছে। ৫২

समुपचितजलं विवर्द्धमानै-
रमलसरित्सलिलैर्विभावरीषु ।

स्फुटमवगमयन्तमूढ़वारीन्
शशधररत्नमयान्महेन्द्रसानून् ॥ ५३

अन्वयः। विभावरीषु विवर्द्धमानैः अमलसरित्सलिलैः समुपचितजलं (अतः) शशधररत्नमयान् महेन्द्रसानून् ऊढवारीन् स्फुटं अवगमयन्तं ॥ ५३

मल्लिनाथः। समुपेति। पुनर्विभावरीषु रात्रीषु विवर्द्धमानैरमलैरवदातैः सरितः सलिलैर्नदीजलैः समुपचितजलं प्रवृद्धोदकमत एव शशधररत्नमयांश्चन्द्रकान्तमयान्महेन्द्रसानूनूढ़वारीन् धृतोदकान् स्फुटमवगमयन्तं ज्ञापयन्तम्। अन्यथा कथमीदृशः सिन्धोः सलिलवृद्धिरिति भावः। अत्र महेन्द्रस्येदृक्चन्द्रकान्तासम्बन्धेऽपि सम्बन्धोक्तेस्तद्रूपातिशयोक्तिस्तदुत्था च सिन्धोरपि यादृक्सलिलासम्बन्धेऽपि सम्बन्धोक्तिः सैवातिशयोक्तिस्तदुभयोपजीवनेनोभयत्र सलिलचन्द्रकान्तसमृद्धिवर्णनादुदात्तं चेति सङ्करः॥ ५३

भरतः। समुपेत्यादि। कीदृशं जलनिधिं? विभावरीषु रात्रिषु विवर्द्धमानैः अमलसरित्सलिलैः निर्मलनदीजलैः समुपचितजलम्। अत एव महेन्द्रसानून् शशधररत्नमयान् प्रचुरचन्द्रकान्तमयान् तत्स्वरूपान् वा अवगमयन्तं बोधयन्तम्, ऊढवारीन् धृतजलान्। यदि तत्र चन्द्रकान्तमयाः सानवो न स्युः, तदा कथम् ऊढजलाः स्युः, ततश्च कथं वा तत्समीपे नदीनां जलवृद्धिरिति तदनुमानमिति भावः। * उदात्तमेवेति रत्नयोगात्। "उदात्तं वस्तुनः सम्पदि"ति काव्यप्रकाशः। ५३

অনুবাদ। রাত্রিকালে বর্দ্ধমান নির্ম্মল নদীজলে ঐ সাগরের জলবৃদ্ধি হইলে মনে হয়, যেন মহেন্দ্র পর্ব্বতের চন্দ্রকান্তমণিময় পাদদেশসকল জলমগ্ন রহিয়াছে। ৫৩

भुवनभरसहानलङ्घ्यधाम्नः
उ[पु]रुरुचिरत्नभृतो गुरूरुदेहान्।
श्रमविधुरविलीनकूर्म्मनक्रान्
दधतमुदूढ़भुवो गिरीनहींश्च ॥ ५४

अन्वयः। भुवनभरसहान् अलङ्घ्यधाम्नः उरुरुचिरत्नभृतः गुरूरुदेहान् श्रमविधुरविलीनकूर्म्मनक्रान् उदूढभुवः गिरीन् अहीन् च दधतं ॥ ५४

मल्लिनाथः। भुवनेति। भुवनभरसहान् स्वमहिम्ना जगद्रक्षणक्षमानित्यर्थः। अलङ्घ्यधाम्नोऽप्रधृष्यतेजस उरुरुचीनि प्रभूतकान्तीनि रत्नानि बिभ्रत्याकरेषु फणासु चेति तद्भृतः। गुरवो दुर्भरा उरवो महान्तश्च देहा येषां तान्। श्रमेण विधुरा विवशा

अत एव विलीना, विशीर्णाश्च कूर्मा नक्राः कुम्भिलापराख्या गजग्राहिणो मत्स्याश्च येषु तानन्तिकविलीनकूर्मनक्रा इत्यर्थः। उदूढभुवो भूभृत इत्यर्थः। गिरीन् मैनाकादीनहींस्तक्षकवासुकिप्रमुखांश्च दधतम्। अत्र गिरीणामहीनां च प्रस्तुतानामेव धर्म्मसाम्येनौपम्यप्रतीतेस्तुल्ययोगिता नामालङ्कारः। 'प्रस्तुतानां तथान्येषां केवलं तुल्यधर्म्मतः। औपम्यं गम्यते यत्र सा मता तुल्ययोगिता॥' इति लक्षणात्॥ ५४

भरतः। पुन कीदृशं जलनिधिं? गिरीन् पर्वतान् सर्पांश्च दधतं पर्वतसर्पयोर्युगपाद्विशेषणान्याह—भुवनभरसहान् जगतां भारस्य सहान् दृढत्वात् बलवत्त्वाच्च। सहः पचादित्वात् अन्। अनल्पप्रभावान् अनभिगम्यस्थानान्, अहिपक्षे अनभिभवनीयतेजसः, प्रकर्षाचरलभत: प्रचुरदीप्तिमत्रत्नधारकान् रत्नोत्पत्तिस्थानत्वात् फणारत्नयोगात् च। गुरूकर्णान् अनल्पमहाशरीरान्। अन्तर्विनष्टविलीनकूर्मनक्रान् अन्तरेषु विधुरा विकला: सन्तो विलीना: संश्लिष्टा: कच्छपा: कुम्भीराश्च येषु, उदूढभुवो धृतभूमीन् पर्वतोपरि वालुकासञ्चयेन भूम्युत्पत्ते: भूमिधारकस्य शेषनागस्य तत्र सत्त्वात् च एवम्भूतं जलनिधिम् अगमन् इति सम्बन्धः। श्लिष्टमिति—"श्लिष्टमिष्टमनेकार्थम् एकरूपान्वितं वचः। तदभिन्नपदं भिन्नपदप्रायमिति द्विधा॥" तदिह अभिन्नपदं श्लिष्टं पदभङ्गाभावात्, तत् पुनस्त्रिविधम्। तथा चोक्तं,—"श्लेषादेवार्थवचसोरस्य च क्रियते भिदा। तत् सहोक्त्युपमाहेतुनिर्देशात् त्रिविधं यथा॥" इति। तत् इदं सहोक्तिलक्षणं श्लिष्टमुक्तम्। गिरीन् अहींश्च इति सहोक्त्या निर्देशात् अन्यद्वयम् क्रमेण अग्रे उदाहरिष्यति॥ ५४

অনুবাদ। ঐ সাগর ভূভারধারণক্ষম অজস্রপ্রভাব তেজোময়, মহাপ্রভাময় রত্নগণোদ্ভাসিত, বিশালকায় বসুধাধার মৈনাকাদি পর্ব্বত এবং বাসুকীপ্রমুখ নাগগণের আশ্রয়স্বরূপ হইয়া তাহাদিগকে ধারণ করিয়াছে। সাগরতলস্থ ঐ পর্ব্বত ও নাগগণের সুবিস্তৃত দেহে কূর্ম্ম ও কুম্ভীরগণ প্রান্তদেহ হইয়া অবস্থান করিতেছে। ৫৪

प्रददृशुरुरुमुक्तशीकरौघा-
नमलमणिद्युतिसंततेन्द्रचापान्।
जलमुच इव धीरमन्द्रघोषान्
क्षितिपरितापहृतो महातरङ्गान्॥ ५५

अन्वयः। (कपयः) उरुमुक्तशीकरौघान् अमलमणिद्युतिसन्ततेन्द्रचापान् धीरमन्द्रघोषान् क्षितिपरितापहृतः जलमुच इव महातरङ्गान् प्रददृशुः॥ ५५

मल्लिनाथः। प्रेति। उरु प्रचुरं यथा तथा मुक्ता शीकरौघा

येषामनमला मणिद्युतय एव सन्तता अविच्छिन्ना इन्द्रचापा येषां तान्, धीरा मधुरा मन्द्रा गम्भीराश्च घोषा येषां तान्। 'धीरोऽस्त्री मधुरे बुधे' इति यादवः। क्षितेः परितापहृतः सन्तापहारिणः। हरतेः क्विप्। जलमुच इव महातरङ्गान् प्रददृशुः। श्लिष्टविशेषणेयमुपमेति केचित्। प्रकृताप्रकृतविषयः श्लेष एवेत्यन्ये॥ ५५

भरतः। प्रददृशुरित्यादि। सहरघुतनयाः प्लवङ्गसेना जलमुच इव मेघान् इव महत्तरङ्गान् ऊर्मीन् प्रददृशुः। मेघतरङ्गयोर्युगपद्विशेषणान्याह—उर्विति। उरवो महान्तो मुक्ताः कीर्णाः शीकरौघा येषु तान्, निर्मलरत्नदीप्तय एव ताभिः कारणभूताभिर्वा सम्भूतानि इन्द्रचापानि यत्र। तदुक्तम्—"अकाले शक्रचापानामुदयस्तु यतो भवेत्। असौ अन्यतरो ज्ञेयो बहुमूल्यो महामणिः॥" इति। मेघपक्षे अमलमणीनाम् इव द्युतिः येषां तादृशानि उद्गतेन्द्रचापानि यत्र। धीरमन्द्रघोषान् मधुरगम्भीरध्वनीन् क्षितिपरितापहृतः पृथिवीसन्तापहारिणः। श्लिष्टमेवेति पूर्वोक्तलक्षणसत्त्वात्, किन्तु जलमुच इव इत्युपमानिर्देशात् उपमाश्लिष्टमिदम्॥ ५५

অনুবাদ। রাম, লক্ষ্মণ ও বানরগণ দেখিলেন যেন ঐ সাগরের তরঙ্গনিচয় হইতে প্রচুর জলকণ বর্ষিত হইতেছে, তাহাতে বিমল রত্নরাশির কান্তিপ্রভা ইন্দ্রধনুর ন্যায় শোভাধারণ করিয়াছে। ঐ জলকণ বর্ষণ হইতে মধুর গম্ভীরধ্বনি উত্থিত হইতেছে। ঐ মধুরধ্বনি আবার বসুন্ধরার পরিতাপ হরণ করিতেছে। ৫৫

**विद्रुममणिकृतभूषा मुक्तामणिनिकररञ्जितात्मानः।**
**बभुरुदकनागरुग्णा वेलातटशिखरिणो यत्र॥ ५६**

अन्वयः। यत्र विद्रुममणिकृतभूषाः मुक्तामणिनिकररञ्जितात्मानः उदकनागरुग्णाः वेलातटशिखरिणः बभुः॥ ५६

मल्लिनाथः। विद्रुमेति। यत्र विद्रुममणिभिः कृतभूषाः प्रवालेन भूषिता इत्यर्थः। मुक्तामणिभीरञ्जितात्मानस्तच्छायापन्नमूर्तय इत्यर्थः। उदकनागैर्जलगजै रुग्णा भग्ना वेलातटाश्च शिखरिणश्चेति द्वन्द्वः। बभुः। अत्रापि वेलातटानां शिखरिणां च प्रकृतत्वाद्विशेषणसाम्याच्च पूर्ववत्तुल्ययोगिता॥ ५६

भरतः। विद्रुमेत्यादि। यत्र जलनिधौ वेलातटशिखरिणो बभुः शोभन्ते स्म तमीयुः इत्यग्रिमश्लोकेन अन्वयः। वेलातटाश्च शिखरिणश्चेति द्वन्द्वः। उभयं विशिनष्टि—विद्रुमैः प्रवालैः मणिभिश्च कृता भूषा येषु ते तथा मुक्तामणीनां उत्कृष्टमौक्तिकानां मुक्तानां मणीनाञ्च वा निकरैः समूहैन रञ्जिता आत्मानो देहाः प्रदेशा येषां उदकनागरुग्णा जलहस्तिभग्नाः। श्लिष्टमेवेति पूर्वोक्तलक्षणसत्त्वात्, किन्तु हेतुश्लिष्टमिदं युगपदुभयविशेषणानां हेतुत्वेनैव निर्देशात्। प्रवालमणिकृतालङ्कारत्वात् मुक्तामणिदीप्तिरञ्जितरूपत्वात् उदकनागभग्नत्वात् च बभुरित्यर्थः॥ ५६

অনুবাদ। ঐ সাগরের বেলাভূমি ও তটগত পর্ব্বতপাদদেশ প্রবাল মণিভূষিত ও মৌক্তিকরঞ্জিত। ঐ ভূমি জলহস্তী দ্বারা ভগ্ন হইয়া অতিশয় শোভা পাইতেছিল। ৫৬

भृतनिखिलरसातलः सरत्न
शिखरिसमोर्मितिरोहितान्तरीक्षः।
कुत इह परमार्थतो जलौघो
जलनिधिमीयुरतः समेत्य मायाम्॥ ५७

अन्वयः। भृतनिखिलरसातलः सरत्नः शिखरिसमोर्मितिरोहितान्तरीक्षः जलौघः परमार्थतः इह कुतः अतः समेत्य जलनिधिं मायाम् ईयुः॥ ५७

मल्लिनाथः। भृतेति। भृतं निखिलं रसातलं पातालं येन सः, सरत्नो रत्नाकरः शिखरिसमैः पर्वताकारैरूर्मिभिस्तिरोहिता-न्तरीक्षमाच्छादिताकाश एवम्भूतः, जलौघो जलराशिः परमार्थतः पर-मार्थः सन् यथाथभूत इह कुतो नास्त्येवेति। समेत्य सर्वे सम्भूय जलनिधिं मायां कल्पनामीयुरवजग्मुः। द्यावापृथिवीभ्यां सहैक भावेन पारमार्थिकरूपाकलनान्मायेति मेनिर इत्यर्थः। अत एव विषयापह्नवेन रूपान्तरारोपादपह्नवालङ्कारः। "निषिद्धविषयं साम्यादन्यारोपे ह्यपह्नुतिः" इति लक्षणात्॥ ५७

भरतः। भृतेत्यादि। सहरघुतनया: प्लवङ्गमनाः समेत्य मिलित्वा जलनिधिम् अन-कारणात् मायामिव ईयुः ज्ञातवन्तः। सर्वेषां गत्यर्थानां ज्ञानार्थत्वात्। किं कारण मत्राह—इह प्रदेशे जलौघः कुतः परमार्थतस्तत्त्वं न विद्यते। कीदृशः? भृतनिखिल-रसातलः पूरिताशेषपातालः रत्नैः सहितः पर्वततुल्यतरङ्गैः आच्छादिताकाशः, अतस्य एतादृ सत्वासम्भवादियं खलु मायेति भावः। अपह्नुतिरिति जलनिधिम् उपमेयम् असत्यं कृत्वा मायामिव इत्युपमानस्य सत्यतया व्यवस्थापितत्वात्। तथा चोक्तं,—'प्रकृतं यन्निषिध्यान्यत साध्यते सा त्वपह्नुतिः।' इति। अन्यत्रापि, 'अपह्नुतिः अभीष्टा च किञ्चिदन्तर्गतोपमा। भूतार्थापह्नवात् सेयं क्रियतेऽस्यामिदा यथा॥' इति॥ ५७

অনুবাদ। নিখিল রত্নের আকর সমুদ্র সমুদয় পাতালদেশকে পরিপূর্ণ করিয়া অবস্থান করিতেছে, পর্ব্বতপ্রমাণ তরঙ্গসমূহে নভোমণ্ডল আবৃত করিয়া রাখিয়াছে; এরূপ বিশাল সর্ব্বব্যাপী সমুদ্র বাস্তবিকপক্ষে কোথায় আছে? এই ভাবিয়া বানরগণ ঐ সমুদ্রকে মায়াময় বলিয়া মনে করিল। ৫৭

शशिरहितमपि प्रभूतकान्तिं
विबुधहृतश्रियमप्यनष्टशोभम्।

मथितमपि सुरैर्दिवं जलौघैः
समभिभवन्तमविक्षतप्रभावम्॥ ५८

अन्वयः। शशिरहितम् अपि प्रभूतकान्तिं विबुधहृतश्रियम् अपि अनष्टशोभं सुरैः मथितम् अपि जलौघैः दिवं समभिभवन्तम् अविक्षतप्रभावं तं ( ईयुः )॥ ५८

मल्लिनाथः। शशीति। शशिरहितमप्यद्याप्यनुदितत्वादिति भावः। प्रभूतकान्तिं महाप्रकाशं रत्नाकरत्वादिति भावः। विबुधैः सुरैः हृता श्रीः पद्मा शोभा च यस्य तं तथाप्यनष्टशोभं, सुरैः पद्मैव हृता न तु शोभेति भावः। 'शोभासम्पत्तिपद्मासु श्रीः' इति विश्वः। सुरैर्मथितं विलोड़ितमपि जलौघैर्दिवमाकाशं समभिभवन्तमाक्रामन्तमक्षय्यजलत्वादिति भावः। सर्वत्रापिर्विरोधे। अविक्षतप्रभावं महाप्रभावत्वान्न कश्चिद्विरोध इत्यर्थः। अत्र विरोधस्याभासीकरणाद्विरोधालङ्कारः। "आभासत्वे विरोधस्य विरोधालङ्कृतिः स्मृता" इति लक्षणात्॥ ५८

भरतः। शशीत्यादि। कीदृशं जलनिधिमीयुः? शशिरहितमपि चन्द्रेण विरहितमपि प्रभूतकान्ति प्रचुरदीप्ति नानारत्नापशोभितत्वात्, विबुधहृतश्रियमपि देवहृतलक्ष्मीकमपि अनष्टशोभं सकलशोभास्पदत्वात्, सुरैः मथितमपि जलौघैः दिवम् आकाशं सम्यक् अभिभवन्तम् अत्युच्छ्रितत्वात्। अतएव अविक्षतप्रभावम् अखण्डितमहिमानम्। विशेषोक्तिरिति चन्द्रादेः एकदेशस्य वैकल्येऽपि तत्कार्य्यप्रभूतकान्त्यादिना गुणान्तरेण विशेषस्य प्रतिपादनात्, तथा च उक्तं,—"गुणजातिक्रियादीनां यत्र वैकल्यदर्शनम्। विशेषदर्शनायैव सा विशेषोक्तिरिष्यते॥" अन्यत्रापि, 'एकदेशस्य विगमे या गुणान्तरसंस्तुतिः। विशेषप्रथनायासौ विशेषोक्तिर्मता यथा॥' इति॥ ५८

অনুবাদ। যে সাগর চন্দ্রহীন হইয়াও প্রচুরকান্তিশালী, দেবগণ কর্ত্তৃক হৃতশ্রী হইয়াও শ্রীমান, মথিত হইয়াও জলপ্রবাহে আকাশ ব্যাপিয়া রহিয়াছে, তাহার প্রভাব কিছুই নষ্ট হয় নাই।৫৮

क्षितिकुलगिरिशेषदिग्गजेन्द्रान्
सलिलगतामिव नावमुद्वहन्तम्।
धृतविधुरधरं महावराहं
गिरिगुरुपोत्रमपीहितैर्जयन्तम्॥ ५९

अन्वयः। क्षितिकुलगिरिशेषदिग्गजेन्द्रान् सलिलगतां नावम् इव उद्वहन्तं धृतविधुरधरं गिरिगुरुपोत्रं महावराहम् ईहितैः जयन्तम् ( जलनिधिं )॥ ५९

मल्लिनाथः। क्षितीति। क्षितिं भुवं कुलगिरीन् कुलपर्वतान् शेषं फणिपतिं दिग्गजेन्द्रानैरावतादींश्च सलिलगतां नावं तरीमिवोद्वहन्तं तद्वदनायासेनैतद्देशे वहन्तमित्यर्थो समुद्रमहत्त्वमिति भावः। उपमालङ्कारः। किञ्च धृता विधुरा विजला धरा येन तं, गिरिरिव गुरुपीनं मुखं यस्य तम्। "हलसूकरयोः पुवः" इति सूकराख्ये पुवष्ट्रन्प्रत्ययः। महावराहमीहितैश्चेष्टितैर्जयन्तं तमप्येकदेशे वहन्तमित्यर्थः। अत्र क्षित्याद्युद्वहनासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिस्तदनुप्राणिता चोक्तोपमेति सङ्करः॥ ५९

भरतः। क्षितीत्यादि। जलनिधिमैक्षीय: इति सम्बन्धः। कीदृशं क्षितिं कुलपर्वतान् शेषं नागराजं दिग्गजेन्द्रान् ऐरावतादींश्च सलिलगतां नौकामिव उद्वहन्तं दधतम्। अतएव महावराहमपि ईहितैः चेष्टितैः जयन्तम्। कीदृशं महावराहं ? धृतविधुरधरं धृता उद्धृता विधुरा प्रलये व्याकुला धरा पृथिवी येन, गिरिवत गुरु महत् पीनं मुखं यस्य, समुद्रपक्षे पीनं तरङ्गः। व्याजस्तुतिरिति जलनिधेः को महिमा यः सदा क्षित्यादिभारं सेवकवत् वहतीति यतो निन्दा कृत्वा महावराहं जयन्तम् इति प्रशंसनात्, यद्वा भगवज्जयमप्यापततो निन्दात्वेन उक्त्वा तत्साद्दृश्यप्रदर्शनेन स्तुतिरुक्ता। तथा च उक्तं—'यदि निन्दति वा स्तौति व्याजस्तुतिरसौ मता। दोषाभासा गुणा एव भजन्ते यत्र सन्निधिम्॥' इति। अन्यैस्तु क्षित्यादिधारणात् अधिकगुणस्य जलनिधेः स्तोत्रव्यपदेशेन महावराहतुल्यत्वात् तस्मात् महावराहम् ईहितैः जयन्तम् इति किञ्चिद्विधित्सया निन्दनाद्व्याजस्तुतिः इति उक्तम्। तथा हि, 'दूराधिकगुणस्तोत्रव्यपदेशेन तुल्यता। किञ्चिद्विधित्सया निन्दा व्याजस्तुतिरसौ मता'' इति। ५९

অনুবাদ। ঐ তুঙ্গতরঙ্গময় সাগর, জলগত নৌকার ন্যায়, পৃথিবী, কুলাচল, কুলনাগরাজ ও শ্রেষ্ঠ দিকগজগণকে ধারণ করিয়া যেন স্বীয় অধ্যবসায়ে সেই দুর্গত-ধরণীধারী, গিরিগুরু-বদনশালী মহাবরাহকে জয় করিতেছে। ৫৯

गिरिपरिगतचञ्चलापगान्तं
जलनिवहं दधतं मनोऽभिरामम्।
गलितमिव भुवो विलोक्य रामं
धरणिधरस्तनशुक्लपट्टचोर[न]म्॥६०

अन्वयः। गिरिपरिगतचञ्चलापगान्तम् मनोऽभिरामं जलनिवहं रामं विलोक्य (दृष्टाथाः) भुवः गलितं धरणिधरस्तनशुक्लपट्टचीरम् इव दधतम्॥ ६०

मल्लिनाथः। गिरीति। गिरिपरिगतास्तटाद्रिसम्बद्धाश्चञ्चला लोला आपगानामन्ता अग्रभागा यस्मिंस्तं, मनोऽभिरामं जल-

निवहं जलप्रवाहं रामं निजनाथं नारायणावतारं विलोक्य पारवश्यं गताया इति शेषे समानकर्त्तृकत्वनिर्वाहः। भुवः सम्बन्धि गलितं स्रस्तं धरणिधरस्येव स्तनस्य शुक्लं पट्टचोरं पट्टवस्त्रं स्तनदुकूलमिव दधतम्। अत्र गिरिसम्बद्धजलप्रवाहे भूस्तनदुकूलतोत्प्रेक्षा, सा च धरणिधरस्तनेति रूपकनिर्व्यूढ़ेति सङ्करः॥ ६०

भरतः। गिरिपरीत्यादि। कीदृशं जलनिधिं? जलस्य निवहं समूहं दधतं धारयन्तम्। कीदृशं जलनिवहं? गिरिभिः परिगताः संश्लिष्टाः चञ्चला नद्यन्ता नद्यवयवा यत्र तं, मनोऽभिरामं स्वपतिं विलोक्य हर्षवशात् आयाक्पाया भुवः पृथिव्या धरणिधरस्य पर्वतस्य स्तनरूपस्य गलितं स्रस्तं शुक्लवर्णपटाञ्चलमिव उपमारूपकमिति उपमासहितं रूपकमित्यर्थः। अत्र उपमानेन स्तनेन उपमेयस्य कस्यचित् धरणीधरस्य स्तनत्वं रूपितं, गलितं पट्टचोरमिव इत्युपमापि निर्दिष्टा। तथा च उक्तम्, "उपमानेन तद्भावं उपमेयस्य रूपणम्। यद्वदत्युपमानं तदुपमारूपकं यथा॥" इति। अन्यत्रापि उक्तम्, "दृष्टं साधर्म्यवैधर्म्यदर्शनाद्गुणगौणयोः। उपमाव्यतिरेकाख्यं रूपकद्वितयं यथा॥" इति। ६०

অনুবাদ। ঐ সাগর, মনোভিরাম-স্বামি-সন্দর্শন-পুলকিতা রমণীর স্তনস্খলিত চিনাংশুকের ন্যায় পৃথিবীর শৈলস্তনস্খলিত চঞ্চলনদী-সম্মিলিত জলরাশি ধারণ করিতেছে।৬০

अपरिमितमहाद्भुतैर्विचित्र-
श्शुरतमलिनः शुचिभिर्महानलङ्घैः।
तरुमृगपतिलक्ष्मणक्षितीन्द्रैः
समधिगतो जलधिः परं बभासे॥६१

अन्वयः। विचित्रः सुरतमलिनः महान् जलधिः अपरिमितमहाद्भुतैः शुचिभिः अलङ्घैः तरुमृगपतिलक्ष्मणक्षितीन्द्रैः समधिगतः (सन्) परं बभासे॥ ६१

मल्लिनाथः। अपरिमितेति। विचित्रो महाद्भुतस्सुरतमलिनो निर्म्मलो महानलङ्घ्योजलधिरपरिमिता अपरिच्छिन्नरूपाः। एतद्विशेषणं समुद्रेऽपि योज्यम्। ते च ते महाद्भुता अद्भुतचारित्राश्च तैः शुचिभिर्निर्म्मलैरलङ्घैरलङ्घ्यप्रभावैस्तरुमृगपतिलक्ष्मणक्षितीन्द्रैः सुग्रीवलक्ष्मणरामचन्द्रैः समधिगतः सङ्गतः समेतः सन् परं बभासे। अत्रानुरूपसमागमवर्णनात् समासालङ्कारः। 'सा समालङ्कृतिर्योगे वस्तुनोरनुरूपयोः" इति लक्षणात्॥ ६१

भरतः। अपरिमितेत्यादि। तरुमृगाणां वानराणां पत्या सुग्रीवेण लक्ष्मणेन क्षितीन्द्रेण रामेण च समधिगतः प्राप्तो जलधिः परम् अत्यर्थं बभासे शोभते स्म। क्रमेण सुग्रीवादीनां समुद्रस्य च तुल्यानि विशेषणान्याह।—अपरिमितमहाश्चर्य्यैः विचित्रः आश्चर्य्यान्वितः

अनन्दितः शुचिभिः विमलैः महान् अनभिभवनीयः अवङ्गैः अनभिभवनीयैः एवञ्च सति तुल्यरूपत्वात् तेन अनधिगमाशेऽपि अभासिते इत्यर्थात् गम्यते। तुल्ययोगितेति उपमानानामपि सुग्रीवादीनां विशिष्टेन अलङ्कविना गुणसाम्यविवक्षया तुल्यकार्य्यस्य भासनलक्षणस्य योगात्। तथा च उक्तम् 'विवक्षितगुणोत्कर्षैः यत् समीकृत्य कस्यचित्। कीर्त्तनं स्तुतिनिन्दार्थं सा स्मृता तुल्ययोगिता॥ इति। अन्यत्राप्युक्तं—"न्यूनस्यापि विशिष्टेन गुणसाम्यविवक्षया। तुल्यकार्य्यक्रियायोगादित्युक्ता तुल्ययोगिता" ॥ इति। ६१

अनुवाद। বৈচিত্র্যময়, বিমল, অলঙ্ঘ্য মহাসাগর, অপরাজেয়, শুদ্ধসত্ত্ব শ্রীরাম লক্ষ্মণ ও সুগ্রীবের সহিত সম্মিলিত হইয়া অতিশয় শোভা পাইতে লাগিলেন।৬১

न भवति महिमा विना विपत्ते-
रवगमयन्निव पश्यतः पयोधिः।
अविरतमभवत् क्षणे क्षणेऽसौ
शिखरिपृथुप्रथितप्रशान्तवीचिः ॥६२

अन्वयः। महिमा विपत्तेः विना न भवति इति पश्यतः (रामादीन्) अवगमयन् इव असौ पयोधिः अविरत क्षणे क्षणे शिखरिपृथुप्रथितप्रशान्तवीचिः अभवत् ॥ ६२

मल्लिनाथः। नेति। महिमा वृद्धिर्विपत्तेर्विना विपत्तिरहितो न भवत्यविनाशो नास्ति। "पृथग्विना—" इत्यादिना पञ्चमी। इतीत्थं पश्यतो रामादीनवगमयन् बोधयन्निवेत्युत्प्रेक्षा। असौ पयोधिः पयोनिधिरविरतमश्रान्तं क्षणे क्षणे शिखरिवत् पर्वतवत् पृथवः प्रशान्ताः सद्यो विशीर्णाश्च वीचयो यस्य सोऽभवत्। स्वतरङ्गोच्छ्रायक्षणिकत्वेन सर्वोच्छ्रायक्षणिकत्वं कथयतीवेत्युत्प्रेक्षार्थः॥ ६२

भरत। न भवतीत्यादि। विपत्तेः विना विनाशं विना महिमा महत्त्वं न भवति। अन्यारभ्येति विनायोगे पञ्चमी। नास्ति एव तत् महत्त्वं यस्य विपत्तिः नास्तीति पश्यतो रामादीन् अवगमयन् इव असौ पयोधिः अविरतम् अविच्छेदेन क्षणे क्षणे शिखरिपृथुप्रथितप्रशान्तवीचिः अभवत् पृथवो महान्तः प्रथिताः प्रकाशिताः पश्चात् प्रशान्ताश्च वीचयः तरङ्गा यस्य स तथा महता विपत्तौ खेदो न कर्त्तव्य इति रामं प्रत्युपदिष्टमिति पश्यन इत्यस्य भावः। निदर्शनम् इति प्रतिक्षणं वीचीनां पृथुत्वप्रशान्तिक्रियां दर्शयित्वा अन्यत्रापि महिम्नो विपत्तिफलस्य उपादानात्। तथा च उक्तम्—'अर्थान्तरप्रवृत्तेन किञ्चित् तत् सदृशं फलम्। सदसत्त्वानि दर्श्येत यदि स्यात् तन्निदर्शनम्॥ इति। अन्यत्राप्युक्तं,—"क्रिययैव तदर्थस्य विशिष्टस्योपदर्शनं नाम यद्देववतिभिर्विना" ॥ इति। काव्यः शब्दो यथा घट इत्यादिवत् यथाशब्दादिभिः विना इदं निदर्शनम् इति ॥ ६२

अनुवाद। বিনা বিপদে মহত্ত্ব লাভ হয় না রাম লক্ষ্মণ প্রভৃতি দর্শকগণকে এই নীতিতত্ত্ব

বুঝাইবার জন্যই যেন সাগর, অনবরত পর্ব্বতপ্রমাণ বিশাল তরঙ্গ বিস্তার এবং তৎক্ষণাৎ তাহাদিগকে উপসংহার করিয়া দেখাইতে লাগিলেন।৬২

मृदुभिरपि बिभेद पुष्पबाणै-
र्जलशिशिरैरपि मारुतैर्ददाह ।
रघुतनयमनर्थपण्डितोऽसौ
न च मदनः क्षतमाततान नार्चिः ॥६३

अन्वयः। अनर्थपण्डितः असौ मदनः रघुतनयं मृदुभिः अपि पुष्पबाणैः बिभेद, जलशिशिरैः अपि मारुतैः ददाह। (तथापि) क्षतम् न आततान, अर्चिः न आततान ॥६३

मल्लिनाथः। अथ समुद्रोपकण्ठे रामस्य मन्मथावस्थां वर्णयति—मृदुभिरित्यादि। अनर्थपण्डितो हिंसाकुशलोऽसौ मदनो रघुतनयं रामं मृदुभिरपि पुष्पबाणैर्बिभेद जलशिशिरैरपि मारुतैर्ददाह। तथापि क्षतं व्रणं नाततानार्चिर्ज्वालां च नाततान। अत्र मृदुना भेदो भेदेऽप्यक्षतत्वं शिशिरेण दाहो दाहेऽपि नार्चिरिति विरोधानां मदनस्याचिन्त्यशक्तित्वेन परिहाराद्विरोधालङ्कारः। 'आभासत्वे विरोधस्य विरोधालङ्कृतिर्मता' इति लक्षणात्। भेदक्षतयोर्दाहार्चिषोश्च यथासंख्येनान्वयाद्यथासंख्यालङ्कारः। आदौ क्षते निर्दिष्टस्य नाततानेत्यस्यार्चिषापि सम्बन्धादादिदीपकं चेति सङ्करः ॥ ६३

भरतः। समुद्रान्तिके सीतास्मरणात् रामस्य कामावस्थामाह—मृदुभिरित्यादि। मदनो मृदुभिरपि पुष्पबाणैः रघुतनयं बिभेद न च असौ तावतापि क्षतं खण्डनम् आततान कृतवान्। सजलशीतलैरपि मारुतैः तं ददाह न च असौ अर्चिः आततान। अतएव असौ अनर्थपण्डितः निष्प्रयोजने कर्मणि कुशलः। विरोध इति पुष्पबाणानां यत् मार्दवं मारुतानाञ्च जलसंसर्गात् यत् शैत्यं तयोर्भेददाहलक्षणक्रियाद्वयं विरुद्धम् अभिहितं, तयोश्च क्रिययोः विरुद्धं क्षतार्चिषोः अकरणं तेन कामोत्कर्षरूपो विशेषः प्रतिपादितः अयञ्च विरोधो न वास्तवः भेददाहाभ्यां पीडामात्रस्य लक्षितत्वात्। तथा चोक्तं,—'विरुद्धानां पदार्थानां यत्र संसर्गदर्शनम्। विशेषसाधनायैव स विरोधः स्मृतो यथा ॥' इति। अन्यत्रापि उक्तं, 'गुणस्य च क्रियाया वा विरुद्धार्थक्रियाभिधा। या विशेषाभिधानाय विरोधं तं विरोधं तं विदुर्यथा: ॥" इति ॥६३

অনুবাদ। শ্রীরামচন্দ্রকে, অনর্থপণ্ডিত ঐ মদন, ক্ষত উৎপাদন না করিয়া কোমল পুষ্পবাণ প্রহার করিতে লাগিল এবং শিশিরাক্ত সমীরণ, জ্বালা উৎপাদন না করিয়া দাহন করিতে লাগিল।৬৩

अथ मृदुमलिनप्रभौ दिनान्ते
जलधिसमीपगतावतीतलोकौ ।
अनुकृतिमितरेतरस्य मूर्त्त्यो-
र्दिनकरराघवनन्दनावकार्ष्टाम् ॥६४

अन्वयः । अथ दिनान्ते मृदुमलिनप्रभौ जलधिसमीपगतौ अतीतलोकौ दिनकरराघवनन्दनौ ( सन्तौ ) इतरेतरस्य मूर्त्त्योः अनुकृतिम् अकार्ष्टां ॥ ६४

मल्लिनाथः । अथेति । अथ मदनावस्थानन्तरं दिनान्ते मृदवतोष्णा मलिनानुज्ज्वला च प्रभा ययोस्तौ जलनिधिसमीपगता वेकत्रास्तमयार्थमन्यत्र लङ्कायात्रार्थं चेत्यर्थः । अतीतलोकावेकत्र लोकान्तरगमनादन्यत्र लोकोत्तरत्वादिति भावः । दिनकरराघवनन्दनौ सूर्य्यदाशरथी मूर्त्त्योः स्वाकारयोरितरेतरस्यानुकृतिं त्वमिवाहमहमिव च त्वमिति पर्य्यायेण परस्परमुपमानोपमेयभावमकार्ष्टाम । अत एवोपमेयोपमालङ्कारः । 'पर्य्यायेण द्वयोस्तस्मिन्नुपमेयोपमा मता' इति लक्षणात ॥ ६४

भरतः । अथेत्यादि । अनन्तर दिनकरः सूर्य्यो राघवस्य दशरथस्य नन्दनो रामो दिनस्य अन्ते सन्ध्याकाले अन्योऽन्यस्य मूर्त्त्योः शरीरयोः अनुकृतिम् अनुकारम अकार्ष्टां कृतवन्तौ तुल्यधर्मत्वात् । सूर्य्यो रामस्य मूर्त्तेः अनुकृति रामोऽपि सूर्य्यस्य मूर्त्तेः अनुकृति चकार इत्यर्थः । द्वयोः तुल्यतां दर्शयति—तौ कीदृशौ ? मृदुः अप्रचण्डा मलिना प्रभा ययोः सूर्य्यस्य दिनान्तवशात् रामस्य शोकात् शय्यादित्यजनात् च, समुद्रसमीपं गतौ त्यक्तलोकौ च । उपमेयोपमेति इतरेतरशब्देन समानधर्मत्वात् पर्य्यायेण उपमानोपमेयत्वकथनात् । तथा चोक्तम्,—उपमानोपमेयत्वं यत्र पर्य्यायतो भवेत् । उपमेयोपमां धीरा ब्रुवते तां गुणोदितास ॥' इति ॥ ६४

অনুবাদ । অনন্তর দিবাবসানকালে, মৃদুমলিন-প্রভাশালী লোকাতীত সূর্য্যদেব ও রঘুনন্দন শ্রীরামচন্দ্র, সাগর সমীপে উপস্থিত হইয়া উভয় উভয়ের আকৃতির অনুকরণ করিতে লাগিলেন ।৬৪

अपहरदिव सर्वतो विनोदान्
दयितगतं दधदेकधा समाधिम् ।
घनरुचि ववृधे ततोऽन्धकारं
सह रघुनन्दनमन्मथोदयेन ॥६५

अन्वयः। ततः सर्वतः विनोदान् अपहरन् इव दयितगतं समाधिम् एकधा दधत् घनरुचि अन्धकारं रघुनन्दनमन्मथोदयेन सह ववृधे ॥ ६५

मल्लिनाथः। अपेति। ततोऽस्तमयानन्तरं सर्वतः सर्वान्। सार्वविभक्तिकस्तसिः। विनोदानाह्निकान् मनोविनोदनव्यापारानपहरन् संहरन्निव तथा दयितगतं प्रियजनविषयं समाधिमेकाग्रतामेकधा एकप्रकारं दधत् कुर्वन् घनरुचि मेघश्याममन्यत्र सान्द्रप्रीतिदमन्धकारं रघुनन्दनस्य यो मन्मथोदयः पूर्वोक्तस्तेन सह ववृधे। अत्रान्धकारमन्मथोदययोः कर्त्रोरेकस्य सहार्थेनान्वयादवृध इति सम्बन्धिभेदभिन्नयोर्वृद्ध्योरभेदाध्यवसायाच्च श्लिष्टनिमित्यतिशयोक्तिमूला कर्तृसाहित्यरूपा सहोक्तिरलङ्कारः। एतच्च सम्यक् श्लिष्टं, श्रितरुचिरोत्तममित्यत्र लक्षणं चोक्तम्॥ ६५

भरतः। अपहरदित्यादि। ततो दिनान्तात् उत्तरकालम् अन्धकारं रघुनन्दनस्य रामस्य कामोदयेन सह ववृधे। तदानीम् अन्धकारो रामस्य कामोदयोऽपि प्रवृद्ध इत्यर्थः। उभयविशेषणमाह—सर्वतो विनोदान् अपहरदिव दिवसे ये विनोदाः चित्तप्रसादकास्तान सर्वान् सर्वप्रकारेण वा अपनयदिव पक्षे विभक्तिव्यत्ययः। दयितगतं समाधिं चित्तैकाग्रताम एकधा एकप्रकारं दधत् जनयत्। घनरुचि मेघवत् श्यामं निबिडच्छायं वा कामोदयपक्षे दयिताविषये निबिडा श्रद्धा यस्मात्, दयितगताम् इत्यत्र प्रमदवनमित्यादिवत् क्लीवः। वस्तुतस्तु दयितशब्देन सामान्यविवक्षया भार्य्यापि उच्यते। "अन्धकारोऽस्त्रियां ध्वान्तम्" इत्यमरः। सहोक्तिरिति अन्धकारकामोदयाश्रितयोः वृद्धिक्रिययोः तुल्यकालयोः ववृध इत्यनेन अभिधानात्। तथा चोक्तं,—'तुल्यकालक्रिये यत्र वस्तुद्वयसमाश्रिते। पदेनैकेन कथ्येते सहोक्तिः सा मता यथा'॥ इति॥ ६५

অনুবাদ। অনন্তর নিবিড় অন্ধকার যেন দিবসের সমুদায় মনোমত ব্যাপার অপহরণ করিয়া প্রিয়াবিষয়িনী একাগ্রতা একরূপে পরিণত করত রঘুনাথের মন্মথোদয়ের সঙ্গে সঙ্গে বর্দ্ধিত হইতে লাগিল।৬৫

अधिजलधि तमः क्षिपन् हिमांशुः
परिददृशेऽथ दृशां कृतावकाशः।
विदधदिव जगत् पुनः प्रलीनं
भवति महान् हि परार्थ एव सर्वः ॥६६

अन्वयः। अथ हिमांशुः अधिजलधि तमः क्षिपन् दृशां कृतावकाशः (सन्) प्रलीनं जगत पुनः विदधत् इव परिददृशे। सर्वः महान् परार्थे एव भवति हि ॥ ६६

मल्लिनाथः। अधीति। अथान्धकारवृद्ध्यनन्तरं हिमांशुश्चन्द्रः अधिजलधि जलधौ। विभक्त्यर्थेऽव्ययीभावः। तमः क्षिपन् निरस्यं-

स्तमोऽन्यत्र नीलिमादर्शनादिति भावः । अत एव दृशां कृतावकाशो दत्तप्रसरः सन्, किं बहुना—प्रलीनमस्तमितं जगत्पुनर्भूयाऽपि विदधदिव सृजन्निवेत्युत्प्रेक्षा । परिदृदृशे । अतो महोपकारित्वमस्येति भावः । अथ सर्वो महान् परस्मैः पदार्थः परोपकारार्थः एव । 'अर्थेन नित्यसमासः सर्वलिङ्गता च वक्तव्या' इति साधुः । भवति हि सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥६६

भरतः । अथेत्यादि । अथान्धकारहननानन्तरं हिमांशुः चन्द्रो जनैः परिददृशे दृष्टः । कीदृशः ? अधिजलधि समुद्रे तमोऽन्धकारं क्षिपन् नाशयन् । अधिजलधि इति सप्तम्यर्थेऽव्ययीभावः । दृशां चक्षुषां कृतावकाशः दत्तावसरः प्रलीनं तिरोभूतं जगत् पुनः विदधदिव सृजन्निव । कुतस्तेन एवं कृतमित्याह,—हि यस्मात् सर्व एव महान् जनः पदार्थ एव परप्रयोजन एव भवति । परिवृत्तिरिति दृशां कृतावकाश इत्यनेन विशिष्टस्य वस्तुनः आदानात् तमः क्षिपन् इत्यनेन च कस्यचित् वस्तुनोऽपोहात् भवति हि इत्यादिना अर्थान्तरन्यासात् । तथा च उक्तं,—'विशिष्टस्य यदादानमन्यापोहेन वस्तुनः । अर्थान्तरन्यासवती परिवृत्तिरसौ मता ॥' इति । विद्यासागरस्तु तमःसम्बन्धिनम् अवकाशं नेत्रेषु आधाय तत्सम्बन्धिनः स्वोपभोग्य तमसो विधानात् परिवृत्तिरियम् इत्याह । तथा चोक्तम्,—'अर्थानां यो विनिमयः परिवृत्तिस्तु सा मता ॥' इति ॥ ६६

অনুবাদ। তাহার পর চন্দ্রদেব অন্ধকাররাশিকে সমুদ্র মধ্যে নিক্ষেপ করিয়া সকলের নয়নে অবকাশপ্রদান করিলেন এবং তিরোহিত জগৎকে যেন পুনর্ব্বার সৃষ্টি করিয়া দেখা দিলেন। মহাপুরুষেরাই পরার্থসাধননিষ্ঠ হইয়া থাকেন।৬৬

अशनिरयमसौ कुतो निरभ्रे
शितशरवर्षमसत्तदप्यशार्ङ्गम् ।
इति मदनवशो मुहुः शशाङ्के
रघुतनयो न च निश्चिकाय चन्द्रम् ॥६७

अन्वयः । अयम् अशनिः निरभ्रे (नभसि) असौ कुतः ? (उत) शितशरवर्षं अशार्ङ्गम् तदपि असत् इति मुहुः शशाङ्के मदनपरवशः रघुतनयः चन्द्रं न च निश्चिकाय ॥ ६७

मल्लिनाथः । अशनिरिति । अयं पुरोवर्त्यशनिर्वज्रो निरभ्रे निर्मेघे नभस्यसावशनिः कुतस्तर्हि शितवर्षं निशितशरवृष्टिः शृङ्गस्य विकारः शार्ङ्गं धनुस्तद्रहितं तच्छरवर्षमप्यसदविद्यमानमेव । इत्थं मुहुः शशाङ्के विषये सन्दिहान इति शेषः । मदनपरवशः कामपरवशो रघुतनयो रामश्चन्द्रं न निश्चिकाय चन्द्रोऽयमिति न

निश्चितवानित्यर्थः। अत्र निश्चयगर्भाख्यः सन्देहभेदोऽलङ्कारः। आद्यन्तयोः संशयं निबध्य मध्ये कुतोऽशनिरित्यादिनिश्चयनिबन्धनात्। "विषयी विषयो यत्र सादृश्यात् कविसम्मतात्। सन्देहगोचरौ स्यातां सन्देहालङ्कृतिश्च सा॥" इति सामान्यलक्षणम्॥६७

भरत:। अशनिरित्यादि। रघुतनयो रामः कामवशःसन् चन्द्रं न च निश्चिकाय न निर्णीतवान्, किन्तु मुहुः अधम् इति एवं शशाङ्के वितर्कितवान्। किम् इत्याह,—अयम् अशनिः वज्रः असौ अशनिः निरभ्रे नभसि कुतः, यतो मेघादेव अशनिः उत्पद्यते। किम् इदं निशितानां शराणां वर्षं, तदपि कुतः? यतः तत् अस्माकम् अविद्यमानधनुः अभूत् धनुषा विना न भवति इत्यर्थः। शशाङ्क इति पाठे इति एवं मदनवशः चन्द्रविषयेऽभूत् न च चन्द्रं निश्चिकाय इति योज्यम्। ससन्देह इति उपमेयस्य चन्द्रस्य उपमानाशनिशरवर्षरूपत्वम् अभिधाय कुत इत्यादिना पुनरुपमानोपमेययोर्भेदाभिधानात् तावतापि न च निश्चिकाय चन्द्रम् इति ससन्देहवचोऽभिधानाच्च। तथा चोक्तम्,—'उपमानेन यत्तत्त्वं भेदञ्च वदतः पुनः। ससन्देहवचः स्तुत्यै ससन्देहं विदुर्बुधाः॥' इति॥६७

অনুবাদ। এই কি বজ্র? মেঘশূন্য আকাশে বজ্রই বা কোথা হইতে আসিল? তবে কি শাণিতবাণবৃষ্টি? তাহাও ত ধনুঃ বিনা অসম্ভব! কামাভিভূত রামচন্দ্র এইরূপে বারংবার সন্দিহান হইতে লাগিলেন। কিছুতে চন্দ্রকে চন্দ্র বলিয়া স্থির করিতে পারিলেন না।৬৭

कुमुदवनचयेषु कीर्णरश्मिः
क्षततिमिरेषु च दिग्वधूमुखेषु।
वियति च विललास तद्वदिन्दु-
र्विलसति चन्द्रमसो न यद्वदन्यः॥६८

अन्वयः। क्षततिमिरेषु कुमुदवनचयेषु दिग्वधूमुखेषु च कीर्णरश्मिः इन्दुः वियति चन्द्रमसः अन्यः यद्वत् न विलसति, तद्वत् विललास॥६८

मल्लिनाथः। कुमुदेति। क्षततिमिरेषु निरस्तान्धकारेषु कुमुदवनानां चयेषु समूहेषु दिग्वधूमुखेषु च कीर्णरश्मिः विक्षिप्तकरः सन्निन्दुर्वियत्याकाशे तद्वदिन्दुवद्विललास चन्द्रमसश्चन्द्रादन्यो यद्वद्यथा न विलसति तथैव विललासेत्यर्थः। अत्रोपमेयस्येन्दोरेवोपमानत्वादनन्वयालङ्कारः। "एकस्यैवोपमानोपमेयत्वेऽनन्वयो मतः" इति लक्षणात्। एकस्योभयरूपत्वाभिधानमद्वितीयत्वाभिप्रायमित्यविरोधः॥६८

भरत.। कुमुदेत्यादि। इन्दुः तद्वत् इन्दुवत् विललास शोभते स्म। चन्द्रात् अन्यः कोऽपि यद्वत् इन्दुवत् न विलसति। इन्दुः कीदृशः? कुमुदवनानां चयेषु समूहेषु दिग्-

वधूनां मुखेषु वियति आकाशे च चततिमिरेषु खण्डितान्धकारेषु कीर्णरश्मिः प्रसारित-किरणः। केचित् तु—इन्दुः तदत् तथा विललास यद्वत् यथा चन्द्रमसोऽन्यो न विलसति इत्याह। एवं सति चन्द्रस्य उपमानत्वमुपमेयत्वञ्च न स्यात्। अन्ये तु—इन्दुः यथा विल-लास तथा तदन्यो न विलसति इत्यर्थे चन्द्रस्य उपमानत्वञ्च उक्तं स्यात् इत्याहुः। अनन्वय इति चन्द्रस्य उपमानोपमेयत्वकथनेन अन्यस्य तत्सदृशस्य निरासात्। तथा चोक्तं उद्भटे, 'यत्र स्यादनन्वयाख्या यत्रैकं वस्तु तदसदृशम्' इति। स्वस्य स्वयमेव भवेत् उपमानञ्चो-पमेयञ्च ॥ ६८

অনুবাদ। চন্দ্র, অন্ধকারবিহীন কুমুদবনে, বিধূগণের মুখমণ্ডলে এবং আকাশে কিরণ বিস্তার করিয়া এমনভাবে শোভা পাইতে লাগিলেন যে, তাহা অপেক্ষা অন্য কেহই সেরূপ ভাবে শোভা পাইতে পারে না। ৬৮

शरणमिव गतं तमो निकुञ्जे
विटप[पि]निराकृतचन्द्ररश्मारातौ।
पृथुविषमशिलान्तरालसंस्थं
सजलघनद्युति भीतवत् ससाद ॥६९

अन्वयः। विटपनिराकृतचन्द्ररश्मारातौ निकुञ्जे पृथुविषमशिलान्तरालसंस्थं सजल-घनद्युति तमः भीतवत् शरणं गतम् इव ससाद ॥ ६९

मल्लिनाथः। शरणमिति। विटपैर्निराकृता चन्द्ररश्मय एवा-रातयो येन तस्मिन्निकुञ्जे गह्वरे पृथूनां विषमाणां च शिलानां चान्तरालेषु संस्था स्थितिर्यस्य तत्, सजलघनस्येव द्युतिर्यस्य तन्मेघ-श्यामं तमो भीतवत् भीतमिवेत्युत्प्रेक्षा। अत एव शरणं त्रातारं गतमिव शरणागतमिवेत्युत्प्रेक्षा। ससाद लीनमभूत्। अत्र चन्द्र-रश्मारातीति रूपकस्य भीतवदित्युत्प्रेक्षायाश्च शरणगमनोत्प्रेक्षा-ङ्गत्वादङ्गाङ्गिभावेन सजातीयविजातीयसङ्करः ॥६९

भरतः। शरणमित्यादि। सजलस्य मेघस्य इव द्युतिः यस्य तत् तमोऽन्धकारं पृथु-विषमशिलानाम् अन्तराले स्थितं सत् निकुञ्जे शरणं गतमिव शरणापन्नमिव ससाद विलीनं भीतवत्, यथा कश्चित् भीतो दुर्गवनान्तरे विलीयते। निकुञ्जे कीदृशे? विटपिभिः वृक्षैः निराकृता चन्द्ररश्मिरूपा अरातयः शत्रवो यस्मात्। उत्प्रेक्षावयव इति भीतवत् ससाद। इति उपमायां सदृपश्लिष्टस्यार्थेन योगात् शरणमिव गतमित्युत्प्रेक्षायाः योगात् विटपिभिर्निराकृतचन्द्ररश्म्याराताविति रूपकार्थेन योगाच्च। तथा चोक्तं,—'श्लिष्टस्यार्थेन संयुक्तः किञ्चिदुत्प्रेक्षयान्वितः। रूपकार्थेन च पुनरुत्प्रेक्षावयवो यथा॥' इति। चन्द्ररश्मियोग इति पाठे रूपकार्थो नास्ति इति असम्पूर्णलक्षणता ॥ ६९

অনুবাদ। যে নিকুঞ্জ, বৃক্ষরাজিদ্বারা চন্দ্রকিরণরূপ শত্রুকে অপসারিত করিয়াছে,—

নিষম বিশাল শিলার অন্তরালস্থিত সজল জলদশ্যাম অন্ধকার সেই ত্রিকূটের শরণাপন্ন হইয়াই যেন ভীতবৎ লুক্কায়িত হইল। ৬৯

अथ नयनमनोहरोऽभिरामं[:]
स्मर इव चित्तभवोऽप्यवामशील: ।
रघुसुतमनुजो जगाद वाचं
सजलघनस्तनयित्नुतुल्यघोष: ॥৭০

अन्वय: । अभिरामं रघुसुतं नयनमनोहर: स्मर इव चित्तभव: अपि अवामशील: सजलघनस्तनयित्नुतुल्यघोष: अनुज: वाचं जगाद ॥ ৭০

मल्लिनाथ: । अथेति । अथ रामशोकादनन्तरमभिरामं लोकाभिरामं रघुसुतं रामं नयनानि मनांसि च हरतीति रूपेण गुणैश्चेति नयनमनोहर: स्मर एव चित्ते भवतीति चित्तभवश्चित्तज: कामोऽप्यवामशील इति विरोधश्चित्तानुवर्त्तीत्यविरोधाद्विरोधाभासोऽलङ्कार: । सजलघनस्य स्तनयित्नुना स्तनितेन तुल्यघोष इत्युपमालङ्कार: । "स्तनयित्नु: पयोवाहे तदृध्वनौ मृत्युरोगयो:" इति विश्व: । अनुजो लक्ष्मणो वाचं जगाद । अत्र विरोधोपमयो: संसृष्टि: ॥ ৭০

भरत । अथेत्यादि । अन्द्रोदगदर्शनानन्तरं रघुसुतं रामम् अभिरामं सुन्दरम् अनुजो लक्ष्मणो वाचं वक्ष्यमाणं जगाद । कीदृश: ? स्मर इव काम इव नयनमनोहर: तदुभयानन्दक: चित्तभव: रामस्य चित्ते विद्यमान: अवामशील: अनुकूलस्वभाव:, चित्तभवो हि कामोऽवामशीलो भवति तत्पथप्रवर्त्तकत्वात्, अयं तु न तथा इत्यापातती विरोधसूचनाय अपिशब्द: । सजलनिविडमेघतुल्य शब्द: । संसृष्टिरिति नानालङ्कारसंसर्गात् । तथा हि,—स्मर इव इत्युपमा, नयनमनोहर इति तुल्ययोगिता, चित्तभव इति श्लेष:, अवामशील इति विरोध:, सजलघनेत्यादिना पुनरुपमा । तथा चोक्तं,—'संसृष्टिरिति विज्ञेया नानालङ्कारसङ्कर:' इति ॥ ৭০

অনুবাদ। রামচন্দ্র এইরূপে শোকপ্রকাশ করিবার পরে;—রূপে গুণে নয়ন-মনোহর মদনের ন্যায় চিত্তজ হইয়াও সদা অনুকূল—রামানুজ লক্ষ্মণ—প্রিয়দর্শন রামচন্দ্রকে সজল জলধরবৎ গম্ভীরস্বরে বলিতে লাগিলেন। ৭০

पतिवधपरिलुप्तलोलकेशी-
र्नयनजलापहृताञ्जनौष्ठरागा: ।
कुरु रिपुवनिता, जहीहि शोकं
क्व च शरणं जगतां भवान्, क्व मोह: ॥৭১

अन्वयः । रिपुवनिताः पतिवधपरिलुप्तलोलकेशीः नयनजलापहृताञ्जनौष्ठरागाः कुरु (त्वं) शोकं जहीहि, जगतां शरणं भवान् क, मोहः क ? ॥ ७१

मल्लिनाथः । पतीति । हे आर्य्य ! रिपुवनिताः पतिवधेन भर्तृमरणेन परिलुप्ता लोलाः केशा यासां ताः । "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" इति ङीप् । नयनजलैरश्रुभिः परिहृतानि परिमृष्टान्यञ्जनान्योष्ठरागाश्च यासां तास्तादृशीः कुरु । शोकं जहीति त्यज । विधौ लोट् । तथाहि—जगतां शरणं त्राता भवान् क । मोहः क, भवादृशामिदमज्ञानमयुक्तमन्यथा शत्रूपेक्षायां जगद्विपत्तिः स्यादिति भावः । अनेन वाक्यार्थेन शत्रुवधकर्त्तव्यतासमर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ७१

भरतः । पतीत्यादि । किं जगादित्याह—रिपोः रावणस्य वनिताः स्त्रियः पतिवधात् परिलुप्ता भ्रष्टा लोलाः चञ्चलाः केशा यासां, नयनजलेन अपहृतम् अञ्जनम् ओष्ठरागश्च यासां तथाविधाः कुरु, शोकं जहीहि त्यज इत्याशंसे । यतो जगतां शरणं रक्षिता भवान् क, मोहस्य क वा, असम्भावनायां क्वद्वयम् । आशीरिति इष्टार्थाशंसनात् । तथा चोक्तम्,—'आशीर्नामाभिलषिते वस्तुन्याशंसनं तथा ।' इति । अन्यत्रापि,—'आशीरिति च केषाञ्चिदलङ्कारतया मता । सौहृदस्याविरोधोक्तौ प्रयोगोऽस्याश्च तादृशः ॥' इति ॥ ७१

অনুবাদ। আর্য্য। দুঃখ করিবেন না। আপনি জগতের ত্রাণকর্ত্তা ; আপনার মোহ শোভা পায় না। যাহাতে রিপুনারীগণের পতিশোকে কুন্তলজাল আলুলায়িত ও ভ্রষ্ট হয় ; যাহাতে তাহাদের নয়নজলে নয়নের কজ্জলরেখা ও অধরোষ্ঠের রক্তরাগ দূরীভূত হয়, তাহাই করুন। ৭১

अधिगतमहिमा मनुष्यलोके
बत नितरामवसीदति प्रमादी ।
गजपतिरुरुशैलशृङ्गवर्ष्मा
गुरुरवमज्जति पङ्कभाङ् न दारु ॥७२

अन्वयः । मनुष्यलोके अधिगतमहिमा (जनः) प्रमादी (सन्) बत सुतराम् अवसीदति, उरुशैलशृङ्गवर्ष्मा गुरुः गजपतिः पङ्कभाक् ( सन् ) अवमज्जति, न दारु (अवमज्जति) ॥७२

मल्लिनाथः । अधीति । मनुष्यलोकेऽधिगतो महिमा येन स महानेव प्रमादी मत्तोऽनवहितोऽवसीदति नश्यति । तथाहि—उरुशैलस्य शृङ्गं शिखरमिव वर्ष्म वपुर्यस्य स गुरुर्दुर्भरो गजपतिर्महागजः पङ्कभाक् सन् अवमज्जति, दारु लघुकाष्ठं न मज्जति । महत एव प्रमादः प्रमादो हानिवृद्धिकरी, लघोः प्रमादेऽपि का

कार्ये प्रमादे वा का हानिरित्यर्थः। अत्र महात्मनो जगत्पतेश्च वाक्यद्वये प्रमादो पङ्कभागिति च विम्बप्रतिविम्बभावेन सामान्यधर्म्मनिर्द्देशाद्दृष्टान्तालङ्कारः। "यत्र वाक्यद्वये विम्बप्रतिविम्बतयोच्यते। सामान्यधर्मो वाक्यज्ञैः स दृष्टान्तो निगद्यते॥" इति लक्षणात्॥ ७२

भरतः। अधीत्यादि। अधीगतमहिमा प्राप्ताधिपत्योऽपि मनुष्यलोके प्रमादी कार्य्येऽनवधानवान् सन् तत कथं सुतराम् अवसीदति कार्य्यासमर्थो भवति। कुत इत्याह— उरुशैलगुरुवर्ष्मा महापर्वतशिखरप्रमाणशरीरो गजपतिः पङ्कभाक् पङ्कम् अवतीर्णः सन् अवमज्जति पङ्के प्रविशति यस्मात् असौ गुरुः न तु दारु, काष्ठं मज्जति लघुत्वात्; तस्मात् महतां प्रमादो विनाशहेतुः, न तु लघीयसा; तत्कारणं शोकं त्यजेति भावः। हेतुरिति गजपतेः हेतुद्वारेण निर्देशात्। यथा चोक्तं—'हेतुमता सह हेतोरभिधानमभेदतः। यत्र सोऽलङ्कारो हेतुः स्यादन्येभ्यः पृथग्भूतः॥' ७२

অনুবাদ। এই জগতে মহাত্মাগণ নিজ মহিমা অবগত হইয়াও প্রমত্ত হইলে অবসন্ন হন, এইটি বড় দুঃখের কথা। বিশাল শৈলোপম দেহধারী মহাগজ কর্দ্দমে পতিত হইলে মগ্ন হইয়া থাকে। পরন্তু অসার কাঠ খণ্ড অনলগ্ন হয় না। ৭২

बोद्धव्यं किमिव हि यत्त्वया न बुद्धं
किं वा ते निमिषितमप्यबुद्धिपूर्वम्।
लब्धात्मा तव सुकृतैरनिष्टशङ्की
स्नेहौघो घटयति मां तथापि वक्तुम्॥ ७३

अन्वयः। यत् त्वया न बुद्धं बोद्धव्यं तत किमिव (अस्ति?) ते निमिषितम् अपि किम् अबुद्धिपूर्वं किंवा? (तथापि) सुकृतैः लब्धात्मा अनिष्टशङ्की तव स्नेहौघः मां वक्तुं घटयति॥ ७३

मल्लिनाथः। बोद्धव्यमिति। हे आर्य्य! यत्त्वया न बुद्धं बोद्धव्यं तत् किमस्ति सर्वज्ञस्य ते न किञ्चिदज्ञातमस्तीत्यर्थः। किञ्च निमिषितं निमेषकर्माप्यबुद्धिपूर्वमपेक्षापूर्वकं किं वा, नेत्यर्थः। न कुत्रापि प्रमादस्तवास्तीत्यर्थः। तथापि सुकृतैर्मत्पुण्यैर्लब्धात्मा लब्धस्वरूपो जातः इत्यर्थः। अनिष्टशङ्की 'प्रेम पश्यति भयान्यपदेऽपि' इति न्यायादनर्थाशङ्की तव त्वद्विषयः स्नेहौघः स्नेहप्रवाहो मां वक्तुं घटयति प्रेरयतीत्यर्थः। सर्वज्ञे प्रेक्षापूर्वकारिणि यन्मयोक्तं तत्प्रेमनिबन्धनं सिद्धसाधनमेवेति भावः। प्रियतराख्यानरूपोऽयं प्रेयोऽलङ्कारः। यथाह दण्डी—'प्रेयः प्रियतराख्यानम्' इति॥ ७३

भरतः। बोद्धव्यमित्यादि। यत्त्वया न बुद्धं तद्बोद्धव्यं किमिवास्ति अपि तु न किञ्चिदेव, इवशब्दोऽसम्भावनायां। तव निमिषितमपि चक्षुषोः निमीलितमपि किं वा अबुद्धिपूर्वकं नैव इत्यर्थः। अतो न किञ्चिदपि चेष्टितं तवानवधानपूर्वकमिति भावः। अतो यद्यपि भवतो नोपदेशो युक्तः, तथापि सुकृतैस्तव सुहृत्कर्मभिः अस्मत्पुण्यैर्वा लब्धात्मा प्राप्तस्वरूपो जातः स्नेहसमूहस्तवानिष्टशङ्काशील: मां वक्तुं घटयति त्वाम् उपदेष्टुं मां प्रेरयति अत्यनुज्ञो नगादेति पूर्वेणान्वयः। निपुणमिति कनिष्ठस्य ज्येष्ठोपदेशानौचित्येऽपि नैपुण्येन उक्तत्वात् निपुणनामायमलङ्कार इति भाव इति विद्यासागरः। अत्र प्रेयस्यन्तर्भाव इति देवनाथः। 'प्रेयः प्रियतराख्यान'मिति तत् लक्षणात् उदात्तमध्येऽन्तर्भाव इति जयमङ्गला॥ ७३

অনুবাদ। আপনি বুঝিতে পারেন না; জগতে এমন কি বিষয় আছে, আপনার চক্ষুর প্রতি নিমেষও বুদ্ধিযুক্ত। তথাপি আমার সুকৃতিপ্রাপ্ত আপনার স্নেহরাশি অনিষ্ট আশঙ্কা করিয়া আমাকে বলিবার জন্য উৎসাহিত করিতেছে। ৭৩

सौमित्रेरिति वचनं निशम्य रामो
जृम्भावान् भुजयुगलं विभुज्य निद्रान्।
अध्यष्ठाच्छिशयिषया प्रवालतल्पं
रक्षायां प्रतिदिशमादिशन्[त्] प्लवङ्गान्॥७४

इति भट्टिकाव्ये प्रसन्नकाण्डे काव्यालङ्कारो नाम
दशमः सर्गः॥ १०

अन्वयः। रामः सौमित्रेः इति वचनं निशम्य जृम्भावान् भुजयुगलं विभुज्य निद्रान् (सन्) रक्षायां प्रतिदिशं प्लवङ्गमान् आदिशन्, शिशयिषया प्रवालतल्पम् अध्यष्ठात्॥ ७४

मल्लिनाथः। सौमित्रेरिति। रामः सौमित्रेरित्येतद्वचनं निशम्य जृम्भा जृम्भणमस्यास्तीति जृम्भावान् जृम्भमाणः इत्यर्थः। "गुरोश्च हलः" इति स्त्रियामकारप्रत्ययः। भुजयुगलं विभुज्य यथायथं वक्रीकृत्य निद्रान् निद्रास्यन्नित्यर्थः। रक्षायां रक्षणनिमित्तं प्रतिदिशं दिशि दिशि। यथार्थे वीप्सायामव्ययीभावः। "अव्ययीभावे शरत्प्रभृतिभ्यः" इति समासान्तष्टच्प्रत्ययः। प्लवङ्गान् वानरानादिशदाज्ञापयामास। अथ शिशयिषया सुषुप्सया प्रवालतल्पं कुसुमशयनमध्यष्ठादधिष्ठितवान्। तिष्ठतेर्लुङि "गातिस्था—" इत्यादिना सिचो लुक्। "प्राक्सितादड्व्यवायेऽपि" इति षत्वम्। ष्टुत्वम्॥ ७४

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहामहोपाध्याय-
कोलाचल मल्लिनाथसूरिविरचिते भट्टिकाव्यव्याख्याने
सर्वपथीनाख्याने दशमः सर्गः।

ভরতঃ। সৌমিত্রেরিত্যাদি। ইত্যেবং লক্ষ্মণস্য বচনং নিশম্য শ্রুত্বা রামঃ প্রতিদিশং দিশি দিশি রক্ষণার্থং প্লবঙ্গান্ বানরান্ আদিশন্ জৃম্ভাবান্ সন্ নিদ্রান্ নিদ্রাং গচ্ছন্ শিশয়িষয়া শয়িতুমিচ্ছয়া প্রবালশয্যাম্ অধ্যষ্ঠাৎ অধিষ্ঠিতবান্, ভুজযুগলং বিভুজ্য ভুগ্নং কৃত্বা একং শিরঃস্থানে নিবেশ্য অপরঞ্চ উপস্থানে শিরসঃ উপরি বা নিবেশ্য ইত্যর্থঃ। বিভুগ্নমিতি পাঠে ক্রোডোপরি বক্রীকৃত্যেত্যর্থঃ। নিদ্রানিতি নিপূর্ব্বাৎ দ্রা ল স্বপ্নে ইত্যস্মাৎ শতঃ। অধ্যষ্ঠাদিতি অধিপূর্ব্বতিষ্ঠতেঃ দ্যাং সিঃ ভূস্থেত্যাদিনা সেলুক্ গোক ইত্যাদিনা ষত্বং কর্ম্মক্রিয়েত্যাদিনা আধারস্য কর্ম্মত্বং। প্রতিদিশমিতি বীপ্সায়ামব্যয়ীভাবঃ শরদ্বিপাশ্চ ইত্যাদিনা অপ্রত্যয়ঃ॥ ৩৪

ইতি মহৈদ্যহরিহরখানবংশসম্ভবগৌরাঙ্গমল্লীকাত্মজশ্রীভরতসেনবিরচিতায়াং মুগ্ধবোধিন্যাং ভট্টিটীকায়াং প্রসন্নকাণ্ডে কাব্যালঙ্কারদর্শনং নাম প্রথমঃ পরিচ্ছেদঃ,

কাব্যস্য সীতাভিজ্ঞানদর্শনং নাম দশমঃ সর্গঃ॥ ১০

---

অনুবাদ। রামচন্দ্র লক্ষ্মণের এইরূপ কথা শুনিয়া জৃম্ভণ পূর্ব্বক নিদ্রালস হইলেন এবং প্রতিদিক রক্ষার জন্য বানরগণকে প্রহরী নিযুক্ত হইবার আদেশ দিয়া বাহুযুগল বক্রভাবে প্রসারণ পূর্ব্বক শয়নার্থে পুষ্পশয্যায় অধিষ্ঠান করিতে লাগিলেন। ৭৪

---

# एकादशः सर्गः ।

अथास्तमासेदुषि मन्दकान्तौ
पुण्यक्षयेणेव निधौ कलानाम् ।
समाललम्बे रिपुमित्रकल्पैः
पद्मैः प्रहासः[विकाशः] कुमुदैर्विषादः ॥ १

अन्वयः । अथ मन्दकान्तौ कलानां निधौ पुण्यक्षयेणेव अस्तम् आसेदुषि (सति) रिपुमित्रकल्पैः पद्मैः (तथा) कुमुदैश्च प्रहासः (तथा) विषादश्च समालम्बे ॥ १

मल्लिनाथः । अथ माधुर्य्यगुणस्यापि काव्यशोभाकरत्वादस्मिन् सर्गे तत्प्राधान्येन लङ्कावृत्तान्तं वर्णयिष्यन्नादौ तावत् प्रभातं वर्णयति—अथेति । अथ निशावसानसमये मन्दकान्तौ क्षीणप्रभे कलानां निधौ चन्द्रे वित्ताढ्ये च । 'काले शिल्पे वित्तवृद्धौ चन्द्रांशे कलनाकले' इति यादवः । पुण्यक्षयेणेव वित्ताढ्ये भोगादृष्टनाशेनेवेत्युपमा । अस्तमस्ताद्रिमवमानं चासेदुषि प्राप्ते सति । "भाषायां सदवसश्रुवः" इति सदेर्लिटः क्वसुरादेशः । रिपवश्च मित्राणि च तत्कल्पैस्तत्सदृशैरित्युपमा । क्रमात् पद्मैर्विकाशः कुमुदैर्विषादश्च समालम्बे । शत्रुमित्रहान्योस्तद्धेतुत्वादित्यर्थः । अत्र रिपुमित्रपदार्थयोः पद्मकुमुदपदार्थाभ्यां तयोर्विकाशविषादाभ्यां च यथासंख्येनान्वयाद्यथासंख्यालङ्कारः, प्रागुक्तोपमाश्लेषसङ्कीर्णः । 'श्राव्यं नातिसमस्तार्थं काव्यं मधुरमिष्यते' इति माधुर्य्यलक्षणम् ॥ १

भरतः । अथेत्यादि । अथ गुणाः प्रदर्श्यन्ते, यतः—"अलङ्कृतमपि श्राव्यं न काव्यं गुणवर्जितम् । गुणयोगस्तयो मुख्यो गुणालङ्कारयोगयोः ॥" वामनादिभिर्दशगुणा मन्यन्ते, ते तु—"श्लेषः प्रसादः समता माधुर्य्यं सुकुमारता । अर्थव्यक्तिरुदारत्वमोजः कान्तिसमाधयः ॥" इति । अन्ये तु—"और्जित्यमर्थसौक्ष्म्यञ्च गाम्भीर्य्यमर्थविस्तरः । संक्षेपः समितत्वञ्च भाविकत्वं गतिस्तथा ॥" प्रौढ़िः प्रेयश्च सुशब्दता इति इति । एतानपि अधिकान् गुणानाहुः । काव्यप्रकाशकृता तु—"माधुर्य्यौजःप्रसादाख्यास्त्रयस्तेन पुनर्दश" इत्युक्तं, तन्मते माधुर्य्यप्रकाशक एवायं सर्ग आरभ्यते । तथा चोक्तं कण्ठाभरणे—"शृङ्गार एव मधुरः स च प्रह्लादनो रसः । तन्मयं काव्यमाश्रित्य माधुर्य्यं प्रतितिष्ठति ॥" इति । अत्र सर्गे प्रसादगुणोऽपि द्रष्टव्यः । तत्र क्रमागतप्रभातवर्णनं प्रस्तूयते ।—अथानन्तरं यथा पुण्यक्षयेण कश्चित् अस्तं याति तथा कलानां निधौ चन्द्रे मन्दप्रभे अस्तं पर्वतम् आसेदुषि प्राप्ते सति रिपुकल्पैः .

पद्मैः प्रहासो विकाशः, पक्षे—प्रकृष्टहासः ; मित्रकल्पैः कुमुदैः विषादः सङ्कोचः, पक्षे विमनस्कता समालम्बे । आसीदुषि इति श्लेषोऽत्र शब्दगुणः । तथा चोक्तं—"गुणः श्लिष्टपदता श्लेष इत्युपदिश्यते ।" इति प्रसादोऽप्यत्रास्ति, 'प्रसिद्धार्थपदत्वं यत् प्रसादोऽसौ निगद्यते ।' इति लक्षणम् । पद्मैः प्रहासम् इत्यत्र माधुर्य्यं गुणो "या पृथक्पदता काव्ये तन्माधुर्य्यमुदाहृतम्" इति न्यायात् । आसीदुषि इत्यत्र सुशब्दतापि व्युत्पत्तिः, सुप्तिङ्गा या तु पोच्यते सा सुशब्दतेति वचनात् । पद्मैः प्रहासम् इत्यत्र समाधिरप्यस्ति । 'समाधिः सोऽन्यधर्माणां यदन्यत्रापि रोपणम् । प्रहासश्चेतनाधर्मः स चान्यत्राधिरोपितः ॥" इति । एवमन्यत्रापि गुणनिरूपणं कर्त्तव्यम् ॥ १

অনুবাদ । অনন্তর ক্ষীণকান্তি শশধর যেন পুণ্যক্ষয় হওয়ায় অস্তাচলে উপনীত হইলেন ; তাঁহার শত্রু ও মিত্রকল্প পদ্ম ও কুমুদ যথাক্রমে হৃষ্ট ও বিষাদপ্রাপ্ত হইল । ১

**दूरं समारुह्य दिवः पतन्तं**
**भृगोरिवेन्दुं विहितोपकारम् ।**
**बद्धानुरागोऽनुपपात तूर्णं**
**तारागणः सम्भृतशुभ्रकीर्त्तिः ॥ २**

अन्वयः । दूरं समारुह्य भृगोरिव दिवः पतन्तं विहितोपकारम् इन्दुम् अनु सम्भृतशुभ्रकीर्त्तिः बद्धानुरागः तारागणः तूर्णं पपात ॥ २

मल्लिनाथः । दूरमिति । दूरमत्युन्नतमन्तरिक्षं समारुह्य भृगोः पर्वततटादिव दिवोऽन्तरिक्षात् पतन्तं भृगवग्न्यनशनाम्बुभिरिति शास्त्रादिति भावः । विहितः कृत उपकार इष्टावाप्तिलक्षणो येन तमिन्दुं बद्धोऽनुरागोऽस्तमयकालीनरक्तता भावानुबन्धश्च यस्य सः तारागणामुडूनां गणः सम्भृता शुभ्रा कीर्त्तिः पतिव्रताख्यातिर्येन स सन्ननुपपात । ताराणां यत्पतनोत्वादित्युत्प्रेक्षा । सा च व्यञ्जकाप्रयोगाद्गम्या ॥ २

भरतः । दूरमित्यादि । दिवः आकाशस्य दूरं भागम् आरुह्य पश्चात् तत एव सकाशात् भृगोः प्रपाताख्यपर्वतोच्चभागादिव पतन्तम् अधस्तात् गच्छन्तम् इन्दुं विहितोपकारं तदुदये तारागणस्याप्यायनात् तारापतित्वात् च तारागणः तूर्णम् अनुपपात अनुजगाम, तम् अनु लक्षीकृत्य पपातेति वा । कीदृशः ? बद्धानुरागः अस्तगमनकाले रक्तत्वात्, सम्भृता उपचिता शुभ्रा निर्म्मला कीर्त्तिः येन । अन्योऽपि भार्य्यागणोऽनुरक्तः सन् पतिम् अनुगच्छन् निर्म्मलकीर्त्तिः भवति । अत्रोदारत्वम् अर्थगुणः, 'आशयस्य च उत्कृष्टत्वमुदारत्वमिष्यते' इति लक्षणात् । समत्वगुणोऽप्यत्र चन्द्रस्य अस्तगमने तारागणस्याप्यसम्भवात् । तथा चोक्तम्—"अनैगम्यं क्रमतया समत्वमभिधीयते" इति । प्रसादोऽप्यर्थगुणोऽत्र लोकप्रसिद्धार्थत्वात् । यदुक्तं—"यत्तु प्राकट्यमर्थस्य प्रसादः सोऽभिधीयते" इति ॥ २

অনুবাদ। চন্দ্রানুরাগিণী, অমল কীর্ত্তিশালিনী তারাগণ কৃতোপকার চন্দ্রের অনুসরণ করিবার জন্য যেন সত্বর অতিদূরস্থ পর্ব্বত শৃঙ্গের ন্যায় অত্যুচ্চ গগনদেশ হইতে পতিত হইতে লাগিল। ২

क्व ते कटाक्षाः क्व विलासवन्ति
प्रोक्तानि वा तानि ममेति मत्वा ।
लङ्काङ्गनानामवबोधकाले
तुलामनारुह्य गतोऽस्तमिन्दुः ॥ ३

अन्वयः। ते कटाक्षाः मम क्व, तानि विलासवन्ति प्रोक्तानि वा क्व ? इति मत्वा इन्दुः लङ्काङ्गनानाम् अवबोधकाले तुलाम् अनारुह्य अस्तं गतः ॥ ३

मल्लिनाथः। क्वेति। ते सविलासाः कटाक्षा मम क्व ? तानि विलासवन्ति प्रोक्तानि सूक्तानि वा मम क्व ? मन्तीत्यर्थः। इति मत्वा ज्ञात्वेन्दुर्लङ्काङ्गनानामवबोधकाले तुलामनारुह्य तन्मुखसाम्यम प्राप्यास्तं गतोऽभिमानादिति भावः। पूर्ववदस्योत्प्रेक्षा ॥ ३

भरतः। क्व ते इत्यादि। मम ते प्रसिद्धाः विलासवन्तः कटाक्षाः क्व, तानि वा विलासवन्ति प्रकृष्टजल्पितानि क्व न सन्त्येव इत्यर्थः। लङ्कास्त्रीणां तु लङ्कामुखं तद्भय मत्यस्ति। अत एव यावत् उदयो न भवति तावत् अपक्रमणं युक्तमिति मत्वा तुलां तत्साम्यम् अनारुह्य अप्राप्य लङ्कास्त्रीणां प्रबोधकाले जागरणसमये इन्दुः अस्तं गतः। विलासवन्ति इति नपुंसकविशेषणत्वेऽपि सामान्यत्वात् नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् इति नपुंसकत्वम्। तात्कालिकविशेषस्तु विलासोऽङ्गक्रियोक्तिषु। प्रसिद्ध लक्षणाभिधेय मध्ये त्वच्छन्दं नापेक्षत इति काव्यप्रकाशः। अश्लीलत्वं गुणः। 'अश्लीलत्वं ग्राम्यत्वम्' इति ललनलक्षणात् माधुर्यमपि। अत्र पूर्ववत् सुकुमारतापि, 'अनिष्ठुराक्षरप्राय सुकुमारमिहेष्यते' इति न्यायात् उदात्ततापि विलासवन्ति इति श्लाघ्यविशेषणात्। तदुक्तं—"श्लाघ्यैर्विशेषणैर्योग यस्तु साम्यादुदात्तता" इति। गाम्भीर्यमप्यर्थगुणोऽत्र विलासादीनां श्लाघ्यत्वेन ज्ञानात्। तथा चोक्तं—"श्लाघ्यार्थं सत्यपेक्षत्वं गाम्भीर्यमभिधीयते" इति ॥ ३

অনুবাদ। আমার সেই সবিলাস কটাক্ষ কোথায় ? সেই সবিলাস বচন বিন্যাসই বা কোথায় ইহা মনে করিয়া সুধাংশু লঙ্কাপুরবাসিনী অঙ্গনাগণের জাগরণ কালে তাহাদিগের মুখের তুলনা না পাইয়াই যেন অভিমানে অস্তগমন করিলেন। ৩

मानेन तल्पेष्वयथायथीना-
मिथ्याप्रसुप्तैर्गमितत्रियामाः ।
स्वाभिर्निशातिक्रमशङ्किताभि-
र्दृष्टेऽपि दोषे पतयोऽनुनीताः ॥ ४

अन्वयः । मानेन तल्पेषु अयथासुखीनाः मिथ्याप्रसुप्तैः गमितत्रियामाः पतयः दोषे दृष्टे अपि निशातिक्रमविह्वलाभिः स्त्रीभिः अनुनीताः ॥ ४

मल्लिनाथः । मानेति । मानेन स्त्रीणामीर्ष्यारोषेण हेतुना तल्पेषु शयनीयेषु यथासुखं दर्शनमेष्विति यथासुखीना अभिमुखाः । "यथामुखसंमुखस्य दर्शनः खः" इति खप्रत्ययः । अयथासुखीनाः प्रार्थनावैफल्याद्विमुखाः, किन्तु मिथ्याप्रसुप्तैरलीकनिद्राभिः । भावे क्तः । गमितत्रियामा नैरन्तर्येणाटितकेन यापितरात्रय इत्यर्थः । पतयो भर्त्तारो निशातिक्रमविह्वलाभिः प्रभातभीरुभिः स्त्रीभिर्दोषेऽपराधे दृष्टेऽप्यनुनीताः । एता नायिकाः कलहान्तरिताः खेदाश्रुसन्तापवत्यः । "कोपात् कान्तं पराणुद्य पश्चात्तापसमन्विताः । कलहान्तरिता नाम—॥" इति लक्षणात् ॥ ४

भरतः । मानेनेत्यादि । स्त्रीभिः दृष्टेऽपि दोषे गोत्रस्खलनादौ पत्यनुनयेन स्वस्या मनस्वित्वादिदोषे ज्ञानेऽपि वा पतयोऽनुनीताः । अनुनयकरणे हेतुमाह—कीदृशीभिः निशाया अतिक्रमात् पर्य्यवसानात् विह्वलाभिः । कीदृशाः पतयः ? चाटूक्तिपादपतनेनापि प्रियाम् अप्रसन्नां दृष्ट्वा मानेन तल्पेषु शय्यासु अयथासुखीनाः परावृत्तमुखाः. किमियं करिष्यति इति ज्ञातुम् मिथ्याप्रसुप्तैः अलीकनिद्राभिर्गमितरात्रयः अतिवाहितप्रहरत्रया इत्यन्वयः । अयथासुखीना इति मुखस्यानतिक्रमः प्रियाभिमुखस्थितित्वरूपो यथासुखं ततः स्वार्थे खैनः, ततो नञ्समासः । विद्यासागरस्तु यथामुखं सम्मुखं दृश्यते अस्मिन्निति खैनः पश्चात् नञ्समासः, यथा शब्दोऽभिमुखे वर्त्तते अव्ययानामनेकार्थत्वादित्याह । खमनेऽपि तथा विकारमङ्गत्वादावार्दिशब्दात् । अन्ये तु यथासुखमिति साहचर्यनिपातनात् चिन्त्यमित्याहुः । अत्र कान्तिः अर्थगुणः दोषे दृष्टेऽपि पत्यनुनयात् । तथाचोक्तं—"कान्तिर्दीप्तरसत्वं स्या"दिति समाधिरपि अत्रार्थगुणः मिथ्याप्रसुप्तत्वात् । "व्याजावलम्बनं यत्तु स समाधिरिति स्मृतः ॥" इति । ४

অনুবাদ । অভিমানে শয্যায় মুখ ফিরাইয়া এবং কপট নিদ্রায় যাহারা রজনী অতিবাহিত করিয়াছে, সেই যুবক রমণীর স্বামিগণের বৃথা নিশা অতিবাহিত হওয়ায় ভীতা নারীগণ নিজ নিজ দোষ দেখিয়াও অনুনয় করিতে লাগিল । ৪

ईर्ष्याविरूग्णाः स्थिरबद्धमूला
निरस्तनिःशेषसुख[शुभ]प्रतानाः ।
आप्यायिता नेत्रजलप्रसेकैः
प्रेमद्रुमाः संरुरुहुः प्रियाणाम् ॥ ५

अन्वयः । स्थिरबद्धमूलाः प्रियाणां प्रेमद्रुमाः ईर्ष्या-विरूग्णाः निरस्तनिःशेषसुखप्रतानाः ( सन्तः ) नेत्रजल प्रसेकैः आप्यायिताः संरुरुहुः ॥ ५

मल्लिनाथः । ईर्ष्येति । स्थिरं यथा तथा बद्धमूलाः कारण-दार्ढ्यादच्छेद्यमूला इत्यर्थः । प्रियाणां प्रेयसीनां प्रेमाण एव द्रुमाः प्रेमद्रुमा रागमहीरुहा ईर्ष्यया विरूप्या मानकुठारेण छिन्ना अत एव निरस्ता लुप्ता निःशेषाः शुष्काण्येव प्रतानाः विटपा येषां ते सन्तो नेत्रजलैः प्रसेकाः सेचनानि तैराप्यायिता आप्लाविताः सन्तः संरुरुहुश्छिन्नबदरीवत् पुनः प्ररूढा इत्यर्थः । तैरेव कोपस्य चालितत्वादिति भावः । एता अपि कलहान्तरिता एव नायिकाः ॥ ५

भरतः । ईर्ष्येत्यादि । प्रियाणां प्रेयसां प्रेयसीनां वा एकशेषादुभयेषां प्रेमाणि द्रुमा इव संरुरुहुः, पुनः पल्लविताः यतो नेत्रजलप्रसेकैः आप्यायिताः प्रीणिताः स्थिरबद्धमूलाः स्थिरं निश्चलं बद्धं सम्बद्धं मूलम् उत्पत्तिकारणं येषाम् । कीदृशाः ? पूर्वमीर्ष्यया परोत्कर्षाक्षमया विरूप्याः भग्ना अत एव निरस्ता निःशेषाः शुभा एव हसितजल्पितादय एव प्रतानाः शाखास्तेषां विस्तारो वा येषाम, अन्येऽपि स्थिरबद्धमूला द्रुमा भग्ना अपि लुप्तप्रताना अपि जलसेकैः आप्यायिताः सन्तः संरोहन्ति इति भावः । प्रौढ़िरर्थगुणः, "विवक्षितार्थनिर्वाहः काव्ये प्रौढ़िरिति स्मृता । प्रेम्णो द्रुमत्वनिर्वाहात् । ५

অনুবাদ। প্রেয়সীগণের স্থির ও বদ্ধমূল প্রেমতরু-সকল অভিমান কুঠারে ছিন্ন হওয়ায় সুখরূপ শাখা-প্রশাখাসকল শুষ্ক হইয়া গেল। এক্ষণে অশ্রুজল সেচনে আনন্দিত হইয়া পুনরায় অঙ্কুরিত হইতে লাগিল। ৫

ततः समाशङ्कितविप्रयोगः
पुनर्नवीभूतरसोऽवितृष्णः ।
स्मरस्य सत्त्वं पुनरुक्तभावं
नावर्त्तमानस्य विवेद[चिचेत] लोकः ॥ ६

अन्वयः । ततः समाशङ्कितविप्रयोगः पुनर्नवीभूतरसः अवितृष्णश्च लोकः आवर्त्तमानस्य स्मरस्य सत्त्वं पुनरुक्तभावं न विवेद ॥ ६

मल्लिनाथः । तत इति । ततो मानशान्त्यनन्तरं समाशङ्कितविप्रयोग उत्प्रेक्षितप्रातरागामिविरहोऽत: पुनर्नवीभूतरसोऽपूर्ववदुद्भूतरागोऽत एवावितृष्णोऽनपेतगर्धो लोकः कामिजनोऽवर्त्तमानस्य पूर्वानुवर्त्तिन एव स्मरस्य मन्मथरागस्य सत्त्वं भवन्तं पुनरुक्तभावं पुनरुद्बुद्धतां न चिचेत न विवेद किं त्वपूर्ववदरंस्तेत्यर्थः । चिति धातोर्भौवादिकाल्लिट् । एतेन अङ्कुरावसायिनो रागस्य रसिकभावः सूचितः ॥ ६

भरतः । तत इत्यादि । प्रेमसंरोहादेतोरनन्तरं वा आवर्त्तमानस्य पुनः पुनः प्रवर्त्त-

मानस्य भरस्य कन्दर्पस्य पुनरुक्तभावं पौनःपुन्यं सन्तं विद्यमानमपि लोको न विवेद न ज्ञातवान्, यतो रात्रिगमनेन भग्नाङ्कितविरहः, अत एव पुनर्नवीभूतसुरतेच्छः अत एव अवितृष्णः तृष्णाविगमरहितः पुनः तृष्णोदयात्। अधितृष्ण इति पाठे अधिकतृष्ण इत्यर्थः। अथापि कान्तिगुणो दीप्तरसत्वात् प्रेयोऽप्यसि प्रेयस्तुर्येषु अभीष्टता अभीष्टस्य कामस्य प्रतिपादनात्।৬

অনুবাদ। তাহার পর ভাবি বিরহাশঙ্ক কামিগণের অনুরাগ অপূর্ব্বভাবে বর্দ্ধিত হইতে লাগিল। এই জন্য গর্ব্ব শূন্য হইয়া পূর্ব্বানুবর্ত্তী মদনানুরাগে উৎপন্ন পূর্ব্বভাব অনুভব করিতে পারিল না। কিন্তু অপূর্ব্বভাবে আনন্দ পাইতে লাগিল। ৬

वृत्तौ प्रकामं हृदये ग[क्त]तायां
सुखेन सर्वेन्द्रियसम्भवेन ।
सङ्कोचमेवासहमानमा[स]स्था-
दयन्त्रवद्वञ्चितमानि चक्षुः ॥७

अन्वयः। सर्वेन्द्रियसम्भवेन सुखेन वृत्तौ प्रकामं हृदये गतायां (सत्यां) वञ्चितमानि चक्षुः असहमानं (सत्) अयन्त्रवत् सङ्कोचम् एव आस्थात् ॥ ७

मल्लिनाथः। वृत्ताविति। सुरतसुखपारवश्यात् गात्रोणामक्षिनिमीलने सत्युत्प्रेक्षते। सर्वेन्द्रियसम्भवेन सर्वेन्द्रियाधीनशब्दादिविषयोपलम्भसम्भवेनेत्यर्थः। सुखेन कर्त्रा मानसवेद्येन वृत्तौ स्वसंवित्तौ प्रकामं व्यक्तं यथा तथा हृदयेऽन्तःकरणे गतायां प्राप्तायाम्। हृदयेनैव सुखेऽनुभूते सतीत्यर्थः। वञ्चितं प्रतारितमात्मानं मन्यत इति वञ्चितमानि। "आत्ममाने खश्च" इति चकारात्मिनिः। चक्षुश्चक्षुरिन्द्रियमसहमानं स्वसुखस्यान्यगामित्वममृष्यमाणं सत् अयन्त्रवदन्यगामिस्वार्थसाधनासमर्थजनवत् सङ्कोचो निमीलनमौदासीन्यं च तमेवास्थात् प्रापत्। सुखपारवश्यानामत्तस्य निमीलनस्योक्तासहनहेतुकत्वोत्प्रेक्षणाद्धेतूत्प्रेक्षा ॥ ७

भरतः। वृत्तावित्यादि। सुखेन हृदये चेतसि प्रकामं स्पष्टं वृत्तौ स्थितौ गतायां सत्यां चक्षुः कर्तृ सङ्कोचं निमीलनमपि असहमानमेवास्थात्। कुच सङ्कोचे इत्यस्मात् घञ्, यतो वञ्चितमानि सङ्कोचे सति क्षणमपि रूपादर्शनेन आत्मानं वञ्चितमिव मन्यते अयन्त्रवत् यथा अनमर्थं चक्षुर्निस्पन्दं भवति तथा प्रियाङ्गे निस्पन्दम् इत्यर्थः। यद्वा सुखस्य हृदि वृत्तौ सत्यां हृदयाप्रवेशेन वञ्चितमिव आत्मानं मत्वा चक्षुःसङ्कोचं मुद्रितमेव अस्थात् असहमानं हृदयस्य सुखं सोढुम् असमर्थमिव अयन्त्रवत् यथा कश्चित् समर्थोऽन्यसम्पदम् असहमानः सङ्कोचित एव भवत्। यद्वा अयन्त्रवत् यथा असमर्थं चक्षुरुन्मीलनाक्षमं सत् मुद्रितमेव तिष्ठति तद्वत् सुरतान्ते नेत्रनिमीलनस्योत्प्रेक्षेयम्। कुच कौटिल्ये विलने इत्यस्मात् पचादित्वात् अनि कुटादित्वाद् गुणाभावः। सुखेन कीदृशेन ? सर्वेन्द्रियसम्भवेन रतिकाले सर्वविषयसम्बन्धैः

सर्वेन्द्रियैः युगपदुत्पादितेन । यद्वा सर्वाणि इन्द्रियाणि यस्य स सर्वेन्द्रियः कायः तेन उत्पादितेन । प्रौढ़िरत्र गुणः "विशिष्टा भणितिर्या स्यात् प्रौढ़िं तां कवयो विदुः ।" उचित-निमीलनस्य असहनजन्यत्वात् पूर्ववत् माधुर्य्यमपि शब्दगुणोऽत्र पृथक्पदत्वात् ॥ ७

অনুবাদ। ইন্দ্রিয়জনিত বিষয়ভোগ সুখ সুস্পষ্টরূপে অন্তঃকরণে অনুভূত হইতে লাগিল। দর্শনেন্দ্রিয় নিজে বঞ্চিত হইলাম, মনে করিয়া অপরেন্দ্রিয়ের সুখ সহ্য করিতে না পারিয়াই যেন অশক্তের ন্যায় সঙ্কুচিত হইল। অর্থাৎ সুরতাবসানে কামিনীগণ ইন্দ্রিয়-সুখানুভব করিয়া অবশভাবে চক্ষু মুদ্রিত করিয়া রহিল। ৭

पीने भटस्योरसि वीक्ष्य भुग्नां-
स्तनुत्वचः पाणिरुहान् सुमध्या।
इच्छाविभङ्गाकुलमानसत्वा-
द्भर्त्रे नखेभ्यश्च चिरं जुजूरे ॥ ८

अन्वयः। सुमध्या भटस्य पीने उरसि भुग्नान् तनुत्वचः पाणिरुहान् वीक्ष्य इच्छाविभङ्गाकुलमानसत्वात् भर्त्रे नखेभ्यश्च चिरं जुजूरे ॥ ८

मल्लिनाथः। पीन इति। सुमध्या काचित् कृशोदरी भटस्य सुरतशूरस्य प्रियस्य पीने पीवरे उरसि भुग्नान् कठिनोरःप्रतिघातेन भुग्नाग्रान् न तु प्रविष्टांस्ततस्तनुत्वचो दुर्बलत्वक्कान् पाणिरुहान् स्वनखान् वीक्ष्य इच्छायाः कृतप्रतिचिकीर्षाया भङ्गेनाकुलमानसत्वाद्भर्त्रे स्वाङ्गे नखक्षतकर्त्रे प्रेयसे नखेभ्यश्चाकिञ्चित्करेभ्यश्चिरं जुजूरे चुकोपेत्यर्थः। जूरी हिंसावयोहान्योरिति धातोर्दैवादिकाल्लिटि तङ्। हिंसार्थेन तन्मूलं कोपो लक्ष्यते मुख्यार्थस्यानन्वयात्। क्रियाग्रहणमपि कर्त्तव्यमिति सम्प्रदानत्वाद् भर्त्रे नखेभ्य इति चतुर्थी। "क्रुधद्रुह—" इत्यादिनेति जयमङ्गलादयस्तदसत्, कोपस्य लाक्षणिकत्वादयं प्रति कोप इति नियमाच्च। नायिका प्रगल्भा ॥८

भरतः। पीने इत्यादि। कापि सुमध्या दयितेन नखैः खण्ड्यमाना अहमप्यस्य क्षतं विधास्यामीति मत्वा भटस्य योधस्य पीने कठिने उरसि दत्तान् पाणिरुहान् नखान् मृदुलक्कान् भग्नान् कुण्ठितान्। भुग्नान् इति पाठे कुटिलान् वीक्ष्य दृष्ट्वा चिकीर्षाविभङ्गेन व्याकुलचित्ततया भर्त्रे नखेभ्यश्च चिरं चिरकालं व्याप्य जुजूरे क्रुध्यति स्म। जूरीयीज्यानौ वधे अनेकार्थत्वात् कोपेऽपि। यस्मै दित्सेत्यादिना सम्प्रदानत्वम्। शास्त्रव्युत्पत्तिरत्र गाम्भीर्यमत्र गुणः, कामशास्त्रे मानावमाने स्त्रीणां विशेषे नखक्षतदानस्य उक्तत्वात् ॥ ८

অনুবাদ। কোন একটী কৃশাঙ্গী রমণী সুরতবীর পতির স্থূল বক্ষঃস্থল প্রতিঘাত করাতে নিজের কোমল নখ গুলিকে বক্রাগ্র দেখিয়া তাহার প্রতিবিধানে অসমর্থ হওয়ায় নখক্ষতকারী পতির প্রতি এবং নখের প্রতি বহুক্ষণ ধরিয়া ক্রুদ্ধ হইয়া রহিল। ৮

स्रस्ताङ्गचेष्टो विनिमीलिताक्षः
स्वेदाम्बुरोमोद्गमगम्यजीवः।
अशेषनष्टप्रतिभामहत्त्वो[पटुत्वो]
प्रियो[गाढो]पगूढो प्रमदाज [दयितैर्ज]नोऽभूत्

अन्वयः। प्रियोपगूढः प्रमदाजनः, स्रस्ताङ्गचेष्टः विनिमीलिताक्षः स्वेदाम्बुरोमोद्गमगम्यजीवः (तथा) अशेषनष्टप्रतिभामहत्त्वः अभूत्॥ ९

मल्लिनाथः। स्रस्तेति। प्रियैरुपगूढः प्रमदाजनः स्रस्ताङ्गचेष्टः नष्टाङ्गचेष्टः। एतेन स्तम्भाख्यः सात्त्विकभाव उक्तः। 'स्तम्भस्य निष्क्रियाङ्गत्वम्' इति लक्षणात्। विनिमीलिताक्षः सुखपारावश्यादिति भावः। स्वेदाम्बुरोमोद्गमाभ्यां गम्योऽनुमेयो जीवो जीवनं यस्य सः, आनन्दपारवश्यान्मृतकल्प इत्यर्थः। अशेषं यथा तथा नष्टं प्रतिभामहत्त्वं ज्ञानशक्तिर्यस्य स ईदृगवस्थोऽभूत्। एतेन सात्त्विकोदय उक्तः। तदुक्तम्—"स्तम्भप्रलयरोमाञ्चाः स्वेदो वैवर्ण्य-वेपथू। अश्रुवैस्वर्य्यमित्यष्टौ सात्त्विकाः परिकीर्त्तिताः॥" इति॥ ९

भरतः। स्रस्तेत्यादि। स्त्रीजनो दयितैः गाढालिङ्गितः सन् अशेषनष्टप्रतिभापटुत्वोऽभूत्, अशेषं समस्तम् एव नष्टं प्रतिभायाः बुद्धेः पटुत्वं यस्य, अत एव स्रस्ताङ्गचेष्टः अपहृतदेहव्यापारः सुखानुभवात् विनिमीलितलोचनः स्वेदजलरोमाञ्चाभ्यां गम्यमानजीवः जनशब्दोऽत्र स्त्रीजातिवाचकः, तेन दयितैरित्यत्र बहुत्वमदुष्टं गाढालिङ्गनकारित्वेन गौरवे बहुत्वं वा, कान्तिरत्र गुणो दीप्तरसत्वात्॥ ९

অনুবাদ। প্রিয় স্বামী আলিঙ্গন করিলে রমণীগণের অঙ্গপ্রত্যঙ্গসকল সুখাতিশয্য নিশ্চেষ্ট হইতে লাগিল, এইজন্য অবসন্ন হইয়া চক্ষু মুদ্রিত করিয়া রহিল। তাহাদের শরীরের ঘর্ম্ম ও রোমাঞ্চ দেখিয়াই তাহারা জীবিত আছে ইহা অনুভূত হইতে লাগিল। (অর্থাৎ তাহারা স্বামীর আলিঙ্গনে আনন্দাতিশয্যে মৃত প্রায় নিস্পন্দ হইয়া পড়িল)। ৯

तत[म]: सुषु[प्रसु]प्तं मरणं सुखं नु
मूर्च्छा नु माया नु मनोभवस्य।
किं तत्कथं वेत्युपलब्धसंज्ञा
विकल्पयन्तोऽपि न संप्रतीयुः॥ १०

अन्वयः। ततः उपलब्धसंज्ञाः (कामुकाः), "सुषुप्तं नु—मरणं नु—सुखं नु—मूर्च्छा नु—मनोभवस्य माया—नु—तत् किं, कथं वा (तत् स्यात्)।" इति विकल्पयन्तोऽपि न सम्प्रतीयुः॥ १०

मल्लिनाथः । तत इति । ततस्तात्दृक्सुखपारवश्यानन्तरमुपलब्धसंज्ञाः प्राप्तबोधाः सन्तः । तमः इति पाठे तमोऽन्धकारं वेति योज्यम् । सुषुप्तं सुषुप्त्यवस्था । भावे क्तः । मरणं वा सुखं नु सुखाद्वैतं वा मूर्च्छा नु मूर्च्छावस्था वा मनोभवस्य माया नु व्यामोहनं वेति विकल्पयन्तः सर्वज्ञानोपरमादिदं बहुधा वितर्कयन्तोऽपि तदवस्थास्वरूपं किं किंरूपं कथं कीदृशं वेति न सम्प्रतीयुः इदमीदृगिति न निश्चिक्युरिति शृङ्गारस्यातिभूमिरुक्ता । अनिश्चयात्मकः शुद्धसंशयोऽलङ्कारः ॥ १०

भरतः । तम इत्यादि । कामुका अपि सुरतावस्थाया उत्तरकालमुपलब्धचैतन्याः सन्तो विकल्पयन्तीत्याह—किं तमः प्रागन्धकारं वृत्तं वस्त्वन्तरानुपलम्भात् प्रसुप्तं वा प्रसुप्तिर्यव स्वप्नोऽपि न दृश्यते, मरणं वा अचेष्टत्वात्, सुखं वा अनुभूयमानत्वात्, मूर्च्छा मोहो वा ज्ञस्याप्यस्मरणान्मनोभवस्य कामस्य माया वा किन्तदभवत् केन प्रकारेण वेति एवं विकल्पयन्तोऽपि न सम्प्रतीयुः परमार्थं न निश्चितवन्तः पूर्ववदत्र माधुर्यं गुणः ॥ १०

অনুবাদ। সেইরূপ সুখানুভবের পর কামুকগণ চৈতন্যলাভ করিয়া ভাবিতে লাগিল, আমাদের এই অবস্থা কি ? সুষুপ্তি ? না মৃত্যু ? না সুখ ? না মূর্চ্ছা ? কিংবা কামদেবের মায়া ? ইহা কি ? এইরূপে অনেক বিতর্ক করিয়াও অবস্থা স্থির করিতে পারিল না। ১০

वक्षः स्तनाभ्यां मुखमाननेन
गात्राणि गात्रैर्घटयन्नमन्दम् ।
स्मरातुरो नैव तुतोष लोकः
पर्य्याप्तता प्रेम्णि कुतो विरुद्धा ॥ ११

अन्वयः । स्मरातुरः लोकः वक्षः स्तनाभ्यां, मुखम् आननेन, गात्राणि गात्रैः अमन्दं घटयन् नैव तुतोष । (तथाहि) प्रेम्णि विरुद्धा पर्य्याप्तता कुतः ॥ ११

मल्लिनाथः । वक्ष इति । स्मरातुरः कामार्त्तो लोकः कामुकजनो वक्षः स्वकीयं स्तनाभ्यां, मुखं स्वकीयमाननेन कान्तामुखेन, गात्राणि स्वकीयानि गात्रैस्तदीयैरमन्दं घटयन् निरन्तरं संश्लेषयन् नैव तुतोष । तथाहि—प्रेम्णि प्रेमास्पदे वस्तुनि विरुद्धा व्याहता पर्य्याप्तता सम्पूर्णता कुतः ? अतिभोगेऽप्यलं बुद्धिर्न जायत एव प्रेमपर्य्याप्तव्याघातादिति भावः । अर्थान्तरन्यासोऽलङ्कारः ॥ ११

भरतः । वक्ष इत्यादि । स्मरातुरो लोकः कामार्त्तो जनः स्वकीयं हृदयादि स्त्रीस्तना-

ङ्गिना अमन्दं दृढं घटयन् संश्लेषयन् नैव तुतोष न तृप्तिं जगाम। कुत इत्याह—प्रेमस्निग्धमता इच्छाविच्छेदः कुतो भवेत् यतः सा विदग्धा। कान्तिरसोऽपि गुणः ॥ ११

অনুবাদ। কামাতুর ব্যক্তিগণ কামিনীর স্তনদ্বারা নিজ বক্ষঃস্থল, কামিনী-মুখ দ্বারা নিজ মুখ, গাত্র দ্বারা গাত্র গাঢ়ভাবে সংযুক্ত করিয়াও সন্তুষ্ট হইতে পারে নাই। কারণ প্রিয়বস্তুর অতিমাত্র উপভোগেও তৃপ্তি লাভ হয় না। ১১

**स्रस्ताङ्गयष्टिः परिरभ्यमाणा**
**संदृश्यमानाप्युपसंहृताक्षी।**
**अनूढमाना शयने नवोढा**
**परोपकारैकरसैव तस्थौ ॥ १२**

अन्वयः। नवोढा, परिरभ्यमाणा स्रस्ताङ्गयष्टिः सन्दृश्यमानापि उपसंहृताक्षी (तथा), अनूढमाना (च) (सती) शयने परोपकारैकरसैव तस्थौ ॥ १२

मल्लिनाथः। स्रस्तेति। नवोढा नायिका परिरभ्यमाणा प्रियेणालिङ्ग्यमाना सती स्रस्ता उपेक्षिता न तु प्रत्यालिङ्गनप्रवृत्ताङ्गयष्टिर्यस्याः सा, सन्दृश्यमाना सम्यगीक्ष्यमाणाप्युपसंहृताक्षी निमीलितलोचना न तु प्रतिपश्यन्ती। किं कोपात्? नेत्याह—अनूढमाना अजातकोपा। अत्र लज्जाविजितमन्मथत्वादिति भावः। तथापि सा शयने एकशय्यायां परोपकारे प्रियानुरञ्जनरूप एकरसा मुख्यानुरागिण्यभूत्। प्रतिकूलापि प्रियमनोहराभूदित्यर्थः ॥ १२

भरतः। स्रस्ताङ्गयष्टिरित्यादि। काचिन्नवोढा शयने शय्यायां परोपकारैकरसा अन्यप्रकारेण नाभिप्रायेण तस्थौ न तु स्वोपकाराय, यतः परिरभ्यमाणा दयितेनालिङ्ग्यमाना स्रस्ताङ्गयष्टिर्न प्रत्यालिङ्गनं करोति नापि प्रतीपा मुखमुन्नमय्य संदृश्यमानापि उपसंहृताक्षी निमीलितनेत्रा न पश्यति मानेनैवं करोतीति चेदाह अनूढमाना लज्जयैव अधृतमाना तथा करोतीत्यर्थः। पूर्ववन्माधुर्य्यादिगुणोऽत्र बोध्यः एवमन्येऽपि ॥ १२

অনুবাদ। নববিবাহিতা একটী যুবতীকে শয্যার উপর পতি আলিঙ্গন করিলে তাহার দেহলতা অবশ হইয়া গেল, স্বামী তাহার দিকে সতৃষ্ণ দৃষ্টিপাত করিলেও লজ্জায় সে চক্ষু মুদ্রিত করিয়া রহিল, অভিমান না করিয়া যেন পরের উপকার করিবার জন্য একশয্যায়ই শুইয়া রহিল। ১২

**आलिङ्गितायाः सहसा त्रपावां-**
**स्त्रासाभिलाषानुगतो रतादौ।**

विश्वासितायां रमणेन बध्वां
विमर्दरम्यो मदनो बभूव ॥ १३

अन्वयः । रतादौ रमणेन वध्वाः ( रतात् प्राक् ) सहसा आलिङ्गितायाः ( सत्यः ) मदनः त्रपावान्—त्रासाभिलाषानुगतः—( तथा ) विश्वासितायाः विमर्दरम्यश्च बभूव ॥ १३

मल्लिनाथः । आलिङ्गितायाः इति । रतादौ सुरतारम्भे रमणेन वध्वाः सहसा हठादालिङ्गितायाः सत्याः मदनस्त्रपावांस्त्रासाभिलाषाभ्यां साध्वसरागाभ्यामनुगतो बभूव । प्रथमसङ्गमात् त्रपावासौ कामादभिलाषस्तत्सङ्कीर्णोऽभूदित्यर्थः । ततो मदनो रमणेन विश्वासितायाः विस्रम्भितायाः वैयात्यं गमितायाः इत्यर्थः । विमर्देन विस्रम्भविहारेण रम्यो बभूव । एषा च मुग्धा नायिका लज्जाविजितमन्मथा कयञ्चिदुद्बुद्धमन्मथाभूदिति भावः ॥ १३

भरतः । आलिङ्गितायाः इत्यादि । रतादौ रतात् प्राक् रमणेन कान्तेन सहसा अकस्मादालिङ्गितायाः कस्याश्चित् वध्वाः मदनस्त्रपावान् लज्जावान् त्रासेनाभिलाषेण चानुगतश्च बभूव, किं वा आलिङ्गनेन सहसा त्रपावान् रतादौ सुरतारम्भे त्रासाभिलाषाभ्यामनुगतः पश्चात् शनैः शनैर्विश्वासितायाः विश्वासं प्रापितायाः तस्या एव मदनो विमर्देन रम्यो बभूव त्रासाभावात् ॥ १३

অনুবাদ । সুরতারম্ভে পতি কর্ত্তৃক সহসা কোন বধূ আলিঙ্গিত হইলে প্রথমে ত্রাস ও লজ্জাযুক্ত হইয়া পরে কন্দর্পভাবে অভিলাষযুক্তা হইলেন । শেষে পতির মধুর বচনাদি দ্বারা বিশ্বস্ত হইলে সেইভাব অতি মধুর হইয়া উঠিল । ১৩

सामोन्मुखेनाच्छुरिता प्रियेण
दत्ते[ऽथ]न काचित् पुलकेन भेदे ।
अन्तः प्रकोपापगमाद्विलोला
वशीकृता केवलविक्रमेण ॥ १४

अन्वयः । अथ काचित् सामोन्मुखेन प्रियेण आच्छुरिता ( सती ) दत्तेन पुलकेन भेदे ( सति ) अन्तःप्रकोपापगमात् विलोला केवल-विक्रमेण वशीकृता ॥ १४

मल्लिनाथः । अथ काचित् कुपिता प्रियेण सामाद्युपायचतुष्टयेन साधितेत्याह—सामेति । अथ काचित् कुपिता सामोन्मुखेन सान्त्वपूर्वेण प्रियेणाच्छुरिता नखैः परामृष्टा सती दत्तेन पुलकेन पुलकदानेनेत्यर्थः । भेदे रागभेदे सत्येवं सामदानभेदैरन्तर्मनसि

प्रकोपस्यापगमाद्विलोला धैर्य्यच्युता सती केवलेन विक्रमेण बलाद्ग्रहणेन चतुर्थोपायेन वशीकृता वशं गमिता। एतेन विस्रम्भसम्भोग उक्तः। प्रस्तुतस्त्रीपुरुषविशेषणैरप्रस्तुतारिजिगीषुनायकप्रतीतेः समासोक्तिरलङ्कारः। लक्षणं तूक्तम्॥ १४

भरतः। सामीप्यस्थेनेत्यादि। काचिन्मानिनी सामीप्यस्थेन प्रसादनीयतेन प्रियेणाङ्कुरिता पाङ्कुरिताख्येन नखकर्मणा स्पृष्टा अथानन्तरं पुलकेन रोमाञ्चेन भेदे उद्गमे दत्ते सति अन्तःप्रकोपस्यापगमात् विलोला चञ्चलबुद्धिः सा सुरते साभिलाषा वा केवलविक्रमेण हठाद्ग्रहणमात्रेण वशीकृता उपभुक्ता भावं ज्ञात्वा प्रसादनान्तरमकृतप्रसादनान्तरेण प्रियेण यद्गण्डस्थलान्तरे अङ्गुष्ठायनखेन ताड्यते तदाङ्कुरितमुच्यते॥ १४

অনুবাদ। অনন্তর সান্ত্বনাকারী পতি, বৃদ্ধাঙ্গুলীর নখ দ্বারা গণ্ডদেশ স্পর্শ করায় কোন একটী কুপিতা কামিনীর পুলকে রোমাঞ্চ হইলে তাহার মনের কোপ দূরীভূত হওয়ায় সে ধৈর্য্যচ্যুত হইল; তখন কেবল বলপূর্ব্বক গ্রহণের বশীভূতা হইয়া উঠিল। ১৪

गुरुर्दधाना परुषत्वमन्या
कान्तापि कान्तेन्दुकराभिमृष्टा।
प्रह्लादिता चन्द्रशिलेव तूर्णं
क्षोभात् स्रवत्स्वेदजला बभूव॥ १५

अन्वयः। गुरुः काचित् अन्या कान्ता परुषत्वं दधाना, कान्तेन्दुकराभिमृष्टा चन्द्रशिलेव प्रह्लादिता (च) क्षोभात् तूर्णं स्रवत्स्वेदजला बभूव॥ १५

मल्लिनाथः। गुरुरिति। अथ गुरुर्नितम्बगुर्व्यन्या काचित् कान्ता पुरुषत्वं दधाना पुरुषायितमाचरन्ती कान्त इन्दुरिव तस्य करेणांशुनेव करेण हस्तेनाभिमृष्टा। चन्द्रशिलेवेत्युपमालिङ्गाद्उपमितसमासः। अत एव प्रह्लादिता अन्तराप्यायिता सती चन्द्रशिला चन्द्रकान्तशिलेव तूर्णं क्षोभात् सत्त्वविकारविशेषात् स्रवत्स्वेदजला बभूव। एतेन सुरतातिभूमिरुक्ता। नायिका च प्रगल्भा, अत एव स्मरार्जितव्रीड़ा। उपमालङ्कारः॥ १५

भरतः। गुरुरित्यादि। अन्या कान्ता परुषत्वं नैष्ठुर्य्यं दधानापि कान्तेन इन्दुनेव कान्तस्य चन्द्रस्य वा करेण हस्तेन किरणेन चाभिमृष्टा सती ततः प्रह्लादिता आनन्दिता च सती क्षोभात् तस्तो विकारात् तूर्णं स्रवत् स्वेदजला बभूव, चन्द्रशिलेव चन्द्रकान्तमणिरिव। कीदृशी? गुरुर्गौरवान्विता चन्द्रशिलापि हि गुरुत्वाख्यगुणयुक्ता कान्ता मनोहरा परुषत्वं काठिन्यं दधानापि कान्तेन कमनीयेन इन्दुना कराभिमृष्टा प्रह्लादिता प्रकाशिता च सती

क्षोभात् स्वप्रकृतिविपर्य्ययात् अवज्ज्वला भवति । गुरुरिति गुणाधीन इति पक्षे ईप्प्रत्ययाभावः ॥ १५

অনুবাদ। কোন গর্ব্বিতম্বিনী প্রথমে নিষ্ঠুরতা প্রকাশ করিয়া, পরে স্বামিরূপ চন্দ্রের করস্পর্শে মনে মনে আনন্দিত হইয়া চন্দ্রকান্ত মণির ন্যায় তৎক্ষণাৎ মদ ক্ষোভবশে দ্রবীভূত হইতে লাগিল। ১৫

शशाङ्कनाथापगमेन धूम्रां
मूर्च्छापरीतामिव निर्विवेकाम् ।
ततः सखीव प्रथितानुरागा
प्राबोधयद् द्यां मधुरारुणश्रीः ॥ १६

अन्वयः। ततः सखीव शशाङ्कनाथापगमेन धूम्रां मूर्च्छापरीतां निर्विवेकाम् ( स्त्रियं ) इव द्यां प्रथितानुरागा मधुरारुणश्रीः प्राबोधयत् ॥ १६

मल्लिनाथः। शशाङ्केति। शशाङ्को नाथ इवेत्युपमितसमासः सखीवेत्युपमालिङ्गात्। तस्यापगमेन वियोगेन धूम्रां धूसरां विवर्णामित्यर्थः। अत एव मूर्च्छापरीतां मूर्च्छाक्रान्तामिव निर्विवेकामविविक्तरूपां विवेकशून्याञ्च श्यामाकाशं नायिकां चेति गम्यते। ततो मूर्च्छानन्तरं प्रथितानुरागा व्यक्तरागा प्रकटितस्नेहा च मधुरा रम्या अरुणश्रीररुणोदयलक्ष्मीः सखीव प्राबोधयत् प्रसन्नां विमूर्च्छां चाकरोदित्यर्थः। उपमालङ्कारः ॥ १६

भरतः। शशाङ्केत्यादि। ततोऽनन्तरम् अरुणस्य सूर्य्यस्य तत्सारथेर्वा श्रीर्द्यामाकाशं प्राबोधयत् प्रकाशितवती सखीव। यथा सखी काचित् स्त्रियं प्रबोधयति। कीदृशीं द्यां ? नाथस्य चन्द्रस्यापगमेन धूम्रां धूसरां, स्त्री च नाथस्य भर्त्तुरपगमनेन विरहेण धूम्रा मलिना भवति, मूर्च्छापरीतामिव अचेतनामिव, सापि स्त्री मोहपरिगता भवति, निर्विवेका न विद्यते विवेको यत्र तादृशीं, सापि स्त्री सदसद्विवेकशून्या सत्या प्रबोध्यते। अरुणश्री. कीदृशी ? प्रथितानुरागा प्रकाशितरक्तभावा मधुरा प्रिया अभिनवत्वात्, सखी च प्रकाशितस्नेहा मधुरा प्रियभाषिणी च भवति ॥ १६

অনুবাদ। স্ত্রীলোক স্বামীর বিরহে বিবর্ণা, মূর্চ্ছাক্রান্তা ও হিতাহিতবিবেকশূন্যা হইলে কোন সখী যেমন স্নেহবশে প্রবোধ দেয়, রমণীয় অরুণোদয়ের শোভাও সেইরূপ চন্দ্ররূপ পতির অস্ত-সময়ে—ধূসরবর্ণ মলিন, লুপ্ত দিগ, আকাশকে রাক্তরাগা রমণীয় অরুণোদয়-শোভা প্রসন্ন করিয়া তুলিল। ১৬

अवीतत्णोऽथ परस्परेण
क्षणादिवायातनिशावसानः।
दुःखेन लोकः परवानिवागात्
समुत्सुकः स्वप्ननिकेतनेभ्यः॥ १७

अन्वयः। अथ परस्परेण अवीततृष्णः क्षणात् इव आयातनिशावसानः (अत एव) समुत्सुकः लोकः परवान् इव स्वप्ननिकेतनेभ्यः दुःखेन अगात्॥ १७

मल्लिनाथः। अवीतेति। अथारुणोदयानन्तरं परस्परेण मिथोऽवीततृष्णोऽनुपगतान्योन्यसङ्गमाभिलाषस्तथा सत्येव क्षणादिवायातनिशावसानः क्षणप्रायगतरात्रिक इत्यर्थः। अत एव समुत्सुकः समागमोत्सुको लोकः स्त्रीपुंसलोकः परवानिव परतन्त्र इव स्वप्ननिकेतनेभ्यो निद्रागृहेभ्यो दुःखेनागान्निरगात्॥ १७

भरतः। अवीतेत्यादि। अथानन्तरं लोकः समुत्सुकः समुत्कण्ठितोऽपि परवान् पराधीन इव कार्य्यगौरवात् स्वप्ननिकेतनेभ्यो शयनगृहेभ्यः दुःखेन अगात् निर्गतवान्, यतः परस्परेण अन्योन्येन दयितो दयितया दयिता दयितेन अवीततृष्णः अविगतसम्भोगाभिलाषः अत एव क्षणादिव द्रुतमिवागतं निशावसानं यस्य स तथा सुखेन कालबहुत्वाज्ञानात्॥ १७

অনুবাদ। অনন্তর স্ত্রী পুরুষের সঙ্গমাভিলাষ পূর্ণ না হইতেই রজনী প্রভাত হইল; এই দুঃখেই তাহারা উৎকণ্ঠিতচিত্তে পরাধীন ব্যক্তির ন্যায় নিজ নিজ শয়ন গৃহ হইতে দুঃখের সহিত বাহির হইতে লাগিল। ১৭

अर्धोत्थितालिङ्गितसन्निमग्नो
रुद्धः पुनर्यान् गमनेऽनभीप्सुः।
व्याजेन निर्य्याय पुनर्निवृत्त-
स्त्यक्तान्यकार्य्यः स्थित एव कश्चित्॥ १८

अन्वयः। कश्चित् (कामी) अर्द्धोत्थितालिङ्गितसन्निमग्नः (तथापि) पुनः यान् रुद्धः गमने अनभीप्सुः (तथापि) निर्य्याय व्याजेन पुनः निवृत्तः त्यक्तान्यकार्य्यः (सन्) स्थित एव॥ १८

मल्लिनाथः। अर्द्धेति। कश्चित् कामी अर्द्धं यथा भवति तथोत्थितः शयनादुद्गतः सन्नेवालिङ्गितः प्रियया आश्लिष्टः स चासौ सन्निमग्नः सुखमग्नश्च तथापि पुनर्यान् निर्गच्छन् रुद्ध· प्रियया निरुद्ध-

गमनो निर्गमनेऽनभीप्सुस्तथापि निर्य्याय निर्गत्य । यातेः समासे निःपूर्वे ल्यप् । व्याजेन क्षुतादिमिषेण पुनर्निवृत्तस्त्यक्तान्यकार्य्यः सन् स्थित एव तथैव स्थितः । अहो कामस्य महिमेति भावः ॥ १८

भरतः । अर्द्धोत्थितेत्यादि । कश्चित् कामुकः शयनादर्द्धोत्थितो दयितया आलिङ्गितः सन् पुनः सन्निमग्नः सुप्तः पुनरपि यान् गन्तुमुद्यतः सन् दयितया हस्ते वारितः अत एव गमनेऽनभीप्सुरिच्छारहितोऽपि गुर्व्वादिभयान्निर्य्याय निर्गत्य व्याजेन रोगादिच्छलेन पुनर्निवृत्तः सन् कार्य्यान्तरं त्यक्त्वा स्थित एव शयनगृह इत्यर्थात् अर्द्धोत्थित इति शयनादर्द्धमुत्थितं यश्चित्यग्न्याहितादित्वात् क्तान्तस्य विभाषया परनिपात इति परः । गमने नियमाभिदृष्टत्वादविरोध एव, यद्वा अर्द्धेनोत्थित इति विग्रहः । शयनस्यार्द्धादुत्थित इति वा सन् आलिङ्गितः सन् सन्निमग्न इति क्रमसमासः ॥ १८

অনুবাদ। কোন কামুক শয্যা হইতে অৰ্দ্ধোত্থিত অবস্থায় পত্নীকর্ত্তৃক আলিঙ্গিত হইয়া সুপ্তমগ্ন হইয়া পড়িল এবং পুনর্ব্বার যাইতে উদ্যত হইলে প্রিয়া তাহার গমনে বাধা দিল। তখন যাইতে ইচ্ছা না থাকিলেও সে বাহির হইয়া ছলক্রমে ফিরিয়া আসিয়া পুনর্ব্বার সেই ভাবেই রহিল। ১৮

तालेन सम्पादितसाम्यशोभं
शुभावधानं स्वरबद्धरागम् ।
पदैर्गतार्थं नृपमन्दिरेषु
प्रातर्जगुर्मङ्गलवत्तरुण्यः ॥ १९

अन्वयः । तरुण्यः प्रातः नृपमन्दिरेषु तालेन सम्पादितसाम्यशोभं शुभावधानं स्वरबद्धरागं पदैः गतार्थं मङ्गलवत् जगुः ॥ १९

मल्लिनाथः । तालेनेति । तरुण्यो मङ्गलगायिकाः प्रातः प्रभाते नृपमन्दिरेषु प्रभुगृहेषु तालेन तालक्रियामानेन सम्पादिता साम्यशोभा लयश्रीर्यस्मिंस्तत् शुभमवधानमेकाग्रता यस्मिंस्तत् स्वरैः षड्जादिभिर्बद्धरागं सम्पादितरञ्जनं पदैर्वाचकैर्गतार्थमवगतवाच्यं मङ्गलवन्मङ्गलगीतं जगुरगायन् ॥ १९

भरतः । तालेनेत्यादि । नृपमन्दिरेषु राजगृहेषु प्रातः प्रभातसमये तरुण्यो मङ्गलयुक्तं यथा स्यात् तथा जगुर्गायन्ति स्म, तालेन चञ्चत्पुटादिना सम्पादिता साम्यस्य लयस्य शोभा यत्र गानक्रियायां "तालः कालक्रियामानं लयः साम्यमथास्त्रियाम्"इत्यमरः । साम्यं नृत्यगीतवाद्यानां समत्वमित्यर्थः । शुभं शोभनमवधानं चित्तैकाग्रता यत्र स्वरैः षड्जादिभिर्बद्धोऽनुगतो रागो यत्र पदैर्विभक्त्यन्तैर्गतः परिच्छिन्नोऽर्थो यत्र निरर्थकरहितमित्यर्थः, तेन

स्वरगतं लयगतं पदगतमवधानगतञ्चेति चतुर्विधं गीतमुक्तम्। नृपमन्द्री राजनि वन्दी स्तवार्थादिष्वपि प्रवर्त्तते ॥ १९

অনুবাদ। মঙ্গলগায়িকাগণ প্রভাতে রাজভবনে গিয়া তাল-মান-লয়যোগে একাগ্রচিত্তে ষড়্জ প্রভৃতি সপ্তস্বরে সুস্পষ্ট পদাবলী দ্বারা সুখবোধ্য মঙ্গলগীতি গাইতে লাগিল। ১৯

दुरुत्तरे पङ्क इवान्धकारे
मग्नं जगत्सन्ततरश्मिरज्जुः ।
प्रनष्टमूर्त्तिप्रविभागमुद्यन्
प्रत्युज्जहारेव ततो विवस्वान् ॥ २०

अन्वयः। ततः उद्यन् विवस्वान् दुरुत्तरे पङ्के इव अन्धकारे मग्नं ( अत एव ) प्रनष्ट-मूर्त्तिप्रविभागं जगत् सन्ततरश्मिरज्जुः ( सन् ) प्रत्युज्जहार इव ॥ २०

मल्लिनाथः। दुरुत्तरेति। ततोऽरुणोदयानन्तरमुद्यन् विवस्वान् सूर्य्यो दुरुत्तरे दुस्तरे पङ्के इवान्धकारे मग्नम् अत एव प्रनष्ट-मूर्त्तिप्रविभागं प्रविलुप्तकुब्जस्तम्भादिस्वरूपभेदं जगल्लोकं सन्तता विस्तारिता रश्मय एव रज्जवो येन सः सन् प्रत्युज्जहारेव रश्मिरज्जुभिः प्रत्युद्धृतवान् किमित्युपमासङ्कीर्णेयमुत्प्रेक्षा ॥ २०

भरतः। दुरुत्तर इत्यादि। विवस्वान् सूर्य्य उद्यन् उद्गच्छन् दुःखेन उत्तरीतुं अशक्ये पङ्के इवान्धकारे मग्नं जगत् ततोऽन्धकारात् प्रत्युज्जहारेव उद्धृतवानिव। कीदृशो विवस्वान्? सन्तता विस्तृता रश्मयो रज्जव इव येन तादृशः, अन्योऽपि मग्नं वस्तु रज्जुभिरुद्धरति। जगत् कीदृशं? प्रनष्टोऽदृश्यः स्थावरजङ्गममूर्त्तीनां प्रविभागो यत्र, तादृशमन्धकारमग्नत्वात् दुरुत्तर इति दुःखेनोत्तीर्य्यते यदिति ईषद्दुःसोरिति कर्मणि खल्, उदधिगिति इनः प्रतवि यिणोऽच्यणाविति यत्वम् ॥ २०

অনুবাদ। এক্ষণে অরুণোদয়ের পর সূর্য্যদেব উদিত হইলেন। গাঢ় পঙ্কবৎ অন্ধকারে জগৎ মগ্ন ছিল, তাহার স্থাবর জঙ্গমাদি অবয়ব অদৃশ্য ছিল। তিনি কিরণরূপ রজ্জু বিস্তার পূর্ব্বক যেন তাহাকে উঠাইতে লাগিলেন। ২০

वो[पौ]तौष्ठरागाणि हृताञ्जनानि
भास्वन्ति लोलैरलकैर्मुखानि ।
प्रातः कृतार्थानि यथा विरेजु-
स्तथा न पूर्वं द्विरलङ्कृतानि ॥ २१

अन्वय: । वीतौष्ठरागाणि हृताञ्जनानि लोलै: अलकै: ( उपलक्षितानि ) ( तथापि ) भास्वन्ति कृतार्थानि मुखानि प्रात: यथा विरेजु:, तथा पूर्वेद्यु: अलङ्कृतानि न विरेजु: ॥ २१

मल्लिनाथ: । वीतेति । वीतौष्ठरागाणि पानविलुप्ताधररागाणि हृताञ्जनान्यपि चुम्बनविलुप्तकज्जलानि लोलै: प्रियाकर्षणविलुलितै-रलकैरुपलक्षितानि तथापि भास्वन्ति कान्तिमन्ति कृतार्थानि प्रियोपभोगात् सफलानि मुखानि वधूमुखानि प्रातर्यथा विरेजुस्तथा पूर्वेद्यु: प्रदोषसमयेऽलङ्कृतानि न विरेजुरकृतार्थत्वादिति भाव: । प्रियसमागमसफलमण्डनानां कामिनीनां लुलितमण्डनतैव मण्डन-मिति भाव: ॥ २१

भरत: । पीतौष्ठेत्यादि । मुखानि वधूनामित्यर्थात् प्रात:काले यथा विरेजु: शुशुभिरे, न तथा पूर्वेद्यु: पूर्वस्मिन् दिवसे अलङ्कृतानि कृतसाधनान्यपि विरेजु: अकृतार्थत्वेन तादृग्गुणाभा-भावात्, प्रातस्तु कृतकार्याण्येव यतो दयितै: पीतौष्ठरागाणि ओष्ठचुम्बनात् पीत ओष्ठरागो यत्र हृताञ्जनानि आनन्दाश्रुपतनाच्चक्षुषो: चुम्बनात् वा अपगतकज्जलानि । कामशास्त्रे नेत्रचुम्बनमभिहितम् । तथाहि—“नयनयुगकपोलं दन्तवासो मुखान्त: स्तनजघनललाटं ...”इति । लोलै: करेण कचाकर्षणात् चञ्चलै: अलकै: चूर्णकुन्तलै: भास्वन्ति शोभ-मानानि ॥ २१.

অনুবাদ। স্বামীর চুম্বনে কামিনীগণের ওষ্ঠের রক্তিমা লুপ্ত হইয়াছে এবং নয়নের কজ্জল মুছিয়া গিয়াছে। আলু ায়িত কুন্তলজালে আবৃত হইয়াও সুন্দর, পতিসম্ভোগে সার্থক, রমণীগণের মুখগুলি প্রাতঃকালে যেমন শোভা পাইতেছিল, পূর্ব্বদিন সন্ধ্যাকালে সুসজ্জিত অবস্থায়ও তাহা সেরূপ শোভা পায় নাই। ( কামিনীগণের পতিসঙ্গই প্রকৃষ্ট ভূষণ )। ২১

प्रजागराताम्रविलोचनान्ता

निरञ्जनालक्तकपत्रलेखा: ।

तुल्या इवासन् परिखेदवत्यो [तन्व्यो]

वासच्युता: सेवितमन्मथाभि: ॥ २२

अन्वय: । प्रजागरेण आताम्रविलोचनान्ता निरञ्जनालक्तकपत्रलेखा: परिखेदतन्व्यो वासच्युता: ( विप्रलब्धनायिका: ) सेवितमन्मथाभि: ( सह ) तुल्या इवासन् ॥ २२

मल्लिनाथ: । प्रजागरेति । प्रजागरेण प्रियप्रतीक्षाकृतनिद्रा-क्षयेण अन्यत्र रतिविहारकृतेन आताम्रविलोचनान्ता रक्तलोचना निरञ्जनालक्तकपत्रलेखा एकत्र रोदनादन्यत्र विमर्दाच्च निष्टष्टा-ञ्जनादिमण्डना: परिखेदवत्य: एकत्र विप्रलम्भदु:खवत्य: अन्यत्र

रतिश्रमवत्यः वासच्युताः प्रियसहवासभ्रष्टा विप्रलब्धनायिकाः सेवितमन्मथाभिः प्रियसङ्गताभिः सह तुल्या इवासन् । एताश्च नायिका विप्रलब्धाः । "कृत्वा सङ्केतमावेद्य दयितेनाथ वञ्चिता । स्मरार्त्ता विप्रलब्धेति कलाविद्भिरुदीरिता ॥" इति लक्षणात् ॥ २२

भरतः । प्रजागरा इत्यादि । कान्तैः सहैकत्र शयनं वासस्तस्मात् च्युताः काश्चित् स्त्रियः सेवितमन्मथाभिरनुष्ठितसुरताभिस्तुल्या इव आसन् । कीदृश्यः ? दयितस्यागमनप्रतीक्षणाय प्रजागरत्वेन आताम्रे विलोचने यासाम्, उपभुक्तानामपि सुरतासक्तत्वादेव प्रजागरः, निरञ्जना निरलका निष्पत्रलेखाश्च विरहेण प्रसाधनाभावात् । किंवा रोदनात् निरञ्जनाः चित्तोन्मादादितस्ततः पादविक्षेपेण निरलकाः शयने मुहुः परिवर्त्तनान्निष्पत्रलेखाः उपभुक्ता अपि चुम्बनादानन्दाश्रुपाताद्वा निरञ्जना विपरीतसुरतान्निरलकाः चुम्बनताडनाभ्यां कपोलयोः स्तनयोश्च निष्पत्रावलीका भवन्ति । परिखेदात् विरहदुःखात् । पक्षे सुरतामर्दात् श्रमाद्यः, जागर्त्तेर्घञि अलि वा जागर्त्तेरख्वीर्णिति गुणे जागरः सेनकाल्वरीति अप्रत्यये स्त्रीलप्रसङ्गात् । किंवा अप्रत्ययेऽभिधानं नियामकमित्युक्तेः स्त्रीत्वाविवक्षा । केचित्तु—अप्रत्ययान्तस्य स्त्रीत्वात् प्रजागराताम्रविलोचनाना इति समस्तपदं पठन्ति, तन्निरर्थकम्, "जागर्य्या जागरा द्वयो"रित्यमरवचनात् ॥ २२

अनुवाद । কতকগুলি রমণীর পতির আগমন অপেক্ষায় এবং কতকগুলির রতিক্রীড়ার্থ জন্য জাগরণে নয়নপ্রান্ত রক্তবর্ণ হইয়াছিল, কাহারও রোদনে কাহারও মর্দনে চক্ষের কজ্জল, পদে অলক্তক স্তনের পত্ররচনা উঠিয়া গিয়াছিল। কেহ বিরহে, কেহ বা রতিশ্রমে কাতর হইয়া পড়িয়াছিল, অতএব পতিসঙ্গ ও পতিবিরহিত উভয়বিধ রমণীর অবস্থা যেন একই হইয়াছিল। ২২

आबद्धनेत्राञ्जनपङ्कलेश-
स्ताम्बूलरागं बहुलं दधानः ।
चकार कान्तोऽप्यधरोऽङ्गनानां
सहोषितानां पतिभिर्लघुत्वम् ॥ २३

अन्वयः । आबद्धनेत्राञ्जनपङ्कलेशः बहुलं ताम्बूलरागं दधानः पतिभिः सहोषितानां कान्तः अपि अधरः लघुत्वं चकार ॥ २३

मल्लिनाथः । आबद्धेति । आबद्धोऽश्रुपातसंक्रान्तो नेत्राञ्जनपङ्कलेशो यस्मिन् सः, बहुलं प्रियपानाभावात् सान्द्रं ताम्बूलरागं दधानः पतिभिः, सहोषितानां सह शयितानामङ्गनानां कान्तो रम्योऽप्यधरो लघुत्वमल्पत्वं सम्भोगाभावलाघवं चकार सूचया-

स्वकारीत्यर्थः । अस्याश्च रोषादगृहीतप्रार्थनाया: सन्तोषिताया एव रुदत्या रात्रिर्गतेत्यनुसन्धेयम् ॥ २३

भरत: । आवद्धेत्यादि । कासाञ्चिदङ्गनानां पतिभिः सन्तोषितानां स्वभावत: कान्तोऽपि अधरो लघुत्वं चकार दौर्भाग्यं सूचितवानित्यर्थः, अनुपभुक्तत्वात् । अधर: कीदृश: ? रोदना-दावद्धौ लग्नौ नेत्राञ्जनपङ्कस्य लेशौ अल्पभागौ यत्र तादृश: दयितैरपीतत्वात् बहुलं प्रचुरं ताम्बूलरागं दधान: ॥ २३

অনুবাদ। পতিসহ এক শয্যায় শয়ন করিলেও কোন কোন কামিনীর অধরদেশ অভি-লষিত সুরতক্রিয়া না পাইবার জন্য রোদনবশতঃ কজ্জল-কর্দমে মলিন হইয়াছিল। প্রচুর পরিমাণে তাম্বূলরাগে রক্ত হইলেও যেন সম্ভোগাভাবে দুর্ভাগ্য প্রকাশ করিতেছিল । ২৩

चक्षूंषि कान्तान्यपि साञ्जनानि
ताम्बूलरक्तं च सरागमोष्ठम् ।
कुर्वन् सवासं च सुगन्धि वक्त्रं
चक्रे जन: केवलपक्षपातम् ॥ २४

अन्वय: । कान्तानि अपि चक्षूंषि साञ्जनानि सरागम् ओष्ठं ताम्बूलरक्तं च सुगन्धि वक्त्रं च सवासं कुर्वन् जन: केवलपक्षपातं चक्रे ॥ २४

मल्लिनाथ: । चक्षूंषीति । कान्तानि निसर्गसुन्दराण्यपि चक्षूंषि साञ्जनानि सरागं स्वभावरक्तमोष्ठं ताम्बूलरक्तं च सुगन्धि निसर्ग-सुरभि वक्त्रं च सवासं वासनासमेतं गन्धान्तरवासितं कुर्वन् जन: कामिनीजन: केवलं पक्षपातं ममताञ्चक्रे । अत्राकिञ्चित्कराञ्जना-दीनां कारणविरोधस्य पक्षपातनिबन्धनत्वेनाभासीकरणाद्विरोधा-भासोऽलङ्कार: ॥ २४

भरत: । चक्षूंषीत्यादि । स्त्रीजन: स्वभावत: कान्तान्यपि नेत्राणि अञ्जनयुक्तानि कुर्वन् स्वभावत: सरागमोष्ठं ताम्बूलरक्तं कुर्वन् स्वभावत: सुगन्धि वक्त्रं सवासं कर्पूरादि सुवासयुक्तं कुर्वन् केवलं पक्षपातं प्रसादनस्नेहञ्चक्रे अञ्जनादीनां निरर्थकत्वात् ॥ २४

অনুবাদ। স্ত্রীলোক সকল স্বভাবতঃ রমণীয় চক্ষুতে কাজল দিয়া, স্বাভাবিক রক্তবর্ণ ওষ্ঠকে তাম্বূলরাগে রঞ্জিত করিয়া এবং স্বাভাবিক সুগন্ধি মুখমণ্ডলকে কর্পূরাদি সুগন্ধ দ্রব্যে গন্ধযুক্ত করিয়া নিষ্প্রয়োজন অঞ্জনাদি দ্রব্যে স্নেহ প্রকাশ পূর্ব্বক কেবল কতকগুলি অপ্রয়োজনীয় পদার্থে পক্ষপাতই দেখাইয়াছিল । ২৪

धूतैरसङ्क्षेतितलब्धै:
सम्भोगकालेऽवगतै: प्रभाते ।

अशङ्कतान्योन्यकृतं व्यलीकं
वियोगबाह्योऽपि जनोऽतिरागात् ॥ २५

अन्वयः। सम्भोगकाले असंवेदितदन्तलब्धैः प्रभाते अवगतैः क्षतैः जनः अतिरागात् वियोगबाह्योऽपि (सन्) अन्योन्यकृतं व्यलीकम् अशङ्कत ॥ २५

मल्लिनाथः। क्षतैरिति। सम्भोगकालेऽसंवेदितैः रागान्ध्यादज्ञातैर्दन्तलब्धैर्दन्तकृतैः क्षतैर्निमित्तैर्जनः स्त्रीपुंसजनोऽतिरागाद्वियोगबाह्योऽप्यवियुक्तोऽपि सन्नन्योन्यकृतं व्यलीकं दन्तक्षतापराधमशङ्कत मया न कृतमेतत् कुत आगतमिति क्रियाकालापरिज्ञानात् समशयितेति रागातिरेकोक्तिः ॥ २५

भरतः। क्षतैरिति। वियोगबाह्योऽपि विरहेणायुक्तोऽपि जनोऽतिरागादतिस्नेहात् क्षतैरन्योन्येन कृतं व्यलीकमपराधमशङ्कत शङ्कितवान्, ध्यां रूपं; किमस्यान्यया कान्तया दत्तं क्षतमिति योषिदशङ्कत पुरुषोऽपि किमस्या अन्येन प्रच्छन्नकामुकेन दत्तं क्षतमिति शङ्कते स्म। कुत इत्याह—कीदृशैः क्षतैः? सम्भोगकाले रागान्धतया असंवेदितानि अज्ञातानि दन्तेभ्यो लब्धानि यानि तैः, किन्तु संज्ञाने प्रभातकालेऽवगतैः ज्ञातैर्दर्शनात् ॥ २५

অনুবাদ। স্ত্রী পুরুষ উভয়েই অতিশয় অনুরাগে সংজ্ঞাহীন অবস্থায়, সহবাস সময়ে যে দন্ত প্রহারকৃত জানিতে পারে নাই, সকালবেলায় তাহা জানিতে পারিয়া তাহারা পরস্পর বিরহিত না হইলেও পরস্পরের কৃত অপরাধ বলিয়া শঙ্কা করিতে লাগিল। ২৫

नेत्रेषुभिः संय [य्] तपक्ष्मपत्रैः
कर्णान्तकृष्टै रुरुकेशशूलाः।
स्तनोरुचक्रास्ततकर्णपाशाः
स्त्रीयोधमुख्या जयिनो विचेरुः ॥ २६

अन्वयः। संयतपक्ष्मपत्रैः कर्णान्तकृष्टैः नेत्रेषुभिः (उपलक्षिताः) उरुकेशशूलाः स्तनोरुचक्राः ततकर्णपाशाः जयिनः स्त्रीयोधमुख्याः विचेरुः ॥ २६

मल्लिनाथः। नेत्रेति। संयतानि बद्धानि पक्ष्माण्येव पत्राणि येषां तैः कर्णान्तविश्रान्तैर्नेत्रैरेवेषुभिरुपलक्षिता उरवः केशाः शिरोरुहा एव शूलानि शूलायुधानि येषां ते स्तना एवोरूणि चक्राणि चक्रायुधानि येषां ते, तताः कर्णा एव पाशाः पाशायुधानि येषां ते जयिनः जयशीलाः स्त्रिय एव योधमुख्याः सुरतसमरवीरभटश्रेष्ठा विचेरुः विजह्रुः। रूपकालङ्कारः ॥ २६

भरतः। नैत्रेषुभिरित्यादि। स्त्रियो योधमुख्या इव योधश्रेष्ठा इव विचेरुर्भ्रमन्ति स्म। सयुतानि संयुक्तानि पक्ष्माण्येव पत्राणि पक्षा यत्र तैः कर्णान्तकृष्टैः कटाक्षदृष्ट्या कर्णान्तप्रवृत्तैर्नेत्रैरिषुभिरिव उपलक्षिताः, उरसो महान्तः कैशाः शूलानीव येषां श्यामत्वात् दीर्घत्वात् कामपीड़ाकारित्वाच्च, स्तना महाचक्राणीव येषां विशालपरिमाणत्वात्, तताः कर्णाः पाशा इव येषां कामुकमनोबन्धनयोग्यत्वात् अत एव जयिनः पुं जयनशीलाः॥ २६

অনুবাদ। পুরুষবিজয়ে দক্ষ সুরতসংগ্রামে প্রধান বীররূপিণী স্ত্রীলোকেরা সেখানে সঞ্চরণ করিতে লাগিল। তাহাদের আকর্ণবিশ্রান্ত নয়ন-বাণ, তাহাতে নেত্রলোমরূপ পালক বাঁধা তাহাদের আপাদলম্বিত কেশকলাপ পুরুষজয়ে শূলের কার্য্য করে। স্তনমণ্ডল মহৎ চক্রাস্ত্রের কার্য্য করে। বিস্তৃত কর্ণ, পাশ অস্ত্রের কার্য্য করে। ২৬

पयोधरांश्चन्दनपङ्कदिग्धान्
वासांसि चाक्लिष्टमृजानि दृष्ट्वा।
स्त्रीणां सपत्न्यो जहृषुः प्रभाते
मन्दायमानानुशयैर्मनोभिः॥ २७

अन्वयः। स्त्रीणां (अलब्धसङ्गमानां सपत्नीनां) चन्दनपङ्कदिग्धान् पयोधरान् अक्लिष्टमृजानि वासांसि च सपत्न्यो प्रभाते दृष्ट्वा मन्दायमानानुशयैः मनोभिः जहृषुः॥ २७

मल्लिनाथः। पयोधरानिति। स्त्रीणामलब्धसङ्गमानां सपत्नीनां चन्दनपङ्केन दिग्धान् लिप्तान्, अविमर्दादविलुप्तचन्दनानित्यर्थः। पयोधरान् स्तनान्। अक्लिष्टा विस्पष्टा अविमर्दादेव अविपर्य्यस्ता मृजा शुद्धिर्येषां तानि वासांसि च सपत्न्यो लब्धसङ्गमा इति भावः। प्रभाते दृष्ट्वा मन्दायमानः क्षीयमाणोऽनुशयोऽक्षमा येषु तैर्मनोभिर्जहृषुः। विफलप्रसाधना एता इति संहृष्टा इत्यर्थः॥ २७

भरतः। पयोधरानित्यादि। स्त्रीणां चन्दनपङ्कैर्दिग्धान् लिप्तान् पयोधरान् स्तनान् दृष्ट्वा अक्लिष्टमृजानि अनपनीतशुद्धस्वभावानि वासांसि च वस्त्राणि च दृष्ट्वा प्रभाते तासां सपत्न्यो मनोभिः करणभूतैः तैरुपलक्षिता वा जहृषुः हृष्टाः। कीदृशैः? मन्दायमानोऽनुशयः क्रोधो यत्र, पूर्वं भर्त्रा सह सपत्नीनामेकत्र वासात् क्रोधः उत्पन्नः पश्चात्तासां सम्भोगाभावज्ञानात् क्रोधस्य मन्दायमानत्वं हर्षश्च जातः। सम्भोगे हि मर्दनात् चन्दनच्युतिर्वस्त्रमालिन्यञ्च स्यात्॥ २७

অনুবাদ। প্রাতঃকালে পতিসঙ্গসুখে বঞ্চিত কামিনীগণের স্তনের চন্দন অবিকৃত ও শুভ্রবস্ত্রগুলি মলিন হয় নাই দেখিয়া প্রাপ্তসঙ্গম সপত্নীগণের মনে যে ঈর্ষ্যার সঞ্চার হইয়াছিল, তাহা দূর হইল এবং তাহারা মনে মনে হর্ষ অনুভব করিল, অর্থাৎ ভাবিল ইহাদের বেশভূষা সমস্তই বিফল হইয়াছে। ২৭

स्मरातुरे चेतसि लब्धजन्मा
रराज लोलोऽपि गुणापहार्य्यः ।
कुतूहलान्नेत्रगवाक्षसंस्थः
पश्यन्निवान्योन्यमुखानि रागः ॥२८

अन्वयः । स्मरातुरे चेतसि लब्धजन्मा लोलोऽपि गुणापहार्य्यो रागः कुतूहलात् नेत्रगवाक्षसंस्थः ( सन् ) अन्योन्यमुखानि पश्यन् इव रराज ॥ २८

मल्लिनाथः । अथ मानसानुरागस्य नेत्रानुरागभेदेन कामिमुखदर्शित्वमुत्प्रेक्षते—स्मरेति । स्मरातुरे कामार्त्ते चेतसि लब्धजन्मा जातो लोलोऽस्थिरोऽपि गुणापहार्य्यो गुणप्रलोभनीयो गुणिनि वस्तुनि विषये स्थिर इत्यर्थः । ईदृशो रागोऽनुरागः कुतूहलात् कौतुकात् नेत्रयोरेव गवाक्षयोः संस्था स्थितिर्यस्य सोऽन्योन्यनेत्रगवाक्षगतः सन्नन्योन्यमुखानि स्त्रीपुंसमुखानि पश्यन्निव रराजेति रागद्वयस्याभेदाध्यवसायादतिशयोक्तिमूलेयमुत्प्रेक्षेति सङ्करः ॥ २८

भरतः । स्मरातुर इत्यादि । दम्पत्योःप्रातरन्योन्यमुखं पश्यतोर्नेत्ररक्तिमा उत्प्रेक्ष्यते । रागो रक्तभावो नेत्रयोर्गवाक्षयोरिव स्थितः सन् कुतूहलादन्योन्यमुखानि पश्यन्निव । कीदृशं ? कामिन्याः कामुकस्य वा मुखमिति विलोकयन्निव रराज शोभते स्म । कीदृशः ? स्मरातुरे चेतसि लब्धजन्मा लब्धोदयः, गुणेन तत्प्रतिपक्षेण सुस्नरूपेणापहार्य्योऽपनेयः अत एव लोलश्चञ्चलः अस्थिरस्याप्यपि रराजेत्युत्कर्षः । किं वा रागोऽनुरागः गुणापहार्य्यो मुखसौन्दर्य्येण वशीकृतः ॥ २८

অনুবাদ। প্রাতঃকালে দম্পতিগণের কামাতুরচিত্তে উৎপন্ন অনুরাগ অস্থায়ী হইলেও পরস্পরের গুণের বশবর্ত্তী বলিয়া স্থির। এই জন্য কুতূহলবশতঃই যেন পরস্পরের নেত্ররূপ গবাক্ষে অবস্থান করিয়া পরস্পর পরস্পরের মুখ দেখিয়া বিরাজ করিতে লাগিল। ২৮

गतेऽतिभूमिं प्रणये प्रयुक्ता-
नबुद्धिपूर्वं परिलुप्तसंज्ञः ।
आत्मानुभूतानपि नोपचारान्
स्मरातुरः संस्मरति स्म लोकः ॥२९

अन्वयः । स्मरातुरो लोकः प्रणये अतिभूमिं गते ( सति ) अबुद्धिपूर्वं प्रयुक्तान् आत्मानुभूतान् अपि उपचारान् परिलुप्तसंज्ञः ( सन् ) न संस्मरति स्म ॥ २९

मल्लिनाथः । गत इति । स्मरातुरो लोकः कामिजनः प्रणये

विस्रम्भोऽतिभूमिं परमां काष्ठां गते सति। 'प्रणयास्त्वमी विस्रम्भयाच्ञाप्रेमाणः' इत्यमरः। अबुद्धिपूर्वं रागान्ध्यादविवेकपूर्वं प्रयुक्तान्नात्मानुभूतानपि तत्कालानुभूतानप्युपचारान् नखदन्तादिकर्माणि परिलुप्तसंज्ञः सम्प्रति नष्टसंस्कारः सन् न संस्मरति स्म। मूढावस्थानुभूतस्य कुतः स्मृतिरिति भावः॥ २९

भरतः। गते इत्यादि। प्रणये प्रेमणि अतिभूमिं प्रकृष्टावस्थां गते सति अबुद्धिपूर्वमविचार्य्य सुरतकाले स्वयं प्रयुक्तान् कृतानपि उपचारान् नखदन्तक्षतादीनात्मानुभूतानपि तदानीं अरातुरत्वेन परिलुप्तसंज्ञत्वात् लोकः प्रभाते न अस्मरति स्म "प्रणय प्रेम्णि विस्रम्भे याच्ञाप्रसरयोरपि" इति रुद्रः॥ २९

অনুবাদ। কামাতুর লোকেরা অনুরাগে অধীর হইয়া নিজকৃত নখদন্তাদিকত সকল (জ্ঞানশূন্য হওয়ায়) জানিতে পারিতেছিল না। ২৯

वस्त्रैरनत्युज्ज्वल[ल्वण]वर्णरम्यै [रम्यवर्णैः]
विलेपनैः सौरभलक्षणीयैः।
आस्यैश्च लोकः परितोषकान्तै-
रसूचयल्लब्धपदं रहस्यम्॥ ३०

अन्वयः। लोकः अनत्युज्ज्वलवर्णरम्यैः (तथापि) वस्त्रैः सौरभलक्षणीयैः विलेपनैः, परितोषकान्तैः आस्यैः च रहस्यं लब्धपदम् असूचयत्॥ ३०

मल्लिनाथः। वस्त्रैरिति। लोकः कामुकलोकोऽनत्युज्ज्वलवर्णैः परिमृदितत्वादनतिविमलैस्तथापि रम्यैर्मनोहरैः वस्त्रैः सौरभलक्षणीयैः परिमलानुमेयैर्विलेपनैः परितोषेण सुरतसन्तोषेण कान्तैः प्रसन्नैरास्यैश्च रहसि भवं रहस्यं सुरतं लब्धपदं लब्धास्पदमसूचयत्। तासां सम्भोगशृङ्गारो लिङ्गानुमेयोऽभूदित्यर्थः॥ ३०

भरतः। वस्त्रैरित्यादि। लोको वस्त्रादिचिह्नैः रहस्यं रहसि भवं सुरतमसूचयत् प्रकाशितवान्। कीदृशं? लब्धपदं प्राप्तचिह्नं कामिषु प्राप्तावसरं वा। वस्त्रैः कीदृशैः? अनत्युज्ज्वलरम्यवर्णैः परिमृदितत्वादनुत्कटरमणीयवर्णैः अनतिविशदरम्यवर्णैर्वा अल्पाक्लिष्टैरित्यर्थः। 'उज्ज्वलं विशदं स्फुट'मिति कोषः। विलेपनैः कीदृशैः? सौरभलक्षणीयैः सौरभेण शरीरगतसुरभित्वमात्रेण लक्षणीयैरनुमेयैः। आस्यैः कीदृशैः? परितोषकान्तैः अधररागपत्रावल्यादिविलोपेऽपि परितोषेण कृतार्थताजनितानन्देन कमनीयैः॥ ३०

অনুবাদ। কামুকেরা রজনীর সুরতমর্দ্দনজনিত মলিনতাপ্রাপ্ত হইলেও মনোহর বস্ত্র, সুগন্ধে অনুমেয় কুঙ্কুমচন্দনাদির লেপন এবং সুরতানন্দে প্রফুল্ল মুখমণ্ডল দ্বারা গোপনে কৃত যে সকল সুরত-ব্যাপার-চিহ্ন তাহা প্রকাশ করিতে লাগিল। ৩০

प्रातस्तरां चन्दनलिप्तगात्राः
प्रच्छाद्य हस्तैरधरं वदन्तः।
प्राम्यन्निमेषाः सुतरां युवानः
प्रकाशयन्ति स्म निगूहनीयम् ॥३१

अन्वयः। प्रातस्तरां चन्दनलिप्तगात्राः हस्तैः अधरं प्रच्छाद्य वदन्तः प्राम्यन्निमेषाः युवानः निगूहनीयं सुतरां प्रकाशयन्ति स्म ॥ ३१

मल्लिनाथः। प्रातस्तरामिति। प्रातस्तरामत्यन्तप्रातःकाले सूर्य्योदयात् प्रागेवेत्यर्थः। अव्ययत्वादाम्प्रत्ययः। चन्दनलिप्तगात्रा नखक्षतनिगूहनायेति भावः। हस्तैरधरं प्रच्छाद्य वदन्तः। दन्तक्षतनिगूहनार्थमिति भावः। प्राम्यन्निमेषा रात्रिजागरणपिशुननिद्रानिह्नवार्थमकृतनिमेषा इत्यर्थः। युवानो निगूहनीयं गोप्यं सुतरां प्रकाशयन्ति स्म। यन्निगूह्य निगूहनार्थं चेष्टितं तदेव तत्प्रकाशं जातमिति विरुद्धकार्य्योत्पत्तिरूपो विषमालङ्कारः ॥३१

भरतः। प्रातस्तरामित्यादि। महति प्रातःकाले नखक्षतादिसङ्गोपनार्थं चन्दनेन लिप्तगात्रा अपि दन्तक्षतसङ्गोपनार्थं गुरुसमीपे हस्तैरधरं प्रच्छाद्य वदन्तोऽपि जागरणजनितनिद्राव्यपगमार्थं प्राम्यन्निमेषा निमेषं वारयन्तोऽपि युवानः निगूहनीयं सङ्गोपनीयं सुरतं सुतरामतिशयेन प्रकाशयन्ति स्म, सङ्गोपनेनैव नखक्षताद्यनुमानात्। यद्वा प्राम्यन्निमेषाः सन्तः प्रकाशयन्ति निमेषाणां भावत्यागदर्शनात् सौक्ष्म्यमत्र गुणः,। 'तत्सौक्ष्म्यमुच्यते यत्र सूक्ष्मार्थस्यापि दर्शनम्।' अत्र सुरतस्य संगुप्ततया सूक्ष्मत्वम् ॥ ३१

অনুবাদ। যুবকগণ প্রত্যূষে নখক্ষত গোপন করিবার জন্য গাত্রে চন্দন লেপন করিয়া, দন্তক্ষত নিবারণের জন্য হস্ত দ্বারা অধরদেশ আচ্ছাদিত করিয়া এবং রাত্রিজাগরণসূচক চিহ্ন গোপনমানসে চক্ষের নিমেষ বন্ধ করিতে গিয়াই গোপনীয় সুরত-ব্যাপার একেবারে প্রকাশ করিয়া ফেলিল। ৩১

साम्नैव लोके विजितेऽपि वामे
[ जितेऽपि लोके मधुरेण वामे ]
किमुद्यतं भ्रूधनुरप्रसह्यम्।
हन्तुं क्षमो वा वद लोचनेषु-
र्दिग्धो विषेणेव किमञ्जनेन ॥ ३२

अन्वयः। हे वामे! सान्त्वेन लोके जितेऽपि असह्यं भूधनुः किम् उद्यतं (किं च) हन्तुं क्षमः, लोचनेषुः विषेण इव अञ्जनेन किं दिग्धः? ॥ ३२

मल्लिनाथः। सान्त्वेति। हे वामे वक्रशीले! सान्त्वेन येन केनचिदृजुचेष्टितेनैव लोके कामिजने जितेऽप्यप्रसह्यं दुःसहं भ्रूरेव धनुर्भ्रूधनुः किमुद्यतं किमर्थमुत्क्षिप्तं, किञ्च हन्तुं क्षमः केवल एष समर्थो लोचनेषुर्नेत्रबाणो विषेणेवाञ्जनेन किं किमर्थं दिग्धो लिप्तः। करवहसाध्ये किं परशुनेति भावः॥ ३२

भरतः। जित इत्यादि। युवान इत्यूचुरित्यग्रिमश्लोकेनान्वयः। हे वामि। प्रतिकूल-वर्त्तिनि! लोके चाऽस्मद्विधे मधुरेण माधुर्य्यगुणेन स्वभावसिद्धोपायेन प्रियवचनेन वा जितेऽपि पराभूतेऽपि वशीकृतेऽपि सोढुमशक्यं भ्रूरूपधनुः किमर्थमुद्यतमुत्क्षिप्तम्? अयञ्च लोचनरूपशरः स्वयमेवास्मान् हन्तुं क्षमः समर्थः तत् किं विषेणेवाञ्जनेन वा दिग्धो लिप्तः तत्त्वं वद, वदेति पाठे खेदे। स्वभावैरेव कार्य्यस्य सिद्धौ किमधिककल्पनया? भाविकत्वमत्र गुणः, अहं त्वदायत्त एवेत्यभिप्रायप्रकाशात् 'स्वाभिप्रायोक्तिविन्यासो भाविकत्वं प्रचक्षते' इति॥ ३२

अनुवाद। হে প্রতিকূলবর্ত্তিনি! আমার ন্যায় কামুকলোককে যখন যে কোন উপায় দ্বারা জয় করা যায়, তবে কি জন্য অসহ্য ভ্রূধনুক উদ্যত কর! কি নিমিত্তই বা স্বয়ং পুরুষবধে সমর্থ নয়নবাণকে বিষময় অঞ্জন দ্বারা লিপ্ত কর বল দেখি? ৩২

दन्तच्छदे प्रज्वलिताग्निकल्पे
ताम्बूलरागस्तृणभारतुल्यः।
न्यस्तः किमित्यूचुरुपेतभावा
गोष्ठीषु नारीस्तरुणीर्युवानः॥ ३३

अन्वयः। उपेतभावाः युवानः गोष्ठीषु तरुणीः नारीः प्रज्वलिताग्निकल्पे दन्तच्छदे तृणभारतुल्यः ताम्बूलरागः किमिति न्यस्तः? इत्यूचुः॥ ३३

मल्लिनाथः। दन्तेति। उपेतभावा युक्तानुरागा युवानो गोष्ठीषु नर्म्मगोष्ठीषु तरुणीस्तरुणवयस्का नारीः प्रज्वलिताग्निकल्पे दन्तच्छदेऽधरे तृणभारतुल्यस्ताम्बूलरागः किमिति न्यस्त इत्यूचुः पूर्ववद्भावः॥ ३३

भरतः। दन्तेत्यादि। दन्तच्छदे ओष्ठे ताम्बूलरागः किमर्थं न्यस्तः। कीदृशे? प्रज्वलितवह्निसदृशे स्वभावतो लोहितत्वादुद्दीपकत्वाच्च। कीदृशः? तृणभारसमो निष्प्रयोजनत्वात् अत्युद्दीपकत्वाच्च वह्नौ तृणप्रक्षेपो भृशमुद्दीपको भवति इत्येवं युवानस्तरुणा उपेतभावा उपगतरागाः सन्तस्तरुणीः नारीः गोष्ठीषु स्त्रीसभासु स्थिता इति ऊचुः॥ ३३

অনুবাদ। প্রেমী যুবকগণ কামিনীগণের উপকার-সভায় বসিয়া তাহাদিগকে বলিতে

লাগিল; তোমরা তোমাদের ঐ স্বভাবতঃ রক্তবর্ণ, আমাদিগকে দগ্ধ করিতে পটু অগ্নিতুল্য অধর কি জন্য অনর্থক উদ্দীপক তাম্বূলরাগে রঞ্জিত কর বল দেখি? ৩৩

सुखावगाह्यानि भृ [यु] तानि लक्ष्म्या
शुचीनि सन्तापहराण्युरूणि।
प्रबुद्धनारीमुखपङ्कजानि
प्रातः सरांसीव गृहाणि रेजुः॥३४

अन्वयः। सुखावगाह्यानि लक्ष्म्या भृतानि शुचीनि सन्तापहराणि उरूणि प्रबुद्धनारीमुखपङ्कजानि गृहाणि प्रातः सरांसीव रेजुः॥ ३४

मल्लिनाथः। सुखेति। सुखावगाह्यानि सुखकरप्रवेशानि लक्ष्म्या शोभया भृतानि पूर्णानि शुचीनि निर्म्मलानि सन्तापहराणि छायया शैत्येन च तापहारीणि उरूणि विपुलानि प्रबुद्धानि विनिद्राणि नारीमुखान्येव नारीमुखानीव च पङ्कजानि येषां तानि गृहाणि प्रातः सरांसीव रेजुः॥ ३४

भरतः। सुखेत्यादि। प्रातः प्रभातकाले गृहाणि सरांसीव रेजुः शोभन्ते स्म। कीदृशानि सुखहेतुरवगाहो यत्र तानि, लक्ष्म्या सम्पत्या शोभया वा युतानि, शुचीनि पवित्राणि सन्तापहराणि घर्म्मादिक्लेशापहारीणि, उरूणि महान्ति, प्रबुद्धानि विनिद्राणि नारीमुखान्येव पक्षे तानीव पङ्कजानि येषु॥ ३४

অনুবাদ। সুখের জন্য যাহাতে অবগাহন করা যায়, সম্পত্তি বা শোভায় যাহা পরিপূর্ণ, নির্ম্মল ছায়া দ্বারা যাহা সন্তাপহারী এবং যাহাতে রমণীগণের বদনরূপ কমলনিচয় প্রস্ফুটিত হইয়াছে, প্রাতঃকালে সেইরূপ বড় বড় গৃহগুলি সরোবরের ন্যায় শোভা পাইতে লাগিল। ৩৪

संमृष्टसिक्तार्चितचारुपुष्पै-
रामोदवद्धूप्यसुगन्धभागैः।
लक्ष्मीर्विजिग्ये भवनैः सभृङ्गैः
सेव्यस्य देवैरपि नन्दनस्य॥ ३५

अन्वयः। संमृष्टसिक्तार्च्चितचारुपुष्पैः आमोदवद्धूप्यसुगन्धभागैः सभृङ्गैः भवनैः देवैः अपि सेव्यस्य नन्दनस्य लक्ष्मीः विजिग्ये॥ ३५

मल्लिनाथः। संमृष्टेति। संमृष्टानि विरजीकृतानि च तानि सिक्तानि च तानि च तान्यर्पितचारुपुष्पाणि विन्यस्तरम्यकुसुमानि

परिमलद्रव्यैः सुगन्धाः शोभनगन्धा भागाः प्रदेशा येषां ते । गन्ध-स्येत्वेतदेकान्तग्रहणात् सांक्रामिके तदभावः । सभृङ्गैः गन्धाकृष्ट-भृङ्गैर्भवनैर्देवैरपि सेव्यस्य नन्दनस्य लक्ष्मीर्विजिग्ये विजिता ॥ ३५

भरतः । संतप्टेत्यादि । देवैरिन्द्रादिभिरपि सेव्यस्य नन्दनवनस्य लक्ष्मीः सम्पत्तिः शोभा तु भवनैः गृहैः प्रातर्विजिग्ये जिता, कर्मणि ठी । कीदृशैः ? पूर्वं संतष्टानि अपनीतरजांसि पश्चात् सिक्तानि संतप्टसिक्तानि पूर्वकालस्यापरकालेनेति कर्मधारय इति परः । समते एकार्थत्वात्सोऽव । अर्चितानि पूजितानि चारूणि शोभमानानि पुष्पाणि येषु तानि, पश्चात् संतप्टसिक्तानि अर्चितचारुपुष्पाणि चेति पुनः कर्मधारयः । आमोदवद्भिर्द्रव्यैश्चन्दनादिभिः सुगन्धा भागा एकदेशा येषां, सुतसुरभिपूतेरित्यादौ गन्धशब्दो गुणवाचीति टीकाकृतवचनाद-भिधानाद्वा इत्प्रत्ययाभावः । भृङ्गैरामोदानुसारित्वाद्भ्रमरैः सह वर्त्तमानानि नन्दनमप्येवं भवति ।* उदात्तता गुणोऽसंतप्टसिक्तेत्यादिभिर्विशेषणैर्योगात्, 'उक्तोर्वशेषणैर्योगो यत्तु साम्यादुदात्तता ॥' ३५

অনুবাদ। পরিষ্কৃত এবং ধৌত প্রশস্ত মনোহর পুষ্পে সুসজ্জিত, কস্তুরী প্রভৃতি গন্ধ-দ্রব্যে সুবাসিত এবং সৌরভাকৃষ্ট ভৃঙ্গাবলী-সমন্বিত গৃহাবলী, দেবসেবিত নন্দনকাননের শোভাকে জয় করিয়াছিল। ৩৫

अक्ष्णोः पतन्नीलसरोजलोभा-
द्भृङ्गः करेणाल्पधिया निरस्तः ।
ससञ्ज[ददंश]ताम्राम्बुरुहाभिसन्धि-
स्तृष्णातुरः पाणितलेऽपि धृष्णुः ॥३६

अन्वयः । नीलसरोजलोभात् अक्ष्णोः पतन् अल्पधिया ( कयाचित ) करेण निरस्तः तृष्णातुरः धृष्णुः भृङ्गः ताम्राम्बुरुहाभिसन्धिः ( सन् ) पाणितलेऽपि ससञ्ज ॥ ३६

मल्लिनाथः । अक्ष्णोरिति । नीलसरोजं नीलोत्पलमिति लोभादक्ष्णोः पतन्नल्पधिया मूढया कयाचित् करेण निरस्त-स्तृष्णातुरः पिपासार्त्तो धृष्णुर्धृष्टो भृङ्गस्ताम्राम्बुरुहमित्यभिसन्धि-रभिप्रायो यस्य, तथा भ्रान्तः पाणितलेऽपि । अक्ष्णोरिवेति भावः । ससञ्ज संसक्तः । ददंशेति पाठे दष्टवानित्यर्थः । उभयत्र भ्रान्ति-मानलङ्कार इति सजातीयसंसृष्टिः ॥ ३६

भरतः । अक्ष्णोरित्यादि । नीलसरोजमेतदिति मत्वा तल्लोभात् चक्षुषोः पतन् भृङ्गः कयाचिदल्पधिया मुग्धया करेण निरस्तः सन् पाणितलेऽपि तां ददंश दष्टवान्, यतः करं इदं रक्तपद्ममित्यभिसन्धिरभिप्रायो यस्य । कीदृशः ? तृष्णातुरः तृष्णाव्यग्रः, धृष्णुः प्रगल्भः ।

सौकुमार्य्यमत्र गुणः, मध्वाः करस्य पीनत्वलेन निरूपणात्। 'अनिष्ठुरत्वं यत् प्राहुः सौकुमार्य्यं तदुच्यते' ॥ ३६

অনুবাদ। একটী ভ্রমর নীলপদ্মজ্ঞানে কোন মুগ্ধাঙ্গনার চক্ষুর উপর পড়িলে সে তাহাকে হস্তসঞ্চালনে তাড়াইয়া দিলেও সেই তৃষ্ণাকাতর দুষ্টভৃঙ্গ তখন রক্তপদ্ম মনে করিয়া সেই হস্তে লাগিয়া রহিল। ৩৬

विलोलतां चक्षुषि हस्तवेपथुं
भ्रुवोर्विभङ्गं स्तनयुग्मवल्गितम्।
विभूषणानां क्वणितं च षट्पदो
गुरुर्यथा नृत्यविधौ समादधे ॥३७

अन्वयः। षट्पदो नृत्यविधौ गुरुर्यथा चक्षुषि विलोलतां हस्तवेपथुं भ्रुवोर्विभङ्गं स्तनयुग्मवल्गितं विभूषणानां क्वणितञ्च समादधे ॥ ३७

मल्लिनाथः। विलोलतामिति। षट्पदो नृत्यविधौ नृत्यकर्म्मणि गुरुर्यथा गुरुरिव नाट्याचार्य्य इव चक्षुषि दृष्टौ विलोलतां चाञ्चल्यं हस्तवेपथुं हस्तचलनं भ्रुवोर्विभङ्गं कौटिल्यं स्तनयुग्मे वल्गितमुत्पतनं विभूषणानां क्वणितं च समादधे निदधे। गुरुर्यथेत्युपमालङ्कारः ॥ ३७

भरतः। विलोलतामित्यादि। यथा गुरुर्नृत्याचार्य्यो नृत्यकर्मणि शिक्षायां कस्याश्चित् चक्षुषि विलोलतां चाञ्चल्यं हस्तयोर्वेपथुं कम्पं भ्रुवोर्विभङ्गमन्यथाकरणं स्तनयुगलस्य वाल्गितं चलनं विभूषणानामलङ्काराणां क्वणितं शिञ्जितं समादधे जनयति, तथा षट्पदोऽपि समादधे कृतवान् भ्रमरबाधायां काचित् नृत्यमिव चकारेत्यर्थः। प्रौढ़िरत्र गुणश्चक्षुर्विलोलताप्रभृतिभिर्न्यस्य निर्वाहात्। 'विवक्षितार्थनिर्वाहः काव्ये प्रौढ़िरिति स्मृता' ॥ ३७

অনুবাদ। ঐ ভ্রমর কোন রমণীর চক্ষু, হস্ত, ভ্রূ, স্তন, এবং অলঙ্কারের উপর বারংবার উড়িয়া উড়িয়া বসিতে লাগিল; তাহাতে বোধ হইতে লাগিল, যেন সে সেই রমণীকে নৃত্যশিক্ষকের ন্যায় চক্ষুর চাঞ্চল্য, হস্তের কম্পন, স্তনের সঞ্চালন, ভ্রূযুগলের ভঙ্গী এবং ভূষণের ঝন্ঝন শিক্ষা দিতেছে। ৩৭

अथानुकूलान् कुलधर्म्मसम्पदो
विधाय वेशान् सुहृदः पुरौजनः।
प्रबोधकाले शतमन्युविद्विषः
प्रचक्रमे राजनिकेतनं प्रति ॥ ३८

अन्वय:। अथ सुदिव: पुरीजन: कुलधर्मसम्पदाम् अनुकूलान् वेशान् विधाय शतमन्युविद्विष: प्रबोधकाले राजनिकेतनं प्रति ( गन्तुं ) प्रचक्रमे ॥ ३८

मल्लिनाथ:। अथेति। अथ प्रभातानन्तरं शोभनं नित्यमङ्गलं दिवा दिनं यस्य स सुदिव:। "सुप्रातसुश्वसुदिव—" इत्यादिना बहुव्रीहिसमासेऽच्प्रत्ययान्तो निपात:। पुरीजनो लङ्कानिवासिजन: कुलधर्मसम्पदां वंशाचारविभूतीनामनुकूलाननुरूपान् वेशान् नेपथ्यानि विधाय शतमन्युविद्विष इन्द्रशत्रो रावणस्य प्रबोधकाले राजनिकेतनं प्रति राजभवनमुद्दिश्य प्रचक्रमे गन्तुं प्रक्रान्त इत्यर्थ:। "प्रोपाभ्यां समर्थाभ्याम्" इति तङ् ॥ ३८

भरत:। अथेत्यादि। अनन्तरं पुरीजनो लङ्कानिवासिजनो वेशान् विधाय कृत्वा शतमन्यु विद्विष इन्द्रशत्रो: रावणस्य प्रबोधकाले निद्राभङ्गसमये राजगृहं प्रति लक्ष्यीकृत्य प्रचक्रमे गन्तुं प्रवृत्त:, प्रोपादारम्भे इति मं। कीदृशान्? कुलधर्मस्य कुलाचारस्य या सम्पद्विभूतिस्तस्या अनुकूलान् सदृशान् कुलोचितानित्यर्थ:। कीदृश:? सुदिव: प्रतिदिनं प्राप्तकल्याणत्वात् शोभनं दिवा यस्य, दिवाशब्द: सप्तम्यन्ताव्यय इति ये वदन्ति तन्मते शोभनं दिवा दिवसे कर्म यस्येति विग्रह:, राजादित्वात् सुदिवो निपातित इति कातन्त्रा: स्वादिभ्यो दिवादेरिति सूत्रेण उप्रत्ययमाह क्रमदीश्वर: तन्मते स्वार्थे ण:, तत्कालविवक्षया तद्धेरभाव: ॥३८

অনুবাদ। রাত্রি প্রভাত হইলে নিত্যকুশলী লঙ্কাবাসী লোকেরা বংশানুরূপ, ধর্ম্মানুরূপ ও সম্পদের অনুরূপ বেশভূষা করিয়া রাবণের উঠিবার সময়ে রাজভবনের দিকে চলিতে লাগিল। ৩৮

शैलेन्द्रशृङ्गेभ्य इव प्रवृत्ता:
पूरा [वेगात्]जलानां [जलोघा:]पुरमन्दिरेभ्य:।
आपूर्य रथ्या[:] सरितो जनौघा
राजाङ्गनाम्भोधिमपूरयन्त ॥ ३९

अन्वय:। शैलेन्द्रशृङ्गेभ्य: प्रवृत्ता: जलानां पूरा इव पुरमन्दिरेभ्य: ( प्रवृत्ता: ) जनौघा: रथ्यासरित: आपूर्य राजाङ्गनाम्भोधिम् अपूरयन्त ॥ ३९

मल्लिनाथ:। शैलेति। शैलेन्द्रशृङ्गेभ्य: प्रवृत्ता नि:सृता जलानां पूरा ओघा इव पुरमन्दिरेभ्य: प्रवृत्ता निर्गता जनौघा जनसमूहा रथ्या: सरित इव रथ्यासरित:। उपमितसमास:। आपूर्य पूरयित्वा राजाङ्गनमम्भोधिमिव राजाङ्गनाम्भोधिमपूरयन्त ॥३९

भरत:। शैलेन्द्रेत्यादि। यथा जलानां वारीणामोघा: पूरा: प्रवाहा: शैलेन्द्रशृङ्गेभ्य: प्रवृत्ता: सरितो नदी: आपूर्य: वेगात् सागरं पूरयन्ति, तथा जनौघा: लोकसमूहा:

पुरमन्दिरेभ्यः लङ्कागृहेभ्यः प्रवृत्ता रथ्याः प्रतोलीरापूर्य वेगात् राजाङ्गनं राज्ञी रावणस्य चत्वरमपूरयन्। तवर्गपञ्चमोपान्तमङ्गनमिति विश्वः। पृषोदरादित्वात् चत्वमिति पाणिनीयाः। स्वमते मनीषादित्वाद्विभाषया चत्वम्॥ ३९

অনুবাদ। শৈলরাজ-শৃঙ্গসকল হইতে নির্গত হইয়া জলরাশি যেমন নদীগণকে পূর্ণ করিয়া সমুদ্রকে পূর্ণ করে, তেমনি লোকসমূহ লঙ্কানগরের গৃহসকল হইতে নির্গত হইয়া নদীতুল্য রাজপথ পূর্ণ করিয়া, সমুদ্রাকার সুবৃহৎ রাজভবন পূর্ণ করিল। ৩৯

सम्बोधकालात् विदशेन्द्रशत्रोः
प्रागूर्द्ध शोषं परिशुष्यमाणाः।
हीना महान्तश्च समत्वमीयु-
र्द्वाः[द्वा]स्थैरवज्ञापरुषाचिदृष्टाः॥४०

अन्वयः। विदशेन्द्रशत्रोः सम्बोधकालात् प्राक् ऊर्द्धशोषं परिशुष्यमाणाः हीनाः महान्तः द्वाःस्थैः अवज्ञापरुषाचिदृष्टाः (सन्तः) समत्वं ईयुः॥ ४०

मल्लिनाथः। सम्बोधेति। त्रिदशेन्द्रशत्रो रावणस्य सम्बोधकालात् प्रबोधकालात् प्राक् पूर्वमूर्द्ध शुषित्वोर्द्ध शोषम्। "ऊर्द्धे शुषिपूरोः" इति णमुल्प्रत्ययः। परिशोष्यमाणा ऊर्द्धश्व इव बालातपे स्थाप्यमाना इत्यर्थः। शुषेर्ण्यन्तात् कर्मणि लटः शानजादेशः। हीना अल्पा महान्तोऽधिकाश्च, द्वारि तिष्ठन्तीति द्वाःस्था दौवारिकाः। "सुपि स्थः" इति कप्रत्ययः। "खरवसानयोर्विसर्जनीयः"। "विसर्जनीयस्य सः"। तैरवज्ञया अनादरेण परुषेणाक्ष्णा क्रूरचक्षुषा दृष्टाः सन्तः समत्वं तुल्यकक्ष्यया ईयुः संगत्य स्थिता इत्यर्थः। न प्रविकारदृष्टानां न्यूनाधिकविचार इति भावः॥ ४०

भरतः। प्रबोधेत्यादि। विदशेन्द्रशत्रोः रावणस्य प्रबोधकालात् निद्राभङ्गसमयात् प्राक् पूर्वं हीना महान्तश्च जनाः समत्वं तुल्यताम् ईयुः प्रापाः। दौवारिकैः सर्वेषां प्रवेशनिषेधात्। कीदृशाः? ऊर्द्धशोषं परिशुष्यमाणा ऊर्द्धशोषमिति यदुक्तं तद्विशेषेण सुमुखादिशोषणं सूचनार्थम् ऊर्द्धात् शुषिपुरेः स्वार्थे ड्रा णमिति परः। किमर्थं करिष्यतीति बालात् शुष्कास्यकण्ठतालुका आसन्नित्यर्थः। द्वास्थैः दौवारिकैरवज्ञया अनादरेण यत्परुषं कक्षमपि चक्षुस्तेन दृष्टा द्वारि तिष्ठन्तीति द्वास्थाः इनजनादिति डः, मनीषादित्वाद्विभाषया विसर्गलोपः, कादियुक्तायषसी लुब्धेति क्रमदीश्वरसूत्रम्॥ ॥४०

অনুবাদ। ইন্দ্র-শত্রু রাবণের নিদ্রাভঙ্গের পূর্ব্বে তাহার ভয়ে সমবেত লোকদিগের বদনকণ্ঠতালু শুষ্ক হইতে লাগিল। ধনী, নির্ধন ইতর, ভদ্র সকলেই দ্বারবানের অবজ্ঞা-সূচক রুক্ষ দৃষ্টিতে দৃষ্ট হইয়া সমান অবস্থা প্রাপ্ত হইল। ৪০

गुरुप्रचञ्चत्-करकर्णजिह्वै-
रवज्ञयाग्राङ्गुलिसंगृहीतैः।
रक्षांस्यनायासहृतैरुपास्थुः
कपोललीनालिकुलैर्गजेन्द्रैः ॥ ४१

अन्वयः। (अथ) रक्षांसि गुरुप्रचञ्चत्करकर्णजिह्वैः अवज्ञया अग्राङ्गुलिसंगृहीतैः अनायासहृतैः कपोललीनालिकुलैः गजेन्द्रैः उपास्थुः ॥ ४१

मल्लिनाथः। गुर्विति। अथ रक्षांसि राक्षसा गुरु दुर्भरमुरु महच्चञ्चलञ्च कराः कर्णा जिह्वाश्च करकर्णजिह्वं येषां तैरवज्ञया अनादरेण अग्राङ्गुल्या अङ्गुल्यग्रेण संगृहीतैरनायासेनाप्रयत्नेन हृतैः प्रचोदितैः कपोलेषु लीनान्यलिकुलानि येषां तैर्मदस्राविभिरित्यर्थः। गजेन्द्रैः साधनैरुपतस्थुः सिषेविरे ॥ ४१

भरतः। गुर्व्वित्यादि। कतिचिद्रक्षांसि राक्षसा गजेन्द्रैरुपास्थुःमत्तहस्तिनो गृहीत्वा रावणं सेवितवन्तः। कीदृशैः? गुरवोऽलघवः उरवो महापरिमाणाः चञ्चन्तः चञ्चलाः कराः शुण्डाः कर्णाः जिह्वाश्च येषां ते, अवज्ञया अनादरेण अङ्गुल्यग्रेण संगृहीतैः धृतैः अङ्गुलेरग्रम् अग्राङ्गुलिरिति राजदन्तादिरिति परः, स्वमते एकदेशेऽपि समुदायोपचारात् कर्मधारय.। अग्रे अग्रतः स्थाने अङ्गुल्या पादाङ्गुष्ठेन संगृहीतैरिति केचित्। अनायासेन हृतं शनैः शनैः प्रेरितैर्मत्तत्वात् कपोले लीनानि भ्रमरकुलानि येषां तैः ॥ ४१

অনুবাদ। যাহাদের স্থূল ও বৃহৎ শুণ্ড, সর্ব্বদা চঞ্চল কর্ণ ও জিহ্বা, হেলায় পাদাঙ্গুষ্ঠ দ্বারা সংযত এবং যাহাদের গণ্ডস্থলে মদলুব্ধ অলিকুল উপবিষ্ট সেই সকল প্রধান প্রধান হস্তী উপহার দিয়া রাক্ষসগণ রাবণের সেবা করিতে লাগিল। ৪১

निकृत्तमत्तद्विपकुम्भमांसैः
संपृक्तमुक्तैर्हरयोऽग्रपादैः।
आनिन्यिरे श्रेणीकृतास्तथान्यैः
परस्परं वालधिसंनिबद्धाः ॥ ४२

अन्वयः। तथा अन्यैः निकृत्तमत्तद्विपकुम्भमांसैः (अत एव) संपृक्तमुक्तैः अग्रपादैः (उपलक्षिताः) श्रेणीकृताः परस्परं वालधि-सन्निबद्धा हरयः आनिन्यिरे ॥ ४२

मल्लिनाथः। निकृत्तेति। तथा अन्यै राक्षसैर्निकृत्तानि निलूनानि मत्तद्विपकुम्भमांसानि येस्तैः। अत एव संपृक्तमुक्तैः संसक्तमुक्ताफलैरग्रपादैः पादाग्रैरुपलक्षिताः। अश्रेणयः श्रेणयः कृताः

श्रेणीकृताः पङ्क्तीकृताः। "श्रेण्यादयः कृतादिभिः" इति च्व्यर्थे तत्पुरुषः। परस्परं वालधिषु संनिबद्धा अन्योन्यपुच्छग्रथिता इत्यर्थः। हरयो वाहनभूताः सिंहा आनिन्यिरे आनीताः ॥ ४२

भरतः। निकृत्तेत्यादि। अन्यैः राक्षसैः हरयः सिंहाः आनिन्यिरे आनीताः, तथा पूर्वापेक्षया अग्रपादैः पादाग्रैः उपलक्षिताः। कीदृशैः? निकृत्तानि छिन्नानि मत्तद्विपानां कुम्भमांसानि यैः, संपृक्ताः संयुक्ताः गजकुम्भस्थमुक्ता यत्र। कीदृशाः? श्रेणीकृता, अश्रेणयः श्रेणयः कृता अभिधानं नियामकमित्युक्तेश्च्व्यर्थे श्रेण्यादिः कृतादिना समासः इति बोध्यः, परस्परमन्योन्यस्य पुच्छेन बद्धाः। पश्चात् अमादेशे लोकोपचारादिति विद्यासागरः, क्रियाविशेषणमिति केचित्, स्वमते मनीषादित्वात् ॥ ४२

अनुवाद। अन्य कतक गुलि राक्षस रावणेर सेवार जन्य, परस्परेर लाङ्गुलेर सहित बद्ध श्रेणीयुक्त एक पाल सिंह आनियाछिल। सेई सिंह गुलिर सम्मुख चरणाङ्गुलि रक्त हस्तीर मांस ओ मुक्तावली संलग्न छिल। ४२

उपेक्षिता देवगणैस्त्रसद्भि-
र्निशाचरैर्वीतभयैर्निकृत्ताः।
तस्मिन्नदृश्यन्त सुरद्रुमाणां
प्रफुल्ल[सजाल]पुष्पस्तवकाः प्रकीर्णाः ॥ ४३

अन्वयः। त्रसद्भिः देवगणैः उपेक्षिताः वीतभयैः निशाचरैस्तु निकृत्ताः सुरद्रुमाणां प्रफुल्लपुष्पस्तवकाः प्रकीर्णाः (सन्तः) तस्मिन् अदृश्यन्त ॥ ४३

मल्लिनाथः। उपेक्षिता इति। त्रसद्भिरपचेतुं अशक्तैर्देवगणैरुपेक्षिताः परिहृता वीतभयैर्निर्भीकैर्निशाचरैस्तु निकृत्ताश्छिन्नाः सुरद्रुमाणां प्रफुल्लपुष्पस्तवकाः प्रकीर्णाः सन्तस्तस्मिन् राजाङ्गनेऽदृश्यन्त दृष्टाः। अत्र प्रस्तुतसुरकुसुमप्रक्षेपकार्यवर्णनात् प्रस्तुतमेव स्वर्गजयाख्यकारणं गम्यत इति पर्यायोक्तमलङ्कारः। 'कारणं गम्यते यत्र प्रस्तुतात् कार्यवर्णनात् प्रस्तुतत्वेन सम्बद्धं तत्पर्यायोक्तमुच्यते ॥' इति लक्षणात् ॥ ४३

भरतः। उपेक्षितात्यादि। यस्मिन् राजाङ्गने सुरद्रुमाणां पारिजातादीनां प्रकीर्णा विक्षिप्ताः जालेन कलिकया सहिताः पुष्पस्तवकाः अदृश्यन्त दृष्टाः, सेवकैरित्यर्थात्। कीदृशाः? त्रसद्भिस्त्रासं गच्छद्भिर्देवगणैरुपेक्षिता रक्षिताः, क्रमनकमेत्यादिना वसेर्विकल्पेन श्यन् विहित इति पक्षे शप्। वीतभयैर्विगतत्रासैर्निशाचरैर्निकृत्ताः छिन्नाः। 'वीतदयै'रिति पाठे क्रिमैः स्थितैरिति निर्दयैः। "जालं गवाक्षे आनाये कोरके दम्भेदयोः"रिति विश्वः ॥ ४३

অনুবাদ। দেবতারা যে সকল পারিজাত বৃক্ষের কলিকাগুলি ভয়ে ত্যাগ করিয়া আসিয়াছিলেন, নির্ভীক রাক্ষসেরা সেই কলিকার সহিত বিকসিত পুষ্পগুচ্ছ ছিঁড়িয়া আনিয়া সেই রাজভবনে ছড়াইয়া রাখিয়াছে, দেখা গিয়াছিল।৪৩

निराकरिष्णु र्द्विजकुञ्जराणां
तृणीकृताशेषगुणोऽतिमोहात्।
पापाशयानभ्युदयार्थमार्चीत्
प्रागब्रह्मरक्षःप्रवरान् दशास्यः॥ ४४

अन्वयः। अतिमोहात् तृणीकृताशेषगुणः (अत एव) द्विजकुञ्जराणां (पूजां) निराकरिष्णुः दशास्यः अभ्युदयार्थं पापाशयान् ब्रह्मरक्षःप्रवरान् प्राक् आर्चीत्॥ ४४

मल्लिनाथः। निरिति। अतिमोहादतिमौढ्यात् तृणीकृताशेषगुणः पूजाहेतुत्वेनागणितगुणगरिमा अत एव द्विजकुञ्जराणां त्रैलोक्यपूज्यानां वसिष्ठादिद्विजश्रेष्ठानां पूजामिति शेषः। अन्यथा "न लोक—" इत्यादिनिषेधेन षष्ठीविरोधात्। निराकरिष्णुर्निराकर्त्ता। पूज्यपूजाव्यतिक्रमशील इत्यर्थः। "अलङ्कृञ्—" इत्यादिना इष्णुच्। केचित् सामान्येन निराकरिष्णुर्निराकरणशील इत्युक्ता सापेक्षत्वेऽपि गमकत्वात् समासं मत्वा द्विजकुञ्जराणां तृणीकृताशेषगुण इति योजयन्ति। दशास्योऽभ्युदयार्थं श्रेयोऽर्थं पापाशयान् पापचित्तान् ब्रह्मरक्षःप्रवरान् राक्षसब्राह्मणश्रेष्ठान् प्राक् सभाप्रवेशात् पूर्वमार्चीत्। अर्चेर्भौवादिकाल्लुङ्। "इट ईटि" इति सलोपः॥ ४४

भरतः। निराकरिष्णुरित्यादि। दशास्यो रावणः प्रवृत्तः सन् सभाप्रवेशात् प्राक् पूर्वं पापाशयान् पापचित्तवतीन् ब्रह्मराक्षसश्रेष्ठान् ज्ञातीनभ्युदयार्थमार्चीत् पूजितवान्। कीदृशः? अतिमोहात् अत्यज्ञानात् द्विजकुञ्जराणां विप्रश्रेष्ठानां निराकरिष्णुः द्विजश्रेष्ठानि-राकृत्य ब्रह्मराक्षसान् पूजितवानिति भावः। "ढचे कृति" इत्यादिना उदन्तकृद्योगे षष्ठी न भवतीति सम्बन्धे षष्ठी। यद्वा द्विजकुञ्जराणां तृणीकृताः अवधीरिताः सकला गुणा येनेति सम्बन्धः, अत एव निराकरिष्णुत्वानित्यर्थात्॥ ४४

অনুবাদ। অতিশয় মোহবশতঃ অশেষগুণের অবমাননাকারী এবং দ্বিজশ্রেষ্ঠগণের পূজাবিঘ্নকারী দশানন নিজের অভ্যুদয় প্রদর্শনের নিমিত্ত সভায় বসিবার পূর্ব্বেই প্রধান প্রধান পাপাশয় রাক্ষসগণের অর্চ্চনা করিল।৪৪

मायाविभिस्त्रासकरैर्जनाना-
मात्मैरुपादानपरैरुपेतः।
सतां विघातैकरसैरविक्षत्
सदः परिक्षोभितभूमिभागः [सः] ॥ ४५

अन्वयः। (अथ दशास्यः) मायाविभिः जनानां त्रासकरैः उपादानपरैः सतां विघातैकरसैः आप्तैः उपेतः परिक्षोभितभूमिभागः (सन्) सदः अविक्षत् ॥ ४५

मल्लिनाथः। मायाविभिरिति। अथ दशास्यो मायाविभिः प्रवञ्चकैर्जनानां त्रासकरैर्विषभयादिभिर्भयङ्करैः उपादानपरैः स्वामिनोऽर्थसंग्रहपरैः सतां साधूनां विघातैकरसैर्हिंसैकस्वभावै-राप्तैः श्रद्धेयपुरुषैरुपेतः परिक्षोभितभूमिभागः पादन्यासप्रकम्पित-भूतलः सन् सदः सभामविक्षत् विवेश। विशतेर्लुङि "शल इगु-पधादनिटः क्सः" ॥ ४५

भरतः। मायाविभिरित्यादि। दशास्यः सदः सभामविक्षत् प्रविष्टवान् "क्षमयीऽनिम्" इति क्स्। कीदृशः? आप्तैः आत्मीयैः राक्षसैरुपेतः उपगतः सन्। कीदृशैः? मायाविभिर्वञ्चकैर्जनानां त्रासकरैः अतिरौद्रत्वात् उपादानपरैः स्वाम्यर्थसम्पादनपरैः सतां साधूनां विघातमभिवाञ्छुभिः। सदः कीदृशं? रावणचरणभरेण परिक्षोभितः सञ्चलितो भूमिभागो यत्र ॥ ४५

অনুবাদ। সজ্জনবিনাশশীল, মায়াবী, লোকভয়জনক, প্রভুকার্য্যনিষ্পাদক রাক্ষসগণে বেষ্টিত হইয়া রাবণ ভূতল কম্পিত করিতে করিতে সভায় প্রবেশ করিল।৪৫

विधृतनिशितशस्त्रैस्तद्युतं यातुधानैः
उरुजठरमुखीभिः संकुलं राक्षसीभिः।
प्लवगणिशतविकीर्णं वागुरावन्मृगीभि-
र्वनमिव सभयाभिर्देववन्दीभिरासीत् ॥ ४६

अन्वयः। विधृतनिशितशस्त्रैः यातुधानैः युतं उरुजठरमुखीभिः राक्षसीभिः संकुलं (तथा) सभयाभिः देववन्दीभिश्च (युतं) तत् सदः, श्वगणिशतविकीर्णं वागुरावत् (तथा) (सभयाभिः) मृगीभिश्च (युतं) वनमिवासीत् ॥ ४६

मल्लिनाथः। विधृतेति। विधृतनिशितशस्त्रैर्यातुधानै राक्षसै-र्युतमुरुजठरमुखीभी राक्षसीभिः सङ्कुलं सङ्कीर्णं, तथा सभयाभि-

देववन्दीभिश्च युतं तत्सदः, खगणा एषामस्तीति खगणिनः खगा-दिनस्तेषां शतैर्विकीर्णं व्याप्तं, वागुरा मृगबन्धनीरज्जवोऽस्मिन् सन्तीति वागुरावत्। 'वागुरा मृगबन्धनी' इत्यमरः। 'खगणिक-शतकीर्ण'मिति क्वचित् पाठः। तथा सभयाभिश्च गोभिश्च युतं वनमिवासीत्। तद्वद्दुष्टमित्यर्थः॥ ४६

भरतः। विधृतेत्यादि। तत्सदो वनमिवासीत्। कीदृशं सदः? विधृतनीक्ष्णशस्त्रै-र्यातुधानैराक्षसैर्युक्तं तथा राक्षसीभिः सङ्कुलं व्याप्तं। कीदृशीभिः? उरु महत् जठरमुदरं मुखञ्च यासां ताभिः, तथा देववन्दाभिर्हठात् हृतदेवस्त्रीभिः सङ्कुलमिति सम्बन्धः। खगणि-काश्वतकीर्णमाखेटिकशतच्छन्नं वागुरावत् वागुरा मृगबन्धनी रज्जुस्तद्युक्तं मृगीभिः सङ्कुलं सभयाभिर्भययुक्ताभिरिति मृगीणां देववन्दीनाञ्च विशेषणम्। तत्सदोऽपि कुक्कुरधारि-भिर्युक्तं तथा रज्जुबद्धमृगीभिर्युक्तं, वनमपि राक्षसैः राक्षसीभिश्च युक्तं, श्वानो गणो विद्यते येषां ते श्वगणिन आखेटकाः॥ ४६

অনুবাদ। শাণিত অস্ত্র-ধারী শতশত রাক্ষসগণ, প্রকাণ্ড উদর ও মুখসম্পন্ন রাক্ষসীগণ এবং দেববন্দীগণ বেষ্টিত সভায় রাবণ গমন করিল। শতশত শিকারিকুক্কুর সমভি-ব্যাহারীপুরুষপরিপূর্ণ বাগুরা বিস্তীর্ণ এবং ভীতমৃগী সমূহে পরিব্যাপ্ত থাকায় সেই সভাটা তখন যেন একটা বনে পরিণত হইল।৪৬

जलद इव तड़िल्वान् प्राज्यरत्नप्रभाभिः
प्रतिककुभमुदस्यन्निस्वनं धीरमन्द्रम्।
शिखरमिव सुमेरोरासनं हैममुच्चै-
र्विविधमणिविचित्रं प्रोन्नतः सोऽध्यतिष्ठत्॥४७

अन्वयः। प्राज्यरत्नप्रभाभिः तड़िल्वान् जलद इव प्रतिककुभं धीरमन्द्रं निस्वनम् उदस्यन् प्रोन्नतः सः (रावणः) सुमेरोः शिखरमिव उच्चैः विविधमणिविचित्रं हैमं आसनं अध्यतिष्ठत्॥ ४७

मल्लिनाथः। जलद इति। प्राज्यरत्नप्रभाभिः प्रभूतमणिका-न्तिभिस्तड़िल्वान् विद्युत्वान् जलद इव स्थितस्तद्वदेव प्रतिककुभं प्रतिदिशम्। शरत्प्रभृतित्वादव्ययीभावे समासान्तष्टच्। धीरं मन्द्रं मधुरं गम्भीरं निस्वनमुदस्यनुदीरयन् प्रोन्नतः स रावणः सुमेरोः शिखरमिवोच्चैरुन्नतं विविधमणिविचित्रं हैमं सौवर्णमासनं सिंहासनमध्यतिष्ठत्॥ ४७

भरतः। जलद इत्यादि। स रावणः सुमेरोः शिखरमिवोच्चैस्तरं हैमं हिरण्मयमासनमध्यतिष्ठत्। किं कुर्वन्? विद्युद्युक्तो मेघ इव प्रतिककुभं दिशि दिशि धीरं मन्द्रं गभीरतरं निस्वनं ध्वनिमुदस्यन् क्षिपन्, प्रोन्नतः सर्वेषामुपरिस्थितः उन्नताकारी वा, प्राज्यानां प्रभूतानां रत्नानां प्रभाभिरुपलक्षितः प्राज्यरत्नप्रभाभिः करणभूताभिस्तडित्वान् जलद इव इति वा। आसनं कीदृशं? विविधैर्नानावर्णैर्मणिभिर्विचित्रं सुमेरुशिखरमप्येवं। प्रोन्नत इति पाठे उच्चैरिति रावणविशेषणं, प्रतिककुभमिति "झय इति 'पक्षे अप्रत्ययः, तडित्वानिति तदस्यास्तीत्यमात्वमत्र विवक्षितमुपमेये प्राज्यरत्नप्रभास्तडित्वादतो नात्र पौनरुक्त्यम्॥ ४७

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लिकात्मजश्रीभरतसेनकृतायां

भट्टिकाव्यटीकायां मुग्धबोधिन्यां प्रसन्नकाण्डे गुणदर्शनं नाम

द्वितीयः परिच्छेदः।

काव्यस्य प्रभातवर्णनं नामैकादशः सर्गः।

অনুবাদ। উন্নতাকৃতি রাবণ প্রভূতমণিমাণিক্যাদি প্রভায় বিদ্যুৎ ও জলপূর্ণ মেঘের ন্যায় চারিদিকে মধুর গম্ভীরধ্বনি বিস্তার করিয়া সুমেরুর শিখরতুল্য অত্যুন্নত বিবিধ মণিখচিত স্বর্ণসিংহাসনে অধিষ্ঠান করিল।৪৭

# द्वादशः सर्गः ।

ततो विनिद्रं कृतदेवकार्य्यं [तार्क्ष्यं]
दृष्ट्वेव चित्तप्रशमं किरन्तम् ।
आविष्कृताङ्ग प्रतिकर्मरम्यं
विभीषणं वाचमुवाच माता ॥ १

अन्वयः । ततो विनिद्रं कृतदेवकार्य्यं दृष्ट्या एव चित्तप्रशमं किरन्तं आविष्कृताङ्गप्रतिकर्मरम्यं माता विभीषणं वाचम् उवाच ॥ १

मल्लिनाथः । भाविकं नामालङ्कारो वाक्यगत इति केचिल्लक्षयन्ति च—'अतीतानागते यत्र प्रत्यक्ष इव लक्षिते । अत्यद्भुतार्थकथनाद्भाविकं तदुदाहृतम् ॥' इति । अन्ये तु—गुणोऽयं प्रबन्धगतश्चरित्रादिप्रवृत्तिहेतुकश्चेति मन्यन्ते सम्पादयन्ति च । 'भाविकत्वमिति प्राहुः प्रबन्धविषयं गुणम् । प्रत्यक्षा इव दृश्यन्ते यत्रार्था भूतभाविनः ॥ उदात्तार्थाद्भुतार्थत्वे कथायास्त्वभिनीतता । शब्दानुकूलता चेति तस्य हेतुं प्रचक्षते ॥' इति । एतत्पक्षाश्रयणेनास्मिन् सर्गे भाविकं दर्शयन् लङ्कावृत्तान्तमाह—तत इति । ततो रावणप्रत्याख्यानप्राप्त्यनन्तरं विनिद्रं प्रबुद्धं कृतदेवकार्य्यमनुष्ठितेष्टदेवताराधनं दृष्ट्या शान्तदृष्ट्येव चित्तप्रशमं किरन्तमन्तः शान्तिं च दर्शयन्तं प्रतिकर्मणा प्रसाधनेन रम्यमाविष्कृताङ्गमग्रे प्रदर्शिताकारं सम्मुखमागतमित्यर्थः । विभीषणं माता नैकषी वाचमुवाच ॥ १

भरतः । भाविकनामा गुणः" प्रबन्धविषय एव न तु श्लेषादिवदेकदेशविषयोऽपि, तदुक्तं दण्डिना—

"भाविकत्वमिति प्राहुः प्रबन्धविषयं गुणम् ।
भावः कवेरभिप्रायः काव्येष्वासीद्व्यवस्थितः ॥
परस्परोपकारित्वं सर्वेषां वस्तुपर्वणाम् ।
विशेषणानां व्यर्थानामक्रियास्थानवर्णना ॥
व्यक्तिरुक्तिक्रमबलाद्गम्भीरस्यापि वस्तुनः ।
भावयितुमिदं सर्वमिति तं भाविकं विदुः ॥" इति

कण्ठाभरणे तु—"भावतो वाक्प्रवृत्तिर्या भाविकं तदुदाहृत"मिति शब्दगुणः, 'साभिप्रायोक्तिविन्यासो भाविकत्वं निगद्यते' इत्यर्थगुणः इति । अन्यत्रापि—

"भाविकत्वमलङ्कारप्रबन्धविषयो गुणः।
प्रत्यक्षा इव दृश्यन्ते पदार्था भूतभाविनः॥
चित्रोदात्ताद्भुतार्थित्वं कथाया अतिशीलना।
शब्दानां कौशलश्चापि तस्य हेतुः प्रचक्षते॥" इति, स एवाधुना प्रदर्श्यते।

तत इत्यादि। ततः प्रातःकालादनन्तरं माता नैकषी वक्ष्यमाणां वाचं विभीषणम् उवाच कथितवती। कीदृशं? विगतनिद्रं विहितदेवार्चनं दृष्टिमात्रेण चित्तस्थितां प्रशान्तिं किरन्तं प्रकाशयन्तं शान्तमूर्त्तित्वात्, आविष्कृतेन प्रकाशितेनाङ्गप्रतिकर्म्मणा शरीर-साधनेन रम्यम् एतेन सर्व्वोऽज्ज्वल्यमुक्तं, "ते तु कक्षपफेवा" इति अस्य वाशब्दस्य व्यवस्थावाचि-त्वादेव नित्यं वेः सकारः, तस्य निष्पतस्य इति वत् मूर्द्धन्यत्वं "दुर्न्निरादिविर्वहिःप्रादुश्चतुरां प, क वपफे" इति परसूत्रम्। उवाचेत्यादिप्रयोगे वाचमित्यादिप्रयोगो व्यर्थत्वेऽपि न दुष्यति। यदुक्तं कण्ठाभरणे—

"यदप्रयोजकं यस्य गतार्थं व्यर्थमेव वा।
तस्यापि क्वापि निर्दोषः प्रयोगो दृश्यते यथा॥"इति

অনুবাদ। অনন্তর বিভীষণ নিদ্রাত্যাগ এবং দেবকার্য্য সমাধা করিয়া দৃষ্টিপাতে মনের শান্তি প্রকাশ করিতে করিতে চন্দনলেপন মাল্যধারণাদি দ্বারা মনোহর মূর্ত্তিধারণ পূর্ব্বক মাতার সম্মুখে উপস্থিত হইলে তাঁহার মাতা তাঁহাকে পরবর্ণিত কয়েকটী কথা বলিলেন।১

**प्रबाधमानस्य जगन्ति धीमं-**
**स्त्वं सोदरस्यातिबलोद्धतस्य।**
**आनन्दनो नाकसदां प्रशान्तिं**
**तूर्णं विषस्यामृतवत्कुरुष्व॥ २**

अन्वयः। धीमन्! त्वं नाकसदां आनन्दनः (सन्) जगन्ति प्रबाधमानस्य अतिब-लोद्धतस्य सोदरस्य विषस्य अमृतवत् तूर्णं प्रशान्तिं कुरुष्व॥ २

मल्लिनाथः। प्रेति। हे धीमन्! त्वं नाकसदां देवानामानन्दनः आनन्दयिता सन्। नन्दयतेः कर्त्तरि ल्युट्। जगन्ति लोकानि प्रबाधमानस्यातिपीड़यतोऽत्यन्तं बलोद्धतस्य बलदृप्तस्य समानमुदरं यस्य तस्य सोदरस्य, एकमातृकत्वादेकोदरस्य अन्यत्रोभयोः समुद्र-सम्भूतत्वादिति द्रष्टव्यम्। विषस्य कालकूटस्यामृतवदमृतमिव तूर्णं प्रशान्तिं निवारणं कुरुष्व। उपमेयद्वयविशेषणान्युपमानयोरपि योज्यानि॥ २

भरतः। किमुवाचेत्याह—प्रबाधमानस्येत्यादि। हे धीमन्! प्रशस्तबुद्धियुक्त! त्वम्

अमृतवदमृतमिव विषस्य कालकूटस्य इव सोदरस्य रावणस्य प्रशान्तिं तूर्णं शीघ्रं कुरुष्व। कीदृशस्य सोदरस्य? जगन्ति लोकत्रयं प्रबाधमानस्य पीड़यतः, अतिबलेन महासामर्थ्येन उद्धतस्य तीव्रस्य, विषमपि मथनकाले जगन्ति प्रबाधमानं स्वतेजसा उद्धतञ्च। कीदृशः? नाकसदां देवानामानन्दनः प्रमोदयिता, अमृतमपि देवानामानन्दकम्, एकस्मिन् समुद्रोदरे स्थितत्वात् विषामृतयोरपि सोदरत्वं, समानमुदरं यस्येति सोदरः, समानार्थस्य सहशब्दस्य "सहः सो वा" इत्यनेन पक्षे सादेशः, एवं यत्र भ्राता सहोदर इत्यपि स्यात्, "करनामगोत्र" इत्यादौ उदर्य्यशब्देनोदरशब्दोऽपि गृह्यते इति केचित्, समानस्य सभावो लोकोपचारादित्यन्ये ॥ २

অনুবাদ। (কি বলিয়াছিলেন, তাহাই বলা হইতেছে) হে সুবোধ বিভীষণ! দেবপ্রিয় অমৃত যেমন ত্রিভুবনের অনিষ্টকর সহোদর গরলের উপশম করিয়াছিল, তুমিও তেমনি দেবগণের প্রিয় হইয়া অতি শীঘ্র ত্রিভুবনপীড়ক অতি বলগর্ব্বিত সহোদর রাবণের দুষ্কর্ম্ম নিবারণ কর।২

कुर्य्यास्तथा येन जहाति सीतां
विषादनीहारपरीतमूर्त्तिम्।
स्थितां क्षितौ शान्तशिखाप्रतानां
तारामिव त्रासकरीं जनस्य ॥ ३

अन्वयः। विषादनीहारपरीतमूर्त्तिं क्षितौ स्थितां शान्तशिखाप्रतानां जनस्य त्रासकरीं तारामिव (स्थितां) सीतां येन जहाति तथा कुर्य्याः ॥ ३

मल्लिनाथः। कुर्य्या इति। विषादेनैव नीहारेण परीतमूर्त्तिं छन्नरूपां क्षितौ स्थितामुत्पातकाले पतितां शान्तशिखाप्रतानां नष्टप्रभापटलामनुज्ज्वलवेणिबन्धां च जनस्य लोकस्य लङ्काजनस्य च त्रासकरीमनर्थकरत्वाद् भयङ्करीं तारां तारकामिव स्थितामित्युत्प्रेक्षा। सीतां येन येनोपायेन जहाति त्यजति तथा तादृगुपायं कुर्य्याः कुरु। विधौ लिङ् ॥ ३

भरतः। कुर्य्या इत्यादि। त्वं तथा तं प्रकारं कुर्य्याः, यथा येन प्रकारेण स सीतां जहाति त्यजति, जनस्य त्रासकरीं त्रासहेतुमुत्पाततारामिव प्रकरणात् राक्षसस्य त्रासं करिष्यतीति भावः। विषादो नीहार इव तेन परिगतमूर्त्तिं, क्षितौ स्थितां भूमिशयनात्, नक्षत्रस्यापि भूमौ पाते उत्पातः प्रसिद्धः, यद्वा तारापक्षे क्षितौ पतननिमित्तं स्थितामित्यर्थः। शान्तशिखाप्रतानां ध्वस्तकेशप्रतानां केशोन्नयनात्, तारापक्षे ध्वस्तकिरणजालाम् ॥ ३

অনুবাদ। বিষাদনীহারাবৃতরূপা, ভূতলশয়না মলিনবেণীযুক্তা, ভূপতিতা নষ্টপ্রভা তারার ন্যায় লঙ্কাবাসিলোকের ভয়ের হেতু সীতাকে যাহাতে রাবণ পরিত্যাগ করে, তাহা কর।৩

यावन्न संत्रासितदेवसङ्घः
पिण्डो विषस्येव हरेण भीष्मः।
संग्रस्यतेऽसौ पुरुषाधिपेन
द्रुतं कुलानन्द यतस्व तावत् ॥ ४

अन्वयः। (हे) कुलानन्द! सन्त्रासितदेवसङ्घः विषस्य पिण्डः हरेणेव भीष्मः असौ (रावणः) पुरुषाधिपेन यावत् न संग्रस्यते तावत् द्रुतं यतस्व ॥ ४

मल्लिनाथः। यावदिति। कुलमानन्दयतीति कुलानन्द! कुलानन्दकर! नन्दयतेः "कर्मण्यण्"। सन्त्रासितदेवसङ्घो विषस्य कालकूटविषस्य पिण्डो हरेणेव भीष्मः लोकभयङ्करोऽसौ रावणः पुरुषाधिपेन रामेण यावन्न संग्रस्यते तावद् द्रुतं यतस्व सीतात्यागे यत्नं कुरु ॥ ४

भरतः। यावदित्यादि। हे कुलानन्द! यावत् पुरुषाधिपेन रामेणासौ रावणो न संग्रस्यते न हन्यते, यथा हरेण महादेवेन विषस्य कालकूटस्य पिण्डो ग्रस्तः, तावत्त्वं द्रुतं यतस्व यत्नं कुरु, सीतात्यजनायेत्यर्थात्। कीदृशो रावणः? विषपिण्डश्च? सन्त्रासितो देवगणो येन स तथा भीष्मो भयजनकः अतिरौद्र इत्यर्थः। कुलमानन्दयतीति कुलानन्दः "ढान षधि" इति अण्। कुलस्यानन्दो यस्मादिति वा ॥ ४

অনুবাদ। হে কুলপ্রদীপ বিভীষণ! দেবগণের ত্রাসকারণ ভীষণ কালকূটবিষপিণ্ড দেবাদিদেব মহাদেব যেমন গ্রাস করিয়াছিলেন, তেমনি দেবসঙ্ঘের ত্রাসকারণ কালকূটবৎ ভয়ঙ্কর ঐ রাবণকে পুরুষোত্তম রামচন্দ্র যতক্ষণ বিনষ্ট না করেন, তাবৎ তুমি (যাহাতে সীতাকে ত্যাগ করে, সেই উপায় উদ্ভাবনে) সত্বর যত্ন কর ।৪

हता जनस्थानसदो निकायाः
कृता जितोत्खातभटद्रुमा पूः।
सदांसि दग्धानि विधेयमस्मिन्
यद्बन्धुना तद्घटयस्व तस्मिन् ॥ ५

अन्वयः। जनस्थानसदो निकायाः हताः, पूः जितोत्खातभटद्रुमा कृता, सदांसि दग्धानि, अस्मिन् (समये) तस्मिन् (रावणे) बन्धुना यत् विधेयं तत् घटयस्व ॥ ५

मल्लिनाथः। हता इति। जनस्थानसदां तद्वासिनां राक्षसानां निकायाः सङ्घाः। "सङ्घे चानौत्तराधर्ये" इति चिनोतेः सङ्घार्थे

घञ्प्रत्ययखकारस्य च कादेशः। हताः, पूर्वेण च यथासङ्ख्यं जिता उत्खाता भटा द्रुमाश्च यस्याः सा कृतेति यथासंख्यालङ्कारः। सदांसि सभागृहाणि दग्धान्यस्मिन् समये तस्मिन् रावणे विषये बन्धुना यद्विधेयं कर्त्तव्यं तद् घटयस्व कुरुष्वेत्यर्थः॥ ५

भरतः। हता इत्यादि। जनस्थाननदी दण्डकारण्यवासिनो निकायाः खरदूषणादीनां समूहाः हता मारिताः, "ऋदेधावोद" इत्यादिना निवपूर्विच्चो घञि समूहार्थे निकायो निपातितः, पूः लङ्का जितभटा उन्मूलितद्रुमा च कृता, सदांसि गृहाणि दग्धानि, एवमपरस्यापि विनाशः स्यात्, तस्मात् एतस्मिन् वस्तुनि बन्धुना यद्विधेयं विधातुं योग्यं तत् घटयस्व कुरु, तस्मिन् वस्तुनि रावणविषये वा॥ ५

अनुवाद। তিনি দণ্ডকারণ্যবাসী খরদূষণপ্রভৃতিকে বধ করিয়াছেন, লঙ্কাপুরীর সৈন্যবর্গ ও বৃক্ষশ্রেণী বিধ্বস্ত করিয়াছেন এবং সভাগৃহ সকল দগ্ধ করিয়াছেন, এ সময়ে যাহা বন্ধুর কর্তব্য তাহা কর। ৫

चिकीर्षिते पूर्वतरं स तस्मिन्
क्षेमङ्करेऽर्थे मुहुरीर्य्यमाणः।
मात्राऽतिमात्रं शुभयेव बुद्ध्या
चिरं सुधीरभ्यधिकं समाधात्॥ ६

अन्वयः। सुधीः सः पूर्वतरं चिकीर्षिते क्षेमङ्करे तस्मिन् अर्थे मात्रा शुभया बुद्ध्या एव मुहुः ईर्य्यमाणः (सन्) चिरं अभ्यधिकं समाधात्॥ ६

मल्लिनाथः। चिकीर्षित इति। सुधीः स विभीषणः पूर्वतरं मातुरुपदेशात् पूर्वमेव। स्वार्थे तरप्। चिकीर्षिते कर्त्तुमिष्टे क्षेमङ्करे श्रेयस्करे। "खेमप्रियमद्रेऽण् च" इति खचि मुमागमः। तस्मिन् अर्थे सीतामोचनकार्य्ये मात्रा अनघ्या शुभया बुद्ध्येव मूर्त्तया सद्बुद्ध्येवेत्युत्प्रेक्षा। मुहुरीर्य्यमाणः सन् प्रेर्य्यमाणः सन् चिरं कर्त्तव्यतावुद्धिमधिकं समाधात् समाहितवान् दृढीकृतवानित्यर्थः। दधातेर्लुङि "गातिस्था—" इत्यादिना सिचो लुक्॥ ६

भरतः। चिकीर्षिते इत्यादि। तस्मिन् सीताप्रत्यर्पणरूपेऽर्थे पूर्वतरं मातुरुपदेशात् पूर्वमेव स्वयं चिकीर्षिते कर्त्तुमिष्टे यतः क्षेमङ्करे शुभदायके मात्रापि शुभया शोभनयैव बुद्ध्या अतिमात्रमत्यर्थं मुहुः पुनः पुनः प्रेर्य्यमाणः सुधीः प्राज्ञः स विभीषणः चिरमभ्यधिकं समाधात् न्याय्यमेवैतदिति चिन्तितवान्। "भूस्थापिबा" इति दाधंज्ञकात् सिचो लुक्, इयता प्रबन्धेन उदात्तार्थत्वमुक्तम्। इत उत्तरं रावणविभीषणप्रहस्तादीनां वचनप्रबन्धेन विवादभुतार्थत्वं द्रष्टव्यम्, अतिप्रीढता शब्दानां कुशलता चेत्येतदुभयं सन्धिनिर्णयकथायां द्रष्टव्यम्॥ ६

অনুবাদ। সুধী বিভীষণ মাতার উপদেশের পূর্ব্বেই শ্রেয়স্কর—সেই সীতা-প্রত্যর্পণ কার্য্যের কর্ত্তব্য স্থির করিতে ইচ্ছা করিয়াছিলেন, পরে জননী কর্ত্তৃক সদবুদ্ধি দ্বারাই পুনঃ পুনঃ প্রণোদিত হওয়ায় সে বিষয়ে অধিকতর মনোনিবেশ করিলেন। ৬

दौवारिकाभ्याहतशक्रदूतं
सोपायनोपस्थितलोकपालम्।
साशङ्कभीष्मात्मविशन्निशाटं
द्वारं ययौ रावणमन्दिरस्य॥ ७

অন্বয়:। दौवारिकाभ्याहतशक्रदूतं सोपायनोपस्थितलोकपालं साशङ्कभीष्मात्मविशन्निशाटं रावणमन्दिरस्य द्वारं ययौ॥ ७

मल्लिनाथः। दौवारिकेति। द्वारि नियुक्ता दौवारिकाः। "तत्र नियुक्तः" इति ठक्। "द्वारादीनां च" इत्यौजागमः। तैरभ्याहता-स्ताड़िताः शक्रदूता यस्मिंस्तत्, सोपायना उपायनवन्त एवोप-स्थिता लोकपाला यस्मिंस्तत्, साशङ्काः सभया भीष्मा भयङ्कराः प्रविशन्तो निशाटा निशाचरा यस्मिंस्तद्रावणस्य मन्दिरस्य द्वारं ययौ॥ ७

भरतः। दौवारिकेत्यादि। विभीषणो रावणमन्दिरस्य द्वारं ययौ। कीदृशं द्वारं? दौवारिकैः द्वारपालैः अभ्याहता निवारिताः शक्रदूता यस्मिन्, सोपायनाः सोपहाराः सन्तः उपस्थिता लोकपाला यत्र, साशङ्काः सभयाः सन्तो भीष्मा भयजनका आत्मा आत्मीया विशन्तो निशाटा राक्षसा यत्र, तेन परंघ्नात्मीयेष्वपि तस्य दुष्टत्वं दर्शितम्। द्वारि नियुक्तो दौवारिकः, "ढधिकात्" इति णिकः "द्वारस्वर" इति ऊम् "विभेतिः" इति द्वाँद्वः॥ ७

অনুবাদ। বিভীষণ রাবণের বাটীর দ্বারে উপস্থিত হইলেন। সেখানে দেবরাজ ইন্দ্রের দূত আসিলেও দ্বারবানেরা বাধা প্রদান করিতেছে। দিক্‌পালগণ উপঢৌকন লইয়া উপস্থিত রহিয়াছেন এবং ভয়ঙ্করাকৃতি আত্মীয় রাক্ষসগণ ভয়ে ভয়ে প্রবেশ করিতেছিল। ৭

दूरात् प्रतीहारनतः स वार्त्तां
पृच्छन्ननावेदितसंप्रविष्टः।
सगौरवं दत्तपथो निशाटै-
रैक्षिष्ट शैलाग्रमिवेन्द्रशत्रुम्॥ ৮

অন্বয়:। सः दूरात् प्रतीहारनतः वार्त्तां पृच्छन् अनावेदितसंप्रविष्टः निशाटैः सगौरवं दत्तपथः शैलाग्रमिव (स्थितं) इन्द्रशत्रुं ऐक्षिष्ट॥ ৮

मल्लिनाथः । 'दूरादिति । स विभीषणो दूरादेव प्रतीहारेण दौवारिकेण नतः स्वाम्यनुजस्यापि स्वामितुल्यत्वात् प्रणतो वार्त्तां राजावसरवृत्तान्तं पृच्छन्ननावेदितो राज्ञेऽयमागत इत्यनिवेदित एव सम्प्रविष्टो निशाटैर्निशाचरैः सगौरवं दत्तपथो दूरापसरणेन दत्तमार्गः । "ऋक्पूर्—" इत्यादिना समासान्तः । शैलेन्द्रमिव स्थितमिन्द्रशत्रुं रावणमैक्षिष्टाद्राक्षीत् ॥ ८

भरतः । दूरादित्यादि । दूरादेव प्रतीहारेण द्वारपालेन नतो नमस्कृतः राजा कुत्र तिष्ठति किं वा करोतीति वार्त्तां पृच्छन् विभीषणो द्वारि तिष्ठतीति राज्ञोऽनावेदित एव सम्प्रविष्टः, निशाटैः राक्षसैः सगौरवं यथा स्यात्तथा दत्तः पन्था यस्य स विभीषण इन्द्रशत्रुं रावणम् ऐक्षिष्ट दृष्टवान् । शैलायमिव पर्वतशिखरमिव सिंहासनस्थत्वात्, गुरोर्भावो गौरवं "विकारसङ्घे" इति ष्यः ॥ ८

অনুবাদ। বিভীষণ সেখানে উপস্থিত হইলে দ্বারবানগণ দূর হইতেই তাঁহাকে প্রণাম করিল। তিনি "মহারাজের অবসর আছে ত?" ইহা জিজ্ঞাসা করিতে করিতে রাজাদেশ না লইয়াই প্রবিষ্ট হইলেন। তখন অপর রাক্ষসেরা সসম্মানে তাঁহার পথ ছাড়িয়া দিতে লাগিল, তখন পর্ব্বতশৃঙ্গতুল্য উচ্চাসনস্থিত রাবণকে দেখিতে পাইলেন। ৮

क्रशानुवर्ष्मण्यधिरूढमुच्चैः
सिंहासने संचयमेघभीमम् ।
निसर्गतीक्ष्णं नयनस्फुलिङ्गं
युगान्तवह्नेरिव धूमराशिम् ॥ ९

अन्वयः । कृशानुवर्ष्मणि उच्चैः सिंहासने अधिरूढं संचयमेघभीमं निसर्गतीक्ष्णं नयनस्फुलिङ्गं युगान्तवह्नेः धूमराशिमिव (स्थितम्) (ऐक्षिष्ट) ॥ ९

मल्लिनाथः । पुनस्तमेव श्लोकद्वयेन विशिनष्टि—कृशान्वित्यादि । कृशानोरिव वर्ष्म शरीरं यस्य तस्मिन्नग्निकल्पे दीप्ते उच्चैरुन्नते सिंहासनेऽधिरूढमुपविष्टं संचयमेघभीमं प्रलयकालमेघवद्भयङ्करं निसर्गतीक्ष्णं स्वभावतः क्रूरं नयनान्येव स्फुलिङ्गा यस्य तं युगान्तवह्नेः प्रलयकालाग्नेर्धूमराशिमिव स्थितम् । सिंहासनस्याग्निवर्णत्वात् स्वयं श्यामाङ्गत्वाच्चेति भावः ॥ ९

भरतः । कृशान्वित्यादि । कीदृशं रावणम् ऐक्षिष्ट? कृशानुवर्ष्मणि वह्न्याकारे अतिसुन्दरे वा उद्दीप्तत्वात् उच्चैस्तुङ्गे सिंहासनेऽधिरूढम् "वर्ष्म देहे प्रमाणे च सुन्दराकारयोरपि" इति विश्वः । प्रलयकालीनमेघवत् भीममतिकृष्णत्वात्, निसर्गेण स्वभावेन

तीक्ष्णं रौद्रं, नयनानि स्फुलिङ्गा अग्निकणा इव यत्र, युगान्तवह्नेः प्रलयकालीनवह्नेर्धूमराशिमिव अधिरुह्यसिंहासनस्थत्वात् धूम्रोऽपि मेघतुल्यः कटुत्वात्तीक्ष्णः स्फुलिङ्गवाश्च भवति ॥ ९

অনুবাদ। দেখিলেন অগ্নিতুল্য অত্যুচ্চ স্বর্ণসিংহাসনে অধিরূঢ় মহাপ্রলয়ের মেঘের ন্যায় অত্যন্ত ভীষণ, স্বভাবতঃ কর্কশ, চক্ষুগুলি যেন রক্তবর্ণ অগ্নিস্ফুলিঙ্গ, প্রলয়াগ্নি ধূমরাশির ন্যায় বিরাজিত।৯

प्रीत्यापि दत्तेक्षणसन्निपातं
भयं भुजङ्गाधिपवद्दधानम् ।
तमःसमूहाकृतिमप्यदो[षे]षा-
नूर्जा जयन्तं प्रथितप्रकाशान् ॥ १०

अन्वयः। प्रीत्या दत्तेक्षणसन्निपातं अपि भुजङ्गाधिपवत् भयं दधानं तमःसमूहाकृतिमपि अदोषान् प्रथितप्रकाशान् ऊर्जा जयन्तम् ( ऐक्षिष्ट ) ॥ १०

मल्लिनाथः। प्रीत्येति। प्रीत्या स्नेहेन दत्तेक्षणसन्निपातं दत्तदृष्टिपातमपि भुजङ्गाधिपवद्‌ भयं दधानं कुर्वाणम्। प्रीतिदशायामपि स्वरूपतो भीषणत्वादिति भावः। तमःसमूहाकृतिमपि तद्वत्कृष्णवर्णमपि अदोषान् नीहारादिदोषरहितान् प्रथितप्रकाशानर्कादीन् ऊर्जा बलेन। "भ्राजभास—" इत्यादिना क्विप्। जयन्तं तिरस्कुर्वन्तम्। उभयत्रापि विरोधाभासोऽलङ्कार इति सजातीयसंसृष्टिः ॥ १०

भरतः। प्रीत्येत्यादि। पुनः कीदृशं ? भुजङ्गाधिपः शेषः प्रीत्यापि दत्तेक्षणसन्निपातः समर्पितनेत्रसमूहः सन् यथा भयं जनयति तथा भयं दधानं तमःसमूहस्य राहुहन्दस्येव अन्धकारचयस्येव वा आकृतिर्यस्य तथाभूतमपि ऊर्जा बलेनाप्यदोषान् प्रसिद्धप्रकाशान् सूर्य्यादीन् जयन्तमभिभवन्तं, ऊर्ज बलप्राणधारणयोः "भासस्" इति भावे क्विप्। "तमोऽन्धकारे स्वर्भानौ तमः क्लेशे गुणान्तरे" इति विश्वः ॥ १०

অনুবাদ। রাবণ সস্নেহ দৃষ্টিপাত করিলেও নাগরাজ বাসুকীর ন্যায় ভয়ঙ্কর বোধ হইতে লাগিল। সে অন্ধকারবৎ কৃষ্ণবর্ণ হইলেও বোধ হইল যেন বীর প্রতাপে নির্দ্দোষ প্রসিদ্ধ প্রকাশ স্বভাব সূর্য্যাদিকেও বলপূর্ব্বক পরাস্ত করিতেছে। ১০

तं रत्नदायं जितमर्त्यलोका
रात्रिञ्चराः कान्तिभृतोऽन्वसर्पन् ।
प्रमुक्तमुक्ताफलमम्बुवाहं
सञ्जाततृष्णा इव देवमुख्याः ॥ ११

अन्वयः । रत्नदायं तं जितमृत्युलोकाः कान्तिभृतः रात्रिचराः प्रमुक्तमुक्ताफलं अम्बुवाहं सञ्जाततृष्णाः देवमुख्या इव अन्वसर्पन् ॥ ११

मल्लिनाथः । तमिति । रत्नानि दयते ददातीति रत्नदायः । दयतेर्दानार्थात् "कर्मण्यण्" । तं विभीषणं जितमृत्युलोका जितयमलोकाः कान्तिभृतः कान्तिमन्तो रात्रिञ्चराः निशाचराः प्रमुक्तमुक्ताफलं प्रवृष्टमौक्तिकमम्बुवाहं मेघं सञ्जाततृष्णा मुक्ताफललुब्धा देवमुख्याः सुरश्रेष्ठा इव अन्वसर्पनन्वगमन् ॥ ११

भरतः । तमित्यादि । रात्रिचराः सञ्जाताभिलाषाः सन्तो रत्नदायं तं विभीषणमन्वसर्पन् अनुगतवन्तः, यथा देवमुख्या देवश्रेष्ठा जितमृत्युलोकाः कान्तिभृतः सञ्जाततृष्णाः सन्तः शुक्तिषु तोयप्रक्षेपेण प्रमुक्तमुक्ताफलं मेघमनुसर्पन्ति तद्वत् । कीदृशा रात्रिचराः ? जितमृत्युलोकाः अभिभूतयमलोकाः, कान्तिं बिभ्रतीति क्विप्, कान्तिभृतः तेजस्विनः, देवमुख्या अपि अमरत्वात् जितमृत्युलोकाः कान्तिभृतश्च, रत्नदायमिति रत्नं दास्यतीति भविष्यत्काले "दातृ-मण्" इति यण् तस्य कालविशेषानुक्तेस्त्रिषु कालेषु भवति अन्यकालेऽपि न "सति: यत्र्जित् इति यन्, दय दाने इत्यस्य रूपं वा । "यद्वा श्वसव्यध इत्यादिना णः, ततः षष्ठीसमासः ॥ ११

অনুবাদ। প্রধান প্রধান দেবতারা যেমন রত্নলোভে মুক্তাফলবর্ষী মেঘের অনুসরণ করেন, তেমনি যমজয়ী তেজস্বী রাক্ষসেরা বিভীষণকে রত্নদাতা (অর্থাৎ ইনিই অভয়রূপ রত্ন আম দিগকে দিবেন) বুঝিয়া তাঁহার পশ্চাৎ পশ্চাৎ যাইতে লাগিল।১১

स किङ्करैः कल्पितमिङ्गितज्ञैः
संबाधकं पूर्वसमागतानाम् ।
सिंहासनोपाश्रितचारुबाहु-
रध्यास्त पीठं विहितप्रणामः ॥ १२

अन्वयः । स विहितप्रणामः ( सन् ) इङ्गितज्ञैः किङ्करैः कल्पितं पूर्व्वसमागतानां संबाधकं पीठं सिंहासनोपाश्रितचारुबाहुः ( सन् ) अध्यास्त ॥ १२

मल्लिनाथः । स इति । स विभीषणः विहितप्रणामः कृतप्रणामः सन्निङ्गितज्ञैः स्वामिचित्तज्ञैः किङ्करैः परिजनैः कल्पितं स्थापितं पूर्वसमागतानां प्रथमोपविष्टानां सम्बाधकं सम्मर्दकम् । सङ्कुलम् । पीठमासनं सिंहासनोपाश्रितचारुबाहुः राजासनन्यस्तैकहस्तः सन् अध्यास्त । आसेर्लङ् तङ् । "अधिशीङ्" इत्यादिना कर्म्मत्वम् ॥ १२

भरतः । स किङ्करैरित्यादि । स विभीषणो विहितप्रणामः कृतभक्त्यतिशयव्यञ्जकनतिः

न् पीठमध्यास्त अधिरूढ़वान्। किम्भूतमासनम्? इङ्गितज्ञैः रावणाभिप्रायवेदिभिः किङ्करैः ये: कल्पितमुपनीतं पूर्वसमागतानां प्रथमोपविष्टानाम् अन्येषां सःऽभ्यां सभ्यानाम् सङ्कोच-करं तेषां स्थाने यस्य पीठस्यार्पणात्। स कीदृशः? रावणसिंहासने उपाश्रितः स्थितः दर्वाङ्कुर्यस्य सः॥ १२

অনুবাদ। বিভীষণ রাবণকে প্রণাম করিয়া, রাবণের অভিপ্রায়জ্ঞ ভৃত্যের স্থাপিত, ম উপবিষ্ট সভাসদগণের সঙ্কোচজনক আসনে বসিলেন এবং রাজসিংহাসনের উপর ুন্দর সুন্দর বাহু বিনাস্ত করিলেন।১২

ततो दशास्यः क्षुभिताहिकल्पं
दीप्ताङ्गुली[रो]योपलमूढ़रत्नम्।
अनेकचञ्चन्नखकान्तिजिह्वं
प्रसार्य्य पाणिं समितिं बभाषे॥ १३

अन्वयः। ततो दशास्यः क्षुभिताहिकल्पं दीप्ताङ्गुलीयोपलं (अत एव) ऊढ़रत्नं अनेक-चञ्चन्नखकान्तिजिह्वं पाणिं प्रसार्य्य समितिं बभाषे॥ १३

मल्लिनाथः। तत इति। ततो विभीषणागमनानन्तरं दशास्यः क्षुभिताहिकल्पं क्रुद्धसर्पकल्पं दीप्ता अङ्गुलीयानामुपला मणयो स्मिंस्तम्। 'उपलः प्रस्तरे मणौ' इति विश्वः। अत एवोढ़रत्नं तफणामणिमनेकाश्चञ्चन्त्यश्चलन्त्यो नखकान्तयो जिह्वा यस्य तं ाणिं प्रसार्य्य समितिं सभां बभाषे॥ १३

भरतः। तत इत्यादि। विभीषणोपवेशनादनन्तरं दशास्यः पाणिं प्रसार्य्य समितिं समानां सभां वक्ष्यमाणप्रकारेण बभाषे उवाच। कीदृशं पाणिं? क्षुभिताहिकल्पं क्रुद्ध-घ्नतफणसर्पतुल्यं दीप्तो दीपनशीलोऽङ्गुरीयोपलो मुद्रिकारत्नं यत्र, अत एवोढ़रत्नम्, नेन सर्पसादृश्यं सूचितम्। अनेकाः चञ्चन्त्यः चपला नखकान्तयो जिह्वा इव यस्य म्॥ १३

অনুবাদ। বিভীষণ বসিলে দশানন হস্ত প্রসারিত করিয়া সভ্যদিগকে বলিতে লাগিল। পর হস্তখানিকে একটী ক্রুদ্ধ সর্প বলিয়া বোধ হইতে লাগিল। কারণ, তাহার রত্নযুক্ত জ্জ্বল অঙ্গুরীয়ককে চক্ষু এবং অনেকগুলি চঞ্চল নখকান্তিকে তাহার লোলজিহ্বা বলিয়া ীত হইতে লাগিল।১৩

शतैः सुहृद्भिः परिदृष्टकार्य्यै-
राम्नातिभिर्नीतिषु बुद्धिमद्भिः।
त्वद्विधैः सार्धमुपायविद्भिः
सिध्यन्ति कार्य्याणि सुमन्त्रितानि॥ १४

अन्वयः । शक्तैः सुहृद्भिः परिदृष्टकार्य्यैः नीतिषु आम्नातिभिः बुद्धिमद्भिः उपायविद्भिः युष्मद्विधैः सार्द्धं सुमन्त्रितानि कार्य्याणि सिध्यन्ति ॥ १४

मल्लिनाथः । शक्तैरिति । शक्तैः कार्य्यसमर्थैः । अशक्तस्याकिञ्चित्करत्वादिति भावः । सुहृद्भिर्मित्रैः । अमित्राणां कार्य्यविघातकत्वादिति भावः । परिदृष्टकार्य्यैर्दृष्टसंवादैरित्यर्थः । काकतालीयबुद्धीनामश्रद्धेयत्वादिति भावः । नीतिषु नीतिशास्त्रेषु आम्नातिभिर्नीतिशास्त्राण्याम्नातवद्भिरित्यर्थः । अन्यथा केवलशौर्य्यस्य श्वापदचेष्टितत्वादिति भावः । "इष्टादिभ्यश्च" इतीनिप्रत्ययः । "क्तस्येन्विषयस्य" इति कर्म्मणि सप्तमी । बुद्धिमद्भिरनन्तरकार्य्यज्ञैः । शास्त्रज्ञस्यापोतिकर्त्तव्यतामूढस्याप्रयोजकत्वादिति भावः । उपायविद्भिः स्वामिकार्य्ये मिथः समेतैः । अन्यथा कार्य्यविघातादिति भावः । युष्मद्विधैः सार्द्धमीदृशैर्युष्माभिः सहेत्यर्थः । सुमन्त्रितानि सुष्ठु विचारितानि कार्य्याणि सिध्यन्ति फलन्ति । अन्यथाविमृश्य कृतानि विनश्यन्तीत्यर्थः । अत्र विशेषणानां साभिप्रायत्वात् तदर्थहेतुकत्वोक्त्या च कार्य्यसिद्धेः परिकरपदार्थहेतुककाव्यलिङ्गयोः सङ्करः ॥ १४

भरतः । शक्तैरित्यादि । मन्त्रिणां प्रोत्साहनार्थमिदमुच्यते । युष्मद्विधैर्भवादृशैः सह सुमन्त्रितानि कार्य्याणि सिध्यन्ति सिद्धिं गच्छन्ति । तत्र हेतुमाह—शक्तैः समर्थैः न केवलं युष्माभिर्मन्त्रणा दीयते मन्त्रणां दत्त्वा तन्निर्णीतकर्त्तव्यमपि क्रियते इति भावः । स्वयमसमर्थो हि न स्वामिनो युद्धार्थं मन्त्रणां ददातीति वा, सुहृद्भिर्मित्रैः न तु शक्तत्वेनाहङ्कारः, न तु वा कुमन्त्रणा दीयते इति भावः । परिदृष्टकार्य्यैः अदृष्टकर्माणो हि शास्त्रविदोऽपि मुह्यन्ति नीतिषु आम्नातिभिरभ्यस्तनीतिशास्त्रैः न केवलं दर्शनादेव कार्य्यज्ञानं, "क्तेनादेः" इति कर्मणि सप्तमी । विषयविवक्षयेत्यन्ये, बुद्धिमद्भिः ऊहापोहक्षमैः न शुकादिवदधीतवक्तृत्वम्, उपायविद्भिः सामदानादिकुशलैः उपायाज्ञानात् बुद्धिमन्तोऽपि मुह्यन्ति । परिकरालङ्कारोऽयम् । 'विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु सः ॥' १४

অনুবাদ। রাবণ বলিল, তোমরা কার্য্যক্ষম মিত্রভাবাপন্ন নীতিজ্ঞ সমস্তসংবাদজ্ঞ সুবোধ এবং সামদানাদি উপায়াভিজ্ঞ; তোমাদের সহিত উত্তমরূপে পরামর্শ করিয়া কার্য্য করিলে কার্য্যে সিদ্ধি লাভ হইবেই। ১৪

उपेक्षिते बालिवधादिनाशे
दग्धे पुरेऽस्मे निहते सभृत्ये ।

सैन्ये द्विषां सागरमुत्तितीर्षा-
वनन्तरं ब्रूत यदत्र युक्तम् ॥ १५

अन्वयः । वालिखरादिनाशे उपेक्षिते (सति) पुरे दग्धे (सति) सभृत्ये अक्षे निहते (सति) द्विषां सैन्ये सागरमुत्तितीर्षौ (सति) अनन्तरं अत्र यत् युक्तं (तत्) ब्रूत ॥ १५

मल्लिनाथः । एवं मन्त्रिणो बहूकृत्य स्वोपेक्षोद्घाटनपूर्वकं मन्त्रं पृच्छति—उपेक्षित इति । वालिखरादिनाशे उपेक्षिते सति । वालिग्रहणं तस्यापि स्वपक्षत्वाभिप्रायत्वादिति द्रष्टव्यम् । पुरे दग्धे सति, सभृत्येऽक्षेऽक्षकुमारे निहते सति, किं च द्विषां सैन्ये रामे सागरमुत्तितीर्षावुत्तरीतुमिच्छौ सति । "तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य" इति विभाषा पुंवद्भावात् "इकोऽचि विभक्तौ" इति नपुंसको नुमागमः । अनन्तरमत्र प्रस्तावे यत्कार्य्यं युक्तं तद्ब्रूत॥१५

भरत । उपेक्षित इत्यादि । वालिनः खरादेश्च नाशे उपेक्षिते सति, पुरे लङ्कायां दग्धे सति, भृत्यैः सह अक्षनाम्नि कुमारे हते सति, शत्रूणां सैन्ये समुद्रमुत्तितीर्षौ उत्तरीतुमिच्छौ सति, अनन्तरमिदानीं यूयं ब्रूत, अत्र यद्युक्तमिति रुभावे इति पूर्वेणान्वयः । उत्तितीर्षाविति "स्नात्वादयः" इति पचेऽनिम्, "पुंवद्भाषितं पुंस्कम्" इति पचे पुंवद्भावात् "नुमिक" इति न नुन् ॥ २५

অনুবাদ। বালি খরদূষণাদির বিনাশ, লঙ্কাদাহ, সভৃত্য অক্ষকুমারের মৃত্যু; এ সমস্ত উপেক্ষা করা হইয়াছে। এক্ষণে শত্রুসৈন্য সাগর পার হইতে চেষ্টা করিতেছে। ইহার পর যাহা উপযুক্ত কর্ত্তব্য, তাহারই পরামর্শ দাও। ১৫

भुजांसवक्षःस्थलकार्मुकासीन्
गदाश्च शूलानि च यातुधानाः ।
परामृशन्तः प्रथिताभिमानाः
प्रोचुः प्रहस्तप्रमुखा दशास्यम् ॥ १६

अन्वयः । (अथ) प्रथिताभिमानाः प्रहस्तप्रमुखाः यातुधानाः भुजांसवक्षःस्थलकार्म्मुकासीन् गदाश्च शूलानि च परामृशन्तः दशास्यं प्रोचुः ॥ १६

मल्लिनाथः । भुजेति । अथ प्रथिताभिमानाः प्रसिद्धाहङ्काराः प्रहस्तप्रमुखा यातुधाना राक्षसा भुजादीन्यङ्गानि कार्मुकादीन्यायुधानि च परामृशन्तो रणकण्डूत्या स्पृशन्तो दशास्यं प्रोचुः ॥ १६

भरतः। भुजामित्यादि। प्रहस्तप्रभृतयो यातुधाना दशास्यं वक्ष्यमाणं प्रोचुः। किं कुर्वन्तः? बाहून् स्कन्धान् वक्षःस्थलानि धनूंषि खड्गान् गदाः शूलानि च परामृशन्तः स्पृशन्तः प्रथिताभिमानाः प्रकाशिताहङ्काराः॥ १६

অনুবাদ। প্রহস্ত প্রভৃতি রাক্ষসেরা অভিমান প্রকাশ করিয়া বাহু স্কন্ধ বক্ষঃস্থল ধনুক খড়্গ গদা এবং শূলাস্ত্র স্পর্শ করিয়া দশাননকে বলিল। ১৬

**अखण्ड्यमानं परिखण्ड्य शक्रं**
**त्वं पण्डितम्मन्यमुदीर्णदण्डः।**
**नराभियोगं नृभुजां प्रधानः [न]**
**मन्त्रोन्मुखः किं नयसे गुरुत्वम्॥ १७**

अन्वयः। (हे स्वामिन्!) उदीर्णदण्डः नृभुजां प्रधानः त्वं अखण्ड्यमानं पण्डितम्मन्यं शक्रं परिखण्ड्य मन्त्रोन्मुखः (सन्) नराभियोगं किं गुरुत्वं नयसे?॥ १७

मल्लिनाथः। अखण्ड्येति। हे स्वामिन्! उदीर्णदण्ड उदग्रशासनो नृभुजां नराशिनां प्रधानः प्रधानभूतस्त्वमखण्ड्यमानमच्छेद्याहङ्कारं पण्डितम्मन्यं रणपण्डितमानिनं शक्रं परिखण्ड्य मन्त्रोन्मुखो विचारप्रवणः सन् नराभियोगं मानुषविग्रहं किं किमर्थं गुरुत्वमाधिक्यं नयसे प्रापयसि। इन्द्रजयिनस्ते कियानयं नराधम इति भावः। अधमगुरुकरणफलस्य लाघवस्य कर्तृगामित्वान्नयतेः कर्त्रभिप्राये तङ्॥ १७

भरतः। किं प्रोचुरित्याह—अखण्ड्येत्यादि। हे नृभुजां राक्षसानां प्रधान! अखण्ड्यमानं परैरनभिभवनीयमात्मानं पण्डित मन्यमानं, नान्यः पण्डितोऽस्तीति साहङ्कारं शक्रमपि परिखण्ड्य जित्वा त्वम् उदीर्णदण्डो महाबलोऽपि स्वमन्त्रोन्मुखः सन् मन्त्रणां कुर्वन् नरस्याभियोगं युद्धं गुरुत्वं कथं नयसे प्रापयसि। अनन्तरं भूत यदत्र युक्तमिति वचनेऽत्र गौरवप्रसङ्गात् "मन्यात् स्वार्थे" इति खश्। "दण्डो यमे मानभेदे लगुडे दमसैन्ययोः। व्यूहभेदे प्रकाण्डेऽश्वे कोणस्याश्वीरपि स्मृतः॥ अभिमानायहे दण्डसर्पकाषयोः पारिपार्श्विके" इति। "प्रधानं स्यान्महामात्रे प्रकृतौ परमात्मनि। प्रज्ञायाञ्च प्रधानं स्यादेकत्वे च मदेव तु" इति च विश्वः। प्रधाना हरितागजा इति प्रयोगात् पुंलिङ्गोऽपि प्रधानशब्दः इति श्रीपतिः॥ १७

অনুবাদ। প্রভো! আপনি মহাবল-পরাক্রান্ত রাক্ষসের মধ্যে প্রধান। যাঁহার অহঙ্কার কেহ খণ্ডন করিতে পারে না এবং যে নিজেকেই রণপণ্ডিত মনে করে, সেই ইন্দ্রকে জয় করিয়া মন্ত্রণার অধীনভাবে এই সামান্য মানুষের সহিত যুদ্ধ করা এত গুরুতর মনে করিতেছেন কেন?।১৭

निर्यत्स्फुलिङ्गाकुलधूमराशिं
किं ब्रूहि भूमौ पिनषाम भानुम् ।
आ दन्तनिष्पीड़ितपीतमिन्दुं
ष्ठीवाम शुष्केक्षुलतास्थिकल्पम् ॥ १८

अन्वयः । निर्यत्स्फुलिङ्गाकुलधूमराशिं भानुं भूमौ पिनषाम किं—आः दन्तनिष्पीड़ितपीत (अत एव) शुष्केक्षुलतास्थिकल्पं इन्दुं ष्ठीवाम (किं ब्रूहि) ॥ १८

मल्लिनाथः । निर्यदिति । निर्यद्भिः स्फुलिङ्गैराकुलो धूमराशिर्यस्य तं भानुं भूमौ पिनषाम चूर्णयाम किम् । पिषेः संप्रश्ने लोट् । "रुधादिभ्यः श्नम्" । "आडुत्तमस्य पिच्च" । 'आः' इति कोपे । 'आस्तु स्यात्कोपपीड़योः' इत्यमरः । दन्तनिष्पीड़ितश्चासौ पीतश्च, पूर्वकालसमासः । तमत एव शुष्केक्षुलतास्थिकल्पं शुष्केक्षुकाण्डकल्पप्रायमिन्दुं ष्ठीवाम निःसारं कृत्वोद्गिराम किं—ब्रूहि ? यथोक्तं करवामेत्यर्थः । मनुष्यमारणं तु कियदिति भावः ॥ १८

भरतः । निर्यदित्यादि । आस्तां तावन्नराभियोगः ब्रूहि आदिश किं भूमौ भानुं पिनषाम चूर्णयाम, धौ पिषल्ट चूर्णने "विधिनिमन्त्रण" इत्यादिना संप्रश्ने लौ । कीदृशं भानुं ? निर्यता निर्गच्छता स्फुलिङ्गेन आकुलो धूमराशिर्यस्य, आः, किं वा इन्दुं ष्ठीवाम "ष्ठिवुक्लमाचमः" इति दीर्घः भ्वादादिषा इत्यादौ ष्ठिववर्जनात् न दन्त्यसकारत्वम् । कीदृशम् इन्दुं ? पूर्वं दन्तैर्निष्पीड़ितं पश्चात्पीतं सुधापानात् नीरसमिक्षुयष्टेर्यदस्थि दृढभागस्तत्तुल्यं, आ इत्यथ विकल्पे वर्त्तते इति जयमङ्गला । 'आस्तु स्यात् कोपपीड़यो'रित्यमरः । आ सम्यक् दन्तैर्निष्पीड़ितमिति केचित् ॥ १८

অনুবাদ। সামান্য মানুষ রামের সহিত যুদ্ধের কথা ছাড়িয়া দাও, বলুন ; যাহার স্ফুলিঙ্গ বাহির হইয়া ধূমকে আকুল করে, ঐ সূর্য্যকে ভূতলে ফেলিয়া চূর্ণ করিব কি ? অথবা চন্দ্রকে দন্ত দ্বারা নিষ্পেষিত এবং তাহার রসটুকু পান করিয়া শুষ্ক ইক্ষুদণ্ডের নীরস অংশের ন্যায় থু থু করিয়া ফেলিয়া দিব কি ? । ১৮

सराघवैः किं बत वानरैस्तै-
र्यैः प्रातराशोऽपि न कस्यचिन्नः ।
सस्थाणुकैलासधराभिधस्त्व
किं वीरधीऽस्तु चितिरन्तरीक्षम्[चिं] ॥ १९

अन्वयः । सराघवैः तैः वानरैः किं बत यैः नः (मध्ये) कस्यचित् प्रातःराशः न

किन्तु ) हे सस्थाणुकैलासधर ! किं द्यौः अन्तरीक्षं अधः अस्तु, क्षितिर्वा अन्तरीक्षमस्तु अभिधत्स्व ॥ १९

मल्लिनाथः। सराघवैरिति। सराघवैः सरामलक्ष्मणैस्तैर्वानरैः किं ? वतेति खेदे। यैर्नोऽस्माकं मध्ये कस्यचिदेकस्यापि प्रातराशः प्रातर्भोजनमपि न, किं तैरित्यर्थः। किन्तु सस्थानोः सेश्वरस्य कैलासस्य धरतीति धर उद्धर्त्ता। पचाद्यच्। तस्य संबुद्धिः हे सस्थाणुकैलासधर ! किं द्यौरन्तरीक्षमधोऽस्तु क्षितिर्वान्तारिक्षमस्तु। अभिधत्स्व वद। द्यावापृथिव्योर्विपर्यासे शक्तास्ते भटाः, का कथा नराधमे। अत्र राक्षसानां द्यावापृथिव्योर्विपर्य्यासेनासंबन्धेऽपि संबन्धोक्तेरतिशयोक्तिः ॥ १९

भरतः। सराघवैरित्यादि। हे सस्थाणुकैलासधर ! नोऽस्माकं मध्ये कस्यचिदेकस्यापि यैर्वानरैः राघवाभ्यां सहितैः प्रातराशः प्रातर्भोजनमपि न भवति, तैः किङ्कर्त्तव्यमवगत्येति शेषः। वतेति खेदे आमन्त्रणे वा। अतोऽभिधत्स्व आदिश—किं द्यौः आकाशं स्वर्गो वा अधो भवतु क्षितिरन्तरीक्षे उपरिष्टादस्तु, तत्रैव कर्म्मणि सर्वे वयं भवन्नियोगानुमृषिताः, नतल्पकार्य्ये रामादिवधे इति भावः। प्रलयेऽपि तिष्ठतीति स्थाणुः शिवः, "नाम्न्यन्ये" इति मूर्द्धन्यणप्रत्ययः, तेन सह वर्त्तमानं कैलासपर्वतं धरतीति पचादित्वादन्, त्वमद्भुतकर्म्मणि किं रामभिया मन्त्रणां करोषीति भावः। अन्तरीत्यनेन जगदन्निन्निति अन्तरीक्षं छन्दसि हृस्वे कारमिति सर्वधरः शब्दभेदे त्वन्तरीक्षमिति द्वयमुक्तम् ॥ १९

অনুবাদ। হায়! যাহাদের দ্বারা আমাদের এক জনেরও প্রাতঃকালীন জলযোগ হইতে পারে না, সেই রাম-লক্ষ্মণ সহ বানরেরা কি করিতে পারে? আপনি শঙ্করের সহিত কৈলাসপর্ব্বতকেও উত্তোলন করিয়াছেন; অতএব বলুন, স্বর্গ ভূতলে পরিণত হইবে, না ভূতল স্বর্গে পরিণত হইবে ? ॥ ১৯

चापल्ययुक्तस्य कपेः [हरेः] कृशानुः
समेधितो वालधिभाक् त्वदीयैः।
शस्त्रेण वध्यस्य गलन्नधाक्षी-
द्राजन् प्रमादेन निजेन लङ्काम् ॥ २०

अन्वयः। चापल्ययुक्तस्य शस्त्रेण वध्यस्य कपेः वालधिभाक् त्वदीयैः (जनैः) समेधितः कृशानुः गलन् हे राजन् ! निजेन प्रमादेन लङ्कां अधाक्षीत् ॥ २०

मल्लिनाथः। ईदृग्वीरैर्लङ्कादाहे किं कृतमित्याशङ्क्य स तु प्रामादिको न लाघवायेति प्रलपन्ति—चापल्येति। चापल्ययुक्तस्य चापलयुक्तस्य। ब्राह्मणादिपाठात् ष्यञ् युवादिपाठादण् च।

चपलत्वाच्छ्लेषेण वध्यस्य कपेर्वालधिभाक् पुच्छगतस्त्वदीयैर्जनैर्मूढैः समिध्य नः संदीपितः क्रशानुरग्निर्गलन् पुच्छादधः चरन्, हे राजन्! निजेनात्मीयेन प्रमादेन लङ्कामधाक्षीत् ददाह। दहतेर्लुङि सिचि हलन्तलक्षणा वृद्धिः। "हो ढः"। "षढोः कः सि" ॥ २०

भरतः। लङ्कादाहोऽप्यस्माकमनवधानादेव न तु शत्रुसामर्थ्यादिति सूचयितुमिदमुच्यते—चापल्येत्यादि। हे राजन्! तव निजेनात्मीयेन प्रमादेनानवधानेन कृशानुरग्निर्लङ्कामधाक्षीत् दग्धवान्। कीदृशः कृशानुः? हरेर्मर्कटस्य वालधिभाक् पुच्छमाश्रितः त्वदीयैर्भृत्यैः स्वयमेधितसैलवस्त्रादिभिर्दीपितः गलन् हरेः गृहात् गृहान्तरगमनेन पतन्, हरेः कीदृशस्य? चापल्ययुक्तस्य चपलतया युक्तस्य श्लेषेण वध्यस्य वधार्हस्य चपलस्य वध्यस्य वधमकृत्वा पुच्छे अग्निदानादेव एवं तव प्रमादः। चपलस्य भावश्चापल्यं "विकारसङ्घ" इति ष्यञ्, दहेरनिट्त्वात् "व्रजवद" इत्यादिना व्यां सौ वृद्धिः ॥ २०

अनुवाद। महाराज! निजेर असावधानतावशतःई आपनार भृत्यराई अन्न-वध्य वानरेर पुच्छ अग्नि ज्वालाइया दियाछिल, वानरजाति स्वभावतः चञ्चल एइ जन्य लम्फ प्रदान कराते‌ई सेइ अग्नि निर्गत हइया लङ्का दग्ध करियाछे। २०

अथाञ्चितोरस्कमुदीर्णदृष्टिः
कृत्वा विवक्षाप्रवणं शरीरम्।
विवृत्तपाणिर्विहितोत्तरार्थं
विभीषणोऽभाषत यातुधानान् ॥ २१

अन्वयः। अथ विभीषणः अञ्चितोरस्कं शरीरं विवक्षाप्रवणं विहितोत्तरार्थं च कृत्वा उदीर्णदृष्टिः विवृत्तपाणिः (च) (सन्) यातुधानान् अभाषत ॥ २१

मल्लिनाथः। अथेति। अथ विभीषणोऽञ्चितोरस्कं रम्योरस्कम्। "अञ्चेः पूजायाम्" इतीडागमः। "नाञ्चेः पूजायाम्" इत्यनुनासिकलोपप्रतिषेधः। "उरःप्रभृतिभ्यः कप्"। शरीरं विवक्षया वक्तुमिच्छया प्रवणं श्रोतृजनोन्मुखं विहितोत्तरार्द्धं विस्तारितोत्तरकायं च कृत्वा उदीर्णदृष्टिरुदञ्चितदृष्टिर्विवृत्तपाणिस्तदभिमुखीकृतपाणिश्च सन् यातुधानान् प्रहस्तादीनभाषत ॥ २१

भरतः। अथेत्यादि। प्रहस्तादिवचनानन्तरं विभीषणो विहितोत्तरार्थं यथा स्यात्तथा यातुधानान् अभाषत वक्ष्यमाणप्रकारेणोक्तवान्। किं कृत्वा? शरीरं देहं विवक्षाप्रवणं वक्तुमिच्छया अभिमुखं कृत्वा शरीरसौष्ठवमुत्पाद्येत्यर्थः। शरीरं कीदृशम्? अञ्चितोरस्कं विन्यस्तहारत्वात् पूजितवक्षः, "सुधवसपूजार्थाश्च:" इति इम् "नेदित् पूजार्थाञ्चेः" इति नलोपाभावः। अञ्चित विस्तारितम् उरो यत्रेति आम्नातं क इति केचित्, पुंवत्कर्मधारयपुंस्क इति

ग्राहकात् यद्यतोऽन्यस्मादपि बहुव्रीहौ क्वचित् कः स्यादिति गम्यते तेनात्र कः, स्वार्थे क इत्यन्ये। "उरःप्रभृतिभ्यो बहुव्रीहौ नित्यं कः" इति परसूत्रम्। विभीषणः कीदृशः? उदीर्णदृष्टिः प्रहस्तादीनाम् अभिमुखं दत्तदृष्टिर्विस्तृतपाणिः तदभिमुखीकृतदक्षिणपाणिः, विहितः प्रतिषिद्धः उत्तरस्य प्रतिवाक्यस्यार्थो येन भाषणेन॥ २१

অনুবাদ। প্রহস্তাদির কথা শেষ হইলে বিস্ফারিতদৃষ্টি বিভীষণ সুশোভিত রম্য অঙ্কযুক্ত দেহোত্তরার্দ্ধভাগ বাক্যার্থপ্রকাশপ্রবণ করিয়া এবং ঊর্দ্ধদৃষ্টিতে শ্রোতৃবর্গের সম্মুখে দক্ষিণ হস্ত প্রসারিত করিয়া প্রহস্তাদি রাক্ষসদিগকে বলিতে লাগিলেন। ২১

**युद्धाय राज्ञा सुभृतैर्भवद्भिः**
**सम्भावनायाः सदृशं यदुक्तम्।**
**तत्प्राणपण्यैर्वचनीयमेव**
**प्रज्ञा तु मन्त्रेऽधिकृता न शौर्य्यम्॥ २२**

अन्वयः। राज्ञा युद्धाय सुभृतैः भवद्भिः यदुक्तं (तत्) सम्भावनायाः सदृशं, प्राणपण्यैः तत् वचनीयम् एव, तु मन्त्रे प्रज्ञा अधिकृता, न शौर्य्यम्॥ २२

मल्लिनाथः। युद्धायेति। राज्ञा युद्धाय युद्धार्थमेव सुभृतैः सुष्ठुपुष्टैर्भवद्भिर्यदुक्तं—'भूमौ पिनषाम भानुमित्यादि' तत्सम्भावनायाः स्वामिकृतसम्मानस्य सदृशमनुरूपम्। प्राणा एव पण्यं येषां तैः प्राणविक्रेतृभिस्तद्वाक्यं वचनीयमेव, वीरधर्मत्वादिति भावः। किन्तु मन्त्रे स्वामिपृष्टे कार्य्यविचारे प्रज्ञा बुद्धिरधिकृता नियुक्ता, न शौर्यम्। कार्योपदेशस्यायमवसरो न शूरालापानामित्यर्थः॥ २२

भरतः। युद्धायेत्यादि। राज्ञा युद्धार्थमेव सुभृतैः परिपुष्टैर्भवद्भिः सम्भावनाया अध्यवसायस्य सदृशं योग्यं यदुक्तं—पिनषाम भानुमित्यादिकं, तद्वचनीयमेव वचनयोग्यमेव; यतः प्राणा एव पण्या राजकर्त्तृकेन भरणेन विक्रेया येषां तैः, किन्त्विदं वचनं मन्त्रेन प्रयुज्यते, यतः प्रज्ञा बुद्धिर्मन्त्रेऽधिकृता न तु शौर्य्यम्॥ २२

অনুবাদ। রাজা যুদ্ধের জন্যই তোমাদের ভরণ-পোষণ করেন, তোমরা যাহা বলিলে তাহা প্রভুসম্মানের অনুরূপ সত্য। যাহারা প্রাণ বিক্রয় করে, বীরধর্ম্ম অনুসারে তাহাদের তাহা বলাও উচিত। কিন্তু মন্ত্রণা জিজ্ঞাসা করিলে বুদ্ধির প্রয়োজন; বীরত্ব নিষ্প্রয়োজন।২২

**यस्यापि यत्नाहृतमन्त्रशक्ति-**
**र्गुरुत्वमायाति नराभियोगः।**
**यथोक्तकेन्द्रस्य कृतान्तरोऽस्मिन्**
**विध्वंसिताशेषपुरो हनूमान्॥ २३**

अन्वयः। यत्रापि वशीकृतेन्द्रस्य यत्नाहृतमन्त्रवृत्तिः नराभियोगः गुरुत्वं आयाति, (इत्यस्मिन्नर्थे) विध्वंसिताशेषपुरी हनूमान् एव कृतोत्तरः॥ २३

मल्लिनाथः। यत्रेति। यत्राप्युक्तं वशीकृतेन्द्रस्य निर्जितशक्रस्य राज्ञो यत्नाहृता मन्त्रवृत्तिर्यस्य स यत्नेन विचार्यमाणो नराभियोगो नरप्रातिपक्ष्यं गुरुत्वमायाति इत्यस्मिन्नर्थे विध्वंसिताशेषपुरो मोटितलङ्कानगरो हनूमानेव कृतोत्तरो दत्तोत्तरः। नराभियोगस्य गुरुत्वं तद्भृत्यभृत्येन हनूमतैवोक्तमित्यर्थः॥ २३

भरतः। नराभियोग किं नयसि गुरुत्वमित्यवेदमुत्तरम्—यत्रेत्यादि। वशीकृतेन्द्रस्य निर्जितशक्रस्य रावणस्य यत्नेन आहृता मन्त्रवृत्तिर्यत्र तादृशो नराभियोगो गुरुत्वमायातीति यत्रोक्तम् अस्मिन् वस्तुनि हनूमानेव कृतोत्तरः दत्तप्रतिवाक्यः, यतो विध्वंसितमशेष पुरं येन, यस्य दूतमात्रेणैवं कृतं, तस्य नराभियोगः कथं लघुः स्यादतस्तत्र मन्त्रणा युक्तैव॥ २३

अनुवाद। তোমরা আরও যে বলিলে ইন্দ্রজেতা মহারাজের মন্ত্রণার অবধারিত মনুষ্য-বৈরিতার গুরুত্বে পরিণত করা হইয়াছে, রামের দাসানুদাস হনুমানই সমস্ত লঙ্কাটা বিধ্বস্ত করিয়া তাহার উত্তর দিয়াছে। ২৩

अग्निः प्रमादेन ददाह लङ्कां
वध्यस्य देहे स्वयमेधितश्चेत्।
विमृश्य तद्दैवधियाभिधद्ध्वं [त्स्व]
ब्रह्मास्त्रबन्धोऽपि यदि प्रमादः॥ २४

अन्वयः। वध्यस्य देहे स्वयमेधितः अग्निः प्रमादेन लङ्कां ददाह चेत्, (अस्तु), ब्रह्मास्त्रबन्धः अपि प्रमादः यदि तद्दैवधिया विमृश्य अभिधद्ध्वम्॥ २४

मल्लिनाथः। प्रामादिको लङ्कादाह इत्यत्रोत्तरमाह—अग्निरिति। वध्यस्य वधार्हस्य कपेर्देहे देहैकदेशे पुच्छे स्वयमेधितोऽस्मदीयैरेव दीपितोऽग्निः प्रमादेन लङ्कां ददाह चेत्? अस्तु। ब्रह्मास्त्रस्य बन्धः प्रतिबन्धो विश्लेष इति यावत्। सोऽपि प्रामादिको यदि तद्दैवधिया मध्यस्थबुद्ध्या विमृश्याभिधद्ध्वं ब्रूत। अतः प्रमादवचनं प्रलाप इति भावः। दधातेर्लोटि तङि ध्वमि "श्नाभ्यस्तयोरातः" इत्याल्लोपः। "दधस्तथोश्च" इत्यभ्यासस्य भष्भावः॥ २४

भरतः। अग्निरित्यादि। निजेन प्रमादेन कृशानुर्लङ्कामधाक्षीदित्यत्रोत्तरं—वध्यस्य वधार्हस्य कपेर्देहे स्वयमेधितो दीपितोऽग्निर्लङ्कां प्रमादेन ददाहेति चेत् यदि तदा यदि ब्रह्मास्त्रबन्धोऽपि प्रमादोऽनवधानकृतो भवति तद्दैवधिया दैवानां सात्त्विकत्वान्निर्मला तत्त्वग्राहिणी या बुद्धिस्तादृशधिया विमृश्य निरूप्य अभिधत्स्व ब्रूहि। दैवेति पृथक् पदं रावण-

सम्बोधनं वा, यदि च शत्रुप्राज्ञवस्मो न प्रमादः तदा अग्निं दत्त्वा शत्रुप्राज्ञवन्धस्य स्थापितत्वात् कुतोऽग्निदानप्रमादो येन च स्वयमेव माहशबन्धनं खण्डितं तस्य किमशक्यं कुतो वा भयः स्यादिति भावः। डुधाञ्जि धारणे पुष्टौ दाने अभिपूर्वो भाषणार्थः "स्नादौ रःखि"इति रत्वं "खर्भ्भभखध" इति खेदत्वं "स्नादौः स्थाल्लोपः "झभाभ्ख्य" इति खेधत्वं "झपझसौ" इति तः अभिधत्तेति पाठे धीदधोऽन्त्यलोपे तथि॥ २४

অনুবাদ। বধাবানরের পুচ্ছে আমাদের কর্মচারীরাই অগ্নি প্রজ্বালিত করিয়াছিল, আমাদের অসাবধানতায় সেই অগ্নি লঙ্কাদগ্ধ করিয়াছে, তাহাই যদি হয় হউক, তবে তোমাদের নির্ম্মল বুদ্ধিতে বিবেচনা করিয়া বল, যে ব্রহ্মাস্ত্র-বন্ধন শিথিল করাও অসাবধানতায়ই ঘটিয়াছিল। ২৪

**जगन्त्यमेयाद्भुतभावभाञ्जि**
**जिताभिमानाश्च जना विचित्राः।**
**कार्यं तु यत्नं कुरुत प्रकृष्टं**
**मा नीतिगर्भान् सुधियोऽवमन्ध्वम्॥ २५**

अन्वयः। जगन्ति अमेयाद्भुतभावभाञ्जि जनाः जिताभिमानाः विचित्राः (तत्रापि) कार्य्ये प्रकृष्टं यत्नं कुरुत. नीतिगर्भान् सुधियः मावमन्ध्वम्॥ २५

मल्लिनाथः। न च नरवानरेषु अनास्था युक्तेत्याह—जगन्तीति। जगन्ति लोका अमेयानपरिमितानद्भुतांश्च भावान् पदार्थान् भजन्तीति तद्भाञ्जि। जनास्तत्रत्याः प्राणिनश्च जिताभिमानाः परिखण्डिताहङ्कारा विचित्रा विचित्रप्रकृतयश्च जिता जेतारश्च सन्तीत्यर्थः। अतो जयपराजयौ अनियतावौ न जातितन्त्राविति भावः। तत्रापि कार्य्येऽनन्तरकृत्ये प्रकृष्टं यत्नं कुरुत। नीतिगर्भान् नीतिपुरःसरान् सुधियो धीरान् मा वमन्ध्व नावजानीध्वम्। सर्वत्र बलाबलचिन्ता कार्य्या,न जातिमात्रादवमन्तव्या इति भावः। मन्यतेर्लुङि तङि ध्वमि माङ्योगादड़भावः। सिचोऽकित्त्वान्नानुनासिकलोपः। "धि च" इति सलोपः॥ २५

भरतः। पराभियोगः सर्वथा निरूपणीय इति दर्शयितुमिदमुच्यते—जगन्तीत्यादि। जगन्ति भुवनानि अमेयानसंख्यान् अद्भुतानाश्चर्य्यान् भावान् भजन्ति, तत्रत्याश्च जना अपि विचित्राः प्रतिदेशकालवशान्नानाविधा जिताभिमानाश्च भवन्ति, अन्यैरुत्कृष्टैर्जनैर्जितोऽभिमानोऽहङ्कारो येषां ते तथा तस्मादभिमानो न कर्त्तव्य इति कार्य्येषु प्रकृष्टमुत्तमं यत्नं कुरुत, तेनैव कार्य्यं सिध्यति न ववज्ञया। नीतिरेव गर्भोऽन्तर्गतो येषां तान्, अत एव सुधियः पण्डितान् मा अवमन्ध्वं तदवज्ञां न कुरुत। "समेर्वे सिलोपो वा" इति सिलोपे "वनतनादिनाम्" इति नकारलोपः॥ २५

অনুবাদ। জগতে অসীম আশ্চর্য্য পদার্থ আছে, এ জগতের প্রাণিগণের (তোমাদের ন্যায়) অহঙ্কার নাই এবং তাহারা আশ্চর্য্য শক্তিসম্পন্ন। তোমরা কর্ত্তব্যবিষয়ে উপযুক্ত যত্ন কর, নীতিতত্ত্বজ্ঞ সুধীগণের অবমাননা করিও না। ২৫

वृद्धिक्षयस्थानगतामजस्रं

वृत्तिं जिगीषुः प्रसमीक्षमाणः।

घटेत सन्ध्यादिषु यो गुणेषु

लक्ष्मीर्न तं मुञ्चति चञ्चलापि॥ २६

अन्वयः। यः जिगीषुः वृद्धिक्षयस्थानगतां वृत्तिं अजस्रं प्रसमीक्षमाणः सन्ध्यादिषु गुणेषु घटेत, तं चञ्चलापि लक्ष्मीः न मुञ्चति॥ २६

मल्लिनाथः। सम्प्रति नीतिमुपदिशति—वृद्धीति। यो विजिगीषुर्विजेतुमिच्छुः पञ्चाङ्गसम्पन्नो राजा वृद्धिक्षयस्थानानि स्वस्य परेषाञ्च उपचयापचयसाम्यावस्थास्तद्गतां वृत्तिं तेषां प्रवृत्तिमजस्रं नित्यं प्रसमीक्षमाणः परामृशन् सन्ध्यादिषु गुणेषु घटेत षाड्गुण्यं प्रयुञ्जीत, तं विजिगीषुं चञ्चलापि लक्ष्मीर्न मुञ्चति॥ २६

भरतः। नीतिरेव कीदृशीत्यपेक्षायामिदमुच्यते—वृद्धीत्यादि। यो जिगीषुः 'सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः' इति षड्गुणा एषु घटेत चेष्टेत तं लक्ष्मीश्चञ्चलापि न मुञ्चति गुणवत्त्वात् चञ्चलशब्दो रूढः। जिगीषुः कीदृशः? अजस्रं सततं वृद्धिक्षयस्थानगतां तत्सम्बन्धिनीमात्मनः परस्य च वृत्तिं प्रसमीक्षमाणः विचारयन् वृद्धिर्वर्द्धनं कोषादेः, क्षयोऽपचयः परकोषादेः, स्थानं स्थितिर्निवदुर्गवणिक्पथादेः॥ २६

অনুবাদ। যিনি শত্রু জয় করিতে অভিলাষী, তিনি নিজের এবং শত্রুপক্ষের বৃদ্ধি, ক্ষয় ও সাম্য এই অবস্থাত্রয় বিচার করিয়া সন্ধিবিগ্রহাদি পরিচালন করিতে পারেন; চঞ্চলা হইয়াও জয়লক্ষ্মী তাঁহার নিকটে অচঞ্চলভাবে বিরাজ করেন। ২৬

उपेक्षणीयैव परस्य वृद्धिः

प्रनष्टनीतेरजितेन्द्रियस्य।

मदादियुक्तस्य विरागहेतुः

समूलघातं विनिहन्ति याऽन्ते॥ २७

अन्वयः। प्रनष्टनीतेः अजितेन्द्रियस्य (अत एव) मदादियुक्तस्य परस्य वृद्धिः उपेक्षणीया, विरागहेतुः या अन्ते समूलघातं विनिहन्ति॥ २७

मल्लिनाथः। सम्प्रति वृद्ध्यादिप्रतीक्षाप्रकारमेवाह—उपेक्षणीयेति। प्रनष्टनीतेः उत्पथप्रवृत्तेः अजितेन्द्रियस्य इन्द्रियपरतन्त्रस्य

तन्त्रस्य अत एव मदादियुक्तस्य पानादिव्यसनासक्तस्येत्यर्थः । ईदृशस्य शत्रोर्वृद्धिरुपेक्षणीया, प्रतीकारप्रयासो न कार्य्य इत्यर्थः । कुतः अपरागहेतुर्विशङ्कटत्वाज्जनापरागमूलं या वृद्धिरन्ते ईषत्कालापगमं समूलं हत्वा समूलघातं हन्ति निर्मूलयतीत्यर्थः । "समूलाकृतजीवेषु हन्कृञ्ग्रहः" इति हन्तेर्णमुल् प्रत्यये "कषादिषु यथाविध्यनुप्रयोगः" । अत्र मनुः—"व्यसनस्य च मृत्योश्च कष्टं व्यसनमुच्यते । व्यसन्यधोऽधो व्रजति स्वर्यात्यव्यसनी मृतः ॥" इति ॥ २७

भरतः । वृद्ध्यादिगतां वृत्तिमेव निरूपयितुमिदमुच्यते—उपेक्षणीयेत्यादि । अजितेन्द्रियस्य अत एव प्रनष्टनीतेर्मदादियुक्तस्य षड्‌रिपुवश्यस्य परस्य वृद्धिरुपेक्षणीयैव, यतः सा विरागहेतुः सर्वस्यैव लोकस्य वैमुख्यकारणं, या वृद्धिरन्ते अवसाने समूलघातं विनिहन्ति समूलं नाशयति तव वृद्धिः समूलं विनिहन्ति सर्वेषां विरागहेतुत्वादजितेन्द्रियत्वाद्दोषवत्त्वाच्च इति सूचितम् ॥ २७

অনুবাদ । নীতিপথভ্রষ্ট ইন্দ্রিয়পরায়ণ সুরাপানাদি ব্যসনাসক্ত শত্রুর উন্নতি উপেক্ষণীয় ( তাহার প্রতীকার চেষ্টা করা উচিত নহে )কারণ লোকবিরাগের মূল স্বরূপ যে বৃদ্ধি, কিছুদিন পরেই সেই বৃদ্ধি তাহাকে সমূলে নিধন করে । ২৭

जनानुरागेण युतोऽवसादः
फलानुबन्धः सुधियात्मनोऽपि ।
उपेक्षणीयोऽभ्युपगम्य सन्धिं
कामादिषड्‌वर्गजिताधिपेन ॥ २८

अन्वयः । कामादिषड्‌वर्गजिता सुधिया अधिपेन जनानुरागेण युतः ( अत एव ) फलानुबन्धः आत्मनः अवसादः अपि सन्धिं अभ्युपगम्य उपेक्षणीयः ॥ २८

मल्लिनाथ. । व्यसनावसक्तस्य शत्रोर्वृद्धिरुपेक्षणीयेत्युक्तमेवमव्यसनिनः स्वस्य क्षयोऽप्युपेक्षणीय इत्याह—जनेति । कामादिषड्वर्गजिता जितारिषड्वर्गेण । जयतेः 'सत्—" आदिना क्विप् । सुधिया बुद्धिसंपन्नेनाधिपेन विजिगीषुणा राज्ञा जनानुरागेण युतो जनानुरागसंभिन्नः अत एव फलेनानुबन्धः संबन्धो यस्य सः स्वस्य आत्मनोऽवसादः क्षयोऽपि सन्धिमभ्युपगम्य आ समयलाभात् परं

संधावोपेक्षणीयः। असंधाने स्वयं क्षीणः परेणाभियुज्यते इति भावः॥ २८

भरतः। अनेत्यादि। अधिपेन राज्ञा कामम्‌ीऽप्यस्मादः अयः उपेक्षणीयः। किं कृत्वा? संधिमभ्युपगम्य मनुया सन्धिमनुकूला अन्यथा क्षीणोऽयमिति परेणाभियुक्तः स्यात्। अत्रमादः कीदृशः? जनानामनुरागेण युती बद्धोऽनुरक्तप्रकृतिमण्डलत्वात् फलानुबन्धः फलं याऽनुबध्नातीति ढात्‌णम्। कीदृशेनाधिपेन? कामादीनां षण्णां वर्गं जितवता अत एव सुधिया नीतिज्ञेन 'कामक्रोधौ लोभमोहौ मदईर्ष्यो इतीह षड्'ति षड्वर्गस्तं जयतीति कर्त्तरि क्विप्॥ २८

অনুবাদ। যিনি ষড়্‌রিপুজয়ী, সুবুদ্ধি এবং জিগীষু, সেই রাজার লোকানুরাগসম্পন্ন ফলবর্দ্ধনে অনুমানযোগ্য শুভ পরিণামের জন্য নিজের ক্ষয়কে কিছুদিনের জন্য সন্ধিবন্ধনে আবদ্ধ হইয়া উপেক্ষা করা উচিত। ২৮

यदा विगृह्णन्न च संदधानो
वृद्धिं क्षयं चानुगुणं प्रपश्येत्।
आसीत राजावसरप्रतीक्ष-
स्तदा प्रयासं वितथं न कुर्यात्॥ २९

अन्वयः। यदा विगृह्णन् (उत) संदधानः वृद्धिं अनुगणं क्षयं (वा) न प्रपश्येत्, तदा राजा अवसरप्रतीक्षः (सन्) आसीत; वितथं प्रयासं न कुर्यात्॥ २९

मल्लिनाथः। यदा सन्धौ विग्रहे वा फलं न दृश्यते तदा विजिगीषुरासनमाश्रयेदित्याह—यदेति। यदा विजिगीषुर्विगृह्णन् परं विरुन्धान उत संदधानः स्निह्यन् वा वृद्धिमात्मन उच्छ्रयमनुगुणमात्मनोऽनुकूलं क्षयं परस्य नाशं वा न पश्येत्तदा राजा विजिगीषुर्नृपोऽवसरं कार्य्यकालं प्रतीक्षत इत्यवसरप्रतीक्षः सन्। "कर्म्मण्यण्"। आसीत न कस्यापि सन्दध्यात् किंतूदासीत, वितथं व्यर्थं प्रयासं न कुर्यात्, करणे वा स्वयमेव क्षीयेतेति भावः॥ २९

भरतः। यदेत्यादि। यदा राजा विगृह्णन् विग्रहं कुर्वन् सन्दधानः सन्धिं कुर्वाणोऽपि अनुगुणामनुकूलामात्मनो वृद्धिं न पश्येत् न चानुगुणमनुकूलं परस्य क्षयं पश्येत् तदा आसीत आसनं कुर्य्यात्, जिज्ञासक उपवेशे विधौ लङ्। अवसरप्रतीक्षः अवसरं वृद्धियोग्यकालं प्रतीक्षमाण इति "कर्मण्याचरिष्यो णः" इति परसूत्रेण णः। ऋणते पचादित्वादन्। किं वा अवसरे प्रतीक्षा यस्येति समासः। वितथं निष्प्रयोजनं प्रयासं सन्धिविग्रहोद्यमं न कुर्यात्॥ २९

অনুবাদ। যখন বিজিগীষু রাজা শত্রুর সহিত বিগ্রহ বা সন্ধি করিয়াও নিজের অনুকূল বৃদ্ধি কিংবা শত্রুর ক্ষয় দেখিতে না পান, তখন সেই বৃদ্ধি অবসর-প্রতীক্ষা করিয়া ঔদাসিন্য নীতি অবলম্বন করিবেন। বিফল প্রয়াস করিবেন না। ২৯

सन्धौ स्थितो वा जनयेत् स्ववृद्धिं
हन्यात्परं वोपनिषत्प्रयोगैः।
आश्रावयेदस्य जनं च[प]रैर्वा
विग्राह्य कुर्यादवहीनसन्धिम् ॥ ३०

अन्वयः। वा (अथवा) सन्धौ स्थितः स्ववृद्धिं जनयेत्, परं उपनिषत्प्रयोगैः हन्यात्, अस्य जनं चरैः आश्रावयेत् वा विग्राह्य अवहीनसन्धिं कुर्यात् ॥ ३०

मल्लिनाथः। तस्यैव पक्षान्तरमाह—संधाविति। अथवा संधौ स्थितः संधिं कृत्वा वृद्धिं जनयेत् संपादयेत्। वृद्धः परं साधयेदित्यर्थः। परं शत्रुमुपनिषत्प्रयोगै रहस्योपायैर्विषशस्त्रादिभिर्हन्यात्। अस्य शत्रोर्जनममात्यादिकं चरैर्गूढपुरुषैराश्रावयेत् दानमानादिना प्रलोभ्य निर्गमयेद्वा अथवा विग्राह्य प्रबलविग्रहं कारयित्वा तदवस्थं परं हीनसंधिं कुर्यात् निकृष्टसंधिना वशीकुर्यादित्यर्थः ॥ ३०

भरतः। सन्धावित्यादि। सन्धिं कृत्वापि विजिगीषुर्न निश्चेष्टस्तिष्ठेत्, किन्तु सन्धौ स्थितः सन् स्ववृद्धिं जनयेत् उत्पादयेत्, यया वृद्धिं प्राप्य परं हन्तुं क्षमते उपनिषत्प्रयोगैरभिचारै रहःप्रयुक्तैर्विषादिदानैर्वा परं हन्यात् सन्धिना जातविश्वासत्वात्। 'धर्मादुपनिषत्पुंसि वेदान्ते च रहस्यपी'ति विश्वः। अस्य परस्य जनं अमात्यलोकम् आश्रावयेत् दैन्यादिदानेन आकर्षयेत् परैस्तदीयशत्रुभिर्वा विग्रहं कलहं कारयित्वा अवहीनसन्धिं भग्नसन्धिं कुर्यात्। येन सह सन्धिः प्रागासीत् तेन सह सन्धिभङ्गं कुर्यादित्यर्थः ॥ ३०

অনুবাদ। অথবা সন্ধি করিয়া নিশ্চিন্ত না থাকিয়া নিজের বৃদ্ধিসাধন করিবেন। গোপনীয় উপায় প্রয়োগে শত্রুধ্বংস করিবেন। কিংবা ঐ শত্রুর অমাত্যাদি লোকজনকে গুপ্তচর দ্বারা দানমানাদি প্রলোভনে অপসারিত করিবেন। অথবা প্রবল শক্তির সহিত যুদ্ধ বাধাইয়া দিয়া সন্ধি ভঙ্গে তাহাকে বাধ্য করিবেন। ৩০

सन्दर्शितस्नेहगुणः स्वशत्रून्
विद्वेषयन्मण्डलमस्य भिन्द्यात्।
इत्येवमादि प्रविधाय सन्धिं[न्धिः]-
स्थद्वैर्विधेयोऽधिगमाभ्युपायः ॥ ३१

अन्वयः। (अथवा) सन्दर्शितस्नेहगुणः (सन्) स्वयन्तु विद्वेषयन् अस्य मण्डलं भिन्द्यात्, इत्येवमादिं सन्धिं प्रविधाय वृद्धेः अधिगमाभ्युपायः विधेयः॥ २१

मल्लिनाथः। पक्षान्तरमाह—संदर्शितेति। अथवा संदर्शितस्नेहगुणः प्रकटितस्नेहधर्मकः सन् स्वयन्तु विद्वेषयन् कपटमार्गेणामात्यादिविद्विष्टं कुर्वन्नस्य मण्डलं भिन्द्यादित्येवमादिसंधिं प्रविधाय वृद्धेरधिगमाभ्युपायो वृद्धिप्राप्त्युपायो विधेयः॥ २१

भरतः। सन्दर्शितेत्यादि। अन्यतरमिदं सन्धिमुपदिशति अथवा अन्योऽन्येन सन्धिं न कुर्य्युरिति तान् विद्वेषयन् विमुखान् कुर्वन् सन्दर्शितस्नेहगुणः प्रकटितानुरागः सन् अस्य मण्डलं सामादिभिर्भिन्द्यात् इत्येवमादि उक्तप्रकारादि प्रविधाय कृत्वा वृद्धेरधिगमाभ्युपायः प्राप्तिहेतुभूतः सन्धिर्विधेयः॥ २१

অনুবাদ। অথবা বাহিরে কপট স্নেহ দেখাইয়া নিজ শত্রুগণ যাহাতে সন্ধি না করে, এইরূপ পরস্পরের মধ্যে বিদ্বেষ উৎপাদন করিয়া শত্রুমণ্ডলে ভেদ জন্মাইবেন। উক্তপ্রকার সন্ধি বিধানে নিজের বৃদ্ধি প্রাপ্তির উপায় বিধান করিবেন। ২১

मत्वा सहिष्णूनपरोपजा[ज]प्यान्
स्वकानधिष्ठाय वना[जना]न्तदुर्गान्।
द्रुमाद्रिदुर्लङ्घ्यजलाप्रधृष्यान्
वर्धेत राजा रिपुविग्रहेण॥ ३२

अन्वयः। राजा स्वकान् सहिष्णून् अपरोपजाप्यान् मत्वा द्रुमाद्रिदुर्लङ्घ्यजलाप्रधृष्यान् वनान्तदुर्गान् अधिष्ठाय रिपुविग्रहेण (अपि) वर्द्धेत॥ २२

मल्लिनाथः। एवं सन्धिरेव साधीयानित्युक्त्वा तदलाभे विग्रहेऽपि वृत्तिविशेषमाह—मत्वेति। राजा विजिगीषुर्नृपः स्वकान् स्वकीयान् पुरुषान् सहिष्णून् मदनशीलान् अपरोपजाप्यान् परैरुपजाप्यान् परेषामभेद्यांश्च मत्वा ज्ञात्वा द्रुमैरद्रिभिश्च दुर्लङ्घ्या दुष्प्रापाश्च ये जलैरप्रधृष्याश्च तान् वनान्ते दुर्गान् दुर्गदेशानधिष्ठाय रिपुविग्रहेणापि वर्धेत। जलान्तदुर्गान् क्वचित् इति पाठः॥ २२

भरतः। सन्धेर्हितहेतुत्वमुपदर्श्य विग्रहस्य वृद्धिहेतुत्वं कथयति—मत्वेत्यादि। अपरोपजाप्यान् परैरभेद्यान् सहिष्णून् समर्थान् स्वकानात्मीयान् अनुजीविनो मत्वा निश्चित्य जनान्तदुर्गान् जनान्ते लोकान्ते दुर्गप्रदेशान् अधिष्ठाय तत्र स्थित्वा राजा रिपुविग्रहेण हेतुना वर्द्धेत उपचितः स्यात्, न तु सहसा विग्रहमात्रं वृद्धिहेतुः। कीदृशान् दुर्गान्? द्रुम-

वृक्षैरभिर्दलं(?)...जलैश्च कारणभूतैः अप्रधृष्यान् परैरगम्यान्, वृक्षपर्वतवारिभेदात् त्रिविधं दुर्गम् उक्तं; दुःखेन गम्यते यत्र तद्दुर्गं "दुरजननमरादि:" इति आधारे डः, कृत्तीः कभाव वश्तुतो: ॥३२

अनुवाद। উক্তপ্রকার প্রশস্ত সন্ধির অভাবে যাহা কর্তব্য, তাহাই বলিতেছেন। জয়শীল রাজা যখন নিজ অনুচরবর্গকে সহিষ্ণু এবং শত্রুর অজেয় মনে করিবেন, তখন বনমধ্যে গুপ্তস্থানে বৃক্ষ, প্রস্তর এবং অলঙ্ঘ্য জলদ্বারা দুর্গম দুর্গ নির্ম্মাণপূর্ব্বক তন্মধ্যে থাকিয়া শত্রুর সহিত যুদ্ধ করিতে পারিলেও বৃদ্ধিসাধন হইতে পারে। ৩২

शक्नोति यो न द्विषतो निहन्तुं
विहन्यते नाप्यबलैर्द्विषद्भिः।
स श्वावराहं कलहं विदध्या-
दासीत दुर्गादि विवर्धयंश्च ॥ ३३

अन्वयः। यो द्विषतः निहन्तुं न शक्नोति अबलैः द्विषद्भिः न विहन्यते अपि स श्वावराहं कलहं विदध्यात्। दुर्गादि विवर्द्धयन् च आसीत ॥ ३३

मल्लिनाथः। अरिविजिगीष्वोः परस्परविघातसामर्थ्ये जिगीषोः कृत्यमाह—शक्नोतीति। यो जिगीषुर्द्विषतः शत्रून् निहन्तुं न शक्नोति अबलैर्द्विषद्भिर्न विहन्यतेऽपि स विजिगीषुः श्ववराहयोरिमं श्वावराहम्। "तस्येदम्" इत्यण्प्रत्ययः। कलहमरेरन्यस्य च मिथः कलहं विदध्यात्। यथा कश्चित् श्वपचः श्वानं वराहे विमुच्यान्यतरनाशमीक्षते उभयोरपि भक्ष्यत्वात्तद्वदन्यतरनाशार्थी कलहमुत्पादयेदित्यर्थः। तथा दुर्गादि दुर्गराष्ट्रादिकं च विवर्धयन्नासीत न तु यायादित्यर्थः ॥ ३३

भरतः। आसनकालः कथ्यते—शक्नोतीत्यादि। यो जिगीषुर्द्विषतः शत्रून् न निहन्तुं शक्नोति बलरहितैर्द्विषद्भिरपि न हन्यते च स श्वावराहं कुक्कुरशूकरसम्बन्धिनं कलहं कुर्यात् तत्तुल्ययोर्युद्धं सम्पादयेदित्यर्थः। यथा चण्डालाः स्वयं वराहं हन्तुमशक्ताः श्वानं विमुच्य योधयन्ति तत्र यदि शुना वराहो हन्यते वराहेण वा श्वा हन्यते उभयथापि तेषां कार्यसिद्धिर्द्वयोरपि तेषां भक्ष्यत्वात्, तथा उभयोर्द्विषतोः कलहैर्जिगीषोरिति भावः। स्वयं दुर्गादि अष्टवर्गं विवर्द्धयन् आसीत विग्रहञ्च त्यक्त्वा तिष्ठेत्। 'कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम्। खन्याकरधनादानं शून्यानाञ्च निवेशनम् ॥' इत्येषोऽष्टवर्गः। श्वा च वराहश्चेति द्वन्द्वे "श्वावराहौ वा" इति परसूत्रेण पूर्वपदस्य विकल्पेन दीर्घत्वं,सम्मते निपातनोऽदित्यस्य योगविभागात् पक्षे पूर्वपदस्यादन्तत्वं सिद्धम्। अत्र तु तदकरणेऽपि न क्षतिः "विकारसङ्घ" इत्यादिना इदमर्थे चो द्वन्द्वोविवक्षितेः। विदध्यादित्यत्रात्मनःतदार्थो बोध्यः ॥ ३३

অনুবাদ। যে জিগীষু শত্রুনাশে অশক্ত, দুর্ব্বল শত্রুরাও যাহাকে নষ্ট করিতে পারে না, সেই ব্যক্তি শত্রুতে শত্রুতে যুদ্ধ বাধাইয়া দিয়া স্বয়ং সেই অবকাশে নিজের বলবৃদ্ধি করিবে। ৩৩

प्रयाणमात्रेण परे प्रसाध्ये
वर्त्तेत यानेन कृताभिरक्षः।
अशक्नुवन् कर्त्तुमरेर्विघातं
स्वकर्मरक्षां च परं श्रयेत ॥ ३४

अन्वयः। परे प्रयाणमात्रेण प्रसाध्ये (सति) कृताभिरक्षः (सन्) यानेन वर्त्तेत। अरेः विघातं स्वकर्मरक्षां च कर्त्तुं अशक्नुवन् परं श्रयेत ॥ ३४

मल्लिनाथः। किं तर्हि यात्रा न कार्य्यैव ? नेत्याह—प्रयाणेति। परे शत्रौ प्रयाणमात्रेण प्रसाध्ये सति कृताभिरक्षः कृतदुर्गाभिरक्षः सन् यानेन यात्रया वर्त्तेत यात्रां कुर्यादित्यर्थः। अरेर्विघातं स्वकर्मरक्षां स्वारब्धनिर्वाहं च कर्त्तुमशक्नुवन् परं प्रबलमन्यं धार्मिकं संश्रयेत ॥ ३४

भरतः। यानाश्रययोः कालः कथ्यते—प्रयाणेत्यादि। परे शत्रौ प्रयाणमात्रेण प्रसाध्येऽभिभवनीये सति राजा यानेन वर्त्तेत स्वछन्दो यतेत। कीदृशः सन् ? आत्मदेशस्य कृतोऽभितः सर्व्वतोभावेन रक्षा येन तादृशः। अरेः शत्रोर्विघातं येषां दुर्गादिकर्मणां परैरुपहन्यमानानाञ्च रक्षां कर्त्तुमशक्नुवन् असमर्थो भवन् परं श्रयेत यतो हृद्गिमाप्नोतीत्यर्थः ॥ ३४

অনুবাদ। যুদ্ধযাত্রা করিবাই যদি শত্রু জয় করা যায়, তাহা হইলে নিজদুর্গাদি দৃঢ়ভাবে রক্ষা করিয়া যুদ্ধে যাত্রা করিবে। শত্রুনাশ এবং নিজ আরব্ধ কর্ম রক্ষা করিতে অশক্ত হইলে ধার্ম্মিক প্রবল শত্রুর আশ্রয় লইবে। ৩৪

एकेन सन्धिः कलहोऽपरेण
कार्य्योऽभितो वा प्रसमीक्ष्य वृद्धिम्।
एवं प्रयुञ्जीत जिगीषुरेतां[ता]
नीतिं[तीः]विजानन्नहितात्मसारम् ॥ ३५

अन्वयः। एकेन सन्धिः अपरेण कलहः (कार्य्यः)। वृद्धिं प्रसमीक्ष्य अभितः वा कलहः कार्य्यः। एवं जिगीषुः अहितस्य आत्मनश्च सारं विजानन् एतां नीतिं प्रयुञ्जीत ॥३५

मल्लिनाथः । विग्रहे विशेषान्तरमाह—एकेनेति । एकेनारिणा संधिः कार्योऽपरेण कामन्तो विग्रहः कार्यो न युगपदुभाभ्यामित्यर्थः । अथवा वृद्धिमात्मनो बलाधिक्यं प्रसमीक्ष्याभित उभयतो वा कलहः कार्यः । एवं जिगीषुरहितस्य शत्रोरात्मनश्च सारं शक्तिं विजानन् विमृशन्नेतां पूर्वोक्तां नीतिं प्रयुञ्जीत ॥ ३५

भरतः । द्वैधीभावप्रकारः कथ्यते—एकेनेत्यादि । अभित उभयपार्श्वयोः सन्धिविग्रहाभ्यां स्ववृद्धिं प्रसमीक्ष्य निरूप्य पश्चादेकेन शत्रुणा स्वयमभियुक्तेन सन्धिः अपरेणाभियुक्तेन स्वयं विग्रहश्च कार्यः । वाशब्दः समुच्चये पूर्वश्लोकापेक्षया पक्षान्तरे वा । एवमुक्तप्रकारेणाहितस्य शत्रोरात्मनश्च सारं बलं विजानन् विजिगीषुरेता नीतीः षाड्गुण्यरूपाः प्रयुञ्जीत ॥ ३५

অনুবাদ। জিগীষুর এক শত্রুর সহিত সন্ধি, অপরের সহিত বিগ্রহ করা উচিত, একসময়ে উভয়ের সহিত বিগ্রহ করা ভাল নহে। অথবা নিজের বলবৃদ্ধি বুঝিয়া উভয়ের সহিতও বিগ্রহ করা চলে। এইরূপে নিজের ও শত্রুর শক্তি বিবেচনা করিয়া এই পূর্ব্বোক্ত নীতি প্রয়োগ করিবে। ৩৫

त्वया तु लोके जनितो विरागः
प्रकोपितं मण्डलमिन्द्रमुख्यम् ।
रामे तु राजन् विपरीतमेतत्
पश्यामि तेनाभ्यधिकं विपक्षम् ॥ ३६

अन्वयः । त्वया तु लोके विरागः जनितः, इन्द्रमुख्यं मण्डलं प्रकोपितं, ( हे ) राजन् ! रामे तु एतत् विपरीतम्, तेन विपक्षं अभ्यधिकं पश्यामि ॥ ३६

मल्लिनाथः । त्वयि तु सर्वं विरुद्धमित्याह—त्वयेति । त्वया तु लोके विरागोऽपरागो जनितः । इन्द्रमुख्यमिन्द्रप्रधानं मण्डलं प्रकोपितं प्रक्षोभितम् । हे राजन् ! रामे तु एतत् पूर्वोक्तं विपरीतं लोकोऽनुरक्तो मण्डलं तु संतुष्टमित्यर्थः । तेन कारणेन विपक्षं शत्रुमभ्यधिकं प्रबलं पश्यामि जानामि ॥ ३६

भरतः । उक्तरीत्या नीतित्वं प्रदर्श्य रावणे तद्वैपरीत्यात् सन्धिरेव युक्त इति प्रकृतमभिधीयते—त्वयेत्यादिना । त्वया पुनर्लोके विरागो जनितः परस्त्रीहृत्वात् इन्द्रादिकं राजमण्डलं प्रकोपितं तेनेयं भवतो वृद्धिरपि न शमीदर्केति भावः । हे राजन् ! रामे पुनः सर्वमिदं विपरीतं, धार्मिकत्वेन सर्वजगदनुरागस्य जनितत्वात् रक्षोहन्तृत्वेनेन्द्रादिसम्मतत्वाच्च, तेन विपक्षं शत्रुं रामं त्वत्तोऽभ्यधिकं पश्यामि । विराग इति रञ्जेर्घञन्तस्य "घञि च भावकरणयोः" इत्यादिना निपातितम् ॥ ३६

অনুবাদ। হে মহারাজ! তুমি জগতে বিরাগ জন্মাইয়াছ, ইন্দ্র যাহাদের প্রধান, সেই রাজমণ্ডলকে ক্ষোভিত করিয়াছ, কিন্তু শ্রীরামে ইহার বিপরীত (তিনি সকলের অনুরাগভাজন, কাজেই রাজমণ্ডল তাঁহার অনুকূল) সেইজন্য আমি বিপক্ষকে তোমা অপেক্ষা প্রবল মনে করি।৩৬

एकेन वाली निहत: शरेण
सुहृत्तमस्ते रचितश्च राजा ।
यदैव सुग्रीवकपि: परेण
तदैव कार्य्यं भवतो विनष्टम् ॥ ३७

अन्वय: । (किञ्च) यदा एव परेण ते सुहृत्तम: वाली एकेन शरेण निहत:, सुग्रीवकपि: राजा रचित:, तदैव भवत: कार्य्यं विनष्टम् ॥ ३७

मल्लिनाथ: । एकेनेति । किं च यदा परेणारिणा रामेण ते तव सुहृत्तमो वाली एकेन शरेण निहत: सुग्रीवकपि: सुग्रीवनामा वानरो राजा रचित: कृतश्च, तदैव भवत: कार्य्यं प्रयोजनं विनष्टम् ॥ ३७

भरत । रावणस्य निवसथं रामस्य निर्विपचयं कर्मणामाधिक्यञ्च दर्शयितुमिदमुच्यते —एकेनेत्यादि । परेण शत्रुणा रामेण कर्त्रा एकेन शरेण तव सुहृत्तमो वाली यदैव निहतो मारित:, सुग्रीवश्च कपिर्यदैव राजा रचित: कृत: तदैव भवत: कार्य्यं विनष्टं, येन भवतो जेता वाली अल्पायासेन हतस्तेन भवज्जयस्यातिसुकरत्वात् ॥ ३७

অনুবাদ। যখনই শত্রু রামচন্দ্র তোমার প্রধান সুহৃদ্ বালীকে এক বাণেই নিহত করিয়াছেন, বানর সুগ্রীবকে রাজা করিয়াছেন, তখনই ও তোমার কাজ নষ্ট হইয়াই আছে।৩৭

प्राकारमात्रावरण: प्रभाव:
खरादिभिर्यो निहतैस्तवाभूत् ।
लङ्काप्रदाहाक्षवधद्रुमभङ्गै: ।
क्षाम्यत्यसावप्यधुनातिमात्रम् ॥ ३८

अन्वय: । य: प्रभाव: निहतै: खरादिभि: प्राकारमात्रावरण: अभूत्, असावपि अधुना लङ्काप्रदाहाक्षवधद्रुमभङ्गै: अतिमात्रं क्षाम्यति ॥ ३८

मल्लिनाथ: । कार्य्यनाशमेव व्यनक्ति—प्राकारेति । यस्त्रैलोक्यव्यापी तव प्रतापो निहतै: प्राकारादिभिरिव मारितै: खरादिभि:

प्राकारमात्रावरणोऽभूदसावपि प्राकारमात्रान्तर्गतोऽप्यधुना लङ्का-दाहादिभिरतिमात्रं क्लाम्यति संकुचति। रामप्रताप एव लङ्काया बहिरन्तश्च दीप्यमाने त्वत्प्रतापस्य नामापि नश्यतीत्यर्थ:॥ ३८

भरत:। मत्प्रतापादेव कार्यं सिध्यतीत्याशङ्कामपनेतुमिदमुच्यते—प्राकारेत्यादि। यस्तव प्रभाव: निहतै: खरादिभि: प्राकारमात्रावरणोऽभूत् प्राकारमात्रमावरणं यस्य तादृशो जात: पू: त्रैलोक्यव्यापिनोऽपि तस्य इदानीं लङ्कामात्रे पर्याप्तत्वात् असावपि अधुना इदानीं लङ्काया: प्रदाहेन अक्षस्य वधेन वृक्षाणां भङ्गेन च अतिमात्रम् अत्यर्थं क्लाम्यति ग्लानिमुपयाति॥ ३८

अनुवाद। তোমার যে প্রতাপ ত্রিভুবনব্যাপী ছিল, আজি প্রাচীরের বাহিরেই পরাদি নিহত হওয়ায় লঙ্কার প্রাচীর সীমাবদ্ধ হইয়াছেন, সেই সীমাবদ্ধ প্রভাবও এইক্ষণ লঙ্কা-দাহ, অক্ষকুমার বধ ও অশোককানন ভঙ্গে অতিশয় হ্রাস পাইতে লাগিল। ৩৮

षड्वर्गवश्य: परिमूढबन्धु-
रुच्छिन्नमित्रोऽरिगणै [विगुणै] रुपेत:।
मा पादयुद्धं द्विरदेन कार्षी-
र्नम क्षितीन्द्रं प्रणतोपभोग्यम्॥ ३९

अन्वय:। (हे राजन्!) त्वं षड्वर्गवश्य: परिमूढबन्धु: उच्छिन्नमित्र: अरिगणै: उपेत: द्विरदेन पादयुद्धं मा कार्षी: प्रणतोपभोग्यं क्षितीन्द्रं नम॥ ३९

मल्लिनाथ:। फलितमाह—षडिति। हे राजन्! त्वं षड्वर्गवश्य: कामादिजित: परिमूढबन्धुर्मूर्खामात्य उच्छिन्नमित्रो वालि-प्रभृतीनामपि हतत्वात्। अरिगणैरुपेत आक्रान्तो द्विरदेन पाद-युद्धं मा कार्षीर्मा कुरु प्रणतानामुपभोग्यमुपजीव्यं क्षितीन्द्रं रामं नम प्रणम॥ ३९

भरत:। रामेण सह तव युद्धमनुचितमिति दर्शयितुमिदमुच्यते—षड्वर्गेत्यादि। त्वं द्विरदेन हस्तिना सह पादयुद्धं पादेन विमर्दं मा कार्षी: न कुरु, षड्वर्गवश्यत्वादिदोष-हीनेन रामेण सह करणी द्विरदेन युद्धस्य तुल्य इत्यर्थ:। द्विरदेन पादयुद्धमित्यनेन बली-यसा दुर्बलस्य युद्धमुपलक्ष्यते, किन्तु क्षितीन्द्रं रामं नम प्रणम यस्मादसौ प्रणतैरेव जनै-रुपभुज्यते वशीक्रियते। त्वम् कीदृश:? षड्वर्गस्य कामक्रोधलोभमोहमदेर्ष्याख्यस्य वश्य: आयत्त:, वशं गतो वश्य: "दण्डेनात्" इति य:। परिमूढबन्धुर्मूर्खपरीवार: उच्छिन्नमित्र: हत-वालिखरादिमित्र: मित्ररहितो वा, अत एव विगुणैरुपेत: येन गुणेन हीन उत्पद्यते तेन युक्त:। अनेनैव "विधिनिमन्त्रण" इत्यादिना प्रार्थनायां लो॥ ३९

অনুবাদ। মহারাজ! তুমি কাম-ক্রোধাদি ছয় রিপুর বশ এবং তোমার অমাত্যাদি বন্ধু-বর্গ মূর্খ। খানী, খর, দূষণ প্রভৃতি তোমার মিত্রগণ নিহত হইয়াছে; এখন তোমার শত্রুরা চারিদিকে ঘিরিয়া আছে, অতএব মাতঙ্গের সহিত পাদযুদ্ধের ন্যায় রামের সহিত যুদ্ধ করিও না, প্রণতলোকের উপজীব্য রামের চরণে প্রণত হও। ৩৯

रामोऽपि दाराहरणेन तप्तो
वयं हतैर्बन्धुभिरात्मतुल्यैः।
तप्तेन तप्तस्य यथायसो नः
संधिः परेणास्तु विमुञ्च सीताम्॥ ४०

अन्वयः। (किञ्च) रामः दाराहरणेन तप्तः, वयं आत्मतुल्यैः बन्धुभिः हतैः (तप्ताः) तप्तस्य अयसः तप्तेन (अयसा) यथा (तद्वत्) नः परेण सन्धिः अस्तु सीताञ्च विमुञ्च॥ ४०

मल्लिनाथः। राम इति। किं च रामो दाराहरणेन तप्तो वयं चात्मतुल्यैर्बन्धुभिर्हतैस्तप्ताः। तप्तस्यायसस्तप्तेनायसा यथा तद्वन्नोऽस्माकं परेण रामेण संधिरस्तु। सीतां च विमुञ्च। सन्धिस्त-ह्रारप्रत्यर्पणमात्रसुलभ इत्यर्थः॥ ४०

भरतः। कथमावयोर्भिन्नधर्मयोः सन्धिः स्यादित्याशङ्कायामिदमुच्यते—राम इत्यादि। दाराहरणेन सीतापहरणेन रामस्तप्तो वयमपि आत्मतुल्यैः हतैर्बन्धुभिः खरादिभिस्तप्ताः। यथा तप्तेन लौहेन तप्तस्य लौहस्य सन्धिर्घटना भवति, तथा परेण रामेणापि नोऽस्माकं सन्धिरस्तु उभयोः मन्युमयोः सन्धिरिति न्यायात्. अतः सीतां विमुञ्च त्यज॥ ४०

অনুবাদ। দেখ রামচন্দ্র পত্নীহরণে সন্তপ্ত, আমরাও আত্মপ্রতিম খরাদি বন্ধু নিধনে তপ্ত। অতএব তপ্তলৌহের সহিত তপ্তলৌহের যেমন মিল হয়, তেমনি তপ্ত শত্রু রামের সহিত সন্তপ্ত আমাদের সন্ধি হউক, সীতাকে ছাড়, তাহা হইলেই সন্ধি হইবে। ৪০

संधुक्षितं मण्डलचण्डवातै-
रमर्षतीक्ष्णं क्षितिपालतेजः।
सामाम्भसा शान्तिमुपैतु राजन्
प्रसीद जीवाम सबन्धुभृत्याः॥ ४१

अन्वयः। (हे) राजन्! मण्डलचण्डवातैः सन्धुक्षितं अमर्षतीक्ष्णं क्षितिपालतेजः, सामाम्भसा शान्तिं उपैतु। प्रसीद, सबन्धुभृत्याः जीवाम॥ ४१

मल्लिनाथः। सम्प्रति सन्धिं प्रार्थयते—सन्धुक्षितमिति। राजन्! मण्डलानि द्वन्द्वादीनि तैरेव चण्डवातैः सन्धुक्षितं सन्दीपितममर्

वैध रोषेण तीक्ष्णं क्रोधाग्नियोगादतिदीप्तमित्यर्थः। क्षितिपालतेजो रामप्रतापाग्निः साम।म्भसा सान्त्ववादोदकेन शान्तिमुपैतु। प्रसीद प्रसन्नो भव। सबन्धुभृत्या जीवाम। सर्वत्र प्रार्थनायां लोट्। अन्यथा कुलक्षयो भविष्यतीति भावः॥ ४१

भरतः। सन्धिं विनापि जीवनं नाप्नोतीति दर्शयितुमिदमुच्यते—सन्धुक्षितमित्यादि। क्षितिपालस्य तेजः साम्ना सन्धिना अम्भसा जलेनेव शान्तिमुपैतु गच्छतु। तेजःशब्देन अत्र सीताविरहमन्युजोऽग्निरुपलक्ष्यते। कीदृशं तेजः? इन्द्रादिराजमण्डलैः प्रचण्डवातैरिव सन्धुक्षितं दीपितं, अमर्षेण परामर्षासहिष्णुतया तीक्ष्णम् असह्यं, तस्मात् हे राजन्! प्रसीद, किं कीदृश? बन्धुभिः भृत्यैश्च सह वयं जीवाम,"विधिनिमन्त्रण"इत्यादिना प्रार्थनायां लोट्॥४१

অনুবাদ। মহারাজ। ইন্দ্রাদি রাজমণ্ডলরূপ বায়ুদ্বারা প্রজ্বালিত ক্রোধাগ্নিসংযোগে প্রদীপ্ত রামপ্রতাপবহ্নি সান্ত্বনাক্যরূপ জলে উপশম প্রাপ্ত হউক। আপনি প্রসন্ন হউন, আমরাও বন্ধুবান্ধবভৃত্যাদি সহ জীবন লাভ করি; অন্যথা নির্ব্বংশ হইতে হইবে। ৪১

अपक्वकुम्भाविव भङ्गभाजौ
राजन्नियातां मरणं समानौ।
वीर्ये स्थितः किं तु कृतानुरागो
रामो भवांश्चोत्तमभूरिवैरी॥ ४२

अन्वयः। (हे) राजन्! समानौ अपक्वकुम्भौ इव भङ्गभाजौ मरणं इयातां, किन्तु रामः कृतानुरागः वीर्य्ये स्थितः भवांस्तु उत्तमभूरिवैरी॥ ४२

मल्लिनाथः। किं च समेनापि सन्धातव्यं किं पुनर्बलीयसेत्याह—अपक्वेति। हे राजन्! समानावविराजगौषु अपक्वकुम्भौ घटाविव भङ्गभाजौ परस्पराभियोगाद्भग्नौ सन्तौ मरणमियाताम्, इणो लिङि यासुटि लस्सामादेशः, किं तु रामः कृतानुरागोऽनुरक्तमण्डलो वीर्य्ये महासत्त्वे स्थितो भवांस्तु उत्तमा महान्तो भूरयो भूयांसश्च वैरिण इन्द्रादयो यस्य। अतो रामरावणयोर्जयपराजयौ यथाक्रमं व्यवस्थिताविति भावः॥ ४२

भरतः। समयोरपि विग्रहो न युक्तः सुतरां हीनाधिकयोरिति दर्शयितुमिदमुच्यते—अपक्वकुम्भावित्यादि। हे राजन्! यथा अपक्वकुम्भौ परस्पराभिघातभङ्गभाजौ तथा समानौ युध्यमानौ मरणमियाताम्, इयाः खो; समानयोर्विग्रहः कथञ्चित् युज्यतेऽपि किन्तु रामो वीर्य्ये स्थित उत्साहशक्तिसम्पन्नः कृतानुरागः सर्वलोकेष्विति शेषः। भवान् पुनरुत्त-

मानां भूरीणां बहूनाम् इन्द्रादीनां वैरी अतस्त्वं भूरिणो बहव वैरिणो यस्येति वा अतो हीना-धिकयोः सन्धिरनौचित्य इति भावः॥ ४२

অনুবাদ। প্রভো! অপক কলসযুগল যেমন পরস্পর সংঘর্ষে ভাঙ্গিয়া যায়, তেমনি অরি ও জিগীষু তুল্যবল হইলে তাঁহারাও বিনাশপ্রাপ্ত হয়। কিন্তু রামচন্দ্র সকলের প্রিয় এবং অসীমবীর্য্যসম্পন্ন আর আপনি বহুপ্রবল শত্রুবেষ্টিত, সুতরাং আপনার পরাজয় অবশ্যম্ভাবী।৪২

दण्डेन कोषेन च मन्यसे चेत्
प्रकृष्टमात्मानमरेस्तथापि।
रिक्तस्य पूर्णेन वृथा विनाशः
पूर्णस्य भङ्गे बहु हीयते तु॥ ४३

अन्वयः। दण्डेन कोषेन च आत्मानं अरेः प्रकृष्टं मन्यसे चेत् (तथापि) पूर्णेन (त्वया) रिक्तस्य विनाशः वृथा. पूर्णस्य (ते) भङ्गे तु बहु हीयते॥ ४३

मल्लिनाथः। ननु बलिना दुर्बलो विग्राह्य एव न सन्धेयो बली चाहं रामात् प्रभुशक्तेरित्याशङ्क्याह—दण्डेनेति। दण्डेन चतुरङ्गबलेन कोषेण धनेनात्मानमरेर्विपक्षाद्रामात् प्रकृष्टं बलिष्ठं मन्यसे चेत्। अङ्गीकृत्य वादेनोत्तरमाह—तथापि पूर्णेन समृद्धेन त्वया रिक्तस्य निःस्वस्य रामस्य विनाशो भङ्गो वृथा। उभयोरपि नष्टितुल्योरभावादिति भावः। पूर्णस्य ते तव भङ्गे तु बहु हीयते प्राणैः सह सर्वैश्वर्य्यहानेरिति भावः॥ ४३

भरतः। शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजा इति कोषः। दण्डबलं प्रभुशक्तिः अधिक-विक्रमः उत्साहशक्तिः ज्ञानबलं मन्त्रशक्तिस्तत्र यद्यपि राम उत्साहशक्तिशाली तथापि प्रभु-शक्तिहीनः भवन्तु उत्साहप्रभुमन्त्रशक्तिभिर्युक्तः अतो हीनेनाधिकस्य विग्रह एवोचितो न तु सन्धिरित्याशङ्कायामुच्यते—दण्डेनेत्यादि। दण्डेन चतुरङ्गबलेन कोषेण च हेमरूप्यादिना चेत यदि अरेः शत्रोः सकाशादात्मानं प्रकृष्टं मन्यसे, तथापि रिक्तस्य कोषदण्डहीनस्य रामस्य पूर्णेन भवता हेतुना विनाशो वृथा निष्फलः. पूर्णस्य भवतो रिक्तेन रामेण भङ्गे सति पुनर्बहु हीयते, अतो यस्मिन् जिते किमपि फलं नास्ति तेन हीनेनापि सन्धिः कर्त्तुमुचितः तथा सङ्कट.वेशानौचित्य त्। "दण्डो यमे मानभेदे लगुड़े दमसैन्ययोः" इति विश्वः॥४३

অনুবাদ। আর যদি তুমি আপনাকে হস্তী অশ্ব রথ ও পদাতি এই চতুরঙ্গ বলে এবং ধনে শত্রু অপেক্ষা বলিষ্ঠ মনে কর, তাহা হইলেও তুমি সমৃদ্ধিসম্পন্ন হইয়া নিঃস্ব রামের বিনাশ করিবে, তাহাতে ফল কি? কিন্তু সমৃদ্ধিশালী তোমার যদি বিনাশ হয়, তাহা হইলে যে অনেক ধন ও প্রাণের হানি হইবে। ৪৩

क्लिष्टात्मभृत्यः परिमृग्यसंप-
न्मानी यतेतापि स संशयेऽर्थे।
संदेहमारोहति यः कृतार्थो
नूनं रतिं तत्र (स्य) करोति न श्रीः॥ ४४

अन्वयः। क्लिष्टात्मभृत्यः परिमृग्यसम्पत् मानी संशयी अर्थे यतेतापि यस्तु कृतार्थः अपि सन्देहं आरोहति, नूनं श्रीः तत्र रतिं न करोति॥ ४४

मल्लिनाथः। ननु रिपुभञ्जने विजय एव फलं किं फलान्तरे-णेत्याशङ्क्य सत्यं सन्दिग्धस्थलत्वात् न तत्र प्रेक्षावतां प्रवृत्तिरित्याह— क्लिष्टेति। क्लिष्टा आत्मा भृत्याश्च यस्य सः, परिमृग्यसंपत्प्रार्थ्यभूतिः। मृग्यतेः स्वार्थंत्वन्तात् "अचो यत्"। मान्यभिमानी संशये संदिग्धेऽर्थे यतेतापि प्रवर्त्ततापि पाक्षिकफलस्यापि श्रेयस्त्वात् तस्याकिञ्चनस्येति भावः। यस्तु कृतार्थः पूर्णकामोऽपि सन्देह-मारोहति सन्दिग्धे प्रवर्त्तते नूनं श्रीस्तत्र पुरुषे रतिं न करोति स श्रिया मुक्त इत्यर्थः। 'सुहृद्धनं तथा राज्यवामानं कीर्त्तिमेव च। युधि सन्देहदोलार्थं को हि कुर्य्यादबालिशः। ईषत्फलं च सन्दिग्धफलमेव च। कुर्य्यात्—'। इति च कामन्दकः॥ ४४

भरतः। रिपोस्तस्य भङ्गे मा भूदन्यत् किञ्चित् फलं विजयो वैरिनिर्य्यातनश्च फलमस्तीत्या-शङ्क्येदमुच्यते—क्लिष्टात्मेत्यादि। क्लिष्टो दुःखित आत्मा शरीरं भृत्यश्च यस्य सः, परिमृग्य-सम्पत् प्रार्थनीयविभूतिर्मानी संशयेऽर्थे सन्दिग्धे अर्थे यतेतापि युद्धं कुर्य्यादपि, यः पुनः कृतार्थो भवादृशस्त्रैलोक्यविजयित्वात् सन्देहमारोहति सत्याप्यमानविनाशे सन्दिग्धकर्मणि प्रवर्त्तते तत्र नूनम् अवश्यं श्रीः लक्ष्मी रतिं स्थितिं प्रीतिं वा न करोति। तस्येति क्वचित् पाठः। मृगत्वाक्तन्तु मार्गेश्च "तव्यानीयाः" इति कर्मणि यः॥ ४४

অনুবাদ। যাঁহার দেহ এবং অনুচরবর্গ সর্ব্বদা কষ্টভোগ করিতেছে, যিনি ধনার্থী ও অভিমানী, সেই ব্যক্তি সন্দিগ্ধকার্য্যে চেষ্টা করেন করুন, কিন্তু আপনার ন্যায় কৃতার্থ এবং ত্রিভুবনজয়ী লোক যদি সন্দিগ্ধকার্য্যে প্রবৃত্ত হন, তাহা হইলে নিশ্চয় তাঁহার লক্ষ্মী ছাড়িয়া যান। ৪৪

शक्यान्यदोषाणि महाफलानि
समारभेतोपनयन् समाप्तिम्।
कर्माणि राजा विहितानुरागो
विपर्यये स्याद्वितथप्रयासः॥ ४५

अन्वयः । राजा शक्यानि अदोषाणि महाफलानि कर्म्माणि समाप्तिं उपनयन् विहितानुरागः समारभेत, विपर्य्यये वितथप्रयासः स्यात् ॥ ४५

मल्लिनाथः । तर्हि कुत्र प्रवर्त्तेतेत्याकाङ्क्षायामाह शक्यानीति । राजा शक्यानि अशक्यारम्भस्य विनाशहेतुत्वादिति भावः । अदोषाणि तत्काले उत्तरकाले वेत्यर्थः । 'तदा त्वदोषजननमायत्यां चैव निष्फलम्' इति शास्त्रनिषेधादित्यर्थः । महाफलानि बृहत्फलानि कर्म्माणि समाप्तिं फलपर्य्यन्ततामुपनयन् विहितानुरागोऽनुरक्तजनः सन् समारभेत । विपर्य्यये उक्तवैपरीत्येनारम्भे वितथप्रयासो निष्फलारम्भः स्यात् ॥

भरतः । तर्हि कदा विग्रहः कर्त्तव्य इत्याशङ्क्येदमुच्यते—शक्यानीत्यादि । राजा समाप्तिमुपनयन् फलान्तत्वमुपगच्छन् कर्माणि समारभेत प्रस्तुतानि कुर्य्यादित्यर्थः यदि विहितानुरागोऽनुरक्तप्रकृतिमण्डलो भवेत् । कीदृशानि ? शक्यानि कर्त्तुमित्यर्थः अदोषाणि पर्य्यन्तसुखानि, महाफलानि बहुप्रयोजनानि । विपर्य्यये उक्तस्य वैपरीत्ये विरक्तप्रकृतिमण्डलो राजा समाप्तिम् अकुर्वन् यदि अशक्यानि अदोषाणि निष्फलानि कर्माणि समारभेत तदा प्रयासो वितथो मिथ्या निष्फलः स्यात्, समस्तपाठे वितथाः प्रयासा यस्य तादृशो राजा स्यात् ॥ ४५

অনুবাদ। সুসাধ্য, বর্ত্তমানে ও ভবিষ্যতে নির্দোষ এবং মহাফলজনক কার্য্যগুলিকে সমাপ্ত করিয়া, প্রকৃতিপুঞ্জের অনুরাগভাজন হইয়া, রাজার যুদ্ধাদিকার্য্যে প্রবৃত্ত হওয়া উচিত; তাহার অন্যথা আচরণ করিলে সে কার্য্য নিষ্ফল হইয়া থাকে। ৪৫

जेतुं न शक्यो नृपतिः सुनीति-
दोषः क्षयादिः कलहे भुवश्च ।
फलं न किञ्चिन्न शुभा समाप्तिः
कृतानुरागं भुवि संभ-[त्य] जारिम् ॥४६

अन्वयः । सुनीतिः नृपतिः जेतुं शक्यः न, कलहे क्षयादिः दोषश्च भुवः, फलं किञ्चित् अपि नास्ति, न समाप्तिः शुभा ( ततो ) भुवि कृतानुरागं अरिं संभज ॥ ४६

मल्लिनाथः । विपर्य्यये वैपरीत्यमेव दर्शयति—जेतुमिति । सुनीतिर्नीतिसम्पन्नो नृपतिर्जेतुं शक्यो न । कलहे विग्रहे क्षयादिः, आदिशब्दाद्व्ययप्रयासादिः, दोषश्च भुवोऽवश्यम्भावी । फलं च किञ्चिदपि नास्ति, न समाप्तिः क्रियासमाप्तिः शुभा कुलक्षयात् स्वन्ता न भवति । ततो भुवि कृतानुरागमनुरक्तलोकमरिं रामं संभज संसेवस्व ॥ ४६

भरतः। तेनापि रामविग्रहे सर्वमेतदसौख्यमिति दर्शयन्ती—जेतुमित्यादि। नृपतिः रामोऽनुममभिभवितुं न शक्यः, यतः सुनीतिना तेन सह कलहे विग्रहे धनक्षयादिदोषो ध्रुवः अवश्यम्भावी, फलन्तु न किञ्चित् रत्नादिलाभशून्यत्वात्, समाप्तिरपि न शुभा न साध्वी विनाशहेतुत्वात् समाप्तिरश्रेयसी वा तत्सैन्यस्याप्यनेकत्वात्, अतो भुवि कृतानुरागम् अरिं रामं सन्त्यज ॥ ४६

अनुवाद। सुनीतिজ্ঞ নৃপতি রামকে কিছুতেই জয় করা যাইবে না। তাঁহার সহিত যুদ্ধ করিলে ধনজন ক্ষয় প্রভৃতি অনেক দোষ অবশ্যম্ভাবী। জয় করিতে পারিলেও কিছুমাত্র লাভ নাই। কুলক্ষয় ভিন্ন কার্য্যসমাপ্তিও স্বচ্ছন্দে হইবে না। জগতে সকল লোকই তাঁহার অনুরক্ত; অতএব সেই শত্রু রামকে ত্যজনা কর। ৪৬

त्वन्मित्रनाशो निजमित्रलाभः
समेतसैन्यः स च मित्रकृच्छ्रे।
भोग्यो वशः पश्य शरेण शत्रोः
प्रसाधितो वालिवधे न कोऽर्थः ॥ ४७

अन्वयः। शरेण वालिवधे ( सति ) शत्रोः कः अर्थः न प्रसाधितः ? ( तथाहि ) पश्य त्वन्मित्रनाशः निजमित्रलाभः, समेतसैन्यः स च मित्रकृच्छ्रे ( जातः )। भोग्यः वशः ॥ ४७

मल्लिनाथः। किं चायं वालिवधादेव सर्वसामग्रीसम्पन्नो जात इत्याह—त्वदिति। शरेणैकबाणेन वालिवधे सति शत्रोस्तद्विपक्षस्य रामस्य कोऽर्थो न प्रसाधितः सर्वोऽपि साधित एवेत्यर्थः। तथाहि—पश्य, त्वन्मित्रस्य नाशो निज आत्मीयो मित्रमेव लाभः सुग्रीवाख्यः। स च एकाकी न भवतीत्याह—समेतसैन्यः सेनासमेतः, स च मित्रलाभो मित्रकृच्छ्रे जातः। कृच्छ्रोपकृतो नोपकारिणं जहातीति भावः। भोग्यः कार्य्यसिद्ध्याद्युपजीव्यो वशोऽनुकूलो विधेय इत्यर्थः। अतोऽपि न रामस्ते विग्राह्य इति भावः ॥ ४७

भरतः। रामस्य सुनीतित्वं दर्शयितुमिदमुच्यते—त्वन्मित्रेत्यादि। पश्य निरूपय, शरेण वालिवधे सति शत्रोः रामस्य कोऽर्थो न प्रसाधितः न सम्पादितः अपि तु सर्व एव, प्रथमं त्वन्मित्रस्य वालिनो नाशः, निजमित्रस्य सुग्रीवस्य लाभः प्राप्तिः, स चेति बुद्धिर्ये परागमनति-मित्रस्य लीनत्वात्, किं वा लाभ इति कर्मणि घञ्, मित्रस्य तल्लाभश्चेति समासः, स च मित्ररूपी लाभः मित्रस्य रामस्य कृच्छ्रे व्यसने समेतसैन्यः भोग्यः उपजीव्यः वशोऽनुकूलः ॥ ४७

অনুবাদ। বালী নিহত হইবার পর শরনিকর তোমার শত্রু রামের কোন্ কার্য্য সমাধা করে নাই ? ( সবই করিয়াছে )। দেখ, প্রথমে তোমার মিত্র বালীর বিনাশ, সুগ্রীবকে নিজ মিত্ররূপে লাভ, সেই মিত্রলাভ আবার বিপদের সময়ে ঘটিয়াছে ( সুতরাং সে সসৈন্য কদাপি

উপকারী রামকে ছাড়িতে পারিবে না) বস্তুতঃ সেই মিত্রলাভ সমস্তকার্য্যে উপজীব্য ও সদা অনুকূল। ৪৭

लोभाद्भयाद्वाभिगतः कपीन्द्रो
न राघवं येन भवेद्विभेद्यः ।
स्थितः सतां वर्त्मनि लब्धराज्यः
प्रतिप्रियं सोऽभ्यगमच्चिकीर्षुः ॥ ४८

अन्वयः ।कपीन्द्रः लोभात् भयात् वा राघवं न अभिगतः, येन विभेद्यः भवेत् (किन्तु) स लब्धराज्यः, (अत एव) सतां वर्त्मनि स्थितः (सन्) अभ्यधिकं प्रतिप्रियं चिकीर्षुः -अभ्यगमत् ॥ ४८

मल्लिनाथः । न च तं भित्त्वा रामं जेष्यामीत्याशङ्क्य कार्य्यें-त्याह—लोभादिति । कपीन्द्रः सुग्रीवो लोभाद्भयाद्वा राघवं नाभिगत आश्रितो येनार्थदानेनाभयदानेन वा विभेद्यः स्यात् । किं तु स कपीन्द्रो रामाल्लब्धराज्योऽत एव सतां वर्त्मनि धर्म्ममार्गे स्थितः सन्नभ्यधिकं रामकृतादधिकं प्रतिप्रियं प्रत्युपकारं चिकीर्षु-रभिगतोऽतो न भेद्य इति भावः ॥ ४८

भरतः । अनेन मित्रभेदं कृत्वा तं जेष्यामीत्याशङ्क्यदमुच्यते—लोभादित्यादि । क्रुद्ध-लुब्धभीतापमानितास्चत्वारो भेद्या भवन्ति, तत्र कपीन्द्रः सुग्रीवः सम्प्रति लोभाद्भयाद्वा राघवं रामं नाभिगतो येन लोभ्यमानो भीतो वा सन् विभेद्यो भेदार्हो भेत्तुं शक्यो वा भवेत्, "तै स्याः शक्यार्हः" इति ण्यत् । स कपीन्द्रः प्राप्तराज्यः साध्वाचारत्वात् सतां मार्गे धर्म्मे स्थितः सन् प्रतिप्रियं प्रत्युपकारं कर्त्तुमिच्छुः अभ्यागमत् राममभियतः । लब्धराज्यत्वेन निर्लोभत्वं रामाभिगमेन निर्भयत्वं क्रोधोऽपमानश्चासम्भवान्नोक्तः ॥ ४८

অনুবাদ। যে হেতু কপিবর সুগ্রীব লোভে বা ভয়ে রামের আশ্রয় গ্রহণ করেন নাই, অতএব অর্থদানে বা ভয়প্রদর্শনে রামের সহিত তাহার ভেদ ঘটনা অসম্ভব। (কারণ ক্রুদ্ধ লুব্ধ ভীত ও অপমানিত হইলেই ভেদ জন্মান যায়।) তিনি রামের সাহায্যেই রাজ্য লাভ করিয়াছেন, সুতরাং সৎপথ অবলম্বনে রামকৃত উপকার অপেক্ষা অধিক প্রত্যুপকার করিতে ইচ্ছুক হইয়া রামের সহিত মিলিত হইয়াছেন। (এই ভেদ অসম্ভব)। ৪৮

फलाशिनो निर्झरकुञ्जभाजो
दिव्याङ्गनालि[न]ङ्गरसानभिज्ञाः ।
न्यग्जातयो रत्नवरैरलभ्या
मुख्याः कपीनामपि नोपजा[ज]प्याः ॥४९

अन्वयः। फलाशिनः निर्झरकुञ्जभाजः दिव्याङ्गनालिङ्गनरसानभिज्ञाः, (यतः) न्यग्जातयः (अत एव) रत्नवरैः अलभ्याः कपीनां मुख्याः अपि नोपजाप्याः॥ ४९

मल्लिनाथः। तदनुजीविनो न भेद्या इत्याह—फलेति। फलाशिनो नान्नाकाङ्क्षिणो निर्झरान् कुञ्जांश्च भजन्ति पानार्थं निवासार्थं चेति तद्भाजो न सम्भृतोदकगृहार्थिन इत्यर्थः। दिव्याङ्गनानामालिङ्ग आलिङ्गनम्। भावे घञ्। तद्रसस्य तत्सुखस्यानभिज्ञा अतो न स्त्रीप्रलोभ्या इत्यर्थः। कुतः, यतो नीचो जातिर्येषां ते न्यग्जातयस्तिर्यञ्चोऽत एव रत्नवरैरन्यैरपि श्रेष्ठवस्तुभिरलोभ्या नाकर्षणीयाः कपीनां मुख्याः कपियूथपा अपि नोपजाप्या न भेद्याः। अतस्तद्द्वारापि सुग्रीवो न भेद्य इति भावः। अत्र साभिप्रायविशेषणत्वात्परिकरालङ्कारः। 'साभिप्रायविशेषणत्वं परिकरः' इति लक्षणात्॥ ४९

भरत। तदनुजीविनोऽपि न भेद्या इति दर्शयन्नाह—फलाशिन इत्यादि। कपीनां मुख्याः श्रेष्ठा हनूमन्नीलकुमुदादयो न उपजाप्या न भेदं कर्त्तुं भेत्तुं न शक्या वा, यतः फलाशिनः मिष्टान्ननिरपेक्षाः, निर्झरकुञ्जभाजः न सुवासितजलपानप्रासादसेविनः, दिव्याङ्गनासु योऽनङ्गरसः कामभोगस्तदनभिज्ञाः न्यग्जातयस्तिर्यग्योनयः, अत एव रत्नवरैः इन्द्रनीलपद्मरागादिभिरपि न लभ्याः। अपिशब्दः पूर्वश्लोकापेक्षया॥ ४९

অনুবাদ। হনুমান্ নীল কুমুদ প্রভৃতি প্রধান প্রধান কপিগণও তোমার বশে আসিবে না, কারণ তাহারা বন্যফলমাত্র ভোজন করে, নির্ঝরের জল পান করে, বনমধ্যে বাস করে, দিব্যাঙ্গনারঙ্গরস নভিজ্ঞ এবং নীচ জাতি; সুতরাং ইন্দ্র নীলপদ্মরাগাদি শ্রেষ্ঠবস্তু দিয়াও স্ববশে আনিতে পারিবে না। ৪৯

कृताभिषेको युवराजराज्ये
सुग्रीवराजेन सुताविशेषम्।
ताराविधेयेन कथं विकारं
तारासुतो यास्यति राक्षसार्थम्॥

अन्वयः। ताराविधेयेन सुग्रीवराजेन सुताविशेषं युवराजराज्ये कृताभिषेकः तारासुतः कथं राक्षसार्थं विकारं यास्यति॥ ५०

मल्लिनाथः। अङ्गदभेदस्तु दूरापास्त इत्याह—कृतेति। ताराविधेयेन सुग्रीवराजेन सुताविशेषं सुतानविशेषं युवराजराज्ये कृताभिषेकस्तारासुतोऽङ्गदः कथं राक्षसार्थं विकारं भेदं यास्यति। न हि स्वर्गस्थो नरकमिच्छतीति भावः॥ ५०

भरत:। अथाश्रितपुत्रोऽङ्गद: पितृवधामर्षात् राज्यलोभाच्च भेद्य:, अन्येऽपि कपयस्तमेवका एवेत्याशङ्क्येदमुच्यते—कृतेत्यादि। तारासुतोऽङ्गद: कथं राघसार्थं राक्षसहेतुकं राघवप्रीत्यर्थं वा विकारं भेदं यास्यति ? यत: सुताविशेषं यथा स्यात्तथा सुग्रीवराजेन युवराजराज्ये कृताभिषेक:। कीदृशेन सुग्रीवराजेन ?—ताराविधेयेन ताराचित्तानुवर्त्तिना ; एतेन सर्व्वैश्वर्यत्वात् सुग्रीवायत्ततया मातुरधीनत्वात्तामेवा एवायमिति दाढ्यं प्रतिपादितं, सुतोऽविशेषो यत्रेत्यभिषेकक्रियाविशेषणं, ममैवायं पुत्रो न वालिन इत्येवं रूपेणेत्यर्थ:। 'विधेयो विनयग्राही'त्यमर:। "अर्थोऽभिधेये शब्दानां धनकारणवस्तुषु। प्रयोजने निवृत्तौ च विषये च प्रवर्त्तते" ॥ ५०

অনুবাদ। সুগ্রীব বালি-পত্নী তারার চিত্তানুবর্ত্তী, তিনি তাহার পুত্র অঙ্গদকে অপত্য-নির্ব্বিশেষে যুবরাজপদে অভিষিক্ত করিয়াছেন, সুতরাং অঙ্গদ কি জন্য রাক্ষসের নিমিত্ত বিকার প্রাপ্ত হইবে ?। (স্বর্গবাসী ইচ্ছা করিয়া নরকে যাইতে চাহে না)। ৫০

पश्यामि रामादधिकं समं वा
नान्यं विरोधे यमुपाश्रयेम।
दत्त्वा वरं सानुशय: स्वयम्भू-
रिन्द्रादय: पूर्वतरं विरुद्धा: ॥ ५१

अन्वय:। रामात् अधिकं समं वा अन्यं न पश्यामि, विरोधे यम् उपाश्रयेम। स्वयम्भू: वरं दत्त्वा सानुशय:, इन्द्रादयस्तु पूर्व्वतरं विरुद्धा: ॥ ५१

**मल्लिनाथ:।** न च रामे क्रुद्धे कश्चिदस्माकं शरणमित्याह—पश्यामीति। रामादधिकं समं वाऽन्यं पुरुषधौरेयं न पश्यामि, विरोधे रामविग्रहे यमुपाश्रयेम। सम्भावनायां संप्रश्ने लिङ्। स्वयम्भूर्ब्रह्मा तव वरं दत्त्वा सानुशयोऽकार्य्यं कृतं मयेति पश्चात्तप्त:। इन्द्रादयस्तु पूर्वतरं तत: प्रागेव विरुद्धा:। अतो रामविरोधे सर्वलोकविरोधिनामस्माकं मरणमेव शरणमिति भाव: ॥ ५१

भरत:। अन्यमाश्रित्य रामं जेष्यामीत्यत्रेदमुच्यते—पश्यामीत्यादि। रामादधिकं श्रेष्ठं समं तुल्यं वा अन्यं न पश्यामि, विरोधे विग्रहनिमित्तं यम् उपाश्रयेम आश्रयं गच्छेम, "विधिनिमन्त्रण"इत्यादिना संप्रश्ने लिङ्। तर्हि देवा एवाश्रयणीया इत्यत आह—स्वयम्भू: ब्रह्मा वरं दत्त्वा सानुशय: पश्चात्तापान्वित: किमिदमकार्य्यं मया कृतमिति। अन्ये इन्द्रादयो देवा: पूर्व्वकालमेव विरुद्धा अरीभवन् ॥ ५१

অনুবাদ। যুদ্ধ উপস্থিত হইলে যাহাকে আশ্রয় করা যায়, রাম অপেক্ষা অধিকবলবান্ কিংবা রামের তুল্য এমন অন্য কোনও লোক দেখিতে পাই না। ব্রহ্মা তোমাকে বর দিয়া এখন (হায় কি সর্ব্বনাশ করিলাম বলিয়া) অনুতাপ করেন। ইন্দ্রাদিদেবগণও তাহার অতি পূর্ব্বেই বিরোধী। ৫১

दुर्गाश्रितानां बहुनापि नास्ति [राजन्]
कालेन पार्ष्णिग्रहणादिहेतुः।
दुर्गोपरोधं न च कुर्वतोऽस्ति
शत्रोश्चिरेणापि दशास्य हानिः॥ ५२

अन्वयः। दुर्गाश्रितानां बहुनापि कालेन पार्ष्णिग्रहणादिहेतुः न अस्ति। दुर्गोपरोधं कुर्वतः शत्रोः चिरेणापि हानिः (हे) दशास्य! न अस्ति॥ ५२

मल्लिनाथः। दुर्गबलं च न किञ्चिदत्रोपयुज्यत इत्याह—दुर्गेति। दुर्गाश्रितानामस्माकं परोपरोधे बहुनापि कालेन पार्ष्णिग्रहणादिहेतुस्तत्कारो नास्ति। रामस्य कः पार्ष्णिग्रहः इति भावः। तस्मा भूत्। अत्र दुर्गोपरोधं कुर्वतः शत्रो रामस्य चिरेणापि हानिरुपघातश्च हे दशास्य! नास्त्येव। रामस्य दुर्गोपरोद्धुः को वा वारयितेति भावः॥ ५२

भरतः। दुर्गमाश्रित्य रामं वञ्चयिष्यामि इत्यत्रेदमुच्यते—दुर्गाश्रितानामित्यादि। हे राजन्! हे दशास्य! दुर्गमाश्रितानामपि अस्माकं बहुनापि कालेन पार्ष्णिग्रहणमित्युद्यमादिरूपो हेतुरपि नास्ति तस्माद्दुर्गाश्रितानामपि क्षय एव। यद्वा दुर्गाश्रितानामपि अस्माकं पार्ष्णिग्रहणादिहेतुका हानिरवश्यं बहुनापि कालेन भविष्यति जगद्वैरित्वादस्माकमस्मिन्नवसरे अन्येऽपि पार्ष्णिग्राहादयो हानिं करिष्यन्तीत्यर्थः। "पार्ष्णिः स्यात् दुर्गमस्त्रियाम्।" "स्त्रियां द्वयोः सैन्यपृष्ठे पादग्राहे धनेऽपि च"ति कोषः। अस्मद्दुर्गोपरोधं कुर्वतस्तु शत्रोश्चिरेणापि कालेन न हानिर्नापचयो भविष्यति, अस्मदतिरिक्तस्य तद्वैरिणोऽसत्त्वात्। अतो दुर्गाश्रयोऽपि न युज्यते॥ ५२

অনুবাদ। মহারাজ। চিরকাল দুর্গাশ্রয়ে থাকিলেও আমাদের পশ্চাৎ শত্রু নিবারণে সাহায্যকারী কেহ নাই, কিন্তু শত্রু চিরকাল আমাদের দুর্গ অবরোধ করিয়া থাকিলেও তাহাদের কোনওহানি নাই। (কারণ সমস্ত জগৎ আমাদের শত্রু, আমরা ভিন্ন রামের কেহ শত্রু নাই)। ৫২

अस्त्रं तरूर्वीधरमम्बु पानं
वृत्तिः फलैर्नो गजवाजिनाद्यैः।
राष्ट्रं न पश्चान्न जनोऽभिरक्ष्यः
किं दुःस्थमांचक्ष्व भवेत्परेषाम्॥ ५३

अन्वयः। तरूर्वीधरं अस्त्रं, अम्बु पानं, फलैः वृत्तिः, गजवाजिनाद्यैः नो पश्चात् राष्ट्रं न, (अत एव) अभिरक्ष्यः जनो न, परेषां दुःस्थं किं (अस्ति)? आचक्ष्व॥ ५३

मल्लिनाथः। ह्यान्यभावमेवाह—शस्त्रमिति। तरवश्चोर्वीधराश्च। "जातिरप्राणिनाम्" इति द्वन्द्वैकवद्भावः। तदेव शस्त्रं न धनुः-खड्गादि। अम्बु जलमेव पीयत इति पानं पेयं न क्षीरादि। फलै-रेव वृत्तिर्जीवनं न व्रीहियवादि। गजवाजिनाथैस्तु नो न सन्त्येव। पश्चाद्राष्ट्रं न अत एवाभरक्ष्यो जनोऽपि न। परेषामस्मद्द्विषां दुःस्थं दुःखस्थं किमस्ति, आचक्ष्व॥ ५३

भरतः। चिरेण युद्धोपयोगिनी वस्तुनः कथमेषामपि कथं न हानिरित्यत्रेदमुच्यते—शस्त्रमित्यादि। तरुर्वीधरं वृक्षपर्वतं सर्वेषां सुग्रीवादीनां शस्त्रं न खड्गादि, तरवश्च उर्वीधराश्चेति समाहारद्वन्द्वः, अप्राणिजातित्वात् समाहारः इति परः। शस्यते हन्यते अनेनेति शस्त्रं। उशस् वधे "वासु" इति त्रः। अम्बु जलं पानं पेयं न मद्यादि। पीयत इदमिति कर्मणि अनट्। फलैर्वृत्तिर्जीविका नौदनादिभिः, हस्तिनीऽश्वाः स्त्रियश्च न सन्ति अतः शरीरमात्रत्वान्निश्चिन्ता, राष्ट्रं देशोऽपि न पश्चादस्ति अत एव अवस्थो जनोऽपि रक्षणीयो नास्ति यदर्थं देशगमनं स्यात्। एवं सति परेषां सुग्रीवादीनां किं दुःस्थं भवेत तत् आचक्ष्व कथय। एतद्विपरीतमस्माकं सर्वमिति भावः॥ ५३

অনুবাদ। শত্রুপক্ষের অস্ত্র বৃক্ষ ও প্রস্তর, পানীয় কেবল জল, ফলই জীবিকা, হস্তী অশ্ব নারী কিছুই নাই, পশ্চাৎ রাজ্য নাই, অবশ্যরক্ষণীয় লোকও নাই, তবে বল দেখি, সেই শত্রু-গণের কি দুঃখ বা অভাব হইতে পারে। ৫৩

सन्धानमेवास्तु परेण तस्मा-
न्नान्योऽभ्युपायोऽस्ति निरूप्यमाणः।
नूनं विसन्धौ त्वयि सर्वमेत-
न्नेष्यन्ति नाशं कपयोऽचिरेण॥*५४

अन्वयः। तस्मात् परेण ते सन्धानम् एव अस्तु, निरूप्यमाणः अन्यः अभ्युपायः न अस्ति, त्वयि विसन्धौ (सति) एतत् सर्वं नूनम् कपयः अचिरेण नाशं नेष्यन्ति॥ ५४

भरतः। सन्धानमित्यादि। तस्मात् पूर्वोक्तकारणात् परेण रामेण सह तव सन्धिरेव भवतु निरूप्यमाणः चिन्त्यमानोऽन्योऽभ्युपायो नास्ति, त्वयि विसन्धौ सन्धिमकुर्वाणे सति एतत् सर्वं राज्यादिकं कपयोऽचिरेणैव कालेन नाशं नेष्यन्ति प्रापयिष्यन्ति॥ ५४

অনুবাদ। অতএব প্রার্থনা করি, রামের সহিত তোমার সন্ধি হউক। অনেক চিন্তা করিয়া দেখিলাম ইহা ভিন্ন পরিত্রাণের অন্য উপায় নাই। তুমি সন্ধি না করিলে এ বানরগণ অচিরে এ সমস্তই নষ্ট করিবে। ৫৪

विभीषणोक्तं बहु मन्यमानः
प्रोन्नम्य देहं परिणामनम्रम्।

---

* नाशं नेता इति मल्लिनाथसम्मतः।

स्खलद्वलिर्वार्द्धककम्प्र

मातामहो रावणमित्युवाच ॥ ५५

अन्वयः । (अथ) विभीषणोक्तं बहु मन्यमानः परिणामनम्रं देहं प्रोन्नम्य स्खलद्वलिः वार्द्धककम्प्रमूर्द्धा मातामहः रावणं इति उवाच ॥ ५५

मल्लिनाथः । विभीषणेति । अथ विभीषणोक्तं बहु मन्यमानो गुरुकुर्वन् परिणामनम्रं जरावनतं देहं प्रोन्नम्य प्रयत्नेनोन्नम्य स्खलद्वलिस्खलद्वलीको वार्द्धकं वृद्धत्वम् । मनोज्ञादित्वात् वुञ् । तेन कम्प्रमूर्द्धा मातामहो मातुः पिता माल्यवान् । "पितृव्यमातुलमातामहपितामहाः" इति निपातनात् साधुः । इति वक्ष्यमाणमुवाच ॥ ५५

भरतः । विभीषणोक्तमित्यादि । विभीषणस्य उक्तं वाक्यं बहु मन्यमानः श्लाघमानो मातामहो माल्यवान् देहं प्रोन्नम्य उत्क्षिप्य रावणमिति वक्ष्यमाणमुवाच । कीदृशं देहं ?—परिणामनम्रं वयसः परिणामाद्वार्द्धक्यान्नमनशीलम् । स कीदृशः ? स्खलद्वलिः देहोत्क्षेपात् स्खलन्ती वलिर्जरायुतं चर्म यस्य सः । "वलिश्चामरदण्डे स्यात् जरसा श्लथचर्मणि ।" वार्द्धकेन वृद्धत्वेन कम्प्रः कम्पनशीलो मूर्द्धा मस्तकं यस्य सः । "नमिकम्पिस्म्यजस हिंसदीप" इत्यादिना रः । कम्पमूर्द्धेति पाठे कम्पनं इति कम्पः पचादित्वादच् । वृद्धस्य भावो वार्द्धकं "द्विकारसङ्गे" इति कञ् "पित्वे त्रि"रिति त्रिः, मातुः पितेत्यर्थे मातृपितृभ्यां तत्पितरि डामहोऽभिधानात् ॥ ५५

অনুবাদ। বিভীষণের কথাগুলি সঙ্গত মনে করায় জরাবনত দেহ বহুসংকারে উন্নত করিয়া (অর্থাৎ ব'সয়া) গাত্রের শিথিল চর্ম্মগুলি স্খলিত হইতে থাকাতে এবং বার্দ্ধক্যনি বন্ধন-মস্তক কাঁপাইতে কাঁপাইতে মাতামহ (মাল্যবান্) রাবণকে পরবর্ত্তী কথাগুলি বলিতে লাগিলেন। ৫৫

एकः पदातिः पुरुषो धनुष्मान्

योऽनेकमायानि वियद्गतानि ।

रक्षःसहस्राणि चतुर्दशाह्वीत्

का तत्र वो मानुषमात्रवार्त्ता[शङ्का] ॥५६

अन्वयः । यः एकः पदातिः धनुष्मान् (सन्) अनेकमायानि वियद्गतानि चतुर्दश रक्षःसहस्राणि आह्वीत्, तत्र वः का मानुषमात्रवार्त्ता ? ॥ ५६

मल्लिनाथः । एक इति । यो राम एकः एकाकी, पदातिः पादचारी भूमिष्ठ इत्यर्थः । धनुष्मान् धनुरेकायुधः सन् । अनेका माया येषां तानि वियद्गतानि खेचराणि चतुर्दश रक्षःसहस्राण्याह्वी-

दवधीत्। अर्द हिंसायाम् लुङि सिचि "इट ईटि" इति सलोपः। अजादित्वाद्वृद्धिः। तत्तस्मादत्र रामे वो युष्माकं मानुषमात्रवार्त्ता का मनुष्यत्वशङ्कापि कुत इत्यर्थः॥ ५६

भरतः। एक इत्यादि। यो रामो राक्षसानां चतुर्दशसहस्राणि आर्दीत् जघान, तत्र वो युष्माकं का मानुषमात्रशङ्का, मनुष्योऽयमिति को वितर्कः? नैवेत्यर्थः। कीदृशः? एकः असहायः, तत्रापि पदातिः न इस्त्यश्वाद्यारूढः, पुरुषः मनुष्यः न देवादिः, धनुष्मान् धनुर्मात्रायुधः। रक्षांसि कीदृशानि?—अनेकमायानि बहुकपटयुक्तानि, वियद्गतानि आकाशे स्थितत्वात् दुर्नुमशक्यानि, सहस्रशब्दस्यासंख्यमात्रवाचित्वेऽपि परम्परया गुणगुणिनोरभेदविवक्षया वा जननकर्मत्वं चतुर्दशसहस्रावच्छिन्नरक्षांसि आर्दीत् इत्यर्थः॥ ५६

অনুবাদ। যিনি একাকী পাদচারী পুরুষ, (মানুষ, দেবতা নহে) একমাত্র ধনুঃ ধারণ করিয়া অনেকমায়াবিশারদ শূন্যচারী চতুর্দশসহস্ররাক্ষস বধ করিয়াছেন, সেই রামে তোমাদের সামান্য মানুষ বুদ্ধি কিরূপে জন্মিল?। ৫৬

ब्रह्मर्षिभिर्नूनमयं सदेवैः
सन्तापितै रात्रिचरक्षयाय।
नराकृतिर्वानरसैन्यशाली
जगत्यजय्यो विहितोऽभ्युपायः॥ ५७

अन्वयः। अयं सन्तापितैः सदेवैः ब्रह्मर्षिभिः रात्रिचरक्षयाय जगति विहितः नराकृतिः वानरसैन्यशाली अजय्यः अभ्युपायः नूनम्॥ ५७

मल्लिनाथः। तर्हि कोऽसावत आह—ब्रह्मे ति। अयं सन्तापितैः सदेवैर्ब्रह्मर्षिभिर्वसिष्ठादिभिः रात्रिचरक्षयाय राक्षसनाशाय जगति विहितः कल्पितो नराकृतिर्मानुषाकारो वानरसैन्यशाली अजय्यो जेतुमशक्यः। "क्षय्यजय्यौ शक्यार्थे" इति निपातनात् साधु। अभ्युपायः कोऽपि दिव्यः साधनविशेषो नूनम्॥ ५७

भरतः। यदि न मानुषमात्रं तर्हि कीदृशोऽयमित्यस्य भेद उच्यते—ब्रह्मर्षिभिरित्यादि। ब्रह्मर्षिभिर्वशिष्ठादिभिः रात्रिचराणां राक्षसानां क्षयाय नाशाय नूनमयं रामोऽभ्युपायो विहितः कृतः। कीदृशैः? सदेवैः देवतासहितैः, सन्तापितैः पीडितैस्तैरित्यर्थात्, उपायनिधाने बीजमिदम्। कीदृशः? नराकृतिः मनुष्यरूपी देवविशेषः वानरसैन्येन युक्तः शोभमान इति विद्यासागरः। जगति अजय्यः जेतुं न शक्यः॥ ५७.

অনুবাদ। তোমা কর্তৃক উৎপীড়িত দেবতা ও ব্রহ্মর্ষিগণ নিশ্চয়ই রাক্ষসবংশধ্বংসের নিমিত্ত পৃথিবীতে এই মনুষ্যরূপী বানরসৈন্যসম্পন্ন রামকে অজেয় রাক্ষসবধের উপায় বিধান করিয়াছেন। ৫৭

वज्रावपा[भिघा]तैरविकृग्णमूर्त्तेः
फेनैर्जलानामसुरस्य मूर्ध्नः ।
चकार भेदं मृदुभिर्महेन्द्रो
यथा तथैतत्किमपीति बोध्यम् ॥ ५८

अन्वयः। महेन्द्रः वज्रावपातैः अविकृग्णमूर्त्तेः असुरस्य मूर्द्ध्नः मृदुभिः जलानां फेनैः भेदं यथा चकार, तथा एतत् किम् अपि इति बोध्यम् ॥ ५८

मल्लिनाथः। पुनर्दिव्यमेवाह—वज्रेति। महेन्द्रो वज्राव-पातैर्वज्रायुधप्रहारैरविकृग्णमूर्त्तेरभिन्नरूपस्य असुरस्य नमुचेर्मूर्ध्नः मृदुभिर्जलानां फेनैर्हिण्डीरैर्भेदं यथा चकार तथैतदपि किमपि दिव्यमवाच्यं वस्त्विति बोध्यं ज्ञेयम् ॥ ५८

भरतः। इदमेवंविधप्रकारी देवानामिति दर्शयितुमिदमुच्यते—वज्रेत्यादि। वज्रस्याभिघातैरपि अविकृग्णमूर्त्तेः अभग्नावयवस्य असुरस्य नमुचिनाम्नः सम्बन्धिनो मूर्ध्नो मस्तकस्य भेदं छेदं मृदुभिरपि जलानां फेनैर्महेन्द्रश्चकार यथा, तथा इदमपि नराकृति वस्तु देवानामपि बोध्यं ज्ञेयं भवद्भिरित्यर्थात् ॥ ५८

অনুবাদ। যেমন বজ্রপ্রহারেও অবিকৃতমূর্ত্তি নমুচি অসুরের মস্তক ইন্দ্র অতি কোমল জলফেন দ্বারা ভিন্ন করিয়াছিলেন, সেইরূপ এই রাম অপূর্ব্ব দিব্য বস্তু, ইহা নিশ্চয় জানিবে ।৫৮

क्व स्त्रीविष-[स]ह्याः करजाः क्व वक्षो
दैत्यस्य शैलेन्द्रशिलाविशालम् ।
सम्पश्यतैतद् द्यु स[ष]दां सुनीतं
बिभेद तैस्तन्नरसिंहमूर्त्तिः ॥ ५९

अन्वयः। (किञ्च) स्त्रीविषह्याः करजाः क्व ? शैलेन्द्रशिलाविशालं दैत्यस्य वक्षः क्व ? नरसिंहमूर्त्तिः तैः तत् वक्षः बिभेद। एतत् द्युसदां सुनीतं सम्पश्यत ॥ ५९

मल्लिनाथः। क्वेति। किञ्च स्त्रीभिर्विषह्याः सुसहाः सुखकराः करजा नखाः क्व। शैलेन्द्रशिलाविशालं तद्वत्कठोरमित्यर्थः। दैत्यस्य हिरण्यकशिपोर्वक्षः क्व। नरसिंहमूर्त्तिर्भगवांस्तैर्नखैस्तद्वक्षो बिभेद विदारयामास। एतद्द्युसदां देवानां सुनीतं सुनयम्। भावे क्तः। सम्पश्यत। तस्माद्रामेऽपि न मानुषबुद्धिः कार्य्येति भावः ॥ ५९

भरतः। क्व स्त्रीत्यादि। क्व स्त्रीभिरपि विशेषेणाकष्टेन सोढुं शक्याः करजा नखाः

क? दैत्यस्य हिरण्यकशिपोः शैलेन्द्रशिलावच्छिलातलं वचश्च क? अत्यन्तासम्भवि द्वयम्। तथापि युष्मत्पूर्वजानां देवानामेतत् सुनीतं सुनयं यूयं पश्यत, यतस्तैः करजैस्तद्वक्षो नरसिंहमूर्त्तिः दैत्यो बिभिद्, तद्वन्मनुष्योऽपि रावणान् हनिष्यतीति भावः। द्विगैरपत्यमिति "वाह्वाद्यतोऽन्यत्राकादिः" इत्यादिना गर्गादित्वात् यञ्। ॥ ५९

অনুবাদ। কোথায় রমণীসুখপ্রদ নখ? আর পর্ব্বতরাজশিলাবৎ কঠোর হিরণ্যকশিপুর বক্ষঃস্থলই বা কোথায়? নরসিংহমূর্ত্তি নারায়ণ সেই নখদ্বারা সেই কঠিন বক্ষঃ বিদীর্ণ করিয়াছিলেন। অতএব দেখ, দেবগণের নীতি কেমন সুন্দর। ৫৯

प्रमादवांस्त्वं हतधर्मवर्त्मा
गतो मुनीनामपि शत्रुभावम्।
कुलस्य शान्तिं बहु मन्यसे चेत्
कुरुष्व राजेन्द्र विभीषणोक्तम् ॥ ६०

अन्वयः (हे) राजेन्द्र! त्वं प्रमादवान् (अत एव) हतधर्म्मवर्त्मा (अत एव) मुनीनामपि शत्रुभावं गतः। कुलस्य शान्तिं बहु मन्यसे चेत्, विभीषणोक्तं कुरुष्व ॥ ६०

मल्लिनाथः। फलितमाह—प्रमादेति। हे राजेन्द्र! त्वं प्रमादवान् प्रमत्तः, अत एव हतधर्म्मवर्त्मा हतधर्म्ममार्गः, अत एव मुनीनामपि शत्रुभावं गतः। कुलस्य शान्तिं क्षेमं बहु मन्यसे चेद् विभीषणोक्तं कुरुष्व ॥ ६०

भरतः। प्रमादवानित्यादि। हे राजेन्द्र! कुलस्य शान्तिं कल्याणं त्वं चेत् यदि बहु मन्यसे तदा विभीषणोक्तं कुरुष्व। कीदृशस्त्वं? प्रमादवान् असावधानस्त्यक्तधर्म्मपथोऽजितेन्द्रियत्वात् मुनीनां समदर्शिनामपि शत्रुत्वं प्राप्तः। यदेव दैवोपायेन हिरण्यकशिपुप्रभृतयोऽपि हन्यन्ते स्म तदा प्रमादिनस्ते कथं रक्षा स्यादिति भावः॥ ६०

অনুবাদ। মহারাজ! তুমি পাগল হইয়া ধর্ম্মমার্গ নষ্ট করায় সমদর্শী মুনিগণেরও শত্রু হইয়া পড়িয়াছ। যদি বংশের মঙ্গল করা ভাল মনে কর, তাহা হইলে বিভীষণ যাহা বলে, তাহাই কর। ৬০

घोषेण तेन प्रतिलब्ध [लब्ध]संज्ञो
निद्राविलाक्षः श्रुतकार्य्यसारः।
स्फूर्ज्जन्[स्फुरद्] घनः साम्बुरिवान्तरिक्षे
वाक्यं ततोऽभाषत कुम्भकर्णः ॥ ६१

अन्वयः। ततः तेन घोषेण प्रतिलब्धसंज्ञः निद्राविलाक्षः कुम्भकर्णः श्रुतकार्य्यसारः (सन्) अन्तरिक्षे साम्बुः घन इव स्फूर्ज्जन् वाक्यम् अभाषत ॥ ६१

मल्लिनाथः । घोषेणेति । ततो माल्यवद्वाक्यानन्तरं तेन घोषेण विभीषणादिकण्ठघोषेण प्रतिलब्धसंज्ञः प्राप्तबोधो निद्राविलाक्षः कुम्भकर्णः श्रुतकार्यसारो माल्यवदादिमुखेन ज्ञातवृत्तान्तः सन्नन्तरिक्षे साम्बुघनो मेघ इव स्फूर्जन् गर्जन् वाक्यमभाषत ॥ ६१

भरत । घोषेणेत्यादि । मातामहवचनानन्तरं कुम्भकर्णो वाक्यं वक्ष्यमाणम् अभाषत उक्तवान्, सजलो मेघ इव अन्तरिक्षे स्फुरन् अत्युच्चत्वादासनस्यान्तरिक्षतुल्यत्वाद्वा, तेन प्रहस्तविभीषणमातामहानां घोषेण शब्देन प्रतिलब्धसंज्ञः विबुद्धः अत एव निद्राविलाक्षः निद्रया कलुषीकृतचक्षुः श्रुतकार्य्यसारः अवगतकार्य्यसारः ॥ ६१

अनुवाद । তাহার পর সেই কণ্ঠধ্বনি শ্রবণে নিদ্রা ভঙ্গ হওয়ায় নিদ্রাবিলনয়নে কর্ত্তব্য বিষয় অবগত হইয়া কুম্ভকর্ণ আকাশে জলপূর্ণ মেঘের ন্যায় সুগম্ভীরস্বরে পরবর্ত্তী কথাগুলি বলিতে লাগিল। ৬১

क्रियासमारम्भगतोऽभ्युपायो
नृद्रव्यसम्पत् सह देशकालौ ।
विपत्प्रतीकारयुतार्थसिद्धि-
र्मन्त्राङ्गमेतानि वदन्ति पञ्च ॥ ६२

अन्वयः । क्रियासमारम्भगतः अभ्युपायः, सह देशकालौ नृद्रव्यसम्पत् विपत्प्रतीकारयुता अर्थसिद्धिः एतानि पञ्च मन्त्राङ्गं वदन्ति ॥ ६२

मल्लिनाथः । क्रियेति । क्रियासमारम्भगतः अभ्युपायः कर्मणामारम्भोपायः, सह देशकालौ नृद्रव्यसम्पत् पुरुषद्रव्यसम्पत्तिर्देशकालौ चेत्यर्थः । विपत्प्रतीकारयुता अर्थसिद्धिः, विनिपातप्रतीकारः कार्य्यसिद्धिश्चेत्यर्थः । एतानि पञ्च मन्त्राङ्गं वदन्ति ॥ ६२

भरत । मन्त्रणां विना कथनमयुक्तमिति साङ्गं मन्त्रमुपदिशति—क्रियेत्यादि । एतानि पञ्च मन्त्राङ्गं वदन्ति नीतिविदः, क्रियाणां दुर्गादिकर्म्मणां यः समारम्भस्तद्‌गतस्तत्सम्बन्धी योऽभ्युपाय. येन कर्मारम्भो भवतीत्येकमङ्गं नृणां मनुष्याणां द्रव्याणाञ्च सम्पदिति द्वितीयं, तयोः सहकथनं परस्परोपयोगसूचनार्थं सह देशकालौ देशकालाभ्यां सहिता सम्पदित्यन्वयः । तेन यस्मिन् देशे यस्मिन् काले च सिद्धिस्तदुभयविशिष्टं तृतीयम् । अत्र सहवचनं योगवाहित्वसूचनाय अनुष्ठीयमानानां कर्म्मणां या विपत् तस्या यः प्रतिकारः तेन युक्ते सति चतुर्थम् । अस्य कार्य्यस्य सिद्धिरिति पञ्चमं, मन्त्राङ्गमित्येकवचनेन मिलितानामेषामङ्गत्वं न तु प्रत्येकमिति सूच्यते, सामान्यविशेषभावः इत्यन्ये ॥ ६२

अनुवाद । মন্ত্রণা বিনা উপদেশ বৃথা, এইজন্য অগ্রে মন্ত্রণা বলিতেছেন । কার্য্য আরম্ভের উপায়, লোক ও দ্রব্য সংগ্রহ, দেশ-কাল বিভাগ, বিপৎ-প্রতিকার এবং কার্য্যসিদ্ধি, পণ্ডিতেরা এই পাঁচটিকে মন্ত্রণার অঙ্গ বলিয়া নির্দ্দেশ করেন। ৬২

विनिश्चितार्थं समयं न देशं
क्रियाभ्युपायादिषु योऽतियायात् ।
स प्राप्नुयान्मन्त्रफलं न मानी
काले विपन्ने क्षणदाचरेन्द्र ! ॥ ६३

अन्वयः । यः क्रियाभ्युपायादिषु विनिश्चितार्थं समयं देशञ्च न अतियायात्, सः मन्त्रफलं प्राप्नुयात् । ( हे ) क्षणदाचरेन्द्र ! मानी काले विपन्ने ( सति ) न ( प्राप्नोति ) ॥ ६३

मल्लिनाथः । एवं मन्त्राङ्गान्युक्त्वा मन्त्रमाह—विनिश्चितेत्यादि । यो राजा क्रियाभ्युपायादिषु चतुर्ष्वङ्गेषु विषये विनिश्चितः सर्वथा भविष्यतीति निर्णीतोऽर्थः प्रयोजनं यस्मिंस्तं समयं कालं देशं च नातियायात् योग्यदेशकालव्याख्यानातिक्रमेण कर्म्मारम्भादिकं कुर्य्यादित्यर्थः, स मन्त्रफलं कार्य्यसिद्धिं प्राप्नुयात् । हे क्षणदाचरेन्द्र ! मानी अहङ्कारी काले विपन्नेऽतिपन्ने सति न प्राप्नोति ॥ ६३

भरतः । न निश्चितार्थमित्यादि । क्रियाभ्युपायादिषु मध्ये निश्चितार्थं निश्चितोऽर्थोऽत्रञ्च सिध्यति यस्मिन् समये काले देशे च तादृशं समयं कालं देशञ्च यो जिगीषुर्नातियायात् नातिक्रामेत्, हे राक्षसेन्द्र ! स एव मन्त्रफलमर्थसिद्धिं प्राप्नुयात न पुनर्मानी भवादृशः काले विपन्नेऽतिक्रान्ते सति प्राप्नोति । यदेव सीताहरणं कर्त्तुमिष्टं तदेव मन्त्रणा युक्ता, मानित्वात्त कृत्वा सम्प्रति किं मन्त्रेण साध्यमिति भावः ॥ ६३

অনুবাদ। যে রাজা ক্রিয়ারম্ভের উপায় প্রভৃতির নির্দ্দিষ্ট দেশ-কাল না অতিক্রম করেন তিনিই মন্ত্রণার ফল ( কার্য্যসিদ্ধি ) লাভ করেন। হে রাক্ষসেশ্বর! যিনি ( তোমার ন্যায় অভিমানী ) তিনি মন্ত্রফল প্রাপ্ত হন না। অভিমানে সময় অতিক্রম করিলে মন্ত্রফল পাওয়া যায় না। ৬৩।

औष्ण्यं त्यजेन्मध्यगतोऽपि भानुः
शैत्यं निशायामथवा हिमांशुः ।
अनर्थमूलं भुवनावमानी
मन्ये न मानं पिशिताशिनाथ ! ॥ ६४

अन्वयः । मध्यगतः अपि भानुः औष्ण्यं त्यजेत्, अथवा हिमांशुः निशायां शैत्यं त्यजेत । ( हे ) पिशिताशिनाथ ! भुवनावमानी अनर्थमूलम् अपि मानं न त्यजेत् ( इति ) मन्ये ॥ ६४

मल्लिनाथः । मानी मानमेवेच्छति न फलमिति चेत् सत्यमित्याह—औष्ण्यमिति । मध्यगतो मध्याह्नगतो भानुरौष्ण्यं

त्यजेत्, अथवा हिमांशुर्निशायां शैत्यं त्यजेत्। हे पिशिताशिनाथ राक्षसेन्द्र! भुवनावमानो लोकतिरस्कारी मानी अनर्थमूलं सर्वानर्थबीजमपि मानं न त्यजेदिति मन्ये जानामि॥ ६४

भरतः। औष्ण्यमित्यादि। हे पिशिताशिनाथ! राक्षसानामीश्वर! भानुर्नभोमध्ये गतोऽपि मध्याह्नस्थितोऽपि वा उष्णतां त्यजेत्, अथवा हिमांशुश्चन्द्रो निशायामपि शीतत्वं त्यजेत्। सम्भावने स्त्री। कदाचिदेवमपि सम्भाव्यते, न तु भुवनावमानी जगदवज्ञाशीलो भवादृशः अनर्थस्य मूलं कारणं त्यजेदित्यहं मन्ये। एतेन सम्प्रत्यपि सीतासमर्पणादेव रक्षा, तव त्वया मानिना कदापि न कार्यमिति भावः। भुवनान्यवमन्यत इति यद्वादित्वात् णिन् भुवनान्यवमन्तुं शीलं यस्येति परः॥ ६४

अनुवाद। হে রাক্ষসেন্দ্র! মধ্যাহ্নসূর্য্যও উষ্ণতা ত্যাগ করিতে পারেন, কিংবা সুধাংশু রজনীতে শীতলতা ত্যাগ করিতে পারেন, কিন্তু আমি মনে করি, তোমার ন্যায় জগৎপীড়ক অভিমানী, কিছুতেই সকল অনর্থের মূল অভিমান ত্যাগ করিতে পারে না। ৬৪

तथापि वक्तुं प्रसभं यतन्ते
यन्मद्विधाः सिद्धिमभीप्सवस्त्वाम्
विलोमचेष्टं विहितापं[व]ह[]हासाः
परैर्हि तत् स्नेहमयैस्तमोभिः॥ ६५

अन्वयः। तथापि सिद्धिम् अभीप्सवः मद्विधाः परैः विहितापहासाः विलोमचेष्टं त्वां वक्तुं प्रसभं यतन्ते (इति) यत् तत् स्नेहमयैः तमोभिः (कृताः) हि॥ ६५

मल्लिनाथः। तर्हि तूष्णीं भूयतां किमनेन कण्ठशोषणेनेत्याशङ्क्याह—तथापीति। तथापि ज्ञात्वापि सिद्धिमभ्युदयमभीप्सवः प्रेप्सवो मद्विधा मादृशा आप्ताः परैर्मूर्खैर्विहितापहासा अपहास्यमाना अपि विलोमचेष्टं विरुद्धप्रवृत्तिमनर्थप्रवृत्तं त्वां वक्तुं हितमुपदेष्टुं प्रसभं बलाद्यतन्ते इति यत्, तत् स्नेहमयैस्तमोभिर्हेतुभिरिति हेतोरित्यर्थः। न स्निग्धाः स्वजनहानिं सहन्त इति भावः॥ ६५

भरतः। तथापीत्यादि। यद्यपि त्वमेवंविधस्तथापि कार्य्यस्य सिद्धिं प्राप्तुमिच्छवो मद्विधा विभीषणादयः परैः अस्मदुत्तापकारिभिः प्रहस्तादिभिः शत्रुभिर्वा विहितावहासाः कृतोपहासा अपि सन्तः, विलोमचेष्टं प्रतिकूलकारिणं त्वां प्रसभं बलाद्वक्तुं यत् यतन्ते तत् स्नेहमयैः स्नेहरूपैस्तमोभिरज्ञानैर्हेतुभिरिव, स्नेहादेवमपि त्वां वक्तुं यतन्ते इत्यर्थः। यद्वा यतो वक्तुं यतन्ते तस्मात् स्नेहमयैस्तमोभिरुपलक्षिता इत्यर्थः। हिशब्दोऽवधारणे। पादपूरणे इत्यन्ये॥ ६५

अनुवाद। তাহা হইলেও কার্য্যসিদ্ধিপ্রার্থী আমার ন্যায় বান্ধবেরা যে মূর্খ প্রহস্তাদির

উপহাস্য হইয়াও অমঙ্গল ঘটাইতে উদ্যত, তোমাকে হিত উপদেশ দিতে বলপূর্ব্বক যত্ন করে, স্নেহময় অজ্ঞানই তাহার কারণ।৬৫

क्रूरा[:] क्रिया ग्राम्यसुखेषु सङ्गः
पुण्यस्य यः सञ्चयहेतुरुक्तः।
निषेवितोऽसौ भवताऽतिमात्रं
फलत्यवल्गु ध्रुवमेव राजन्!॥ ६६

अन्वयः। क्रिया क्रूरा ग्राम्यसुखेषु सङ्गः यः पुण्यस्य सञ्चयहेतुः उक्तः। हे राजन्! भवता अतिमात्रं निषेवितः असौ (व्यापारः) अवल्गु फलति एव ध्रुवम्॥ ६६

मल्लिनाथः। यदुक्तं विलोमचेष्टमिति तद्द्वयमनर्थोदर्कतां तस्याह—क्रूरेति। क्रिया चेष्टा क्रूरा हिंस्रा न कुत्रापि ग्राम्या। सङ्ग आसक्तिर्ग्राम्यसुखेषु न धर्म्येषु कर्म्मसु। व्यापारो ब्रह्मवध-परस्त्रीहरणादिः पुण्यसञ्चये हेतुरुक्तः शास्त्रे प्रतिपादितः, हे राजन्! भवता अतिमात्रं निषेवितोऽसौ व्यापारोऽवल्गु अनर्थं फलत्येव ध्रुवम्॥ ६६

भरतः। क्रूरा इत्यादि। क्रूराः क्रिया हिंसात्मिका, ग्राम्यसुखेषु परदारोपभोगादिषु सङ्ग आसक्तिरिति पुण्यस्य संचयहेतुः विनाशकारणं य उक्तो वेदविद्भिः, असौ भवता अति-मात्रम् अत्यर्थं निषेवितः सन्। हे राजन्! अवल्गु अमनोहरं कुत्सितं ध्रुवमेव फलति अवल्गु यथा स्यात्तथा फलति फलं दास्यतीति वा। भविष्यत्सामीप्ये कौ अभिधानात्॥६६

অনুবাদ। হে রাজন্! তোমার কার্য্যকলাপ হিংসাময়, পরদারোপভোগাদিগ্রাম্য সুখে তুমি রত, আর শাস্ত্র যাহাকে পুণ্যক্ষয়ের কারণ বলিয়া অভিহিত আছে, তুমি অতি-মাত্রায় (সেই সকল কার্য্যের) অনুষ্ঠান কর, (অতএব) ঐ সকল ব্যাপার নিশ্চয়ই তোমার অমঙ্গল ঘটাইবে।৬৬

दत्तं न किं, के विषया न भुक्ताः
स्थितोऽस्मि कं वा परिभूय नोच्चैः।
इत्थं कृतार्थस्य मम ध्रुवं स्या-
न्मृत्युस्त्वदर्थे यदि किं न लब्धम्॥ ६७

अन्वयः। (त्वत्प्रसादात् अर्थिभ्यः) किं न दत्तं, के वा विषयाः न भुक्ताः, कं वा परिभूय उच्चैः (पदे) न स्थितोऽस्मि—इत्थं कृतार्थस्य मम त्वदर्थे मृत्युः स्याद् यदि किं न लब्धं ध्रुवम्॥ ६७

मल्लिनाथः। सर्वं त्वदर्थमुक्तं, मम तु त्वदर्थं प्राणत्याग एव पुरुषार्थ इत्याह—दत्तमिति। त्वत्प्रसादादर्थिभ्यः किं न दत्तं, के वा विषया न भुक्ताः, कं वा परिभूय उच्चैः पदे न स्थितोऽस्मि। इत्थं कृतार्थस्य लब्धसर्वपुरुषार्थस्य मम त्वदर्थं मृत्युर्मरणं स्याद्-यदि किं न लब्धं सर्वमेव लब्धं ध्रुवम्। स्वाम्यर्थे युद्धमरणं वीराणां जन्मजीवनयोः फलमिति भावः॥ ६७

भरतः। किं निर्लोभचेष्टस्य भवतो ममोपदेशेन त्वदर्थे प्राणा एव त्याज्या इति दर्शयितुमिदमुच्यते—दत्तमित्यादि। किं न दत्तं ? बन्धुयाचकादिभ्यो मया ? अपि तु सर्वं दत्तं तव प्रसादादिति वाक्यशेषः, किं वा त्वया मह्यं किं न दत्तम् ? अपि तु सर्वं दत्तमेव। के विषयाः स्रक्चन्दनादयो मया न भुक्ताः ? अपि तु सर्वं एवोपभुक्ताः। किंवा उच्चैर्महत्स्थ परिभूय न स्थितोऽस्मि, किंवा परिभूय उच्चैर्महति पदे न स्थितोऽस्मीति वा। कं वेति पाठे—जनमिति शेषः। अपि तु सर्वमेव तिरस्कृत्य स्थितोऽस्मीत्यर्थः। इत्यम् अनेन प्रकारेण कृतार्थस्य लब्धजन्मफलस्य मम यदि त्वदर्थे मृत्युः ध्रुवम् अवश्यं स्यात् तदा किं न लब्धं ? सर्वमेव फलं प्राप्तमिति भावः॥ ६७

অনুবাদ। তোমার কৃপায় আমি যাচককে কোন বস্তু দান করি নাই ? উপভোগ্য বিষয়ের মধ্যে কোন বিষয় ভোগ করি নাই ? আর কাহাকেই বা পরাভব না করিয়া সর্বোচ্চপদে অধিষ্ঠান করিয়াছি ? (ফলতঃ এ সমস্তই সম্পন্ন হইয়াছে) এইরূপ সকল বিষয়েই কৃতার্থ হইয়া যদি তোমার জন্য আমার নিশ্চয় মৃত্যু হয়, তাহা হইলে আমার কি লাভ করিতে বাকী থাকে (প্রভুর জন্য যুদ্ধে মরণ ত' বীরগণের জন্ম-মরণের চরম ফল)। ৬৭

किं दुर्नयैस्त्वय्युदितैर्मृषार्थै-
वीर्येण वक्तास्मि रणे समाधिम्।
तस्मिन् प्रसुप्ते पुनरित्थमुक्त्वा
विभीषणोऽभाषत राक्षसेन्द्रम्॥ ६८

अन्वयः। (हे राजन्!) त्वयि उदितैः मृषार्थैः दुर्नयैः किं (तेषां) रणे वीर्येण समाधिं वक्तास्मि। इत्थम् उक्त्वा तस्मिन् प्रसुप्ते (सति) पुनः विभीषणः राक्षसेन्द्रम् अभाषत॥ ६८

मल्लिनाथः। किमिति। हे राजन्! त्वयि विषये उदितैः प्रहस्तोक्तैः, वदेः कर्मणि क्तः, यजादित्वात् सम्प्रसारणम्। मृषार्थैर्निरर्थकैर्दुर्नयैर्भानुं पिनष्मीत्यादिकैः शूरालापैः किं, किं तु तेषां रणे वीर्येण पराक्रमेण समाधिं समाधानं वक्तास्मि वक्ष्यामि। वचेर्लुटि मिपि तास्। किमिह सभामध्ये शूरालापैः ? सर्वेषां

रामरण एव निकषस्थानं, तत्र कर्म्मणैव व्यक्तिर्भविष्यतीति भावः। इत्थमुक्त्वा तस्मिन् कुम्भकर्णे प्रसुप्ते सति पुनर्विभीषणो राक्षसेन्द्र-मभाषत॥ ६८

भरत। किं दुर्नयैरित्यादि। प्रहस्तादीनामुदितैर्वाक्यैः किं धीरधीर्त्वत्वादिभिर्नृप यैः-र्ललोकैर्दुर्नयैर्नीतिरहितैस्त्वयि विषये किं फलं यतस्तेषां वाक्यानां समाधिं प्रतीकारं रणे रामसम्बन्धिना वीर्य्येणाहं वक्ष्यामि वदितास्मि। रामविक्रमेणैतद्वचनानां मिथ्यात्वं ज्ञास्यसि, अतो विभीषणवचनमेव उचितं न प्रहस्तादिवचनमित्यर्थः। इत्थम् एवमुक्त्वा तस्मिन् कुम्भ-कर्णे प्रसुप्ते निद्रिते सति विभीषणो राक्षसेन्द्रं पुनः अभाषत॥ ६८

अनुवाद। महाराज! প্রহস্তাদি রাক্ষসেরা তোমার নিকট যে সকল নিষ্ফল দুর্নীতিপূর্ণ কথা বলিয়াছে, পুনরায় তাহার উল্লেখে প্রয়োজন কি? আমি যুদ্ধক্ষেত্রেই রামবীর্য্য-প্রদর্শন করাইয়া তাহার প্রতীকার করিব। এইরূপ বলিয়া কুম্ভকর্ণ নিদ্রা গেলে বিভীষণ পুনরায় রাবণকে বলিতে লাগিলেন। ৬৮

निमित्तशून्यैः स्थगिता रजोभि-
र्दिशो मरुद्भिर्विकृतैर्विलोलैः।
स्वभावहीनैर्मृगपक्षिघोषैः
क्रन्दन्ति भर्त्तारमिवाभिपन्नम्॥ ६९

अन्वयः। निमित्तशून्यैः रजोभिः स्थगिताः विलोलैः मरुद्भिः विकृताः दिशः स्वभाव-हीनैः अभिपन्नं भर्त्तारं क्रन्दति इव॥ ६९

मल्लिनाथः। अथोत्पाता अनर्थसूचका दृश्यन्त इत्याह—पञ्चभिः श्लोकैर्निमित्तेत्यादिभिः। निमित्तशून्यैराकस्मिकै रजोभि-र्धूलिभिः स्थगितास्छन्ना विलोलैः क्षुभितैर्मरुद्भिर्विकृता भयङ्कराः दिशः स्वभावहीनैः प्रकृतिविपरीतैर्मृगपक्षिघोषैरभिपन्नं मृतं भर्त्तारं स्वपतिं क्रन्दन्तीव क्रोशन्तीव॥ ६९

भरतः। सम्प्रति रावणस्य भयोत्पादनार्थं दुर्निमित्तं कथ्यते—निमित्तेत्यादि। दिशः स्वभावात् हीनैर्विकृतैर्मृगाणां पक्षिणाञ्च घोषैः शब्दैः अभिपन्नं मृतं भर्त्तारं शोकात् क्रन्दन्ति इव। कीदृश्यो दिशः? निमित्तशून्यैः प्राणिव्यापाररूपकारणशून्यैः रजोभिः धूलिभिः स्थगिता आच्छादिताः। स्थगे संवृतौ। मरुद्भिश्च स्थगिताः, चकारोऽत्राध्याहार्य्यः। किं वा वायुभिः कर्त्तृभिर्धूलिभिः करणभूताभिः स्थगिताः। कीदृशैः मरुद्भिः?—विकृतैः प्रचण्डैः विलोलैः अनियतदिग्वर्त्तिभिः॥ ६९

অনুবাদ। বিনা কারণে ধূলিপটল উত্থিত হইয়া চারিদিক্ ব্যাপ্ত করিয়াছে, আর চঞ্চল-বায়ু বিকৃতভাবে বহমান হওয়ায় ঐ সমস্ত দিক্ অতি ভয়ঙ্কররূপ ধারণ করিয়া অস্বাভা-বিক মৃগপক্ষিরবে যেন মৃত প্রভুর শোকে রোদন করিতেছে। ৬৯

उत्पातजं छिद्रमसौ विवस्वान्
व्यादाय वक्त्राकृति लोकभीष्म[तीक्ष्णम्]
अत्तुं जनान् धूसररश्मिराशिः
सिंहो यथा कीर्णसटोऽभ्युदेति ॥ ७०

अन्वयः । असौ विवस्वान् वक्त्राकृति लोकभीष्मं उत्पातजं छिद्रं व्यादाय धूसररश्मि-राशिः ( सन् ) जनान् अत्तुं कीर्णसटः सिंहः यथा अभ्युदेति ॥ ७०

मल्लिनाथः । उत्पातेति । असौ विवस्वान् वक्त्राकृति मुखाकारं लोकभीष्मं लोकभयङ्करं भीषणमुत्पातजमुत्पातप्रयुक्तं छिद्रं रन्ध्रं व्यादाय विवृत्य धूसररश्मिराशिः सन् जनानत्तुं भक्षयितुं कीर्णसटो विच्छिन्नकेसरः सिंहो यथा सिंह इवाभ्युदेति ॥ ७०

भरतः । उत्पातजमित्यादि । असौ धूसरकिरणजाली विवस्वान् सूर्यः छिद्रं व्यादाय प्रसार्य जनानत्तुं भक्षयितुम् अभ्युदेति । यथा सिंहः कीर्णसटः प्रसारितकेसरकलापः सन् मुखं व्यादाय भक्षयितुम् उत्तिष्ठति तद्वत् । कीदृशं छिद्रम् ?—उत्पातजमुत्पाते अनिष्टे सति जातं, वक्त्राकृति मुखसदृशं लोकस्य तीक्ष्णं भयजनकम् । भीष्ममिति क्वचित् पाठः, भीममपि क्वचित् । सूर्ये छिद्रं लोकसङ्क्षयाय भवतीति प्रसिद्धिः ॥ ७०

অনুবাদ। সিংহ যেমন লোকভক্ষণের জন্য জটাজালবিকীর্ণ করিয়া ( ফুলাইয়া ) উত্থিত হয়, সেইরূপ ধূসরকিরণজাল ঐ দিবাকর মুখাকৃতি লোকভয়জনক উৎপাতসূচক ছিদ্র বিস্তীর্ণ করিয়া লোকসকল ভক্ষণ নিমিত্ত উদিত হইতেছেন। ৭০

मार्गं गतो गोत्रगुरुर्भृगूणा-
मगस्तिनाध्यासितविन्ध्यशृङ्गम् ।
संदृश्यते शक्रपुरोहितोऽह्नि
क्ष्मां कम्पयन्त्यो निपतन्ति चोल्काः ॥ ७१

अन्वयः । ( किञ्च ) भृगूणां गोत्रगुरुः अगस्तिना अध्यासितविन्ध्यशृङ्गं मार्गं गतः, शक्रपुरोहितः अह्नि संदृश्यते, उल्काश्च क्ष्मां कम्पयन्त्यः निपतन्ति ॥ ७१

मल्लिनाथः । मार्गमिति । किञ्च भृगूणां गोत्रगुरुर्भार्गवः शुक्रोऽगस्तिनागस्त्येन 'अगस्तिर्विन्ध्यकूटकः' इत्यगस्त्यपर्यायेषु यादवः । अध्यासितं विन्ध्यशृङ्गं यस्मिंस्तं मार्गं दक्षिणमार्गं गतः । शक्रपुरोहितो बृहस्पतिरह्नि संदृश्यते । उल्काश्च क्ष्मां कम्पयन्त्यो निपतन्ति ॥ ७१

भरतः। मार्गेत्यादि। अगस्त्येन मुनिना अध्यासितम् अधिष्ठितं विन्ध्यपर्वतस्य यत्र यव त व वर्त्म भृगूणां भार्गवानां गोत्रगुरुः शुक्र गतः, दक्षिणमार्गवर्ती शुक्रोऽनिष्टहेतुरिति प्रसिद्धिः। "नाम्न्यग्ने तिक् च" इति अस्यतेस्तिक्, अगस्त्यास्तिरगस्तिः मनीषादित्वादकारलोप, अगस्त्योऽगस्तिरिति शब्दभेदः। भृगूणामिति "भृग्वत्र्याङ्गिरः" इत्यादिना अपत्यप्रत्ययलोपः। शक्रपुरोहितो बृहस्पतिः अह्नि दिवसे संदृश्यते, उल्काः च्मां पृथिवीं कम्पयन्त्यो निपतन्ति ॥ ७१

অনুবাদ। ভৃগুবংশীয়দিগের গোত্রগুরু শুক্র অগস্ত্যের অধ্যাসিত বিন্ধ্যাচলের দক্ষিণদিকে উদিত হইয়াছেন, (অশুভসূচক)। ইন্দ্র পুরোহিত বৃহস্পতিকে দিবাভাগেই দেখা যাইতেছে (ইহাও অশুভ)। উল্কাসকলও পৃথিবীকে কাঁপাইয়া খসিয়া পড়িতেছে। ৭১

**मांसं हतानामिव राक्षसाना-**
**माशंसवः क्रूरगिरा रुवन्तः।**
**क्रव्याशना[शिनो] दीप्तकृशानुवक्त्रा**
**भ्राम्यन्त्यभीताः परितः पुरं नः ॥ ७२**

अन्वयः। (किञ्च) हतानां राक्षसानां मांसम् आशंसवः इव क्रूरगिरः रुवन्तः दीप्तकृशानुवक्त्राः क्रव्याशनाः नः पुरं परितः अभीताः (सन्तः) भ्राम्यन्ति ॥ ७२

मल्लिनाथः। मांसमिति। किं च हतानां राक्षसानां मांसमाशंसवो भिक्षव इव "सनाशंसभिक्ष उः" क्रूरगिरः परुषारावा रुवन्तः क्रोशन्तो दीप्तः कृशानुर्येषु तानि वक्त्राणि येषां ते अग्निगर्भमुखाः क्रव्याशनाः शृगालादयो नोऽस्माकं पुरं परितः सर्वतोऽभीता निर्भीका भ्राम्यन्ति चरन्ति ॥ ७२

भरतः। मांसमित्यादि। क्रव्याशिनः शृगालादयः निर्भयाः सन्तो रुवन्तो नदन्तो नोऽस्माकं पुरं लङ्कां परितः सर्वतो भ्राम्यन्ति, भ्रमु अनवस्थाने "भ्रमक्लमभ" इति पक्षे श्यन्, शमादित्वात् दीर्घः, 'धिक् समय' इत्यादिना परितोयोगे द्वितीया। क्रव्याशिनः कीदृशाः? —हतानामिव राक्षसानां मांसं भक्षयितुम् आशंसव आकाङ्क्षन्तः सन्तः "भिक्षाशंस उः" इत्युप्रत्ययः। क्रूरगिरो भीषणनादाः दीप्तकृशानुवक्त्राः उल्कामुखाः ॥ ७२

অনুবাদ। নিহত রাক্ষসগণের মাংসপ্রার্থী হইয়াই যেন কর্কশচিৎকার রব করিতে করিতে অগ্নিদনমুখী মাংসাশী শৃগালাদি জন্তুগণ আমাদের নগরের চারিদিকে নির্ভয়চিত্তে ভ্রমণ করিতেছে। ৭২

**पयो घटोध्नीरपि गा दुहन्ति**
**मन्दं विवर्णं विरसञ्च गोपाः**

हव्येषु कीटोपजनः सकेशो
न दीप्यतेऽग्निः सुसमिन्धनोऽपि ॥ ७३

अन्वयः। गोपाः घटोघ्नीः अपि गाः मन्दं विवर्णं विरसञ्च पयः दुहन्ति। हव्येषु सकेशः कीटोपजनः, सुसमिन्धनः अपि अग्निः न दीप्यते ॥ ७३

मल्लिनाथः। पय इति। गोपा गोपालकाः, घटा इवोधांस्यापीनानि यासां ता घटोघ्नीरपि गा धेनूः, 'ऊधस्तु क्लीबमापीनम्' इत्यमरः। "ऊधसोऽनङ्" इत्यनङ्समासान्तः। "बहुव्रीहेरूधसो ङीष्" मन्दमल्पं विवर्णं विरसं च रूपरसान्तरमापन्नमित्यर्थः। पयः क्षीरं दुहन्ति, 'दुह्याचि—' इत्यादिना द्विकर्मकत्वम्। हव्येष्वोदनादिषु सकेशः कीटोपजनः कीटजन्म। जनेर्भावे घञ्। "जनिवध्योश्च" इति वृद्धिप्रतिषेधः। सर्वत्रौदनादिकं केशकीटावसन्नं दृश्यत इत्यर्थः। सुसमिन्धनोऽप्यग्निर्न दीप्यते ॥ ७३

भरतः। पय इत्यादि। गोपा घटोघ्नीरपि पीवरस्तनीरपि गा मन्दम् अल्पं विवर्णं स्वाभाविकवर्णहीनं विरसमस्वादु पयो दुहन्ति भोजयन्ति। घट इव ऊधस्तनो यासां, "ऊधसोऽनङ्" इति ङीप् तस्य नकारश्च। गवां गणाः प्रस्तुतपीवरोधस इत्यादि प्रयोगास्तु ङीप्येव तस्य नकाराभावात् "सदानोऽल्लोपः" इति अनोऽल्लोपः। गां पान्ति रक्षन्तीति गोपाः, "कमन्यानात्" इति डः। हव्येषु हवनीयेषु घृतादिषु केशैः सह कीटोपजनः कीटजन्म भवति, घञि "जनवधः" इति ह्रस्वः। शोभनसम्यगिन्धनयुक्तोऽपि अग्निर्न दीप्यते न ज्वलति। केचित्तु हव्येषु सत्स्वपि अग्निर्न दीप्यते। कीदृशः?—कीटस्योपजनो यत्रेति व्याचक्षते ॥ ७३

অনুবাদ। গোপগণ কলসের ন্যায় বড় বড় পালানযুক্ত গাভী দোহন করিয়া অত্যল্প বিবর্ণ ও বিস্বাদ দুগ্ধ বাহির করিতেছে, ঘৃত অন্নাদিতে সলোম কীট জন্মিতেছে, প্রচুর তৃণকাষ্ঠাদি দানেও অগ্নি জ্বলিতেছে না। ৭৩

तस्मात् कुरु त्वं प्रतिकारमस्मिन्
स्नेहान्मया रावण! भाष्यमाणः।
वदन्ति दुःखं ह्यनुजीविवृत्ते
स्थिताः परस्थं परिणामपथ्यम् ॥ ७४

अन्वयः। (हे) रावण! तस्मात् मया स्नेहात् भाष्यमाणस्त्वम् अस्मिन् प्रतिकारं कुरु। (तथाहि) अनुजीविवृत्ते स्थिताः परस्थं परिणामपथ्यं वदन्ति ॥ ७४

मल्लिनाथः। तस्मादिति। हे रावण! तस्माद् दुर्निमित्तदर्शनान्मया स्नेहाद् भ्रातृस्नेहाद् भाष्यमाणो हितमुच्यमानस्त्वमस्मि-

मनर्थे प्रतिकारं परिहारम्, बहुलग्रहणात् "उपसर्गस्य घञि—" इति न दीर्घः, कुरु। तथाहि—अनुजीविवृत्ते सेवकवृत्तौ स्थिताः सेवका इत्यर्थः, पदस्थं स्वामिपदस्थं स्वामिनं दुःखयतीति दुःखं तत्कालासह्यं परिणामे उत्तरकाले पथ्यं हितं वदन्ति उपदिशन्ति, अतो मयोच्यत इत्यर्थः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तर-न्यासः॥ ७४

भरतः। तस्मादित्यादि। यत एवंविधानि विनाशसूचकानि निमित्तानि दृश्यन्ते तस्मात् हे रावण! मया त्वं भ्रातृभावमाश्रित्य अस्मिन् प्रकृते वस्तुनि प्रतीकारं सीताप्रत्यर्पणेन सन्धिं कुरु। कुत एवमप्रियं कथ्यत इत्याह—हि यस्मादनुजीविवृत्ते सेवककर्मणि स्थिता जना दुःखमापाततः कटुत्वात् दुःखजनकमपि परिणामपथ्यमुत्तरकाले हितं वचः स्वामिपदे स्थितं जनं वदन्ति दुःखहेतावपि दुःखशब्दप्रयोगो दृश्यते, यथा—कष्टं व्याकरणम्। पदे तिष्ठतीति "इनजनात्" इति डः॥ ७४

অনুবাদ। হে রাবণ! উক্ত অশুভচিহ্ন সকল দেখা গিয়াছে বলিয়া ভ্রাতৃস্নেহেই এই হিত কথাগুলি বলিলাম, তুমি এ বিষয়ের প্রতীকার কর, (সীতাকে ফিরাইয়া দাও)। সেবকেরা আপাত অসহ্য ও পরিণামে শুভকর বাক্যই প্রভুদিগকে বলিয়া থাকে। ৭৪

विरुग्णसंकीर्णविपन्नभिन्नैः
प्रक्षुण्णसंक्षीणशितास्त्रवृक्णैः।
यावन्नराशैन रिपुः शवाशान्
सन्तर्पयत्यानम तावदस्य॥ ७५

अन्वयः। (हे रावण!) रिपुः विरुग्णसङ्कीर्णविपन्नभिन्नैः प्रक्षुण्णसंक्षीणशितास्त्र-वृक्णैः नराशैः शवाशान् यावत् न सन्तर्पयति तावत् अस्य नम॥ ७५

मल्लिनाथः। विरुग्णेति। हे रावण! रिपुः रामो विरुग्णै-र्भग्नैः, रुजो भङ्गे "ओदितश्च" इति निष्ठानत्वे णत्वम्, सङ्कीर्णैः संश्लिष्टैर्विपन्नैर्मृतैर्भिन्नैर्विदारितैः प्रक्षुण्णैः संचूर्णितैः. यथायोगं रदाभ्यां निष्ठानत्वम्। संक्षीणैः पराजयलज्जितैः। "नुदविद—" इत्यादिना पक्षे निष्ठानत्वम्। शितास्त्रवृक्णैः शितशरैश्छिन्नैः, ओव्रश्च छेदने. ओदित्त्वान्निष्ठानत्वम्। "स्कोः—" इति संयोगादि सकारलोपः, "चोः कुः", नराशैर्नरभक्षकैः राक्षसैः शवानश्न-न्तीति शवाशान् कुणपाशिनो गृध्रगोमायुप्रमुखान्, उभयत्र अश्नातेः "कर्मण्यण्", यावन्न सन्तर्पयति तावदस्य रामस्य नम रामं प्रणमेत्यर्थः, सम्बन्धसामान्ये षष्ठी॥ ७५

भरतः । विरुग्णेत्यादि । यावत् रिपुः रामो नराशैः राक्षसैः प्रवाणान् शतमखकान् गृध्रमालादीन् सन्तर्पयति; तावदस्य रिपोस्त्वम् आनम प्रणम, अस्येति "समार्थेन" इत्यादिना कर्मणि षष्ठी । अस्य समीपे आनम नम्रो भव—समीपलक्षणया षष्ठीयमिति विद्यासागरः चरणाविल्यध्याहरन्त्यन्ये । कीदृशैः ? विरुग्णैः भग्नाङ्गैः, रुजो धौ "भञ्जे सूत्वायोः" इति ओदित्वात् क्तस्य नत्वम् । सङ्कीर्णैः इतस्ततो विक्षिप्तैः, कॄ श विक्षेपे "ऋदिरतो" इतीर् 'व्यनच् तयि" इति दीर्घः, पूर्वेण रेफात् क्तस्य नत्वम् । विपन्नैः मृतैः, यौ पद ङ् गतौ विपूर्वो विपत्ति-माह पूर्वेण दकारात् क्तस्य नत्वम् । भिन्नैर्विदारितदेहैः' ञ धौ भिदिर्भिदिरं भिद विदा-रणम् । प्रक्षुण्णैः संपिष्टैः, ञ धौ क्षुदिर् क्षुदि क्षुत संचूर्णनम् । ह्रीणैर्लज्जितैर्वयमपीदृशीं दशां प्राप्ता इति मत्वा । ह्री लज्जे, "ह्रीघ्रावोन्द" इति क्तस्य पक्षे नत्वम्, शितास्त्रेण वृकृत्तैः छिन्नैः, वृश् शु छेदे "व्रश्चः काङ् च" इति क्तस्य नत्वं, काङ्वस्य कत्वे तन्निमित्तस्य शस्य सत्वे "स्कादेः सो लोपः शङ्खपाद्योः" इति निः ॥ ७५

অনুবাদ। হে রাবণ! শত্রু রামচন্দ্র বতক্ষণ ভগ্ন, সংশ্লিষ্ট, মৃত, বিদারিত, চূর্ণিত লজ্জায়মলাজ্জত এবং শাণিতাস্ত্রে ছিন্ন নরভোজী রাক্ষস দ্বারা মৃতদেহভোজী শৃগাল শকুনি প্রভৃতির তৃপ্তি সাধন না করেন, ইহার মধ্যেই তুমি গিয়া তাঁহার চরণে প্রণাম কর। ৭৫

भ्रूभङ्गमाधाय विहाय धैर्यं
विभीषणं भीषणरूक्षचक्षुः ।
गिरं जगादोग्रपदामुदग्रः
स[स्वं] स्फावयन् शक्ररिपुः प्रभावम् ॥ ७६

अन्वयः । ( अथ ) शक्ररिपुः भ्रूभङ्गम् आधाय धैर्यं विहाय भीषणरूक्षचक्षुः उदग्रः ( सन् ) प्रभावं संस्फावयन् विभीषणं उदग्रपदां गिरं जगाद ॥ ७६

मल्लिनाथः । भ्रूभङ्गमिति । अथ शक्ररिपुर्दशास्यो भ्रूभङ्ग-माधाय भ्रुकुटीं कृत्वा धैर्यं निर्विकारतां विहाय भीषणानि भय-ङ्कराणि रूक्षाणि क्रूराणि चक्षूंषि यस्य स तथा उदग्र उन्नमितोर्ध्व-कायः सन् प्रभावं सामर्थ्यं संस्फावयन् संवर्ध्य प्रकटयन्नित्यर्थः । "स्फायो वः" इति णिचि वकारादेशः । विभीषणमुदग्रपदां परुषा-क्षरां गिरं जगाद ॥ ७६

भरतः । भ्रूभङ्गमित्यादि । एवं विभीषणवचनात् कोपेन भ्रूभङ्गं भ्रूकुटीम् आधाय आबध्य धैर्यं विहाय त्यक्त्वा शक्ररिपुः रावणः प्रभावं स्वकीय विक्रमं स्फावयन् वर्द्धयन् विभी-षणं गिरं वाचं जगाद । कीदृशः ?—भीषणं भयानक रूक्षं परुषं चक्षुर्यस्य तादृशः । उदग्र उन्नमितदेहः । गिरं कीदृशम् ?—उग्रपदां स्वरूपतोऽर्थतश्च कठोरत्वात् उग्राणि पदानि यत्र, स्फायी ङ संवृद्धौ "पातिस्फायोः" इति वङ् ॥ ७६

অনুবাদ। বিভীষণের কথা শ্রবণে রাবণ ক্রোধে অধীর হইয়া ভ্রূকুটিভীষণরক্ত-নয়নে দেহের ঊর্দ্ধাংশ উন্নত করিয়া প্রভাব বদ্ধিত করিতে করিতে বিভীষণকে কর্কশ বাক্য বলিতে লাগিল। ৭৬

शिला तरिष्यत्युदके न पर्णं
ध्वान्तं रवेः स्यन्त्स्यति वह्निरिन्दोः ।
जेता परोऽहं युधि जेष्यमाण-
स्तुल्यानि मन्यस्व पुलस्त्यनप्तः ! ॥ ७७

अन्वयः । ( हे ) पुलस्त्यनप्तः ! शिला उदके तरिष्यति पर्णं न, रवेः ध्वान्तं स्यन्त्स्यति इन्दोः वह्निः ( स्यन्त्स्यति ) युधि परः जेता अहं जेष्यमाणः तुल्यानि मन्यस्व ॥ ७७

मल्लिनाथः । शिलेति । पुलस्त्यनप्तः पुलस्त्यस्य पौत्र ! स्ववंशस्य गन्धहीनोऽसीति भावः । 'नप्तारौ पौत्रदौहित्रौ' इति यादवः । शिला उदके तरिष्यति प्लविष्यते पर्णं न तरिष्यति किन्तु मङ्क्ष्यतीति भावः । रवेरर्काद्ध्वान्तं स्यन्त्स्यति स्यन्दिष्यते स्रविष्यतीत्यर्थः । स्यन्दू प्रस्रवणे । "वृद्भ्यः स्यसनोः" इति पक्षे परस्मैपदम् । "न वृद्भ्यश्चतुर्भ्यः" इतीट्प्रतिषेधः । इन्दोश्चन्द्राद्वह्निः स्यन्त्स्यतीत्यनुषङ्गः । युधि परो जेताहं जेष्यमाणस्तुल्यान्येतानि मन्यस्व । शिलाप्रतरणादिकल्पो मे पराजय इति भावः । अत्र शिलाप्रतरणपर्णमज्जनादिवाक्यार्थानां पराजयवाक्यार्थेन सामानाधिकरण्याभावात् सादृश्याक्षेपाद्वहूनां मालया निबन्धनाच्चासम्भवद्वस्तुसम्बन्धा वाक्यार्थनिष्ठा मालानिदर्शना । "असम्भवद्धर्मयोगादुपमानोपमेययोः । प्रतिबिम्बक्रिया गम्या यत्र सा स्यान्निदर्शना ॥" इति लक्षणात् ॥ ७७

भरतः । शिलेत्यादि । उदके जले शिला प्रस्तरस्तरिष्यति न तु पर्णं पत्रं तरति, रवेः सकाशात् ध्वान्तं स्यन्त्स्यति गमिष्यति, इन्दोः सकाशात् वह्निः स्यन्त्स्यति स्यन्दू क्ष्नु स्रुतौ "वृद्भ्यो नेम् पि स्यसनोः" इति इम्निषेधः । अत एव युधि परोऽन्य शत्रुर्वा जेता, अहन्तु जेष्यमाणः, हे पुलस्त्यनप्तः ! हे पुलस्त्यमुनिपौत्र ! एतानि शिलातरणादीनि तुल्यानि मन्यस्व ; यदि शिलातरणादिकं सम्भवेत् तदा मे पराजय इत्यर्थः । पुलस्त्यब्राह्मणस्य पौत्रत्वान्मूढत्वमपि तादृशमिति नप्तृसम्बोधनेन सूच्यते ॥ ७७

অনুবাদ। পুলস্ত্যপৌত্র ! পাথর জলে ভাসিবে, পত্র ডুবে , সূর্য্য হইতে অন্ধকার এবং চন্দ্র হইতে অগ্নি নির্গত হইবে, আর যুদ্ধে শত্রু জেতা হইবে, আমি পরাজিত হইব, এ সকল সমান মনে করিও। ৭৭

अनिर्वृतं भूतिषु गूढवैरं
सत्कारकालेऽपि कृताभ्यसूयम् ।
विभिन्नकर्माशयवाक्कुलेनो [ कुले नो ]
मा ज्ञातिचेलं भुवि कस्यचिद्भूत् ॥ ७८

अन्वयः । भूतिषु अनिर्वृतं गूढवैरं सत्कारकालेऽपि कृताभ्यसूयं विभिन्नकर्माशयवाक् कुलेनः ज्ञातिचेलं भुवि कस्यचित् ( अपि ) मा भूत ॥ ७८

मल्लिनाथः । अनिर्वृतमिति । भूतिषु सम्पत्सु अनिर्वृतं बहु गृहीत्वाप्यसन्तुष्टं गूढवैरं बहिः प्रसन्नमपि अन्तःसम्भृतमत्सरं सत्कारकालेऽपि कृताभ्यसूयं सत्कुर्वत्स्वपि दोषदृष्टिपरम् । विभिन्नानि विपरीतानि कर्माण्याशया अभिप्राया वाचश्च यस्य तत् । "वचस्यन्यन्मनस्यन्यत् कर्मण्यन्यद्दुरात्मनाम्" इति भावः । कुलस्य एनः जन्मान्तरसञ्चितपापस्वरूपं ज्ञातिचेलं गर्हितज्ञातिर्भुवि कस्यचिदपि मा भूत् । गर्हितो ज्ञातिः ज्ञातिचेलम् । 'चेलो नीचेऽन्यवच्चेलसंयुक्ते गर्हितेऽन्यवत्' इति विश्वः । अत्र विशेषणसमासे प्राप्ते विशेष्यस्य पूर्वनिपातार्थः "कुत्सितानि कुत्सनैः" इति समासः । अत्र विशेषणस्य चेलशब्दस्य "वैयाकरणखसूच्यादिवत् विशेष्यलिङ्गत्वे न्याय्ये नपुंसकत्वं चिन्त्यम् । अथवा नपुंसकपाठः प्रामादिको लेखकहस्तागतः । अनिर्वृतो भूतिषु गूढवैर इत्यादि सर्वत्र पुंलिङ्गान्तरपाठ एव साधीयान् द्रष्टव्यः । कुलेन इति नियतलिङ्गत्वात् उभयत्राप्यविरुद्धमिति सर्वं सुस्थम् ॥ ७८

भरत० । अनिर्वृतमित्यादि । भुवि ईदृशं ज्ञातिचेलं गर्हितो ज्ञातिः नोऽस्माकं कुले कस्यचित् माभूत न भवतु अस्माकमपि कस्यचित कुले इत्यर्थो वा । कीदृशं ?—भूतिषु ज्ञातिसम्बन्धिनीषु सम्पत्तिषु अनिर्वृतं सुखरहितं गूढवैरं कालं हनिष्यामीति गुप्तद्वेषं सत्कारकालेऽपि प्रणामसमयेऽपि कृताभ्यसूयं कृतामर्षं गुणेऽपि दोषाविष्करणमसूया । विभिन्नाः परस्परविरोधिन्यः कर्माशयवाचो यस्य क्रूरत्वादाशयोऽन्यो वाक्कर्मणी चान्ये इत्यर्थः । "चलो नीचेऽन्यवच्चेलसंयुक्ते गर्हितेऽन्यवत्" इति विश्वप्रकाशः । यद्यपि चेलशब्दस्य गर्हिते वाच्यलिङ्गत्वमुक्तं तथापि "गर्हितेऽप्यवसाने च चेलमाचक्षते बुधैः" इत्यनुशासनादस्य क्लीबत्वम् । सामान्यविवक्षया नपुंसकत्वमिति विद्यासागरः । विशेषणस्य क्वचित् परनिपातोऽभिधानात् ॥ ७८

অনুবাদ। জ্ঞাতির সম্পদ দর্শনে অসুখী, অন্তরে বিষের বুদ্ধিসম্পন্ন, সম্মানদাতার প্রতিও

অদূরদর্শী, যাহার কার্য্য, অভিপ্রায় ও বাক্য বিভিন্ন ( মনে এক কথায় ও কার্য্যে অন্য ) এবং কুলকলঙ্কস্বরূপ সে হেন গর্হিত জ্ঞাতি যেন জগতে কাহারও বংশে জন্মগ্রহণ না করে। ৭৮

इच्छन्त्यभीक्ष्णं क्षयमात्मनोऽपि
न ज्ञातयस्तुल्यकुलस्य लक्ष्मीम्।
नमन्ति शत्रून् न च बन्धुवृद्धिं
सन्तप्यमानैर्हृदयैः सहन्ते॥ ७९

अन्वयः। ( किञ्च ) ज्ञातयः अभीक्ष्णम् आत्मनः अपि क्षयम् इच्छन्ति। ( तथापि ज्ञातयः ) तुल्यकुलस्य लक्ष्मीं न ( सहन्ते ) शत्रून् च नमन्ति ( किन्तु ) सन्तप्यमानैः हृदयैः ( उपलक्षिताः ) बन्धुवृद्धिं न सहन्ते॥ ७९

मल्लिनाथः। इच्छन्तीति। किञ्च ज्ञातयोऽभीक्ष्णमात्मनोऽपि क्षयमिच्छन्ति, तत्क्षये स्वस्यापि क्षयोऽस्तु। तथापि तुल्यकुलस्य सगोत्रस्य लक्ष्मीं नेच्छन्ति न सहन्ते। शत्रूंश्च नमन्ति मानहानिं न पश्यन्तीति भावः। किन्तु सन्तप्यमानैरीर्ष्याग्निना दह्यमानै-र्हृदयैरुपलक्षिता बन्धुवृद्धिं न सहन्ते। मानहान्यात्मनाशावपि सह्यौ न बन्धुवृद्धिरित्यर्थः॥ ७९

भरतः। इच्छन्तीत्यादि। ज्ञातयो वरम् आत्मनोऽपि क्षयमभीक्ष्णं पुनः पुनरिच्छन्ति न पुनः समानकुलोत्पन्नस्य भ्रात्रादेर्लक्ष्मीमिच्छन्ति, तथा वरं शत्रून् नमन्ति न पुनर्बन्धूनां वृद्धिं सन्तप्यमानैः ईर्ष्यादह्यमानैर्हृदयैः सहन्ते॥ ७९

অনুবাদ। অধিক কি, জ্ঞাতিবর্গ বারংবার নিজের ক্ষতি ইচ্ছা করিবে, তথাপি জ্ঞাতির শ্রীবৃদ্ধি দেখিতে পারিবে না। শত্রুকে প্রণাম করিবে, কিন্তু ঈর্ষাগ্নি দহ্যমান হৃদয়ে জ্ঞাতি বৃদ্ধি সহ্য করিতে পারিবে না। ৭৯

त्वयाद्य लङ्काभिभवेऽतिहर्षाद्-
हृ[दु]ष्टोऽतिमात्रं विहतोऽन्तरात्मा।
धिक् त्वां मृषा ते मयि दुःस्थबुद्धि-
र्वदन्निदं तस्य ददौ स पार्ष्णिम्॥ ८०

अन्वयः। अद्य त्वया लङ्काभिभवे ( सत्यपि ) अतिमात्रं हृष्ट अन्तरात्मा अतिहर्षात् विहतः, मयि ते दुःस्था बुद्धिः मृषा, ( अतः ) त्वां धिक्, इदं वदन् सः ( रावणः ) तस्य पार्ष्णिं ददौ॥ ८०

मल्लिनाथ: । किमपराद्धं मया येनायमुपालम्भ इत्याह— त्वयेति । अद्य त्वया लङ्कायाः अभिभवे उपप्लवे सत्यपि अतिमात्रं हृष्टोऽन्तरात्मा अन्तर्यामो अतिहर्षाद्धितः जेतुं न शक्य इत्यादिना प्रकाशितः । मयि विषये तव दुःस्था दुःखतप्ता बुद्धिः मृषा मिथ्या । अतस्त्वां धिगितीदं वदन् स रावणस्तस्य विभीषणस्य पार्ष्णिं गुल्फाधोऽङ्घ्रिभागम् । 'स्त्रियां पार्ष्णिस्तयोरधः' इत्यमरः । ददौ पादेन प्रजहारेत्यर्थः ॥ ८०

भरत: । पूर्व्वश्लोकद्वयार्थं विभीषणे घटयितुमिदमुच्यते—त्वयेत्यादि । लङ्काया अभिभवं दाहादौ सति त्वया अतिहर्षात् दुष्टाऽतिमात्रम् अतिशयेन दुष्टोऽन्तरात्मा प्रकाशित एतावन्तं कालं गुप्त आसीदिति भाव: । मयि अस्मद्विषये दुःस्थोऽयमरिभिरभियुक्तः ऽयमिति ते तव बुद्धिर्मृषा मिथ्या, अतस्त्वां धिगिति वदन् स दशाननस्तस्य विभीषणस्य पार्ष्णिं पादप्रहारं ददौ ॥ ८०

অনুবাদ। এখন লঙ্কার বিপদ্ উপস্থিত হইয়াছে বলিয়া তোমার অন্তরাত্মা অত্যন্ত হৃষ্ট হইয়াছে, অতি আনন্দে তাহাই প্রকাশ করিয়াছ। আমার উপর তোমার দুঃখসন্তপ্তা বুদ্ধি জন্মিয়াছে—ইহা মিথ্যা কথা; অতএব তোমাকে ধিক্! এই কথা বলিয়া সেই রাবণ সিংহাসন পার্শ্বস্থিত বিভীষণের মস্তকে পদাঘাত করিল। ৮০

तत: स कोपं क्षमया निगृह्णन्
धैर्य्येण मन्युं विनयेन गर्वम् ।
मानं [मोहं] धियोत्साहवशादशक्तिं
समं चतुर्भिः सचिवैरुदस्थात् ॥ ८१

अन्वय: । तत: स: कोपं क्षमया निगृह्णन् मन्युं धैर्य्येण गर्वं विनयेन मानं धिया अशक्तिं उत्साहवशात् ( निगृह्णन् ) चतुर्भिः सचिवैः समं उदस्थात् ॥ ८१

मल्लिनाथ: । तत इति । तत: पादप्रहारानन्तरं स विभीषण: कोपं पादप्रहारप्रयुक्तं क्षोभं क्षमया क्षान्त्या निगृह्णन् निरुन्धन् मन्युं सभामध्येऽवमानप्रयुक्तं शोकं धैर्य्येण मन:समाधिना गर्वं प्रतीकारप्रवर्त्तकं दर्पं विनयेन दमेन मानमहङ्कारं सामर्थ्याभिमानं, धिया विवेकबुद्ध्या अशक्तिं प्रहारप्रयुक्तं शक्तिह्रासमुत्साहवशात् प्रयत्नदार्ढ्याच्च निगृह्णन् चतुर्भिः सचिवैः समं सार्द्धम् उदस्थात् आसनादुत्थित: । उत्पूर्वात्तिष्ठतेर्लुङि ऊर्द्ध्वकर्मत्वान्नतङ् । अत्र क्षान्त्यादिगुणयोगपद्यादगुणसमुच्चयोऽलङ्कार: । कोपादिनिग्रह-

क्रियायौगपद्यात् क्रियासमुच्चयश्च। 'गुणक्रियायौगपद्यं समुच्चयः' इति लक्षणात्॥ ८१

भरतः। ततः इत्यादि। पार्ष्णिप्रहारादनन्तरं स विभीषणः क्षमया क्षान्त्या कोपं निगृह्णन् अभिभवन् धैर्य्येण सत्त्वं शोकं निगृह्णन् विनयेन गर्वं दर्पं निगृह्णन् धिया बुद्ध्या मोहं वैचित्त्यं निगृह्णन् उत्साहवशादशक्तिमसामर्थ्यं निगृह्णन् चतुर्भिः सचिवैः अमात्यैः उदस्थात् आसनादुत्थितवान्॥ ८१

অনুবাদ। তাহার পর বিভীষণ ক্ষমাগুণে কোপ, ধৈর্য্যগুণে সভার অপমানজনিত শোক, বিনয়গুণে গর্ব্ব, বিবেক বুদ্ধির সাহায্যে সামর্থ্যাভিমান এবং প্রযত্ন দৃঢ়তার পাদপ্রহারজনিত শক্তিহ্রাসহেতু রুদ্ধ করিয়া নিজের অমাত্য চতুষ্টয়ের সহিত আসন হইতে উঠিয়া পড়িলেন। ৮১

**उवाच चैनं क्षणदाचरेन्द्रं**
**सुखं महाराज विना मयास्स्व।**
**मूर्खातुरः पथ्यकटूननश्नन्**
**यत्सामयोऽसौ भिषजां न दोषः॥ ८२**

अन्वयः। (अथ) एनं क्षणदाचरेन्द्रम् उवाच,—(हे) महाराज! मया विना सुखं (यथास्यात् तथा) आस्स्व, मूर्खातुरः पथ्यकटून् अनश्नन्, (अतः) सामयः (इति) यत् असौ भिषजां न दोषः॥ ८२

मल्लिनाथः। उवाचेति। अथोत्थानानन्तरं क्षणदाचरेन्द्रं रावणमुवाच। किमित्यपेक्षिते चतुर्भिराह—हे महाराज! मया विना सुखं यथा तथा आस्स्व तिष्ठ। न चात्रोपेक्षादोषा ममेति दृष्टान्तेनाह—मूर्खातुरो मूर्खरोगी पथ्यानि हितानि कटूनि तीक्ष्णान्यौषधान्यनश्नन् न सेवमानोऽत सामयो रोगीति यत् असौ रोगो भिषजां दोषो न भवति। किन्तु मन्त्रिणां भिषजामिव नृपदेश्यो दोषस्तदश्रवणं रोगिण इव राज्ञो दोषो नोपदेष्टुरिति दृष्टान्तालङ्कारः॥ ८२

भरतः। उत्थितो विभीषणो रावणं वाक्यमुवाच, किमुवाचेत्याह—उवाचेति। हे महाराज! मया विना सुखम् आस्स्व सुखेन तिष्ठेत्यर्थः, उल्लासवत् उपवेशं गो। तत्रैवात्र दोषो न ममेत्युपदिशन्नाह—मूर्ख आतुरो रोगी पथ्यान् कटून् अनश्नन् अभक्षयन् सामयो रोगी यन्निष्ठत्यसौ भिषजां वैद्यानां न दोषः किन्तु तस्यैव॥ ८२

অনুবাদ। বিভীষণ রাক্ষসরাজকে বলিলেন, মহারাজ! আমাকে ছাড়িয়া তুমি সুখে থাক, মূর্খরোগী হিতকর কটু ঔষধ সেবন না করিয়া যে চিরদিন রোগ ভোগ করে, সে চিকিৎসকের দোষে নহে। ৮২

करोति वैरं स्फुटमुच्यमानः
प्रतुष्यति श्रोत्रसुखैरपथ्यैः।
विवेकशून्यः प्रभुरात्ममानी
महाननर्थः सुहृदां वतायम् ॥ ८३

अन्वयः। (किञ्च यः) प्रभुः स्फुटम् उच्यमानः वैरं करोति, (तथा) श्रोत्रसुखैः अपथ्यैः प्रतुष्यति, विवेकशून्यः आत्ममानी अयं प्रभुः सुहृदाम् (आश्रितानां) महान् अनर्थः (वत) ॥ ८३

मल्लिनाथः। करोतीति। किञ्च यः प्रभुः स्फुटं व्यक्तमुच्यमानो हितमुपदिश्यमानो वैरमुपदेष्टरि द्वेषं करोति तथा श्रोत्रसुखैस्तत्कालश्राव्यैरपथ्यैरन्तर्विरसैर्दुरुपदेशैस्तुष्यति, विवेकशून्यो मूढ आत्ममानी पण्डितम्मन्योऽयं प्रभुः स्वामी सुहृदामाश्रितानां महाननर्थोऽनर्थहेतुरित्यर्थः॥ ८३

भरत। करोतीत्यादि। प्रभुरीश्वरो विवेकशून्यः सदसद्विचाररहितः, आत्ममानी मत्समो नास्तीति आत्मानं श्लाघमानो, वत खिदे। अयमेव सुहृदां महाननर्थो दुःखहेतुः कथम्? इत्याह—तादृक् प्रभुः स्फुटं यथार्थम् उच्यमानः क्रोधं करोति न तु पथ्यमानेनोक्तमिति स्नेह श्रोत्रसुखैः कर्णसुखकारिभिः अपथ्यैरयेऽतिदुःखजनकैः प्रहृष्यति, अतस्तस्य विनाश एव स्यात्। आत्मानमेव मन्यत इति ग्रहादित्वात् णिन् ॥ ८३

অনুবাদ। হায়! যে প্রভু সুস্পষ্টরূপে উপদিষ্ট হইয়া উপদেষ্টার প্রতি দ্বেষ প্রকাশ করে এবং শ্রুতিমধুর অহিত পরিণাম কথায় তুষ্ট হয়, সেই অবিবেচক আত্মাভিমানী প্রভু আশ্রিত সুহৃদগণের মহাদুঃখের হেতু। ৮৩

ক্রীড়ন্ ভুজঙ্গেন গৃহানুপাতং
কশ্চিদ্যথা জীবতি সংশয়স্থঃ।
সংসেবমানো নৃপতিং প্রমূঢ়ং
তথৈব যজ্জীবতি সোऽস্য লাভঃ॥ ৮৪

अन्वयः। यथा कश्चित् (व्यालग्राही) गृहानुपातं भुजङ्गेन क्रीडन् संशयस्थः जीवति, तथा एव प्रमूढं नृपतिं संसेवमानः अपि यज्जीवति, स एवास्य लाभः ॥ ८४

मल्लिनाथः। क्रीडन्निति। यथा कश्चिद्-व्यालग्राही गृहं गृहमनुपत्य गृहानुपातम्। "विप्तिपति—" इत्यादिना व्याप्यमाने

णमुल्। भुजङ्गेन सर्पेण क्रीड़न् संशयस्थः प्राणसंशये तिष्ठन्नेव जीवति तथैव प्रमूढ़मविवेकिनं नृपतिं स्वामिनं सेवमानोऽपि यज्जीवति यावतः क्षणान् जीवति स एवास्य लाभः। न त्वागामिक्षणायुः। उपमालङ्कारः॥ ८४

भरतः। क्रीडन्नित्यादि। यथा कश्चित् व्यालग्राही गृहानुपातं गृहं गृहमनुपत्य गत्वा भुजङ्गेन सर्पेण क्रीडन् संशयस्थः किमयं खादिष्यति न वेति सन्देहे वर्त्तमानो जीवति तथैव प्रमूढमतिमूर्खमधिपतिं संसेवमानो यज्जीवति अस्य सेवकस्य स एव लाभः, एतेन मूर्खस्य एव सेवायां मम जीवनमेव लाभ इत्याशयः। गृहानुपातमिति णमुल् वा, इत्यस्य योगविभागात् साकल्ये णमुल्, गृहा अनुपत्यन्ते यस्मिन् इति क्रीडनविशेषणं वा तदा कर्म्मणि घञ्॥ ८४

অনুবাদ। যেমন কোন লোক ( সাপুড়ে ) বাড়ী বাড়ী গিয়া সর্প লইয়া খেলা করিতে করিতে প্রাণসংশয় কার্য্যে লিপ্ত থাকিয়াও বাঁচে, তেমনি মূর্খ নৃপতির সেবা করিয়াও যে সেবক মুহূর্ত্তকালও বাঁচে, তাহাই তাহার পক্ষে মহালাভ। ৮৪

दत्तः स्वदोषैर्भवता प्रहारः
पादेन धर्म्ये पथि मे स्थितस्य।
स चिन्तनीयः सह मन्त्रिमुख्यैः
कस्यावयोर्लाघवमाददाति [धातु]॥ ८५

अन्वयः। धर्म्ये पथि स्थितस्य मे भवता स्वदोषैः दत्तः पादेन प्रहारः ( तव ) मन्त्रिमुख्यैः सह चिन्तनीयः आवयोः ( मध्ये ) कस्य लाघवम् आददाति॥ ८५

मल्लिनाथः। दत्त इति। धर्म्ये पथि स्थितस्य मे मम भवता स्वदोषैर्दर्परोषादिभिर्निमित्तैर्दत्तः कृतः पादेन प्रहारस्तव मन्त्रिमुख्यैः सह चिन्तनीयो विचारणीय आवयोर्मध्ये कस्य लाघवमाददातीति। 'आकेशग्रहणान्मित्रमकार्य्यात्सन्निवर्त्तयेत्' इति शास्त्रात्तवैवायं दोषो न मे धर्म्ये पथि स्थितस्येत्यर्थः॥ ८५

भरतः। दत्त इत्यादि। भवता स्वदोषैरात्मनोऽविवेकत्वादिभिः पादेन प्रहारो मम दत्तः। मम कीदृशस्य?—धर्म्मादनपेते पथि वर्त्तमानस्य। स पादप्रहारो मन्त्रिमुख्यैः सह त्वया चिन्तनीयो निरूप्यमाणः सन् आवयोर्मध्ये कस्य लघुत्वं करोतु निरूप्यमाणस्तवैव विवेकशून्यत्वख्यातिरूपं लाघवमुत्पादयिष्यतीति भावः॥ ८५

অনুবাদ। আমি ধর্ম্মপথে অবস্থিত থাকায় তুমি নিজ ঔদ্ধত্যবশে যে আমাকে পাদ-প্রহার করিলে, প্রধান মন্ত্রিগণের সহিত চিন্তা করিয়া দেখ, ঐ প্রহার আমাদের মধ্যে কাহার নীচতা প্রকাশ করিতেছে। ৮৫

इति वचनमसौ रजनिचरपतिं
बहुगुणमसकृत्प्रसभमभिदधत् ।
निरगमदभयः पुरुषरिपुपुरा-
न्नरपतिचरणौ नवितुमरिनुतौ ॥ ८६

अन्वयः । असौ रजनीचरपतिं बहुगुणं इति वचनम् असकृत् प्रसभम् अभिदधत् अरिनुतौ नरपतिचरणौ नवितुं पुरुषरिपुपुरात् अभयः ( सन् ) निरगमत् ॥ ८६

मल्लिनाथः । इतीति । असौ विभीषणो रजनिचरपतिं रावणम् । "कृदिकारादक्तिनः" इति विकल्पादनीकारः । बहुगुणं शुभोदर्कमिति पूर्वोक्तं वचनमसकृद्बहुकृत्वः प्रसभं बलादभिदधदभिदधानः । "नाभ्यस्ताच्छतुः" इति नुमभावः । अरिभिर्नुतौ रिपुस्तुतौ किमुत भक्तैः सर्वशरण्यत्वादिति भावः । "श्र्युकः किति" इतीट्प्रतिषेधः । नरपतिचरणौ रामपादौ नवितुं स्तोतुं सेवितुमित्यर्थः । णु स्तुतौ इति धातोः तुमुनि इडागमः । गुणश्चाव इति वचनात् । पुरुषरिपुपुरात् लङ्कानगरात् अभयः निर्भयो निरगमत् । गमेर्लुङि ऌदित्वादङ् । शाक्करं प्रहरणकलिकावृत्तम् । 'ननभनल-गिति प्रहरणकलिका' इति लक्षणात् ॥ ८६

भरत । इतीत्यादि । असौ विभीषण इत्युक्तप्रकारं वचनम् असकृत् बारंवारं प्रसभं बलात् रजनिचरपतिं रावणम् अभिदधत् वदन्, नरपतेः रामस्य चरणौ नवितु स्तोतुं पुरुषरिपोः राक्षसस्य पुरात् लङ्कायाः निरगमत् निर्गतवान् । वचनं कीदृशम् ?—बहुगुणम् औदार्य्यादिगणयुक्तम् । असौ कीदृशः ?—अभयः । न विद्यते भयं यस्य । रामचरणौ कीदृशौ ?—अरिभिरपि नुतौ स्तुतौ । णु स स्तुतौ, "वेमूत्" इत्यादिना वेमृत्वात नेम, "डीश्वोदिह्नेम" इति इमनिषेधः । नुवितुमिति पाठे—णू श्रि सवल इत्यस्य रूपम् । रज-निचर इति संज्ञाशब्दः, तेन संज्ञायां बहुलं ह्रस्व इति केचित । रजनिशब्द औणादिको ह्रस्वान्त इति विद्यासागरः ; वस्तुतोऽप्येवमेव, "रजनिजनितगुरुजागररागकषायितमलस-निमिषम्"इति जयदेवः । 'सखि ! रजनिरर्द्धं गतवती'ति कालिदासः । दीर्घान्तस्तु "पाच्छीनादि" इत्यादिना पक्षे ईप्विधानात् । प्रहरणकलिका नाम वृत्तं, तल्लक्षणं यथा—'ननभनलगिति प्रहरणकलिका' ॥ ८६

অনুবাদ । বিভীষণ নিশাচরেশ্বর রাবণকে পরিণাম শুভ এই কথা বারংবার বলপূর্ব্বক বলিতে বলিতে শত্রুগণেরও সেবিত রামচরণে প্রণাম করিবার জন্য নির্ভয়চিত্তে লঙ্কানগর হইতে নির্গত হইলেন । ৮৬

अथ तमुपगतं विदितसुचरितं
पवनसुतगिरा गिरिगुरुहृदयः ।
नृपतिरमदयन्मुदितपरिजनं
स्वपुरपतिकरैः सलिलसमुदयैः ॥ ८७

( इति भट्टिकाव्ये प्रसन्नकाण्डे भाविकत्वप्रदर्शनस्तृतीयः
काव्यस्य द्वादशः सर्गः ॥ ) १२

अन्वयः । अथ गिरिगुरुहृदयः नृपतिः उपगतं पवनसुतगिरा विदितसुचरितं स्वपुरपति-करैः सलिलसमुदयैः मुदितपरिजनम् तं ( विभीषणं ) अमदयत् ॥ ८७

मल्लिनाथः । अथेति । अथ विभीषणगमनानन्तरं गिरिगुरु-हृदयः स्थिरचित्त इत्यर्थः । नृपतिः राम उपगतं रावणादागतं पवनसुतगिरा हनूमद्वाक्येन विदितसुचरितं ज्ञातशुद्धिं स्वपुरपतिं कुर्वन्तीति तत्करैः स्वस्वामिनो लङ्काधिपत्ये हेतुभिरित्यर्थः । "कृञो हेतु—" इत्यादिना हेत्वर्थे टप्रत्ययः । सलिलसमुदयैरभिषेकोदपूरैर्मुदितपरिजनं सन्तुष्टभृत्यं विभीषणममदयत् समतोषयत् अत्यन्त-माहृतवानित्यर्थः । पूर्वकमेव वृत्तम् ॥ ८७

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचल-मल्लिनाथसूरिविरचिते भट्टिकाव्यव्याख्याने सर्वपथीनाख्याने
द्वादशः सर्गः ।

भरतः । अथेत्यादि । अनन्तरम् उपगतं विभीषणं नृपतिः रामः सलिलसमुदयैः अभिषेकजलसमूहैर्हेतुभिः अमदयत हर्षितवान् । तं कीदृशम् ?—पवनसुतस्य हनूमतो गिरा वचनेन विदितं ज्ञातं सुचरितं शोभनचरितं यस्य । मुदिता लङ्काधिपतित्वे स्वामी अभिषिक्त इति तुष्टाः परिजना अमात्यास्तत्कारी यस्य । नृपतिः कीदृशः ?—गिरिवद्गुरु-निष्कम्पं हृदयं यस्य सः तथा । सलिलसमुदयैः कीदृशैः ?—स्वपुरपतिकरैः लङ्काधिपत्यं कुर्वद्भिः । मदीमिर्यन्ति हर्षे, णिः प्रेरणे, घटादित्वात् ह्रस्वः । कृञः सुकृष्ट इति टः । पूर्वोक्तं वृत्तम् ॥ ८७

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरतसेनविरचितायां
मुग्धबोधिन्यां भट्टिटीकायां विभीषणागमनो नाम द्वादशः सर्गः ॥ १२

অনুবাদ। অনন্তর অচলবৎ অটলচিত্ত নৃপতি রাম, রাবণের নিকট হইতে সমাগত, হনুমানের বাক্যে বিদিত, বিশুদ্ধচরিত্র বিভীষণকে স্বপুরাধিপত্য করণের হেতুভূত অভিষেক জল দ্বারা সন্তুষ্ট করিলেন, তাহাতে অমাত্যাদিভৃত্যেরাও সন্তুষ্ট হইলেন। ৮৭

## त्रयोदशः सर्गः।

चारुसमीरणरमणे हरिणकलङ्ककिरणावलीसविलासा
आबद्धराममोहा वेलामूले विभावरी परिहीणा ॥ १

अन्वयः। चारुसमीरणरमणे वेलामूले हरिणकलङ्ककिरणावलीसविलासा विभावरी आबद्धराममोहा परिहीणा (अभूत्) ॥ १

मल्लिनाथः। अथास्मिन् सर्गे भाषासङ्करस्यापि चमत्कारकारितया काव्येऽलङ्कारत्वेन तन्निबध्नन् अपभ्रंशादीनां तथा प्राकृतभेदेषु च देशितद्भवयोश्च संस्कृते समावेशासम्भवात् तत्समाख्यभेदाश्रयणेन भाषासमाख्यं शब्दचित्रमार्यागीत्याख्येन मात्रावृत्तेनाह—चार्वित्यादि। चारुणा शैत्यादिगुणमनोहरेण समीरणेन रमयतीति रमणे मनोरमे। नन्द्यादित्वाल्ल्युः। वेलामूले समुद्रतीरप्रान्ते। 'वेला काले समुद्रस्य तीरनीरविकारयोः' इति विश्वः। हरिणकलङ्कस्य मृगाङ्कस्येन्दोः किरणावलीभिः सविलासा विलासवती चन्द्रेण सह विहारिणीत्यर्थः। एवम्भूता विभावरी रात्रिः आबद्धराममोहा स्वयमुद्दीपकत्वात् रामस्य जनितमूर्च्छा सतीत्यर्थः। परिहीणा परिक्षीणा विभातेत्यर्थः। एतेन समुद्रप्रार्थनार्थं तत्कूले सनियमं कुशशयनसन्निविष्टेनैकरात्रिर्नीता। तावतैव समुद्रो न प्रत्यक्ष इत्युक्तं वेदितव्यम्। अत्र सर्वेषां शब्दानां संस्कृतप्राकृतयोरेकरूपत्वात् भाषासमत्वम्। एवमुत्तरत्रापि द्रष्टव्यम्। रमणे मूले इत्यत्रापि "ङेरम्मो" इति पक्षे ङेरेकारः प्राकृते संस्कृते गुण इत्येकरूप्यादविरोधः। अस्मिन् सर्गे मात्रावृत्तमार्यागीतिः इति। 'आर्यापूर्वार्धं यदि गुरुणैकेनाधिकेन निधने युक्तम्। इतरत्तद्वन्निखिलं भवति यदीयमुद्गितेयमार्यागीति।' इति लक्षणम्। आर्या सप्तगणा इयमष्टगणेति एतावाननयोर्भेद इत्यर्थः ॥ १

भरतः। अथ भाषासमावेशः। काव्यं संस्कृतप्राकृतापभ्रंशभेदात्त्रिविधं, प्राकृतोऽपि संस्कृतभवः संस्कृतसमो देशी चेत्यनेकविधः। अत्र देशिसंस्कृतभवयोः प्राकृतयोरपभ्रंशस्य चासाधुशब्दत्वेनाधर्मजनकत्वात् उपक्रान्ते संस्कृतबन्धे समावेशासम्भवाच्च महाकविर्भट्टिः संसामर्थ्यं बोधयन् शब्दसमायाः प्राकृतभाषायाः संस्कृतबन्धे समावेशं दर्शयति। अयञ्च

भाषाश्लेष एव, तथा च रुद्रटः—"वाक्ये यत्रैकस्मिन् अनेक[illegible] अयम-परो मतिमद्भिर्भाषाश्लेषोऽत्र विज्ञेयः॥" इति। प्राकृतशास्त्रे तालव्यशकारो मूर्द्धन्यषकारश्च नास्ति तत्र हि "शषोः सः" इति सूत्रम्, एवं दन्त्यो नकारो नास्ति "नोणः" इति सूत्रम्। एवम् अन्त्यस्थयकारो नास्ति "यस्य जः" इति सूत्रम्। एवमादि बहुतरमुन्नेयम्। सेतुबन्ध-नार्थं कृतनियमेन रामस्य परमध्यायां रात्रिर्गमितेति ज्ञापयितुं प्रभातवर्णनामधिकरोति—चार्वित्यादि। वेलामूले वेलायाः समुद्रजलस्य मूले तटे विभावरी रात्रिः परिक्षीणा निगता। कीदृशे वेलामूले?—चारुणा मन्दशीतसुगन्धिना समीरणेन वायुना रमणे आनन्दने, चारु मनोज्ञञ्च तत् समीरणरमणञ्चेति कर्म्मधारयो वा, रमयतीति रमणं रमन्ते-ऽत्रेति वा। कीदृशी विभावरी?—हरिणकलङ्कस्य चन्द्रस्य किरणावल्या रश्मिपङ्क्त्या सविलासा शोभमाना सविभ्रमा वा, आबद्धो रामस्य मोहो यया। प्राकृते आकारात् परस्य सप्तम्येकवचनस्य "ङेम्मिन्" इत्यादेशो भवतः, तत्र ङेपक्षे संस्कृतसमत्वम्। स्कन्धका छन्दः—तल्लक्षणं यथा—"चौमत्ता अट्ठगणा पुब्बद्धे उत्तद्धे वि होन्ति समरूआ। सो स्कन्धआ विआणहु पिङ्गल पभणेइ मुद्धिबहु सम्भेआ" ॥ इति ॥ १

अनुवाद। शैत्यादिगुणयुक्त समीरणरमित समुद्र-तटে—চন্দ্রিকা-বিলাসবতী যামিনী রামের মোহ জন্মাইয়া প্রভাতা হইল। ১

**बद्धो वासरसङ्गे भीमो रामेण लवणसलिलावासे।**
**सहसा संरम्भरसो दूरारूढरविमण्डलसमो लोले॥२**

अन्वयः। वासरसङ्गे लोले लवणसलिलावासे रामेण सहसा भीमः दूरारोहरवि-मण्डलसमः संरम्भरसः बद्धः॥ २

**मल्लिनाथः। अथ प्रार्थनामनाद्रियमाणाय समुद्राय राम-श्चुक्रोधेत्याह—बद्ध इति। अथ वासरसङ्गे प्रभाते लोले क्षुभिते लवणसलिलावासे लवणजलनिधौ विषये रामेण सहसा सद्यो भीमो भयङ्करो दूरारूढरविमण्डलसमो मध्याह्नस्थितमार्त्तण्ड-मण्डलप्रचण्डः संरम्भरसो रौद्ररस इति यावत्। 'संरम्भः सम्भ्रमे कोपे' इति विश्वः। बद्धः स्थापितः। अत्राप्यावासे लोल इति ङौ पूर्ववदेकरूप्यम्। बद्धो भीमो इत्यादौ "अत ओत्सोः" इति सोरो-कार इति प्राकृते, संस्कृते तु "हशि च" इति रोरुत्वे गुण इत्युभय-त्रैकरूप्यम्॥ २**

भरतः। बद्ध इत्यादि। वासरस्य सङ्गः सम्बन्धो यत्र प्रभाते वासरस्य दिवसस्य सङ्गे सम्बन्धे सति वा रामेण लवणसलिलावासे लवणसमुद्रे संरम्भरसः क्रोधरसः सहसा तत्क्षणात् बद्धः कृतः। कृतोपवासेऽपि मयि नायं प्रकटीभूत इति मत्वा संरम्भरसः। कीदृश?—भीमो भयदः दूरमारूढस्य मध्याह्नस्थितस्य रवेः सूर्य्यस्य मण्डलेन समोऽतितीक्ष्णत्वात्। समुद्रे कीदृशे?—लोले चञ्चले, रामभयेण प्रभातवातेन वा क्षोभ्यमाणत्वात्। प्राकृतशास्त्रे लवण-

शब्दस्य मध्यगमनस्य स्वरेण सह्यौत्वं, पत्ते विहितं, तेन लोणं लवणमिति द्वयमपि स्यात्। गाथावत स्कन्धकायामपि षष्ठो गणो मध्यगुरुश्चतुर्लघुर्वा, अत पूर्व्वार्द्धे चतुर्लघुः षष्ठो गणः॥ २

अनुवाद। প্রভাতকালে রামভয়ে চঞ্চল লবণসমুদ্রের প্রতি রামচন্দ্র সহসা মধ্যাহ্ন সূর্য্যবৎ অতিশয় ভয়ঙ্কর মূর্ত্তি ধারণ করিলেন (ক্রুদ্ধ হইলেন)। ২

गाढ़गुरुपुङ्खपीड़ासधूमसलिलारिसम्भवमहाबाणे।
आरूढ़ा सन्देहं रामे समहीधरा मही सफणिसभा ३

अन्वयः। रामे गाढ़गुरुपुङ्खपीड़ासधूमसलिलारिसम्भवमहाबाणे समहीधरा सफणिसभा मही सन्देहम आरूढ़ा॥ ३

मल्लिनाथः। अथ समुद्राय क्रुद्धो रामः साक्षेपमस्त्रं प्रजिघायेत्याह—गाढ़ेति। रामे गाढ़या निविड़या गुरोः पुङ्खस्य कर्त्तर्य्याख्यस्य मूलप्रदेशस्य 'कर्त्तरी पुङ्खे' इति यादवः। पीड़या अङ्गुलिपीड़नेन सधूमस्य सलिलारेरग्नेः सम्भवो यस्मात्स महाबाणो यस्य तस्मिन् सति आग्नेयास्त्रं प्रयुञ्जाने सतीत्यर्थः। समहीधरा सपर्वता सफणिसभा सनागलोका मही सन्देहमारूढ़ा तद्विनाशशङ्का जातेत्यर्थः। अत्र धूमेति धरेति धकारस्य पदादित्वात् "खघथधभां हः" इति हकारो न भवति, "अनादौ" इत्यधिकारात्। सभेति भकारस्यानादित्वेऽपि प्रायग्रहणान्न भवतीति साम्यस्थितिः। समासो तु पूर्ववत्॥ ३

भरतः। गाढ़ इत्यादि। गाढा दृढा गुरुपुङ्खस्य या पीडा अङ्गुष्ठतर्जनीभ्यामाकर्षणं तया सधूमस्य सलिलारेरग्नेः सम्भवो यत्र तादृशो महान् बाणो यस्य तादृशे रामे सति मही पृथिवी सन्देहं विनाशसंशयम् आरूढा प्राप्ता। कीदृशी?—समहीधरा पर्व्वतैः सह वर्त्तमाना, फणिसभया सर्पसमूहेन सहिता। प्राकृते महीधरपदे कत्वं न भवति, तत्र बहुलाधिकारात्। 'खघथधभा'मिति धकारस्य हकारो न भवति, तत्र प्रायोऽधिकारात पीडति डो ल इति लत्वं न भवति प्रायोग्रहणात्, पीलिति पाठो वा संस्कृतेऽपि समोवादित्वादैकरूपत्वात्॥ ३

অনুবাদ। রামচন্দ্র দৃঢ়রূপে অঙ্গুষ্ঠ তর্জ্জনী দ্বারা সুমহৎ বাণপুঙ্খ (মূলদেশ) নিপীড়িত করিয়া সধূম আগ্নেয়াস্ত্র সমুদ্রের প্রতি নিঃক্ষেপ করিলে মহীধরও নাগলোকসহ ধরণীদেবী বিনাশ সংশয়ারূঢ়া হইলেন। ৩

घोरजलदन्तिसङ्कुलमट्ट-
महापङ्कक्राहलजलावासम्।

आरीणं लवणजलं समिद्ध-
फलबाणविद्धघोरफणिवरम् ॥ ४

अन्वयः। घोरजलदन्तिसङ्कुलं अट्टमहापङ्ककाहलजलावासं समिद्धफलबाणविद्धघोरफणिवरम् लवणजलम् आरीणम् ॥ ४

मल्लिनाथः। घोरेति। घोरैर्भीमैर्जलदन्तिभिर्गजयादोभिः सङ्कुलं सङ्कीर्णमट्टतीत्यट्टं शुष्कमित्यर्थः। अनेकार्थत्वाद् धातूना-मट्ट—हिंसातिक्रमयोरिति धातोर्भौवादिकात् पचाद्यच्। तञ्च महापङ्के काहलाः शुष्का जलावासा जलग्रहा यस्मिंस्तत्। 'काहलं भृशशुष्कयोः' इति विश्वः। समिद्धफलेन प्रज्वलिताग्रेण बाणेन विद्धाः प्रहता घोरा भीमा फणिवरा महासर्पा यस्मिंस्तत्। लवणं च तत् जलञ्च तत् आरीणं समन्ताच्छुष्कम्। री गतिरोषणयोः इति धातोः कर्त्तरि क्तः। "ल्वादिभ्यः" इति निष्ठानत्वे णत्वम्। ४

भरतः। घोरेत्यादि। रामेण आग्नेयास्त्रे क्षिप्ते सति लवणजलम् आरीणं समन्तात् शुष्कम्। री रीङ् य क्षरणे "स्वादयः" इति क्तस्य नत्वम्। कीदृशं जलम्?—घोरैः भीमैः जलहस्तिभिः सङ्कुलं व्याप्तम्। अट्टः शुष्कोऽत्यर्थो वा यो महापङ्कस्तेन काहलाः शुष्का जलावासा मतस्यादयो यत्र, अट्ट ङ् अतिक्रमे वधे इत्यस्येदं रूपम्। "अट्टं भग्ने च शुष्के च चोमि-ऽत्यर्थं गृहान्तरे" "काहलौ तु महत्याः स्यात् काहलं भृशशुष्कयोः" इति च विश्वः। 'काहलं विह्वलेऽपि स्यात्" इत्यन्ये। प्राकृतपक्षे कातरशब्दस्य काहलमिति भवति, 'कातरवितस्ति-मातुलुङ्गेषु' इत्यनेन तकारस्य हादेशात् हरितादित्वेन रेफस्य लत्वाच्च। दीप्तफलेन बाणेन विद्धा घोराः फणिवराः सर्पश्रेष्ठा यत्र ॥ ४

অনুবাদ। রামবাণে লবণসমুদ্রের সমস্ত জল শুকাইয়া গেল, বড় বড় ভয়ঙ্কর জলহস্তীতে সেইস্থান পূর্ণ হইয়া গেল, প্রগাঢ় শুষ্ক কর্দ্দমের উপর জলজন্তু সকল শুষ্ক হইয়া পড়িয়া রহিল, তখন রামচন্দ্র প্রজ্বলিতাগ্র বাণদ্বারা ভীষণ মহাসর্পগুলিকে বিদ্ধ করিয়া মারিতে লাগিলেন ।৪

सभयं परिहरमाणो
महाहिसञ्चारभासुरं सलिलगणम्।
आरूढो लवणजलो
जलतीरं हरिबलागमविलोलगुहम् ॥ ५

अन्वयः। लवणजलः महाहिसञ्चारभासुरं सलिलगणं परिहरमाणः हरिबलागमविलोलगुहं जलतीरं सभयम् आरूढः ॥ ५

मल्लिनाथः। अथ समुद्रः प्रादुरभूदित्याह—सभयमिति। लवणजलो मूर्त्तिमान् लवणसमुद्रो महतामहीनां सञ्चारेण भासुरं तच्छिरोरत्नैर्भास्वरं सलिलगणं जलपूरं परिहरमाणोऽपसारयन् हरिबलागमेन कपिसैन्यसञ्चारेण विलोलगुहं व्याकुलगह्वरं जलतीरं रामाधिष्ठितं तटं सभयं यथा तथा अपराधित्वादिति भावः। आरूढ़ः आरुरोह। रुहेः कर्त्तरि क्तः। सावील्वं प्राकृते, संस्कृते तूत्वगुणौ च पूर्ववत्॥ ५

भरतः। सभयमित्यादि। लवणं जलमस्य स लवणजलः समुद्रः जलतीरम् आरूढः सम्प्राप्तो मूर्त्तिमान् भूत्वा। किं कुर्वन्?—सभयं यथा स्यात् तथा सलिलगणं जलराशिं परिहरमाणः परित्यजन्। सभयमित्यत्र प्राकृते प्रायोग्रहणात् यलोपाभावः, "कगचज" इति यलोपे अवर्णेयश्रुतिरिति यकारश्रवणमित्यन्ये। कीदृशं सलिलगणं?—महाहीनां महासर्पाणां सञ्चारेण भासुरं तच्छिरोमणिभिर्दीप्तम्। कीदृशं जलतीरं?—हरिबलागमेन वानरसैन्यागमनेन विलोला व्याकुला गुहा यत्र। विलोचनतलमिति क्वचित् पाठः॥ ५

অনুবাদ। লবণসমুদ্র সঞ্চরমাণ মহাসর্পের শিরোরত্ন ভাস্বর জলরাশি পরিত্যাগ করিয়া বানরসৈন্য সমাগমে ব্যাকুলগহ্বর রামাধিষ্ঠিত তীরে, ভয়ে ভয়ে উঠিয়া পড়িল। ৫

चञ्च[ल]च[त]रुहरिणगणां
बहुकुसुमाबन्धबद्धरामावासम्।
हरिपल्लवतरुजालं
तुङ्गोरुसमिद्धतरुवरहिमच्छायम्॥ ६

अन्वयः। चञ्चलतरुहरिणगणं बहुकुसुमाबन्धबद्धरामावासं हरिपल्लवतरुजालं तुङ्गोरुसमिद्धतरुवरहिमच्छायम्॥ ६

मल्लिनाथः। तदेव तीरं श्लोकद्वयेन विशिनष्टि—चञ्चदिति। चञ्चन्तो वलान्तस्तरुहरिणगणाः शाखामृगसमूहा यस्मिंस्तत्। बहुकुसुमानां बहुकुसुमकलापानामाबन्धः परस्परसङ्गस्तेन बद्धो रचितो रामावासो यस्मिंस्तत्। हरिपल्लवानि हरितकिसलयानि तरुजालानि यस्मिंस्तत्। 'हरिर्वाच्यवदाख्यातो हरित्कपिलवर्णयोः' इति विश्वः। तुङ्गा उन्नता उरवो विपुलाः समिद्धा उज्ज्वलाश्च ये तरुवरास्तैर्हिमशीतला छाया यस्मिंस्तत्॥ ६

भरतः। चञ्चलेत्यादि। कीदृशं जलतीरमारूढः?—चञ्चलतरुहरिणानां वानराणां

गर्भो यत्र, बहूनि कुसुमानि येषां तेषां वृक्षाणाम् आसङ्गे । परस्परसंश्लेषेण बद्धो घटितः राम-स्यावासो वासस्थानं यत्र । हरयः पिङ्गलाः पल्लवा यस्य तादृशं तरुजालं वृक्षसमूहो यत्र, तुङ्गा उच्चा उरवोऽत्यर्थविस्तीर्णमण्डलाः समिद्धा उज्ज्वला ये तरवस्तैः शीतला छाया यत्र ॥६

অনুবাদ। সেই তীরে অনেকগুলি চঞ্চল বানর ছিল। বহু কুসুম সমন্বিত পরস্পর সংশ্লিষ্ট বৃক্ষনিচয়ে রামের আবাস নির্ম্মিত হইয়াছিল, অনেকগুলি হরিত বর্ণ পল্লব-বিরাজিত তরু ছিল এবং উন্নত মহৎ উজ্জ্বলতরুবর সকল হিমবৎ শীতল ছায়া বিস্তার করিতেছিল। ৬

**वरवारणं सलिलभरेण**
**गिरिमहीमण्डलसंवरवारणम् ।**
**वसुधारयं तुङ्गतरङ्गसङ्ग-**
**परिहीणलोलवसुधारयम् ॥ ७**

अन्वयः। वरवारणं (तथा) सलिलभरेण गिरिमहीमण्डलसंवरवारणं वसुधारयं तुङ्गतरङ्गसङ्गपरिहीणलोलवसुधारयम् ॥ ७

मल्लिनाथः। वरेति। पुनः वरवारणं श्रेष्ठगजाढ्यं तथा सलिलभरेण समुद्रजलौघेन गिरीणां महीमण्डलस्य च यः संवरः संवरणमाक्रमणम्। "ग्रह वृदृनिश्चिगमश्च" इत्यप्प्रत्ययः। तस्य वारणं निवारकं समुद्रस्य वेलानतिक्रमत्वादिति भावः। वसूना धनानां धारयतीति धारयम्। "अनुपसर्गाल्लिम्प—" इत्यादिना धारेः शप्रत्ययः। तुङ्गतरङ्गाणां सङ्गः सम्बन्धस्तस्मात् परिहीणो भ्रष्टो लोलो वसुधायां तत्सम्बन्धिन्यां रयो यत्र तत् तीव्रतरङ्गाघात-मित्यर्थः। तीरं प्राप। एतानि सप्त साकल्येन भाषाद्वयसमानि वृत्तानि ॥ ७

भरतः। वरवारणमित्यादि। पुनः कीदृशं ?—वरा उत्कृष्टा वारणा हस्तिनो यत्र, सलिलभरेण जलातिशयेन गिरीणां महीमण्डलस्य च संवरः संवरणं तस्य वारणं निषेधकं समुद्रस्य वेलाया अतिक्रमात्। वसुधारयं द्रव्यस्य धारकम्। "साहिसाति"इति धारेः शः। तुङ्गानाम् उच्चानां तरङ्गाणां यः सङ्गः संश्लेषः तेन परिहीणो भ्रष्टो लोलो वसुधायां तत्सम्बन्धिन्यां रयो वेगो यत्र, तरङ्गेण जलवेगनिरासात्। एतानि सप्त सङ्कीर्णानि संस्कृतप्राकृतयोरविशिष्ट-स्वरूपत्वात् ॥ ७

অনুবাদ। এবং সেখানে বড় বড় মাতঙ্গ ছিল এবং সেই তীর জলরাশি দ্বারা পর্ব্বত ও ভূমণ্ডলের আক্রমণ নিবারক ছিল, অনেক ধনাদি দ্রব্য তথায় ছিল, অত্যুচ্চ তরঙ্গনিচয় তাহার নিম্নে থাকিত, সুতরাং তাহার চঞ্চলবেগ তটভূমি অতিক্রম করিত না। ৭

प्रणिपत्य ततो वचनं जगाद
हितमायतो पतिर्वारीणाम्।
गङ्गावलम्बिबाहू रामं
बहु[ह]लोरुहरितमालच्छायम् ॥ ८

अन्वय:। तत: वारीणां पति: गङ्गावलम्बिबाहु: (सन्) बहुलोरुहरितमालच्छायं रामं प्रणिपत्य आयतौ हितं वचनं जगाद ॥ ८

मल्लिनाथ:। प्रणिपत्येति। ततस्तीरप्राप्त्यनन्तरं वारीणां पति: समुद्रो गङ्गावलम्बो सन्नगत्वाद्दयादाक्षिण्यहेतुत्वाच्च भार्य्याहस्तावलम्बी बाहुर्यस्य स सन्। "ढ्रलोपे पूर्वस्य दीर्घोऽण:" इति संस्कृते दीर्घ:। "सुभिस्सुप्सु दीर्घ:" इति प्राकृते सुलोपश्च। बहुल: सान्द्र: उरुर्महान् हरिर्हरितश्च यस्तमालस्तस्येव छाया कान्तिर्यस्य तं रामं प्रणिपत्य आयतौ उत्तरकाले। 'उत्तर: काल आयति:' इत्यमर:। हितमुभयोरपि पथ्यं वचनं जगाद। अत्र पूर्वार्द्धं शुद्धसंस्कृतमुत्तरार्द्धं तु पूर्ववत् ॥ ८

भरत:। प्रणिपत्येत्यादि। ततस्तीरप्राप्त्यनन्तरं वारीणां पति: समुद्र: रामं प्रणिपत्य प्रणम्य वचनं जगाद। कीदृशं वचनम् ?—आयतौ उत्तरकाले हितम्, आत्मनो रामस्य च पथ्यम्। कीदृश: समुद्र: ?—गङ्गावलम्बनशीलौ बाहू यस्य। संस्कृते 'रिचौऽवे' इत्यनेन कृतरेफस्य "ढ्रोढ्रि" इति लोप:, पूर्वस्य दीर्घत्वम्। प्राकृते तु पुंलिङ्गे: उकारस्य दीर्घत्वं सिलोपश्च। रामं कीदृशं ?—बहला निविडा उर्व्वी महती हरितमालयोरिव सूक्ष्मविशेषयोरिव छाया कान्तिर्यस्य "शुकाहिकपिभेकेषु हरिर्ना: कपिले त्रिषु" इत्यमर:। प्राकृते हरिच्छन्दस्य तल्लोपोऽवेभयत्रत्यनेन। पूर्व्वार्द्धं विरचयामिति वचनशब्दस्य दन्त्यान्तत्वात् प्राकृतस्य पूर्व्वार्द्धेन सम्भव:। तेन केवलसंस्कृतत्वात्मिरवयम्, उत्तरार्द्धन्तु सङ्कीर्णमेव ॥ ८

অনুবাদ। তাহার পর বারিপতি (সমুদ্র) রামবাণে ক্ষত হওয়ায় পত্নী গঙ্গার হস্তধারণ পূর্ব্বক নিকটে গিয়া নিবিড় মহৎ হরিদ্বর্ণ তমাল-ছায়াবৎ নীলবর্ণ রামকে প্রণাম করিয়া ভবিষ্যতে উভয়ের হিতকর কথা বলিতে লাগিল। ৮

तुङ्गा गिरिवरदेहा अगमं
सलिलं समीरणो रसहारी।
अहिमो रविकिरणगणो
माया संसारकारणं ते परमा ॥ ९

अन्वयः। गिरिवरदेहाः तुङ्गाः, सलिलम् अगमं, समीरणः रसहारी, रविकिरणगणः अहिमः, परमा महती ते माया संसारकारणम् ॥ ९

मल्लिनाथः। वचनमेवाह—तुङ्गा इत्यादि। गिरिवरदेहाः पर्वतशरीराणि तुङ्गा उन्नता दुरारोहाः कृता इत्यर्थः। सलिलं समुद्रादिकं न गम्यत इत्यगमं दुरवगाहम्। "अन्यत्रापि दृश्यते" इति गमेरप्प्रत्ययः। समीरणो वायुः रसहारी जलशोषकः रविकिरणगणः अहिमः उष्णः परमा महती ते माया शक्तिः संसारकारणम्। त्वत्कृते जगद्वैचित्रे मम दुरवगाहित्वे कोऽपराध इत्यर्थः। अत्र मायारूपकारणेन गिरितुङ्गत्वादिकार्यसमर्थनात् कारणेन कार्यसमर्थनरूपोऽर्थान्तरन्यासः। तुङ्गा देहा इत्यत्र संस्कृते जसि सवर्णदीर्घे संहितायां यलोपः। प्राकृते "जस्शसोर्लुक्" "दीर्घः" इति दीर्घे जसो लोपः। गतमन्यत् ॥ ९

भरतः। तुङ्गा इत्यादि। गिरिश्रेष्ठानां देहाः, तुङ्गा उच्चाः सलिलं समुद्रादि अगम्यं, समीरणो वातो रसहारी जलशोषकः, रवेः किरणगणोऽहिम उष्णः इत्यादिकं यत् सर्वं संसारस्य कारणं हेतुः, तत् ते तव परमा माया महाकपटम्। एतेन त्वं विष्णुः स्वयं स्रष्टा मयि दोषोऽनुचित इति सूचितम् ॥ ९

অনুবাদ। প্রভো। তুমিই গিরিবরগণের দেহ উন্নত করিয়াছ, সমুদ্রদিগকে দুরবগাহ, সমীরণকে জলশোষক এবং সূর্য্যকিরণকে উষ্ণ করিয়াছ, ধন্য তোমার মায়া, যে এই জগৎ বৈচিত্র্যের কারণ ( আমার দুরবগাহত্ব তোমারই লীলা. তবে আমার উপর এত কোপ কেন ? । ৯

आयाससम्भवारुण संहर
संहारहिमहरसमच्छायम्।
बाणं वारिसमूहं संहर
पुराणचारुदेहावासम् ॥ १०

अन्वयः। आयाससम्भवारुण संहारहिमहरसमच्छायं बाणं संहर, पुराणचारुदेहावासं वारिसमूहं सङ्कुच ॥ १०

मल्लिनाथः। आयासेति। आयाससम्भवेन रोषोदयेनारुणेति सम्बुद्धिः। संहारे प्रलये हिमहरोऽग्निरादित्यो वा तत्समच्छायं कालाग्निकल्पं बाणं संहर। पुराणस्यानादेः चारोस्त्रैलोक्यसुन्दरस्य

देहस्यावासमाधारं वारिसमूहं वारिराशिं सङ्गच्छ सम्भव। अन्यथा कल्पान्ते कुत्र ते शयनमिति भावः॥ १०

भरतः। आयासेत्यादि। हे,आयाससम्भवारुण! आयाससम्भवेन दुःखजनितेन क्रोधेन अरुण! रक्ताङ्ग! त्वं बाणं संहर उपशमय। कीदृशं बाणं?—संहारे प्रलये हिमहराः सूर्य्याः वह्नयो वा तैः समा छाया कान्तिर्यस्य तम्। त्वं वारिसमूहं संगच्छ अङ्गीकुरु, रक्षेति भावः, "समो गमृच्छ" इति न मं, सकर्म्मकत्वात्। यतः पुराणस्य पूर्वकालीनस्य चारोः मनोज्ञस्य स्वदेहस्य आवासं स्थानम्, आवासमित्यत्र प्राकृते मो बिन्दुरित्यनुस्वार एव भवति, संस्कृते तु यद्यपि मकारस्थितिरेव स्यात्, तथा श्रुतिरभेदाद्भाषासमावेश इति बहवा इति विद्यासागरः। वा विरामे इत्यन्ये॥ १०

অনুবাদ। হে প্রভো! আপনার চক্ষুঃ ক্রোধে রক্তবর্ণ হইয়াছে, প্রলয়কালীন সূর্য্যাগ্নি সমকান্তি বাণ সংহার করুন, আপনার অনাদি ত্রৈলোক্যসুন্দর দেহের আধার বারিরাশি রক্ষা করুন (অন্যথা প্রলয়কালে কোথায় শয়ন করিবেন? ১০

असुलभहरिसञ्चारं
जलमूलं बहलपङ्करुद्धायामम्।
भण किं जलपरिहीणं
सुगमं तिमिकम्बुवारिवारणभीमम्॥ ११

अन्वयः। असुलभहरिसञ्चार (कुतः?) बहलपङ्करुद्धायामम् (कुतः?) जलपरिहीणं तिमिकम्बुवारिवारणभीम जलमूलं सुगमं किं भण॥ ११

मल्लिनाथ। असुलभेति। किञ्च असुलभहरिसञ्चारं दुर्लभकपिप्रचारं कुतः? बहलपङ्केन रुद्धायाममाक्रान्तविस्तारं कुतः? जलपरिहीणमम्भिदाहशुष्कजलम्। "क्तस्यः" इति निष्ठादेशस्य णत्वम्। प्राकृते "नो णः" इति णत्वम्। किञ्च तिमिभिर्मत्स्यविशेषैः कम्बुभिः शङ्खैर्वारिवारणैर्जलचरैश्च भीमं जलानां मूलं तल सुगमं किं भणेत्यर्थः। अत्र तलदुर्गमत्वस्य पङ्करोधादिपदार्थहेतुकत्वात् तद्धेतुकं काव्यलिङ्गमलङ्कारः॥ ११

भरतः। असुलभेत्यादि। एतत् जलमूलम् आग्नेयास्त्रेण जलपरिहीणमपि किं सुगमं सुखेन गम्यते इति भण ब्रूहि, अपि तु नैव, यतो बहलः सान्द्रो यः पङ्कस्तेन रुद्ध आयामो दैर्घ्यं यस्य, क्वापि पङ्काभावो नास्ति? तिमिभिः मत्स्यैः कम्बुभिः शङ्खैः वारिवारणैः जलहस्तिभिः भीमम् एवं सति असुलभो दुर्लभो हरिसञ्चारो वानरपर्य्यटनं यत्र। "तिमिः मीनः" इति हलायुधः। "अस्ति मत्स्यस्तिमिर्नाम शतयोजनविस्तृतः" इत्यन्ये। असुलभेत्यत्र हकाराद्देशो न भवति प्राकृते मायोपहणात्वत्तः॥ ११

অনুবাদ। বলুন দেখি আগ্নেয়াস্ত্রে জলের মূল পর্য্যন্ত জলহীন করাতে বানরগণ স্বচ্ছন্দে চলিতে (পার হইতে) পারিবে কি? কারণ গাঢ় কর্দ্দমে যে জলের বিস্তৃতি অবরুদ্ধ করিয়াছে। (অর্থাৎ উভয়তীরই কর্দ্দমময়) আর তিমি (দশযোজন বিস্তৃত মৎস্য) শঙ্খ ও জলহস্তী থাকায় ভয়ঙ্কর, তবে কি প্রকারে সুগম হইবে বল। ১১

गन्तुं लङ्कातीरं
बद्धमहासलिलसञ्चरेण सहेलम् ।
तरुहरिणा गिरिजालं वहन्तु
गुरु [गिरि] भारसंसहा गुरुदेहम् ॥ १२

अन्वयः। गुरुभारसंसहाः तरुहरिणाः बद्धमहासलिलसञ्चरेण लङ्कातीरं सहेलं गन्तुं गुरुदेहं गिरिजालं वहन्तु ॥ १२

मल्लिनाथः। तर्हि का गतिरत आह—गन्तुमिति। गुरुभारस्य महाभारस्य संसहन्त इति संसहाः क्षमाः। पचाद्यच्। तरुहरिणाः कपयः सञ्चरन्त्यस्मिन्निति सञ्चरः सञ्चारभूमिः। "गोचरसञ्चर" इत्यादिना घप्रत्ययान्तो निपातः। बद्धेन महत्तिन महता सलिलेन सलिलोपरिसञ्चरेण मार्गेण सेतुमार्गेणेत्यर्थः। लङ्कातीरं लङ्कासमीपं सहेलं सविनोदं गन्तुं गुरुदेहमधिकरूपं गिरिजालं वहन्तु प्रापयन्तु ॥ १२

भरतः। गन्तुमित्यादि। बद्धो घटितो यो महासलिले सञ्चरः सेतुस्तेन सहेलं सकौतुकं यथा स्यात् तथा लङ्कासम्बन्धितीरे, गन्तुं गुरुदेहं महाकायं गिरिजालं पर्वतसमूहं वहन्तु। कीदृशाः?—गिरिभारसंसहाः पर्वतवहनक्षमाः। घप्रत्ययेन लोक इति सञ्चरः करणेऽत्र ॥ १२

অনুবাদ। বিপুল ভারবহনক্ষম তরুমৃগগণ (বানরগণ) জলরাশির উপর সেতুনির্ম্মাণ করিয়া তাহার উপর দিয়া লঙ্কার পারে অনায়াসে যাইবার জন্য বড় বড় প্রস্তর খণ্ড বহিয়া আনুক। ১২

हरहासरुद्धविगमं
परकण्ठगणं महाहवसमारम्भे ।
छिन्दन्तु रामबाणा
गम्भीरे मे जले महागिरिबद्धे ॥१३

अन्वयः। गम्भीरे मे जले महागिरिबद्धे रामबाणा हरहासरुद्धविगमं परकण्ठगणं महाहवसमारम्भे छिन्दन्तु ॥ १२

मल्लिनाथ:। हरेति। गम्भीरे अगाधे मे मम जले महागिरिभिर्बद्धे सति रामबाणा हरहासैर्नेश्वरप्रसादेन कृत्तविगमं पुनः प्ररोहवरप्रसादेन निरुद्धविच्छेदं परस्य शत्रोर्दशकण्ठस्य कण्ठगणं महाहवसमारम्भे महायुद्धोपक्रमे छिन्दन्तु। विधौ लोट्। गतमन्यत् ॥ १३

भरत:। हरेत्यादि। मम गम्भीरेऽगाधे जले महागिरिभिर्बद्धे सति महायुद्धस्य समारम्भे प्रवृत्ते परस्य दशाननस्य कण्ठसमूहं रामस्य बाणाश्छिन्दन्तु, आशिषि गी। कीदृशं ?—हरस्य हासेन रुद्धो निवारितो विगमोऽपायो यस्य. रावणो महादेवस्य प्रीतये स्वशिरांसि छिन्नवान् ततस्तुष्टस्य महादेवस्य हासो जात इति प्रसिद्धि: ॥ १३ ॥

অনুবাদ। আমার অগাধ জল বড় বড় পাথরে রুদ্ধ হইলে রামবাণনিচয় শিবপ্রসাদে পুনঃ প্ররূঢ় ( পুনরুদ্গমনক্ষম ) শত্রু রাবণের মস্তকশ্রেণী মহাযুদ্ধকালে ছেদন করুক। ১৩

गच्छन्तु चारुहासा
वीररसाबन्धरुद्धभयसम्बन्धम्।
हन्तुं बहुबाहुबलं हरिकरिणो
गिरिवरोरुदेहं सहसा ॥ १४

अन्वय:। हरिकरिण: चारुहासा: वीररसाबन्धरुद्धभयसम्बन्धं गिरिवरोरुदेहं बहुबाहुबलं हन्तुं सहसा गच्छन्तु ॥ १४

मल्लिनाथ:। गच्छन्त्विति। हरिकरिण: कपिश्रेष्ठा:। उपमितसमास:। चारुहासा महाट्टहासा: सन्तो वीररसस्याबन्धेनाविच्छेदेन रुद्धभयसम्बन्धं निरुद्धभयसंस्पर्शं निर्भीकं गिरिवरोरव: पर्वताधिका देहा यस्य तद् बहुबाहोर्विंशतिभुजस्य दशास्यस्य बलं सैन्यं हन्तुं सहसा गच्छन्तु। 'दशास्यो विंशतिभुजस्तुआन् पानमान्दर:' इति यादव:। षडेतानि सङ्कीर्णानि ॥ १४

एतानि षट्सङ्कीर्णानि।

भरत:। गच्छन्त्वित्यादि। हरिकरिणो वानरश्रेष्ठा आयासाभावात् सकौतुका: सन्त बहुबाहो: रावणस्य बलं सैन्यं हन्तुं सहसा विरोधेन गच्छन्तु। कीदृशं बलं ?—वीररसस्य शौर्य्यस्य य आबन्ध: सततप्रवर्द्धनं तेन रुद्धो निवारितो भयसम्बन्ध: त्राससम्पर्को यस्य, गिरिवरस्येव उरुमहान् देहो यस्य ॥ १४

অনুবাদ। কপিকুঞ্জর সকল অট্টহাস্য সহকারে সর্ব্বদা শৌর্য্য প্রকাশ করিয়া অপগত ভয় বিংশতি বাহু রাবণের পর্ব্বতবৎ মহাকায় সৈন্যগণের বধের জন্য স্বচ্ছন্দে গমন করুক। ১৪

जिगमिषया संयुक्ता बभूव
कपिवाहिनी मते दाशरथेः।
बुद्धजलालयचित्ता गिरि-
हरणारम्भसम्भवसमालोला ॥ १५

अन्वयः। दाशरथेः मते बुद्धजलालयचित्ता कपिवाहिनी जिगमिषया संयुक्ता गिरिहरणारम्भसम्भवसमालोला बभूव ॥ १५

मल्लिनाथः। जिगमिषयेति। अथ दाशरथे रामस्य मते सम्मतौ सति बुद्धजलालयचित्ता। विदितसमुद्राभिप्राया कपिवाहिनी कपिसेना जिगमिषया गन्तुमिच्छया संयुक्ता सती गिरिहरणारम्भस्य पर्वतानयनोपक्रमस्य सम्भवे सम्पत्तौ महालोला अतिसतृष्णा बभूव। पर्वतानानेतुं प्रक्रान्ता इत्यर्थः। 'लोलश्चलसतृष्णयोः' इत्यमरः। अत्र द्वितीयार्द्धमेव संकीर्णं, पूर्वार्द्धं तु संस्कृतमेव ॥ १५

भरतः। जिगमिषयेत्यादि। दाशरथेः रामस्य मते इच्छायां सत्यां कपिसेना जिगमिषया गन्तुमिच्छया संयुक्ता बभूव। कीदृशी?—बुद्धम् अवगतं जलालयस्य समुद्रस्य चित्तं यया, गिरीणां यत् हरणमानयनं तस्य य आरम्भसम्भवोऽनुष्ठानं तेन समा रामाज्ञानन्तरमेव चलितेति भावः। लोला चञ्चला। पूर्वार्द्धे निरवद्यं संस्कृतभावत्वात् जिगमिषयेत्यादौ मूर्द्धन्यषादिश्रवणात ॥' १५

अनुवाद। रामचन्द्र সমুদ্র বাক্যে সম্মতি প্রকাশ করিলে কপিসেনা সমুদ্রের মনোভাব বুঝিয়া গমনেচ্ছা সহকারে পর্ব্বত আনয়নের অনুষ্ঠানে চঞ্চল ( ব্যস্ত ) হইয়া উঠিল। ১৫

गुरुगिरिवरहरणसहं
संहारहिमारिपिङ्गलं रामबलम्।
आरूढं सहसा खं
वरुणालयविमलसलिलगणगम्भीरम् ॥ १६

अन्वयः। गुरुगिरिवरहरणसहं संहारहिमारिपिङ्गलं रामबलं वरुणालयविमलसलिलगणगम्भीरं खं सहसा आरूढम् ॥ १६

मल्लिनाथः। गुर्विति। गुरुगिरिवरहरणस्य महापर्वतानयनस्य सहं क्षमम्। पचाद्यच्। संहारहिमारिवत् कालाग्निवत् पिङ्गलं

रामबलं वरुणालयस्य समुद्रस्य विमलसलिलानां गणो राशिस्तद्वद्-गम्भीरं खमाकाशं सहसा द्रुतमारूढं, पर्वताहरणार्थं समुत्पपातेत्यर्थ: ॥ १६

भरत:। गुरुगिरीत्यादि। ततो रामबलं कर्त्तृ सहसा तत्क्षणं खम् आकाशम् आरूढ़म् आरुरोह। रुह: कर्त्तरि क्त:। कीदृशं बलं?—गुरूणां गिरिवराणां यत् हरणमानयनं तत्सह, सहते इति पचादित्वादच्। संहारे प्रलयकाले यो हिमारि: अग्निस्तद्वत् कपिलं, तेजस्वित्वमपि सादृश्यं सूचितम्। खं कीदृश?—वरुणालयस्य समुद्रस्य यो विमल: सलिलगणस्तद्वत् गम्भीरं दुरवगाहम् ॥ १६

अनुवाद। वृहৎ প্রস্তর আনয়ন সমর্থ প্রলয়াগ্নিবৎ পিঙ্গলবর্ণ রামের সৈন্যদল বিমল সমুদ্র জলরাশিতুল্য গভীর নীল আকাশে তৎক্ষণাৎ উঠিয়া পড়িল ।১৬

अवगाढं गिरिजालं
तुङ्गमहाभित्तिरुद्धसुरसञ्चारम्।
अभयहरिरावभीमं करिपरि-
मलचारुबहु[ह]लकन्दरसलिलम् ॥ १७

अन्वय:। तुङ्गमहाभित्तिरुद्धसुरसञ्चारम् अभयहरिरावभीमं करिपरिमलचारुबहुल-कन्दरसलिलं गिरिजालम् अवगाढम् ॥ १७

मल्लिनाथ:। अवगाढमिति। तुङ्गाभिर्महाभित्तिभिर्महातटैर्निरुद्ध: सुरसञ्चारो येन तत् तथोक्तमित्यर्थ:। अभयानां हरीणां सिंहानां रावैर्नादैर्भीमं करिपरिमलेन परितो मिलनेन मदगन्धेन वा चारूणि बहुलानि कन्दरेषु दरीषु सलिलानि यस्मिंस्तद्गिरिजालमवगाढमुत्पाटयितुमवष्टब्धम् ॥ १७

भरत:। अवगाढमित्यादि। ततम् अथैव रामबलेन गिरिवृन्दम् अवगाढम् अवष्टब्धं, तुङ्गाभि: उच्चाभि: महतीभि: परिणाहवतीभि: भित्तिभि: रुद्धो निराकृत: सुरस्य सञ्चारो येन यत्र वा, हरीणां सिंहानां रावेण शब्देन भयानकं, करिपरिमलेन हस्तिसंमर्दजनितमदगन्धेन चारु शोभनं बहुलं प्रचुरं कन्दरसलिलं यत्र ॥ १७

अनुवाद। পরে বানরেরা অত্যুচ্চ মহাতট ভূমিদ্বারা দেবগণের সঞ্চরণ রোধক, নির্ভয় সিংহগর্জ্জনে ভীষণ এবং যাহাদের গুহায় মত্তগজের মদগন্ধ সমন্বিত সুমনোহর প্রচুর জল সতত বিদ্যমান সেই পর্ব্বতমালার মধ্যে প্রবিষ্ট হইল। ১৭

अलिगणविलोलकुसुमं
सकमलजलमत्तकुररकारण्डवगणम्।

फणिसंकुलभीमगुहं
करिदन्तसमूढसरसवसुधाखण्डम्॥ १८

अन्वयः। अलिगणविलीनकुसुमं सकमलजलमत्तकुररकारण्डवगणं फणिसङ्कुलभीमगुहं करिदन्तसमूढसरसवसुधाखण्डम्॥ १८

मल्लिनाथः। अथ गिरिजालमेव त्रिभिर्विशिनष्टि—अली-त्यादिना। अलिगणैर्विलीनानि कुसुमानि यस्मिंस्तत् सकमलेषु जलेषु मत्ताः कुरराणामुत्क्रोशानां कारण्डवानां जलकुक्कुटानां च गणा यस्मिंस्तत् फणिसङ्कुला भीमा गुहा यस्मिंस्तत् करिदन्तैः समूढानि प्रहृतानि सरसानि सार्द्राणि वसुधाखण्डानि यस्मिंस्तत्॥ १८

भरतः। अलिगणेत्यादि। कीदृशं गिरिजालम्?—अलिगणैः भ्रमरसमूहैः विलीनानि कुसुमानि यत्र, सकमलेषु जलेषु मत्ताः कुरराणां कारण्डवानाञ्च पक्षिविशेषाणां गणाः समूहा यत्र, फणिभिः सर्पैः सङ्कुला व्याप्ता अत एव भीमा गुहा यत्र, करिदन्तैः समूढम् उत्क्षिप्तं सरसम् आर्द्रं वसुधायाः खण्डं यत्र॥ १८

অনুবাদ। সেই পর্ব্বতমালায় ভ্রমর লক্ষনে বিলোল প্রচুর কুসুম আছে, সকমলজলে মত্ত কুরর (বাজ) ও জলকুক্কুটগণ বাস করে, তাহার গুহাগুলি সর্পপূর্ণ থাকায় ভয়ঙ্কর এবং করিকুল দন্তাঘাতে স্থানে স্থানে জলার্দ্র মৃত্তিকা খণ্ড উৎক্ষিপ্ত করিয়াছে। ১৮

अरविन्दरेणुपिञ्जरसारस-
रवहारिविमलबहुचारुजलम्।
रविमणिसंभवहिमहर-
समागमाबद्धबहुलसुरतरुधूम[प]म्॥१९

अन्वयः। अरविन्दरेणुपिञ्जरसारसरवहारिविमलबहुचारुजलं रविमणिसम्भवहिमहर-समागमाबद्धबहुलसुरतरुधूमम्॥ १९

मल्लिनाथः। अरविन्देति। अरविन्दरेणुपिञ्जराणि सारसरव-हारीणि विमलबहुचारुजलानि यस्मिंस्तत् रविमणिसम्भवस्य सूर्य्यकान्तोद्भवस्य हिमहरस्याग्नेः समागमेनाबद्धा उत्पादिता बहुलाः सुरतरूणां देवदारूणां धूमा यस्मिंस्तत्॥ १९

भरतः। अरविन्देत्यादि। पुनः कीदृशं गिरिजालम्?—अरविन्दानां रेणुभिः पिञ्जराः पिङ्गला ये सारसाः पक्षिभेदास्तेषां रवेण मनोहारि निर्मलं बहु चारु जलं यत्र, रविमणिसमु-

त्वष्टेन छिन्नहरेण रविणा यः समागमस्तेन आवह्नौ जनितो विपुलः सुरतरुभूपो देवदारु-धूपो यत्र, तादृशम् । "धीव" इति प्राकृतमूर्ति बहुलाधिकारात् बकारादेशः ॥ १९

অনুবাদ। তথায় পদ্মরেণু পিঙ্গলকায় সারসের রবে মনোহর বিমল প্রচুর সুন্দরজল আছে, এবং সূর্য্যকান্তমণি হইতে উদ্গত অগ্নির সংযোগে প্রভূত দেবদারু বৃক্ষের ধূম উদ্গত হইতেছে। ১৯

हरिरवविलोलवारण-
गम्भीरावद्धसरसपुरुसंरावम् ।
घोणासङ्गमपङ्काविल-
सुबलभरसहोरुवराहम् ॥ २०

अन्वयः । हरिरवविलोलवारणगम्भीरावद्धसरसपुरुसंरावं घोणासङ्गमपङ्काविलसुबल-भरसहोरुवराहम् ॥ २०

मल्लिनाथः । हरीति । हरीणां सिंहानां रवैर्विलोला वित्रस्ता वारणास्तैर्गम्भीरमाबद्धा जनिताः सरसा मधुरा पुरवः प्रभूताः संरावा वृंहणानि यस्मिंस्तत् घोणासङ्गमसम्भवेन पोत्राघातसंक्रान्तेन पङ्केनाविला मलिनाः सुबलाः प्रबला भरसहा रणभरणक्षमा उरु-वराहा यस्मिंस्तत् । एतानि पञ्च संकीर्णानि ॥ २०

भरतः । हरिरवेत्यादि । पुनः कीदृशं गिरिजालं ?—हरीणां सिंहानां रवेण शब्देन विलोलाः चञ्चला ये वारणा हस्तिनस्तैः गम्भीरम्, आबद्धो जनितः सरसो भयानक-रसान्वितः पुरुः महान् संरावः शब्दो यत्र, घोणाया नासिकायाः सम्पर्कात् सम्भवो यस्य तेन पङ्केन आविला लिप्ताङ्गाः सुबला अत एव भरसहा उरवो महान्तो वराहा यत्र ॥ २०

অনুবাদ। সেই গিরিজাল আবার সিংহরবে ভীত হস্তিগণ কর্তৃক গম্ভীরভাবে উৎপাদিত ভয়ানক রসান্বিত প্রভূত রবে পরিপূর্ণ, এবং নাসিকাগত সম্ভূত কর্দ্দমে মলিন প্রবল ভার-বহনের উপযুক্ত বড় বড় শূকরে পরিপূর্ণ।২০

उच्चखनुः परिरम्भान्
कपिसिंहा बाहुभिस्ततो भूमिभृतः ।
निष्पिष्टशेषमूर्द्ध्नः शृङ्ग-
विकीर्णांशुरश्मिनक्षत्रगणान् ॥ २१

अन्वयः । ततः कपिसिंहाः बाहुभिः परिरम्भान् निष्पिष्टशेषमूर्द्ध्नः शृङ्गविकीर्णांशु-रश्मिनक्षत्रगणान् भूमिभृतः उच्चखनुः ॥ २१

अन्वयः । चारुकलहंससङ्कुलम् अचण्डसञ्चारसारसाबद्धरवं सकुसुमकणगन्धवहं समयागमवारिसङ्गविमलायामम् ॥ २४

मल्लिनाथः । चार्विति । चारुभिः कलहंसैः संकुलमचण्ड-सञ्चारैर्मन्दसञ्चारैः सारसैराबद्धरवं कृतनादं सकुसुमकणैः सपुष्प-रेणुर्गन्धस्य वहो गन्धवहो वायुर्यस्मिंस्तत् । वहेः पचाद्यच् । समयागमे प्रावृट्काले वारिसङ्गेन जलसेकेन विमलायामं निर्मल-विस्तारम् ॥ २४

भरतः । चारुकलेत्यादि । पुनः कीदृशम् अम्बरं ?—चारुभिः कलहंसैः राजहंसैः कादम्बैर्वा सङ्कुलं व्याप्तम् । "कलहंसस्तु कादम्बे राजहंसे नृपोत्तमे" इति विश्वः । अचण्ड-सञ्चारैः शनैःशनैः सञ्चरद्भिः सारसैः आबद्धो रचितो रवो यत्र, सकुसुमकणः पुष्पावयवसहितो गन्धवहो वायुर्यत्र, समयस्य वर्षाकालस्य आगमेन यो वारिसङ्गस्तेन प्रक्षालितत्वात् विमल आयामो दैर्घ्यं यस्य, सम्प्रति मेघशून्यत्वात् ॥ २४

অনুবাদ । এবং সুন্দর সুন্দর রাজহংসে পরিব্যাপ্ত ছিল, তথায় মৃদুসঞ্চারী সারসগণ রব করিতেছিল । পুষ্পপরাগবাহী বায়ু বহিতেছিল, এবং বর্ষাকালের জলসম্পর্কে বিধৌত হওয়ায় তাহার দৈর্ঘ্য নির্ম্মল ছিল । ২৪

सहसा ते तरुहरिणा
गिरिसुभरा लवणसलिलबन्धारम्भे ।
तीरगिरिमारूढा
रामागमकृतसभयपरसञ्चारम् ॥ २५

अन्वयः । सहसा ते तरुहरिणा गिरिसुभराः (सन्तः) लवणसलिलबन्धारम्भे रामागम-कृतसभयपरसञ्चारं तीरगिरिम् आरूढाः ॥ २५

मल्लिनाथः । सहसेति । सहसा सद्यस्ते तरुहरिणास्तरुमृगा गिरिभिः सुभरा गिरिभिर्भृताः सन्त इत्यर्थः । लवणसलिलस्य लवणाम्बुराशेर्बन्धारम्भे बन्धनप्रवृत्तौ रामागमेन कृतः सभयानां परेषां शत्रूणां सञ्चारो यस्मिंस्तं रामप्रतापादकुतोभयं तीरगिरिं तटाद्रिमारूढाः । संस्कृतपक्षे गिरिमारूढाः इति संहिता न विव-क्षितेत्याहुः । एतानि चत्वारि सङ्कीर्णानि । २५

भरतः । सहसेत्यादि । ते तरुहरिणा वानरा गिरिभिः सुभरा सहभारान्विताः सन्तो लवणसलिलस्य समुद्रस्य बन्धनारम्भे सहसा तत्पूर्वं तीरे स्थितं गिरिम् आरूढाः । कीदृशं गिरिं ?—रामस्य आगमेन कृतो निरस्तः सभयानां परेषां शत्रूणां सञ्चारो यत्र । तीरगिरौ

याम च.थान इति मयात् तत्र समवी न सम्बन्धीत्यर्थः । तीरे गिरिम् । आरूढा इति पार्श्व बहुप्राचीनपुस्तके दृश्यते । आरूढाःतीरगिरिमिति पाठे प्राकृते विसर्गलोपात् सन्धीयत्वं न स्यात्, लुप्तविसर्गपाठे संस्कृतत्वभङ्ग इति मन्यमानाः प्राचस्तीरे गिरिम् आरूढा इति तीरपद-मसमस्त गिरिपदेन च समासं कृत्वा विसन्धिं पठन्ति । यद्यपि "वेकस्यशार्ङ्गेऽसी"इति समासे नित्य एव सन्धिस्तथापि "एवाती डौ:" इति डित्करणेन सन्धेरनित्यत्वज्ञापनात् "मात् खवा-वुक्र" इति दर्शनाच्च समासेऽपि क्वचित् सन्धिर्न भवतीति बोध्यं, समासेऽपि क्वचिद्विसन्धिरिति पाणिनीयाः, "इकवासवर्णे नित्यसमासवर्जम्" इति क्रमदीश्वरसूत्रे नित्यसमासवर्जनात् विकल्पसमासेऽत्र पक्षे प्रकृतिभावः स्फुट एव, एवं परसञ्चारमित्यत्र परसञ्चारे इति पठित्वा तीरविशेषणं वदन्ति । तीरगिरिम् आरूढा इति पाठो न युक्तश्छन्दोभङ्गात् ॥ २५

অনুবাদ। সহসা সেই কপিবরগুলি পর্ব্বত বহনে অতি ভারাক্রান্ত হইয়া লবণসমুদ্রের বহন আরম্ভ হইলে রামের আগমনে ব্যাকুল ভীত নিশার শত্রুগণ যেখানে উপস্থিত হইয়াছিল, সেই সমুদ্র তীরস্থিত পর্ব্বতে আরোহণ করিল। ২৫

ततः प्रणीताः कपियूथमुख्यै-
र्न्यस्ताः कृशानोस्तनयेन सम्यक् ।
अकम्प्रब्रघ्नायनितम्बभागा
महार्णवं भूमिभृतोऽवगाढाः ॥ २६

अन्वयः। ततः कपियूथमुख्यैः प्रणीताः कृशानोः तनयेन सम्यक् न्यस्ताः अकम्प्रब्रघ्नाय-नितम्बभागाः भूमिभृतः महार्णवम् अवगाढाः ॥ २६

मल्लिनाथः। तत इति। ततोऽनन्तरं कपियूथमुख्यैः प्रणीता नलस्य हस्ते दत्ताः कृशानोस्तनयेन नीलेन सम्यक् दृढं न्यस्ता विन्यस्ता अत एव अकम्प्रा निश्चला ब्रघ्नायनितम्बभागा मूलशिखर-मध्यप्रदेशा येषां ते भूमिभृतः पर्वता महार्णवमवगाढाः प्रविष्टा निखातमूलाः स्थिता इत्यर्थः। इदं निराख्यातमसङ्कीर्णम् ॥ २६

भरतः। तत इत्यादि। तदनन्तरं कपियूथमुख्यैर्नलादिभिः प्रणीताः दत्ताः कृशानोः अग्नेस्तनयेन सम्यक् साधु न्यस्ताः अर्पिता भूमिभृतः पर्वताः महार्णवम् अवगाढाः आक्रान्त-वासनाः! कीदृशाः?—अकम्प्राः अकम्पनशीलाः स्थिरा ब्रघ्नायनितम्बभागा येषां "मूलं ब्रघ्नोऽङ्घ्रिनामकः" इत्यमरः। बुध्यौकर्वन्ते "नाम्न्येति च"इति क्रः, तत्र क् स्थ इति इत्य-स्यान क इति केचित् ब्रघ्नशब्दोऽपि दृश्यते। अयं शृङ्गं, नितम्बो मध्यम्। निराख्यातमा-ख्यातप्रत्ययरहितं निरवद्यं केवलसंस्कृतत्वात् तालव्यशादिमत्त्वात् ॥ २६

অনুবাদ। তাহার পর কপিদলপতিগণ সেই পর্ব্বতগুলি নলের হস্তে দিল, অগ্নিপুত্র নীল সেগুলিকে সমুদ্রমধ্যে এরূপ দৃঢ়ভাবে সাজাইল যে, তাহার মূলমধ্য ও অগ্রভাগ একটুও নড়িল না। ২৬।

तेनेऽद्रिबन्धो ववृधे पयोधि-
स्तुतोष रामो मुमुदे कपीन्द्रः।
तत्रास शत्रुर्ददृशे सुवेलः
प्रापे जलान्तो जहृषुः प्लवङ्गाः॥ २७

अन्वयः। अद्रिबन्धः तेने पयोधिः ववृधे, रामः तुतोष, कपीन्द्रः मुमुदे, शत्रुः तत्रास सुवेलः ददृशे, जलान्तः प्रापे, प्लवङ्गाः जहृषुः॥ २७

मल्लिनाथः। तेन इति। अद्रिबन्धोऽद्रिमयः सेतुबन्धस्तेने विस्तारितः पयोधिर्ववृधे अद्रिपूरणादुद्धतजलो जात इत्यर्थः। राम-स्तुतोष मित्रप्रायं कार्य्यमिति सन्तुष्टः, कपीन्द्रः सुग्रीवोऽपि मुमुदे मित्रकार्य्यं निर्व्यूढकल्पमिति हृष्ट इत्यर्थः। शत्रुर्दशास्योऽपि तत्रास स्वदुश्चेष्टितमित्थमनर्थाय प्रकल्पत इति अत्यन्तं त्रस्तोऽभूदित्यर्थः। सुवेलो लङ्काद्वारवर्त्ती सुवेलाद्रिर्ददृशे आसन्ना लङ्केति मेनिर इत्यर्थः। जलान्तो जलपारं प्रापे प्राप्तः। अर्णवो वितीर्ण इत्यर्थः। प्लवङ्गा जहृषुः। स्वप्रयासः सफल इति हृष्टा इत्यर्थः। "असंयोगाल्लिट् कित्" इति अपितो लिटः कित्त्वान्न गुणः। एकान्तराख्यान-विचित्रमसङ्कीर्णम्॥ २७

भरतः। तेन इत्यादि। अद्रीणां बन्धस्तेने वानरैर्विस्तारितः पयोधिः ववृधे वृद्धिं गतः, पर्वतैः पूर्य्यमाणत्वात् तीरं प्लावितवानित्यर्थः। रामस्तुतोष तुष्टः सुकरम् इदानीं शत्रुव्यापादनमिति मत्वा कपीन्द्रः सुग्रीवो मुमुदे हृष्टः प्राप्तो मे प्रत्युपकारकालः इति मत्वा। शत्रुः दशाननः तत्रास भीतः, अत्रापि राम आगत इति मत्वा। सुवेलो ददृशे वानरैर्दृष्टः यतो जलस्यान्तोऽवसानं प्रापे प्राप्तः। अत एव प्लवङ्गा वानरा जहृषुः हृष्टाः स्वाम्यादेशः सम्पादित इति मत्वा। एतदेकान्तराख्यातं स्वाख्यातपदैरर्थविधानात् निरवद्यं च प्राकृताभावात्॥ २७

অনুবাদ। বানরগণ পর্ব্বত দিয়া সেতুবন্ধন শেষ করিল, সমুদ্র পর্ব্বতে পূর্ণ হওয়ায় তাহার জল বর্দ্ধিত হইল, (অর্থাৎ দুইকূল প্লাবিত হইল), কার্য্যসিদ্ধির সম্ভাবনায় রাম সন্তুষ্ট হইলেন। কপিবর সুগ্রীব বন্ধুকার্য্য সম্পন্ন মনে করিয়া হৃষ্ট এবং দশানন বিফলপ্রয়াস হও-য়ায় অত্যন্ত উদ্বিগ্ন হইল। লঙ্কাপারবর্ত্তী সুবেল পর্ব্বত দেখা যাইতে লাগিল এবং সকলে অর্ণব পার হইয়া হৃষ্ট হইল। ২৭।

ভেমুর্ববল্গুর্ননৃতুর্জজক্ষু-
র্জগুঃ সমুত্পুপ্লুবিরে নিষেদুঃ।

आस्फोटयाञ्चक्रुरभिप्रणेदु-
र्रेजुर्ननन्दुर्विययुः समीयुः ॥ २८

अन्वयः। (कपयः) भ्रेमुः, ववल्गुः, ननृतुः, जजक्षुः, जगुः, समुत्पुप्लुविरे, निषेदुः, आस्फोटयाञ्चक्रुः, अभिप्रणेदुः, रेजुः, ननन्दुः, विययुः, समीयुः ॥ २८

मल्लिनाथः। अथ कपीनां हर्षचेष्टितान्याह—भ्रेमुरिति। भ्रेमुर्बभ्रमुः। "वा जॄभ्रमुत्रसाम्" इति विकल्पादेत्वाभ्यासलोपौ। ववल्गुरुत्पेतुः। वल्गु गतौ। ननृतुर्नृत्यन्ति स्म। लिटः कित्त्वान्न गुणः। जजक्षुर्भक्षयामासुर्जहसुर्वा। जक्ष भक्षहसनयोः। जगुरगायन्। कै गै शब्दे। समुत्पुप्लुविरे उल्लङ्घिरे। प्लुङ् गतौ। उवङादेशः। निषेदुरुपविष्टाः। "अत एकहल्—" इत्यादिना एत्वाभ्यासलोपौ। आस्फोटयाञ्चक्रुः बाहो महत्कर्म कृतमस्माभिरिति जगर्जुः। ण्यन्ताल्लिट्याम्प्रत्ययः। अभिप्रणेदुः क्ष्वेडितवन्तः। "अत एकहल्—" इत्येव। रेजुः रराजुरचकाशिरे। "फणाञ्च सप्तानाम्" इति विकल्पादेत्वाभ्यासलोपौ। ननन्दुर्नन्दन्ति स्म। विययुः वियाता धृष्टाः प्रजगल्भिरे इत्यर्थः। 'धृष्टे धृष्णुर्वियातः' इत्यमरः। यातेर्लिट्। झेरुसादेशः। समीयुर्हर्षादेकत्र समेता इत्यर्थः। इणो लिटि झेरुसादेशः। "दीर्घ इणः किति" इत्यभ्यासदीर्घः। केवलाख्यातचित्रमसङ्कीर्णम् ॥ २८

भरतः। भ्रेमुरित्यादि। सेतुना पारं प्राप्य केचित् भ्रेमुः प्रदेशदर्शनोत्सुका इतस्ततो गताः, अपरे ववल्गुः वल्गितवन्तः। वल्ग गतौ गत्यर्थत्वात् हर्षाद्युत्प्लवनपर्यायोऽपि वर्त्तते। अन्ये ननृतुः हर्षात् नृत्यं चक्रुः, अन्ये जजक्षुः फलानि भक्षितवन्तः, हर्षात् हसितवन्तो वा, जक्ष भक्षहसनयोः। केचित् समुत्पुप्लुविरे उत्प्लुत्य गतवन्तः। केचित् निषेदुः श्रमापनोदनार्थम् उपविष्टाः। केचिद्बाह्वास्फोटमहङ्कारं चक्रुः। णिः कृत्यस्थाने णिः। अन्येऽभिप्रणेदुः परीसान्निध्ये शब्दं चक्रुः। केचित् रेजुः पुष्पादिना शोभितवन्तः। अन्ये ननन्दुः कृतकृत्यत्वात् हर्षं प्राप्ताः। केचित् विययुः यूथादन्यत्र गताः कौतुकात्। अपरे समीयुः एकत्र सम्भूय स्थिताः। आख्यातमालेति पुञ्जितत्वानां क्रियापदानां पाठात् उपसर्गैश्च लिङ्गत्वेऽपि पृथक् स्थितत्वाभावात् क्रियाख्यातकत्वेनाख्यातजुल्यतया व्यपदेशः ॥ २८

অনুবাদ। সমুদ্রের পারে গিয়া কেহ কেহ ইতস্ততঃ দেখিবার জন্য ঘুরিয়া বেড়াইতে লাগিল, কেহ বা লাফাইতে লাগিল, কেহ নাচিতে লাগিল, কেহ ফল খাইতেছিল, কেহ হাসিতেছিল কেহ দৌড়াইতেছিল, কেহ বসিয়া রহিল, কেহ আস্ফালনে শব্দ করিতেছিল। ২৮

गिरिपङ्कचारुदेहं कक्कोल-
लवङ्गबद्धसुरभिपरिमलम्।
बहुबहलोरुतरङ्गं परिसर-
मारूढमुद्धरं लवणजलम् ॥ २९

अन्वयः। गिरिपङ्कचारुदेहं कक्कोललवङ्गबद्धसुरभिपरिमलं बहुबहलोरुतरङ्गम् उद्धरं लवणजलं परिसरम् आरूढम् ॥ २९

मल्लिनाथः। गिरीति। गिरीणां पङ्केन चारुदेहं रम्यरूपं कक्कोलै-र्लवङ्गैश्च बद्धो जनितः सुरभिपरिमलः सुगन्धो यस्य तत्। बहुबह-लोरुतरङ्गमुद्धरमनर्गलं लवणजलं कर्तृ परिसरमारूढं प्रक्षिप्यमाण-पर्वतनोदनात् तटमारुरोहेत्यर्थः। कर्त्तरि क्तः। ढत्वादिकार्य्यम् ॥२९

भरतः। गिरिपङ्केत्यादि। लवणजलं कर्तृ परिसरं पर्य्यन्तभुवं तटम् आरूढं प्राप, सेतुनः निवारितगतित्वात्। कीदृशं जलं?—गिरीणां प्रक्षिप्तानां यो गैरिकाद्यधातुपङ्कस्तेन चारुर्देहः यस्य, वर्णान्तरोत्पादनात्, कक्कोलैर्लवङ्गैश्च गन्धद्रव्यविशेषैः बद्धो रचितः सुरभिः परिमलो विमर्दोत्थो गन्धो यत्र, बहवः प्रचुरा बहलाः स्थूलाः उरव उच्चाः तरङ्गा यस्य, उद्धरं मर्य्यादामतिक्रान्तम्। प्राकृते कक्कोलशब्दस्य नानुस्वारविधिः, कक्कोलशब्दस्यैव तत्रोक्तत्वात्; यत्तु कर्पूरमञ्जर्य्यां कङ्कोलीकुलं कुपितं इति तत्रापि कक्कोलीत्येव पठनीयं—लिपिकप्रमादादनु-स्वारपाठः, वैकल्पिकोऽप्यनुस्वार इत्यन्ये ॥ २९

অনুবাদ। সমুদ্রে সেতু নির্ম্মাণ নিমিত্ত নিক্ষিপ্ত পর্ব্বত সকলের গৈরিকাদি পঙ্কে সুন্দর দেহ ধারণ করিল, তাহাতে লবঙ্গাদি গন্ধদ্রব্যের সুগন্ধে সুরভিময় এবং প্রচুর স্থূল উচ্চ তরঙ্গময় হইয়া নিরন্তর তীরে উঠিতে লাগিল। ২৯

लोलं कूलाभिगमे
खे तुङ्गामलनिबद्धपृथुपरिणाहम्।
सुरगङ्गाभरणसहं
गिरिबन्धवरेण लवणसलिलं बद्धम् ॥ ३०

अन्वयः। कूलाभिगमे लोलं खे तुङ्गामलनिबद्धपृथुपरिणाहं सुरगङ्गाभरणसहं लवण-सलिलं गिरिबन्धवरेण बद्धम् ॥ ३०

मल्लिनाथः। लोलमिति। कूलाभिगमे तटारोहणे लोलं चलत् खे आकाशे तुङ्गं च तदमलञ्च तन्निबद्धपृथुपरिणाहं लल-

महाविस्तारं चेति विशेषणसमासः । सुरगङ्गाभवां मन्दाकिनी-पूरणे सङ्गं क्षमम् । पर्याप्तच् । लवणसलिलं गिरिबन्धबन्धेन गिरिमयमहासेतुना सद्यं निवारितम् ॥ ३०

भरत । लीलमित्यादि । गिरिबन्धबन्धेन सेतुना लवणजलं बद्धम् । कीदृशम् ?—शैलाभिगमे नद्यागमने लोलं चपलं, श्लि आकाशे, तुङ्गञ्च तदमलञ्चेति तुङ्गामलं. निबद्धः संयुक्तः पक्षः महान् परिणाहो विशालता यस्य, तुङ्गामलञ्च तत् निबद्धपक्षपरिणाहञ्चेति विग्रहः । तं आनीतपवि-स्तारम्धा यत्नमित्यर्थः । सुरगङ्गाया मन्दाकिन्याः पूरणे समर्थं विस्तृतत्वात् । प्राकृते शैलाभिगमे इत्यत्र भकारस्य हकारो न भवति, प्रार्थीगत्वणात ॥ ३०

অনুবাদ। তটে গিরি সকল, শূন্যে উচ্চ নির্মল এবং তন্নিবন্ধন মহাবিস্তৃতিসম্পন্ন, মন্দা-কিনী-পূরণক্ষম সমুদ্র পর্য্যন্ত নিশ্মিত সেতুতে বদ্ধ হইয়া গেল। ৩০

आरूढं च सुवेलं तरुमाला-
बन्धहारिगिरिवरजालम् ।
रावणचित्तभयङ्करमापिङ्गल-
लोलकेसरं रामबलम् ॥ ३१

अन्वय । रावणचित्तभयङ्करम् आपिङ्गललोलकेसरं रामबलं तरुमालाबन्धहारिगिरिवर-जालं सुवेलं च आरूढम् ॥ ३१

मल्लिनाथः । आरूढमिति । रावणचित्तस्य भयङ्करं भयजनक-मापिङ्गला लोलाश्च केसरा यस्य तद्रामबलं कर्तृ तरूणां माला-बन्धेन पङ्क्तिसन्निवेशेन हारीणि मनोहारीणि गिरिवरजालानि प्रत्यन्तपर्वतसमूहा यस्य तं सुवेलं सुवेलाद्रिमारूढमाररोह ॥ ३१

भरत । आरूढमित्यादि । रामबलं समुद्रम् उत्तीर्य्य सुवेलं पर्वतम् आरूढम । अका-रस्य प्राकृते लोपो न भवति, पदमध्यात्वर्यातिवर्त्तमानात । कीदृशं ?—तरुमालाया आबन्धेन वेष्टनेन हारि मनोहारि पर्यन्तगिरिवरजालं यस्य यत्र वा । रामबलम् कीदृशं ?—रावण-चित्तस्य भयजनकम्, आपिङ्गलानि केसराणि यस्य । केसरशब्दो दन्त्यमध्यः ॥ ३१

অনুবাদ। রামসৈন্য (বানরসৈন্য) পঙ্ক্তিক্রমে সন্নিবেশিত তরুমালায় মনোহর প্রত্যন্ত পর্ব্বত-বেষ্টিত সুবেলপর্ব্বতে আরোহণ করাতে তাহাদের ঈষৎ পিঙ্গল কেশরগুলি চঞ্চল হইয়া নড়িতেছিল, তদ্দর্শনে রাবণের মনে ভয়ের সঞ্চার হইল। ৩১

लङ्कालयतुमुलारवसुभर-
गम्भीरोरुकुञ्जकन्दरविवरम् ।

वीणारवरससङ्गमसुरगण-
सङ्कुलमहातमालच्छायम् ॥ ३२

अन्वयः। लङ्कालयतुमुलारवसुभरगभीरोत्कुञ्जकन्दरविवरं वीणारवरससङ्गमसुरगण-
सङ्कुलमहातमालच्छायम् ॥ ३२ *

मल्लिनाथः। अथैकादशभिः सुवेलाचलं वर्णयति—लङ्के-
त्यादि। लङ्कालयानां लङ्कानिवासिनां तुमुलैः सङ्कुलैरारवैः सुष्ठु,
भ्रियन्त इति सुभराणि सुपूर्णानि गभीराण्युत्कटानि च कुञ्जानां
कन्दराणाञ्च विवराणि यस्य तम्। वीणारवस्य रसेनास्वादेन सङ्गमो
येषां तैः सुरगणैः सङ्कुलो महातमालानां छाया यस्य तम् ॥ ३२

भरतः। लङ्केत्यादि। कीदृशं ?—लङ्कालयानां राक्षसानां यत्तुमुलो महानारवस्तेन
सुभराणि परिपूर्णानि गभीराणि उदग्राणि महान्ति कुञ्जानि कन्दराणि विवराणि च यस्य यत्र
वा, वीणारवस्य रसेनेच्छया यः सङ्गमः परस्परमिलनं तेन हेतुना सुरगणैः सङ्कुला व्याप्ता
महातमालानां छाया यत्र, वीणारवरसेन सङ्गमो येषां सुरगणानामित्यन्ये ॥ ३२

অনুবাদ। তখন লঙ্কাবাসি রাক্ষসগণের তুমুল ভীষণরবে সুবেল পর্ব্বতের কুঞ্জ ও গুহার
সুগভীর গহ্বরগুলি পরিপূর্ণ হইল, এবং সেখানকার উন্নত তমালবৃক্ষের ছায়া সকল বীণা-
রসাস্বাদন নিমিত্ত একত্র মিলিত দেবগণে পূর্ণ হইয়াছিল। ৩২

सरसबहुपल्लवाविलकेसर-
हिन्तालबद्धबहलच्छायम्।
ऐरावणमदपरिमलगन्ध-
वहाबद्धदन्तिसंरम्भरसम् ॥ ३३

( अन्वयोऽत्र पदद्वये कृत एव कविना )

मल्लिनाथः। सरसेति। सरसा बहवश्च पल्लवा येषां तैराविल-
केसरैः रजःकलुषकेसरैश्च हिन्तालैस्तालविशेषैर्बद्धाः संघटिता बहलाः
सान्द्राश्छाया यस्य तम्। ऐरावणमदपरिमलस्य सम्बन्धी यो गन्ध-
वहो वायुस्तेनाबद्धो दन्तिनां संरम्भरसः क्रोधरसो यत्र तम् ॥ ३३

भरतः। सरसेत्यादि। पुनः कीदृशं सुवेलं ?—सरसैः स्निग्धैः बहुभिः पल्लवैः आकुला
व्याप्ताः केसरा हिन्तालाख्यवृक्षाः तैः बद्धा जनिता बहला निबिडा छाया यत्र, पल्लवा वल्कसंगति
पाठे—आविला अन्धकारिताः। ऐरावणसम्बन्धिनो मदस्य परिमलो यत्र, तादृशेन गन्धवहेन
बद्धो जनितो दन्तिनां क्रोधरसो यत्र, ऐरावत ऐरावण इत्युभयं प्राकृतं साधु। यद्यप्यैकारस्य
प्राकृते निषेधिकाराकारादेशौ उक्तास्तथापि ऐहिता च केषाञ्चिदनुमतत्वात् तस्माते नेदमुदाहृतम्,
अधर्मे उदाहृतं अधमिति ॥ ३३

* इत आरभ्य वयःसंख्यांश्लोक यावदनेन एव स्वस्वाभिज्ञानामन्वयो न प्रदर्शितः।

অনুবাদ। এবং স্নিগ্ধ বহুপল্লবব্যাপ্ত নাগকেসর এবং হেঁতাল বৃক্ষসকল নিবিড় ছায়া করিয়া রাখিয়াছিল। ঐরাবতের মদগন্ধসমন্বিত বায়ু সঞ্চারিত হওয়ায় অপর হস্তীগুলির ক্রোধ বৃদ্ধি হইতেছিল। ৩৩

तुङ्गतरुच्छायारुहकोमल-
हरिद्धारिलोलपल्लवजालम्।
हरिणभयङ्करसकुसुमदाव-
समच्छविविलोलदाड़िमकुञ्जम् ॥३४

अन्वयः पूर्व्ववत् ॥ ३४

मल्लिनाथः। तुङ्गेति। तुङ्गतरूणां छायाः एकैकस्य तरोरेकैकच्छाया ता बह्वाः अन्यथा पूर्वपदार्थबाहुल्ये "छायाबाहुल्ये" इति नपुंसकत्वं स्यात्। तासु रोहन्तीति रुहाणि। इगुपधलक्षणः कः। तानि कोमलानि हरीणि हरितानि हारीणि च लोलपल्लवजालानि यत्र तम्। हरिणभयङ्कराणि सकुसुमानि अत एव दावसमच्छवीनि विलोलानि दाड़िमकुञ्जानि यत्र तम् ॥३४

भरतः। तुङ्गेत्यादि। पुनः कीदृशं सुवेलं?—तुङ्गानां तरूणां छायासु रूढं जातम् अत एव कोमलं मृदु हरिद्वर्णं हारि मनोहरं लोलं चञ्चलं पल्लवानां जालं समूहो यत्र, हरिणानां भयङ्करी दावमाहात्म्याद्भयजनकः सकुसुमः पुष्पैः सह वर्त्तमानः, अत एव दावेन वनाग्निना समा छविस्तुल्यकान्तिः, विलोलः चञ्चलो दाड़िमकुञ्जो यत्र, अग्निशिखापि लोला भवति "दवो दावो वनारण्यवह्नी" इत्यमरः। बहेरिगुपधत्वात "इगुपधज्ञाप्रीकिरः कः" इति कः। पल्लवजालमिति केचित् पठन्ति। तदा संस्कृते बालशब्दस्य नवार्थस्य विशेषणस्य परनिपातोऽभिधानात् कर्त्तुं शक्यते। प्राकृते तु पूर्वनियम एव। तस्मात पल्लवं बलति धारयतीति "ढात् णण्" इति णण्। प्राकृते छविशब्दे वकारलोपो न भवति, तत्र प्रायोग्रहणात्। 'दाड़िमेऽत्र दालिममिति क्वचित्' पाठः. संस्कृते डलयो रलयोरैक्यमिति धरः। स्वमते मनीषादित्वात् तादृप्यं प्राकृते डो ल इति लत्वं क्वचिन्न भवति, तत्र प्रायोग्रहणात्। हेमचन्द्र ण तु टवर्गस्य वा ल इत्युक्ता दाड़िमं दालिममित्युदाहृतम् ॥ ३४

অনুবাদ। ঐ পর্ব্বতে উন্নতবৃক্ষচ্ছায়াসম্ভূত রুক্ষে কোমল হরিদ্বর্ণ মনোহর ও চঞ্চলপল্লব শোভা পাইতেছিল। হরিণগণের ভয়জনক দাবাগ্নি তুল্য কান্তি দোদুল্যমান পুষ্পিত ডালিমকুঞ্জও শোভিত ছিল। ৩৪

कलहरिकण्ठविरावं
सलिलमहाबन्धसङ्कुलमहासालम्।

चलकिसलयसम्बद्धं
मणिजालं सलिलकणमयं विवहन्तम् ॥ ३५

अन्वयः। कलहरिकण्ठविरावम्, सलिलमहाबन्धसङ्कुलमहासालम्, चलकिसलय सम्बद्धम्, सलिलकणमयम्, मणिजालं विवहन्तम् ॥ ३५

मल्लिनाथः। कलेति। कला मधुरा हरिकण्ठविरावाः सिंहकण्ठनादा यत्र तं, सलिलानां महता बन्धेन सेतुना सङ्कुलाः संश्लिष्टा महासाला महावृक्षा यत्र तं, चलकिसलयैः सम्बद्धं सङ्गतं सलिलकणमयं जलबिन्दुरूपं मणिजालं विवहन्तं बिभ्राणम् । प्राकृतेऽप्येवम् ॥ ३५

भरतः। कलहरीत्यादि। पुनः कीदृशं सुवेलं?—कलोऽत्यन्तमधुरो हरेः सिंहस्य कण्ठविरावो यत्र, सलिलमहाबन्धेन सेतुना सङ्कुलाः परिव्याप्ता महान्तः सालवृक्षा यत्र, चपलैः किसलयैः पल्लवैः सयुक्तं मणिजालं विवहन्तं विशेषेण धारयन्तम् । मणिजालं कीदृशं?—सलिलकणान् मिनोति प्रतिबध्नात्वात् प्रक्षिपतीति पचादित्वादच्, सलिलकणाः प्रसृता यस्मिन् वा, अभिधानात् प्रसृतशब्दलोपः, सलिलसालकिसलयशब्दा दन्त्यान्विताः ॥ ३५

অনুবাদ। মনোহর সিংহকণ্ঠরবে ঐ পর্ব্বত মুখরিত থাকিত, প্রকাণ্ডসেতু সংশ্লিষ্ট বড় বড় সালবৃক্ষ বিরাজ করিতেছিল, এবং বায়ুচালিত পল্লবোপরি জলবিন্দু নিপতিত হওয়ায় বোধ হইতেছিল যেন পর্ব্বত মণিহার ধারণ করিয়াছে। ৩৫

তুঙ্গ—

तुङ्गमणिकिरणजालं
गिरिजलसङ्घट्टबद्धगम्भीररवम् ।
चारुगुहाविवरसभं
सुरपुरसममम् अमरचारणसुसंरावम् ॥ ३६

अन्वयः। तुङ्गमणिकिरणजालं, गिरिजलसङ्घट्टबद्धगम्भीररवम्, चारुगुहाविवरसभम्, अमरचारणसुसंरावम्, सुरपुरसमम् ॥ ३६

मल्लिनाथः। तुङ्गेति। तुङ्गानि मणिकिरणजालानि यत्र तम्। गिरिजलानां निर्झराणां सङ्घट्टेन आघातेन बद्धो गम्भीररवो यत्र तम्। चारूणि गुहाविवराण्येव सभाः सदांसि यत्र तम्। अमराणां चारणानां च शोभनः संरावो यत्र तम्। अत एवामरपुरसमम् ॥ ३६

भरत.। तुङ्गेत्यादि। पुनः कीदृशं?—तुङ्गं मणिकिरणजालं यत्र, गिरिजलानां मज्झेन मिश्रीभवनेन बहुः जनितः गम्भीरस्वरो यत्र, यात्र गुहाविवरमिव सभागृहं यत्र, अमरचारणानां गन्धर्वाणां शोभनः सरावो यत्र, अत एव अमरपुरस्य समानमिति॥ ३६

অনুবাদ সেখানে অনেক মণিময় শৃঙ্গের কিরণ উচ্চে উঠিতেছিল, ঝরণাজলের আঘাতে গম্ভীর ধ্বনি উত্থিত হইতেছিল। তাহার সুন্দর গুহা মধ্যে গন্ধর্বগণের সভা বসিত এবং তাহারা সেইখানে বসিয়া সুমধুরস্বরে গান করিত বলিয়া দেবনগরী (স্বর্গে)র সমান ছিল।৩৬

विमलमहामणिघट्टं
सिन्दूरकलङ्कपिञ्जरमहाभित्तिम्।
वीरहरिदन्तिसङ्गम-
· भयरुद्धविभावरीविहारसमीहम्॥ ३७

ललितान्वयीऽयं श्लोकः॥ ३७

मल्लिनाथः। विमलेति। विमला महामणिघट्टा महावज्रभित्तयो यत्र तम। सिन्दूरस्य कलङ्केनाङ्केन पिञ्जरा महाभित्तयो यत्र तम्। हरयो दन्तिनश्च हरिदन्ति। "येषां च विरोधः शाश्वतिकः" इति द्वन्द्वैकवद्भावः। वीरस्य तस्य सङ्गमाद्भयेन रुद्धा त्यक्ता विभावरीविहारसमीहा रात्रिविहाराकाङ्क्षा यत्र तम्॥ ३७

भरतः। विमलेत्यादि। पुनः कीदृशं सुवेलं?—विमला महामणीनां टङ्काः छेदा यत्र, अत एव सिन्दूरस्य कलङ्केन लाञ्छनेन पिञ्जरा महाभित्तयो यत्र, वीराणां, सिंहानां दन्तिनाञ्च यः सङ्गमो मिथः संसर्गः तस्मात् भयेन रुद्धा निरस्ता विभावर्यां रात्रौ विहारसमीहा विहरणेच्छा यत्र, विभावर्याः पुंश्चल्या विहारसमीहा तत्रेति वा। "विभावरी हरिद्रायां कुट्टिन्यां चन्द्रयोषिती"ति विश्वः। प्राकृते भकारस्य हकारो न भवति तत्र प्रायोग्रहणात्॥३७

অনুবাদ। সেখানে পরিষ্কার এবং উৎকৃষ্ট মণিখণ্ড প্রচুর ছিল, সিন্দূররেখায় তাহার ভিত্তিসকল রঞ্জিত (পিঙ্গল) ছিল। সেখানে মহাবল সিংহ ও হস্তিগণের পরস্পর সংসর্গ ভয়ে রজনীতে বিহারাকাঙ্ক্ষা রুদ্ধ হইয়াছিল। ৩৭

समहाफणिभीमबिलं
भूरिविहङ्गतुमुलारुवोरविरावम्।
वारणवराहहरिवर-
गोगणसारङ्गसङ्कुलमहासालम् *॥ ३८

* नायं श्लोकी मल्लिनाथ सम्मतः।

क्रमान्वयोऽयम्॥ ३८

भरत:। समहाफणीत्यादि। पुन: कीदृशं सुवेलं ?—महाफणिसहितानि अत एव भीमानि बिलानि विवराणि यत्र, भूरीणां बहूनां विहङ्गानां तुमुलोऽनेकरूपो व्याकुलो वा उरुर्महान् घोरो रौद्रो विरावो यत्र, हस्तिभि: शूकरै: सिंहवरै: गोगणै: हरिणैश्च सङ्कुला: स्कन्धकण्डूयनार्थं व्याप्ता महान्त: सालद्रुमा यत्र। "नाम्न्यन्ते तिक् च" इति सर्वत्र प्रत्यय:। सारङ्गो हरिणादि:॥ ३८

অনুবাদ। বড় বড় সর্প থাকায় তাহার গুহাগুলি ভীষণ হইয়াছিল, বিহঙ্গমকুলের নানা-প্রকার ঘোর গিরিরবে ব্যাপ্ত হইত। গজ-বরাহ-সিংহ-গো ও সারঙ্গগণ স্কন্ধঘর্ষণে বিশাল সালবৃক্ষগুলিকে ক্ষত করিয়াছিল। ৩৮

चलकिसलयसविलासं
चारुमहीकमलरेणुपिञ्जरवसुधम्।
सकुसुमकेसरबाणं
लवङ्गतरुतरुणवरीवल्लरहासम्॥ ३९

अन्वय:। अयमपि क्रमान्वय:। ३९

मल्लिनाथ:। चलेति। चलै: किसलयै: सविलासं विलासवन्तं चारुभिर्महीकमलानां स्थलाब्जानां रेणुभि: पिञ्जरा वसुधा यत्र तं, सह कुसुमै: केसरबाणैर्यस्तं लवङ्गतरूणां तरुणवल्लर्यो बालमञ्जर्यस्तासां वरा हासा विकास एव हासो हास्यं यस्य तम्॥ ३९

भरत:। चलेत्यादि। पुन: कीदृशं सुवेलं ?—चञ्चलै: किसलयै: हस्तैरिव सविलासं प्रारब्धनृत्यमिव, चारुमहीकमलानां शोभनस्थलपद्मानां रेणुभि: पिञ्जरा वसुधा यत्र, सकुसुमा: केसरा: पुन्नागा बाणा झिण्ट्यो यत्र, लवङ्गतरो: तरुण्यो वल्लर्यो मञ्जर्यो वर: श्रेष्ठो हासो विकासो यत्र। एतेन लवङ्गतरीणां कर्तृत्वं मञ्जर्याश्च नायिकात्वं व्यक्तम्॥ ३९

অনুবাদ। সুবেল পর্ব্বত সুন্দর স্থলপদ্মের পরাগে ভূতল রঞ্জিত করিয়া যেন চঞ্চল কিসলয় হস্তসঞ্চালনে নৃত্য করিতেছিল, এবং তাহাতে কুসুমিত নাগকেসর এবং নীলঝিণ্টি অপর-দিকে লবঙ্গতরুর ভাল ভাল নবমঞ্জরী বিকসিত থাকিয়া হাস্যক্রিয়া সম্পাদিত হইতেছিল। ৩৯

अमलमणिहेमटङ्कं
तुङ्गमहाभित्तिरत्नरुरुपङ्कगमम्।
चमराकृष्टपरिसरं
मेरुमिवाविरलसरसमन्दारतरुम्॥ ४०

अन्वयः। अमल—टङ्क, तुङ्ग—गमम् अमराढ़परिसरम्, अविरल—तरम मेरुमिव॥ ४०

मल्लिनाथः। अमलेति। अमलानां मणीनां हेम्नां च टङ्का-स्तटभित्तयो यत्र तम्। 'तुङ्गाभिर्महाभिर्भित्तिभिर्महातटैर्महतां रुरूणां मृगाणां पङ्गमः पङ्गप्रसिद्धैर्भ तम्। वङ्कगम इति पाठे वक्रगमन-मित्यर्थः। अमरैराढ़परिसरम्। अविरलसरसमन्दारतरुम्। अत एव मेरुमिव स्थितम्॥ ४०

भरतः। अमलमणीत्यादि। पुनः कीदृशं सुवेलम्?—अमलानां निर्मलानां मणीनां हेम्नाञ्च टङ्काः छेदा यत्र, पूर्वं मणिटङ्कमात्मुक्तं सम्प्रत्युभयटङ्क इति भेदः। किंवा अमला-भयी यमीति विग्रहः, तुङ्गा उच्चा महती विस्तीर्णा या भित्तिः तया रुरूणां रुरूणां मृग-विशेषाणां वङ्के गमी गमनं यत्र। वङ्कगममिति पाठे—वङ्कः कुटिलो गमो यत्र, अकिञ्चित् कौटिल्ये इत्यस्य रूपम्। अमरैः आरूढः परिसरः पर्यन्तभूर्यस्य, अविरला घनाः सरसा मन्दारतरवो देवतरवो यत्र, अत एव मेरुमिव॥ ४०

अनुवाद। ঐ পর্ব্বতে নির্ম্মল মণি ও স্বর্ণের অনেক খণ্ড ছিল, উচ্চ বিশালভিত্তিতে রুরু মৃগের কর্দ্দমে যাইবার পথ রুদ্ধ ছিল, উহার সর্ব্বত্র দেবগণের অধিষ্ঠান ছিল এবং ঘনসন্নিবিষ্ট মন্দারতরু থাকায় সুমেরুর তুল্য হইয়াছিল। ৪০

फलभरमन्थरतरुवर-
मविदूरविरूढहारिकुसुमापीडम्।
हरिणकलङ्कमणिसम्भव-
बहुवारिभरसुगम्भीरगुहम्॥ ४१

कृतान्वयः श्लोकः॥ ४१

मल्लिनाथः। फलेति। फलभरैर्मन्थरास्तरुवरा यस्य तम्। अविदूरविरूढा हस्तापचेया हारिणः कुसुमापीडा यत्र तम्। हरिणकलङ्कमहामणिसम्भवैश्चन्द्रकान्तसम्भूतैर्बहुवारिभिः सुभराः सम्पूर्णा गम्भीरगुहा यत्र तम्॥ ४१

भरतः। फलभरेत्यादि। पुनः कीदृशं सुवेलं?—फलभरेण मन्थरा ईषन्नताः तरुवरा यत्र, अविदूरे समीपे विरूढा उत्पन्ना हारिणो मनोहराः कुसुमापीडाः पुष्पस्तवका यत्र, हरिणकलङ्कमहामणेः चन्द्रकान्तात् सम्भवो येषां तादृशैः बहुभिः वारिभिः सुभराः परि-पूर्णा गम्भीरगुहा यत्र, मणिबाहुल्येन वारिबाहुल्यं तेन गम्भीरस्थानपूरणम्। प्राकृते आपीडशब्दे पकारस्य वकारादेश ईकारस्य दीर्घो भवति। यथा आवेड इति, अयमपि बहुलाधिकारात् न भवति॥ ४१

অনুবাদ। তাহার মহাতরুগুলি ফলভারে ঈষৎ নত ছিল, এবং তাহার মনোহর কুসুমগুচ্ছ সব উচ্চে ছিল, তাহার সুগভীর গুহাগুলি চন্দ্রকান্তমণিসম্ভূতজলে পূর্ণ ছিল। ৪১

जलकाम‍दन्तिसङ्कुल-
सहेमरसचारुधवलकन्दरदेशम्।
अङ्कुररोहसमच्छवि-
रुरुगणसंलीढ़तरलहरिमणिकिरणम्॥ ४२

अयमपि कृतान्वयः॥ ४२

मल्लिनाथः। जलेति। जलकामैर्जलार्थिभिर्दन्तिभिः संकुला जलभ्रान्त्या सङ्कीर्णाः सहेमरसा हेमद्रवलिप्ताश्चारवो धवलाः कन्दरदेशाः कन्दरस्थलानि यत्र तम्। हिरण्मयकन्दरच्छायासु तोयभ्रान्त्या सञ्चरमाणमातङ्गमित्यर्थः। अत एव भ्रान्तिमदलङ्कारः। रोहन्तीति रोहाः। पचाद्यच्। लघूपधगुणः। अङ्कुरा एव रोहा नवप्ररूढाङ्कुरा बालतृणानीत्यर्थः। तैः समच्छवयस्तुल्यकान्तयः अत एव रुरुगणैर्मृगव्रजैः संलीढाः शष्पभ्रान्त्या लिह्यमाना हरिमणीनां मरकतमणीनां किरणा यत्र तम्। अत एवात्रापि भ्रान्तिमदलङ्कारः॥ ४२

भरतः। जलकामेत्यादि। पुनः कीदृशं सुवेलं?—जलं कामयन्ते इति जलकामा दन्तिनः तैः सङ्कुलाः व्याप्ताः सहेमरसाः सुवर्णपारदसहिताः चारवः शोभना धवलाः शुक्लाः कन्दरदेशा गुहासन्निवेशा यत्र, अङ्कुरात् रोहः सम्भवो यस्य शष्पस्य अङ्कुरस्य प्ररोहो वा तेन समच्छवयस्तुल्यवर्णाः अत एव भ्रमात् रुरूणां मृगविशेषाणां गणैः संलीढा जिह्वया स्पृष्टाः तरला चञ्चला हरिमणीनाम् इन्द्रनीलमणीनां किरणा यत्र। हरिशब्दो हरितपर्य्यायः॥४२

অনুবাদ। ঐ পর্ব্বতের কন্দর স্বর্ণ এবং পারদ লিপ্ত থাকায়, সুন্দর ও শুক্ল রং হইয়াছিল, তদ্দর্শনে জলপিপাসু হস্তিগণ জলভ্রমে ঘুরিয়া বেড়াইত, এদিকে বালতৃণকান্তি মরকতমণির কিরণকে তৃণ মনে করিয়া রুরুমৃগগণ লেহন করিতেছিল। ৪২

गाढ़समीरणसुसहं
भीमरवोत्तुङ्गवारिधरसंघट्टम्।
धवलजलवाहमाला-
सम्बन्धावद्धहिमधराधरलीलम्॥ ४३

मल्लिनाथः। गाढ़ेति। गाढ़समीरणेन स्थिरवायुना निर्भि-

तेन सुसहं सुष्ठु सह्यं सेव्यमित्यर्थः। सहेः खल्प्रत्ययः। भीमरवा-स्तुङ्गाश्च ये वारिधरास्तेषां सङ्घट्टो यस्य तम्। धवलजलवाहमाला-सम्बन्धेनावाप्ता प्राप्ता हिमधराधरस्य हिमाद्रेर्लीलेव लीला यस्य तम्। इति निदर्शनालङ्कारः ॥ ४३

भरतः। गाढमित्यादि। पुनः कीदृशं सुवेलं?—गाढो महान् यः समीरणो वायुः तस्य सुसहं पचादित्वादच्, घर्मापहरत्वात्। भीमरवा उत्तुङ्गाश्च ये वारिधरा मेघाः तेषां सङ्घट्टः संश्लेषो यत्र। भीमरवेति उत्तुङ्गेति सङ्घट्टविशेषणं वा। वरोत्तुङ्गेत्यत्र यद्यपि प्राकृते लोपोऽव इत्यनेन अचि परे अचो लोपे वरुत्तुङ्गेति स्यात्, तथापि बहुलाधिकारान्नास्ति लोपः। धवलानां मेघानां मालया यत्सम्बन्धं भावे क्तः। सम्बन्धेति क्वचित् पाठः। तेन कारणभूतेनावाप्ता कृता हिमधराधरस्य हिमालयपर्वतस्य लीला विभ्रमो येन, तं सुवेलमारूढं रामबलमिति। सम्बन्धः ॥ ४३

अनुवाद। सुবেলের বায়ু স্থির, এইজন্য সুখসেব্য, তাহাতে ভীষণগর্জ্জন প্রকাণ্ড মেঘ আসিয়া আঘাত করে। সুতরাং ধবল মেঘমালার সংশ্লেষে হিমাচলের লীলা অনুকরণ করিতেছিল। ৪৩

लवणजलबन्धसरसं
तरुफलसम्पत्तिबद्धदेहायासम्।
लङ्कातोरणवारण-
मालोलं[रूढ़]समरलालसं रामबलम् ॥ ४४

अन्वयः। लवणजलबन्धसरसं तरुफलसम्पत्तिबद्धदेहायासं समरलालसं रामबलं लङ्कातोरणवारणम् आलोलम् [आरूढम्] ॥ ४४

मल्लिनाथः। लवणेति। लवणजलबन्धाद्धेतोः सरसं सरागं सोत्साहमित्यर्थः। तरुफलसम्पत्त्या बद्धो निवर्त्तितो देहायासः क्षुद्बाधा यस्य तत्। लङ्कातोरणानां वारणं निवारकं निरोधक-मालोलं समन्तात्परिभ्रमद् रामबलं रामसैन्यं समरोत्सुकं संवृत्तमिति शेषः। उत्तरश्लोकाद्वा आकृष्टव्यम् ॥ ४४

भरतः। लवणेत्यादि। रामबलम् आरूढं सुवेलमिति पूर्वोक्तमिहापि योज्यम्। विशेषा-भिधानाय पुनरुक्तस्यादोषत्वात्। आरूढमित्यत्रालोलमिति पाठे—रामबलं समरलालसं जातमित्येवं व्याख्यम्। कीदृशं रामबलं?—लवणजलबन्धात्सरसं सहर्षं, तरुफलसम्पत्त्या बद्धोऽपनीतो देहायासो बुभुक्षापीड़ा यस्य। तरुफलसम्पत्तिबद्धदेहाभोगमिति क्वचित् पाठः, तदा भोगशब्दस्य प्राकृते गकारलोपो न भवति, प्रायोग्रहणात्। लङ्कायास्तोरणस्य बहि-र्द्वारस्य वारणं निषेधकं, किं वा सुवेलमारूढं लङ्कातोरणं वारणतुल्यं बहिर्द्वारस्थितहस्तिनं वा आरूढमित्यन्वयः। समरे लालसा महतीच्छा यस्य ॥ ४४

অনুবাদ। রামের সৈন্য সকল লবণসমুদ্র-বন্ধনহেতু উৎসাহান্বিত, তরুফলসম্পত্তি দ্বারা ক্ষুধানিবৃত্তি করিয়া লঙ্কার তোরণ অবরোধ করিল এবং যুদ্ধ করিবার জন্য সমুৎসুক হইল। ৪৪

गु[उ]रुपणववेणुगुञ्जा-
भेरीपेलीरुझल्लरीभीमरवम् ।
ढक्काघण्टातुमुलं
संवृत्तं[सन्नद्धं] परबलं रणायाससहम् ॥ ४५

अन्वयः। गुरुपणववेणुगुञ्जाभेरीपेलीरुझल्लरीभीमरवं ढक्काघण्टातुमुलं परबलं रणायाससहं संवृत्तम् ॥ ४५

मल्लिनाथः। गुर्विति। अथ गुरुभिः पणवादिवाद्यघोषैरवो झल्लरीणां भीमरवा यत्र तत्। ढक्काघण्टादिभिस्तुमुलं तद्घोषभीषण-मित्यर्थः। परबलं रावणसेना सैन्यमपि रणायाससहं रणकर्मोत्सुकं संवृत्तम्। रणप्रवृत्तं रामबलं दृष्ट्वा रावणबलमपि तथा प्रवृत्त-मित्यर्थः ॥ ४५

भरतः। उरुपणवेत्यादि। परस्य रावणस्य बलं सन्नद्धं युद्धार्थोद्यतमित्यर्थः। कीदृशम्?—उरूणां पणवादीनाम् उरुझल्लर्य्याश्च भीमो रवो यत्र। 'समौ पणवकर्दलौ' "गुञ्जापि पटहे प्रोक्ता काकवल्ल्यां कलध्वनौ" इति विश्वः। ढक्कानां घण्टानाञ्च तुमुल संमूर्च्छितः शब्दो यत्र, रणायाससहं संग्रामक्लेशसहम् ॥ ४५

অনুবাদ। রামসৈন্যদলকে যুদ্ধোদ্যত দেখিয়া শত্রুসৈন্যগণও যুদ্ধে প্রবৃত্ত হইবার ইচ্ছায় পণব, (যুদ্ধঢক্কা) বেণু, গুঞ্জা (ঢাক) ভেরী (বড়ঢাক) পেল এবং ঝল্লরী প্রভৃতি (ঝরঝর বাদ্য) বাদ্যে যন্ত্রের ভীষণ ধ্বনি করিতে লাগিল। সেই বাদ্যধ্বনিত শত্রুসৈন্য অতি ভীষণ হইয়া উঠিল। ৪৫

आरूढबाणघोरं विमलायसजालगूढपीवरदेहम् ।
चञ्चलतुरङ्गवारणसंघट्टाबद्धचारुपरिणाहगुणम् ॥ ४६

अन्वयः। आरूढबाणघोरं विमलायसजालगूढपीवरदेहं चञ्चलतुरङ्गवारणसंघट्टाबद्धचारुपरिणाहगुणम् ॥ ४६

मल्लिनाथः। परबलमेव स्कन्धकद्वयेन विशिनष्टि—आरूढेत्यादि। आरूढैरारोपितैर्बाणैर्घोरं भीमं विमलैरायसजालैर्लोहकञ्चुकसमूहै-र्गूढाः संवृत्ताः पीवरा देहा यस्य तत् वर्मितसर्वाङ्गमित्यर्थः। चञ्चलं प्रचलं यत्तुरङ्गवारणम्। सेनाङ्गत्वाद्द्वन्द्वैकवद्भावः। तस्य सङ्घट्टेना-

यस्य तत् तथोक्तम्। प्ररिणाहो विस्तार एव गुणो येन तत्। गजाश्व-सम्बाधे मिथो विश्लिष्यदित्यर्थः॥ ४६

भरतः। आरूढेत्यादि। कीदृशं परवलम्?—आरूढम् अर्थात् धनूंषि वाणा यस्य तत्र तत् वीरं रौद्रञ्चेति विग्रहः; आरूढो वाणो यत्र, तत्र धनुषा वीरं वा। विमलेन अयोविकारेण वर्मणा कवचेन गूढं आच्छादितः स्थूलो देहो यस्य। वर्मेत्यत्र आत्मपदं पठित्वा विमलेनायसेन आवृतुल्येन सन्नाहेनेत्यर्थो प्राहुः। अश्वानां तुरङ्गाणां हस्तिनाञ्च सङ्घः संघे परलेनावहश्चाबपरिणाहगुणो यत्र॥ ४६

अनुवाद। শক্রসৈন্য ধনুকে বাণারোপ করিল, এবং লৌহবর্ম্মে প্রকাণ্ড দেহ সকল আবৃত করিয়া দুর্দ্ধর্ষ হইয়া উঠিল, তাহাদের হস্তী অশ্বাদির ঘাতপ্রতিঘাতে সপক্ষের সুন্দর বিশালতা প্রকাশ পাইল। ৪৬

असितोमरकुन्तमहा-
पट्टिशभल्लवरबाणगुरुपुरुमुसलम्।
वीररसालंकारं
गुरुसंराव[चञ्च]हयदन्तिसमहीकम्पम्॥ ४७

अन्वयः। असितोमरकुन्तमहापट्टिशभल्लवरबाणगुरुपुरुमुसलं वीररसालङ्कारं गुरु-संरावहयदन्तिसमहीकम्पम्॥ ४७

मल्लिनाथः। असीति। असयादिभिर्गुरूणि दुष्प्रवेशानि पुरूणि प्रभूतानि मुसलानि यस्मिंस्तत्। वीररस एवालङ्कारो यस्य तत्। वीररसभूषणमित्यर्थः। गुरुसंरावेण महाघोषेण हयदन्तिना समहीकम्पं गजाश्वक्रमणेन कृतभूकम्पमित्यर्थः॥ ४७

भरतः। असीत्यादि। पुनः कीदृशं परवलम्?—असिभिः खड्गैः, तोमरैः शक्तिभिः, कुन्तैः प्रासैः, महापट्टिशैः लौहदण्डविशेषैः, भल्लैः श्रेष्ठबाणैश्च गुरु अनभिभवनीयं पुरु महत् मुसलं यत्र, वीररस एव अलङ्कारो यस्य, गुरुः सञ्चारो येषां तादृशैः हयैः दन्तिभिश्च हस्तिभिः महीकम्पसहितम्। "तोमरोऽस्त्री लौहदण्डः शक्तिः कासूश्च सर्वला। पट्टिशो लौहदण्डो यस्तीक्ष्णधारः क्षुरोपमः॥" मुसलशब्दो दन्त्यमध्योऽपि तालव्यविधो दुर्घटीकायां प्रत्युदाहृत-त्वात्। मुष स्तेय इत्यस्य वृषादित्वात् मुसल इति वर्णदेशनायामुक्तत्वाच्च। अत उज्ज्वल-त्वात् दन्त्यमध्यः॥ ४७

अनुवाद। তাহাদের অস্ত্র;—অসি, তোমার, কুন্ত, মহাপট্টিশ, ভল্ল, শরবাণ, প্রভৃত মুসল, তাহাদের ভূষণ;—বীররস। তাহাদের অশ্বহস্তীর মহারবে পৃথিবী কঁপিতে লাগিল। ৪৭

ते रामेण सरभसं
प्रतितरला हरिगणा रणसमारम्भे।

रुद्धा लङ्कापरिसर-
तरुवन[भूधर]परिभङ्गलालसा धीररवम् ॥४८

अन्वय। रणसमारम्भे परितरलाः (सन्तः) लङ्कापरिसरतरुवनपरिभङ्गलालसाः ते हरिगणाः रामेण सरभसं धीररवं रुद्धाः ॥ ४८

मल्लिनाथः। तत इति। रणसमारम्भे युद्धकर्मणि परितरलाः परिचलिताः सन्तो लङ्कापरिसरेषु तरुवनानां परिभङ्गे परिभञ्जने लालसा लोलास्ते हरिगणाः कपिसङ्घाः 'लोलुपो लोलुभो लोलो लम्पटो लालसोऽपि च' इति यादवः। रामेण सरभसं सत्वरं धीररवमुच्चैःस्वरं यथा तथा रुद्धा निवारिताः रक्षोभयात् पलाय्य कापेय्या वनभङ्गप्रवृत्तास्ते मा पलायिषतेति निवर्त्तिता इत्यर्थः ॥ ४८

भरतः। ते रामेणेत्यादि। ते हरिगणा वानरसमूहाः रामेण रुद्धाः प्रतिषिद्धाः। कीदृशाः?—सरभसं सकौतुकं यथा स्यात् तथा रणसमारम्भे सति तन्निमित्तं वा परितरलाः चञ्चलाः, लङ्कायाः परिसरे समीपे ये पर्वतास्तेषां परिभङ्गे लालसा महतीच्छा येषां तादृशाः। अत एव रुद्धाः धीरो रवो यत्रेति प्रतिषेधक्रियाविशेषणम् ॥ ४८

অনুবাদ। যুদ্ধারম্ভে বানরগণ চঞ্চল হইয়া লঙ্কার প্রান্তস্থিত বনভঙ্গে ইচ্ছুক হইলে তৎক্ষণাৎ রামচন্দ্র উচ্চৈঃস্বরে (পলায়ন করিতে) নিষেধ করিলেন। ৪৮

जलतीरतुङ्गतरुवर-
कन्दरगिरिभित्तिकुञ्जविवरावासम्।
भीमं तरुहरिणबलं
सुसमिद्धहिमारिकिरणमालालोलम् ॥ ४९

अन्वयः। जलतीरतुङ्गतरुवरकन्दरगिरिभित्तिकुञ्जविवरावासं भीमं तरुहरिणबलं सुसमिद्धहिमारिकिरणमालालोलम् ॥ ४९

मल्लिनाथः। अथ युग्मेनाह—जलेति। जलतीरेषु तुङ्गतरुषु वरकन्दरेषु गिरिभित्तिषु कुञ्जविवरेषु चावासो यस्य यत्। तत्र तत्र लीनमित्यर्थः। भीमं भयङ्करं तरुहरिणबलं कपिसैन्यं कर्तृ, रामप्रोत्साहनात् सुसमिद्धस्य हिमारेरग्नेः किरणा इव किरणास्तेषां मालाभिर्लोलं आक्रम्यमाणं सत् ॥ ४९

भरतः। जलतीरेत्यादि। तरुहरिणबलं कपिसैन्यं रामेण निषिद्धं सत् महादिषु समारुरोहेति वक्ष्यमाणेन सम्बन्धः। कीदृशं?—जलतीरेषु तुङ्गतरुवरेषु कन्दरेषु गिरि-

भित्तिषु कुञ्जविवरेषु च आवासो गृहं, भीमं भयानकं, मुद्गरसिंहस्य हिमांशोः सूर्यस्य वा या किरणमाला तद्वत् शीर्णं यद्बलम् ॥ ४९

अनुवाद। रामसैन्यगण ভয়ে সমুদ্রতীরে, উচ্চ বৃক্ষে গিরিগুহায়, গিরিভিত্তিতে এবং কুঞ্জমধ্যে পলায়ন করিতে লাগিল, পরে রামের উৎসাহবাক্যে প্রজ্বলিত অগ্নিকিরণ-মালার ন্যায় আচ্ছন্যমান ( উৎসাহিত ) হইল। ৪৯

रावणबलमवगन्तुं
जलभरगुरुसलिलवाहगणसमच्छायम् ।
अट्टतरुमञ्चमन्दिर-
तोरणमालासभासु समारूढम् ॥ ५०

इति भट्टिकाव्ये प्रसन्नकाण्डे भाषासमावेशो नाम चतुर्थः
काव्यस्य त्रयोदशः सर्गः ॥ १३

अन्वयः। जलभरगुरुसलिलवाहगणसमच्छायं रावणबलम् अवगन्तुम् अट्टतरुमञ्च-मन्दिरतोरणमालासभासु समारूढम् ॥ ५०

मल्लिनाथः। रावणेति। जलभरगुरवो ये सलिलवाहा मेघा-स्तेषां गणेन समच्छायं सवर्णं मेघश्यामं रावणस्य बलं सैन्यमवगन्तु-मिदमीदृगिति ज्ञातुमट्टादिषु समारूढमट्टादिकमारुह्य रक्षोबल-मद्राक्षीदित्यर्थः। एतानि द्वादशसङ्कीर्णानि। प्रसन्नकाण्डस्य समाप्तः ॥ ५०

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमन्महोपाध्याय-
कोलाचलमल्लिनाथसूरिविरचिते भट्टिकाव्यव्याख्याने
सर्वपथीनाख्याने भाषासमो नाम
त्रयोदशोऽध्यायः ॥ १३

भरतः। रावणबलमित्यादि। रावणस्य बलं सैन्यं कीदृक् इत्यवगन्तुं ज्ञातुं तरु-रुरिपुबलम् अट्टादिषु समारूढम्। अट्टम् उपरितनं गृहम्। रावणबलम् कपिबलं वा कीदृशं ?—जलभरेण गुरुः यः सलिलवाहगणो मेघसमूहस्तेन समच्छायं तुल्यकान्ति। एतानि द्वाविंशतिः सङ्कीर्णानि ॥ ५०

इति सर्वपथ…श्रीभरतसेनविरचितायां मुग्धबोधिन्यां भट्टिटीकायां
सेतुबन्धो नाम त्रयोदशः सर्गः ॥ १३

অনুবাদ। রামসৈন্যগণ, জলপূর্ণ গাঢ় মেঘমালাবৎ শ্যামবর্ণ রাবণসৈন্যের গুরুত্ব জানি-বার জন্য, প্রাসাদোপরিগৃহ, বৃক্ষ, মঞ্চ, মন্দির তোরণমালা ও সভাগৃহ প্রভৃতির উপর আরোহণ করিল। ৫০

## अथ चतुर्दशः सर्गः ।

ततो दशास्यः स्मरविह्वलात्मा
चारप्रकाशीकृतशत्रुशक्तिः ।
विमोह्य मायामयराममूर्ध्ना
सीतामनीकं प्रजिघाय योद्धुम् ॥ १

अन्वयः । ततः चारप्रकाशीकृतशत्रुशक्तिः दशास्यः स्मरविह्वलात्मा मायामयराममूर्ध्ना सीतां विमोह्य योद्धुम् अनीकं प्रजिघाय ॥ १

मल्लिनाथः । इह सौशब्द्यं नाम काव्यशोभाकरो गुणः । स च 'सुपां तिङां च व्युत्पत्तिः सौशब्द्यं परिकीर्त्तितम्' इति द्विविध उक्तः । तत्र सुबन्ता व्युत्पादिताः । अथेदानीं तिङां लादेशत्वात् तत्रापि लेटश्छान्दसत्वादन्यान् नव लडादिविलासान् नवभिरुत्तरैः सर्गैर्व्युत्पादयिष्यन्नस्मिन् सर्गे लिड्विलासमुत्पादयति—तत इत्यादि । ततः स्वपरबलाभियोगानन्तरं चारैः प्रणिधिभिः प्रकाशीकृतशत्रुशक्तिरज्ञय्य इति व्याख्यातरामप्रभावो दशास्यस्तथापि स्मरविह्वलात्मा सीतां मोक्तुमसहः सन्नित्यर्थः । मायामयेन मायाविनिर्मितेन राममूर्ध्ना सीतां विमोह्य रामस्येदं शिरश्छित्त्वा सीतांमति मोहयित्वेवं चात्मानमनाथा वरिष्यतीत्याशया भ्रामयित्वेत्यर्थः । तेनापि विफलः सन्निति शेषः । योद्धुमनीकं सैन्यम् । 'वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम्' इत्यमरः । प्रजिघाय प्रहितवान् न तु सीतामित्यर्थः । हिनोतेर्लिटि णलि द्वित्वाभ्यासादेशौ । "हेरचङि" इति कुत्वम् ॥ १

भरतः । स्याद्यन्तत्युत्पत्तौ यत् सौष्ठवं तदपि काव्यस्याङ्गमुक्तं, ततः प्रसन्नकाण्डादनन्तर त्याद्यन्तकाण्डमुच्यते । तवार्थस्मात् प्रथमं ठौ प्रदर्श्यते, पाणिनिमते त्यादन्तस्य तिङन्त इति संज्ञा ठोत्यस्य लिडिति संज्ञा । तत इत्यादि । अनन्तरं दशास्यो रावणः स्मरविह्वलात्मा कामविह्वलचित्तः मन् भर्त्तृनाशे सीतानुकूल्यं यास्यतीति मत्वा मायामयेन मायास्वरूपेण रामसम्बन्धिना मस्तकेन सीतां मोहयित्वा चारैः प्रकाशीकृता शत्रूणां रामादीनां

शक्तिः सामर्थ्यं येन तथाभूतः सन्, योद्धुं युद्धं कर्त्तुम् अनीकं सैन्यं प्रजिघाय प्राहिणोत्। हि गतौ वृद्धौ च। "अव्ययीभावश्च" इति भूतस्य भावे ठौ, "धुटि हस्वाज्जि" इति हित्वं; "अभ्यासखचस्य" इति खेरस्य जत्वं, "हेः खेरनङ्घिः" इति घि, "अविज्यन्ते श्रुक्तौ:" इति त्रिः, "यलावयवाश्राव:" इति आय ॥ १

अनुवाद। তাহার পর দশানন চরমুখে রামশক্তি অবগত হইয়াও কামবিকৃতচিত্তে মায়াকল্পিত রামমুণ্ড দর্শনে সীতাকে বিমোহিত করিয়া যুদ্ধার্থে সৈন্য প্রেরণ করিল। ১

# कम्बूनथ समादध्मुः कोणैर्भेर्यो निजघ्निरे ।
# वेणून् पुपूरिरे गुञ्जा जुगुञ्जुः करघट्टिताः ॥ २

अन्वयः। अथ कम्बून् समादध्मुः, कोणैः भेर्यः निजघ्निरे, वेणून् पुपूरिरे, गुञ्जाः करघट्टिताः जुगुञ्जुः ॥ २

मल्लिनाथः। युद्धमेव वर्णयति—कम्बूनित्यादि। अथानीकप्रेषणानन्तरं कम्बून् शङ्खान् समादध्मुरधमन् मुखमारुतपूरणेनाध्वनयन्नित्यर्थः। ध्मा शब्दे। भूतानद्यतने परोक्षे लिट्। झेरुसादेशः। "आतो लोप इटि च" इत्याकारलोपः। कोणैर्वादनदण्डैः। 'कोणो वीणादिवादनम्' इत्यमरः। भेर्यो निजघ्निरे निहताः। हन्तेः कर्मणि लिट्। "गमहन—" इत्यादिनोपधालोपः। वेणून् वंशान् पुपूरिरे मुखमारुतपूरणेनाध्वनयन्नित्यर्थः। पूरी आप्यायने इति धातोः कर्त्तरि लिट्। तङ्। गुञ्जा वाद्यविशेषाः। 'गुञ्जापि पटहे प्रोक्ता' इति विश्वः। करैर्घट्टिता वादिता जुगुञ्जुर्दध्वनुः। गुजि अव्यक्ते शब्दे ॥ २

भरतः। कम्बूनित्यादि। अथ प्रेषणादनन्तरं सैनिकाः कम्बून् शङ्खान् समादध्मुः शब्दायितवन्तः। ध्मा अग्निसंयुतौ ध्वनौ उस् हित्वं "अभ्यासखचस्य" इति खेः जत्वं "अथ दस्य खेः आगमो लोप्यः" इति खेर्मलोपः, "उसेचि" इति प्रकृतेराल्लोपः। कैश्चित् भेर्यो ढक्काः कोणैर्निजघ्निरे ताडिताः। हन्तेः कर्मणि ठौ। "हनगम्" इत्युङ्लोपः "खेर्हो- घोञ्जिणति च" इति प्रकृतेर्हस्य घत्वं, "हनीङ्" इति घ्नादेशः। कोणशब्देन वाद्यवादन- काष्ठदण्डादय उच्यन्ते। वेणून् वंशान् कैश्चित् मुखमारुतैः पुपूरिरे पूरितवन्तः। पूरी य ङ पूर्त्तौ। करैर्घट्टिता अभिहता गुञ्जा वाद्यभेदा जुगुञ्जुः शब्दं चक्रुः। गुञ्जि कूजने, इतूङ्नलोपोऽणाविति विधीयमानौ न लोपौ नेदितपूजार्थाञ्चेरित्यनेन प्रतिषिध्यते अत एवेदितो नुम लभ्यते ॥ २

অনুবাদ। যুদ্ধযাত্রী সৈন্যগণের কেহ কেহ শঙ্খধ্বনি করিল। কেহ কেহ বাদনদণ্ড দ্বারা বৃহৎ ভেরী বাজাইতেছিল; কেহ বা বংশী, কেহ কেহ করতাড়নে গুঞ্জা বাজাইতেছিল। ২

**वादयाञ्चक्रिरे ढक्काः पणवा दध्वनुर्हताः ।**
**काहलाः पूरयाञ्चक्रुः पूर्णा[र्णाः] पेराश्च सस्वनुः ॥३**

अन्वयः । ढक्काः वादयाञ्चक्रिरे, पणवाः हताः दध्वनुः, काहलाः पूरयाञ्चक्रुः, पेराः च पूर्णाः सस्वनुः ॥ ३

मल्लिनाथः । वादयामिति । ढक्का वादयाञ्चक्रिरे वादिताः । पणवा उपरि पाणिहननतया वाद्यविशेषास्ते हताः पाणिताड़िता दध्वनुः । काहलाः सुषिरवाद्यविशेषाः पूरयाञ्चक्रुः पूर्णाश्चक्रुर्मुखमारुतपूरणेनानादयन्नित्यर्थः । पेराः खरमुखाकारा सुषिरवाद्यविशेषास्तेऽपि पूर्णाः सस्वनुर्दध्वनुः ॥ ३

भरतः । वादयामित्यादि । केचित् ढक्काः वादितवन्तः, “वदीर्जिविजादि” इत्यादिना व्याम्नत्वादाम्, “भवन्ति चाम्” इति कृञोऽनुप्रयोगः । पणवा वाद्यभेदा हतास्ताड़िताः सन्तो दध्वनुः शब्दचक्रुः । काहला मुखमारुतैः पूरयाञ्चक्रुः । पुरादेः पूरयातौ रूपं, पूरोरू पूर्णौ पूरक् चेति चकारात् पूर्णौ । “हस्तत्रितयदीर्घा स्यात् धुस्तूरकुसुमोपमा । मध्य-ताम्रमयी मध्यसुषिरा काहला मताः ॥” इति वाद्यदर्पणे । पेराः खरमुखाकाराः मुख-मारुतैः पूर्णाः सन्तः सस्वनुः शब्दचक्रुः । स्वन मि शब्दे स्वनच चकारात् शब्दे नित्यात् फणादिः । “तृफल” इत्यादिना विभाषया घत एत्वं खिलोपश्च तदभावपक्षे रूपमिदम् ॥ ३

অনুবাদ। অপর কতকগুলি সৈন্য ঢক্কা বাজাইল, কেহ বা পণব ( ক্ষুদ্র ঢক্কা ) কেহ কাহল ( শিঙ্গা ) কেহ বা খরমুখাকৃতি পেরবত্র বাজাইতেছিল। ৩

**मृदङ्गाः धीरमास्वेनुर्हतैर्नेदे [स्वेने] च गोमुखैः ।**
**घण्टाः झिंझिंझिरे दीर्घं जक्वादे पटहैर्भृशम् ॥ ४**

अन्वयः । मृदङ्गाः धीरम् आस्वेनुः, हतैः गोमुखैः च नेदे, घण्टाः दीर्घं झिंझिंझिरे, पटहैः भृशं जक्वादे ॥ ४

मल्लिनाथः । मृदङ्गा इति । मृदङ्गा मर्दला धीरं गम्भीरमास्वेनुः सस्वनुः । “फणाञ्च सप्तानाम्” इति विकल्पादेत्वाभ्यासलोपौ । हतैस्ताड़ितैर्गोमुखैर्वाद्यविशेषैर्नेदे नदितम् । नदेर्भावे लिट् । घण्टा दीर्घं झिंझिंझिरे दध्वनुः । झिंजि अव्यक्ते शब्दे । कर्त्तरि लिट् । तङ् । पटहैर्भृशं जक्वादे क्वादितम् । क्वाद अव्यक्ते शब्दे । भावे लिट् ॥ ४

भरतः । मृदङ्गा इत्यादि । मृदङ्गा धीरं गम्भीरं यथा स्यात् तथा आस्वेनुः शब्द-

चक्रुः, "तृफल" इत्यादिना सूत्रेण एत्वं खिलोपश्च । "चर्मणा नद्धवदनो मध्ये चैव पृथुर्भवेत् । मृत्तिकानिर्मितश्चैव मृदङ्ग इति कीर्त्तितः ॥" इति भरतः । हस्तैः ताडितैः गोमुखैः स्वेनै शब्दितं, ठो । घण्टा दीर्घमुखैः झिझिझिरे, झिनि न किङ्क्‌ अस्फुटध्वनौ । पटहैः अस्पमत्यर्थं जङ्कादि शब्दितं, जादङ्क्‌ च स्वने भावे रूपम् ॥ ४

অনুবাদ। একদিকে মৃদঙ্গ করাহত গোমুখ যন্ত্র বাজিল। উচ্চৈ স্বরে ঘণ্টা, এবং পটহ বাজাইতে লাগিল। ৪

# हया जिहेषिरे हर्षाद्गम्भीरं जगजु[र्जु]र्गजाः ।
# सन्त्रस्ताः करभा रेमु[टु]श्चुक्रुवुः पत्ति[त्ति]पङ्क्तयः ॥ ५

अन्वयः । हया हर्षात् जिहेषिरे, गजाः गम्भीरं जगर्जुः, करभाः सन्त्रस्ताः रेमुः, पत्तिपङ्क्तयः चुक्रुवुः ॥ ५

मल्लिनाथः । हया इति । हया हर्षात् जिहेषिरे हेषितवन्तः । हेषृ शब्दे । गजा गम्भीरं जगर्जुः । गर्ज अव्यक्ते शब्दे । अत्र यतिभङ्गः सोढव्यः । करभाः क्रमेलकाः सन्त्रस्ता गजगर्जनाद्भीता रेमुरक्रन्दुः । पत्तिपङ्क्तयः पत्तिसङ्घाश्च सन्त्रस्ताश्चुक्रुवुः रुरुवुः । कु शब्दे । भौवादिकस्याप्युभयत्र ॥ ५

भरतः । हया इत्यादि । हया अश्वा हर्षात् जिहेषिरे शब्दं चक्रुः । हेषृ अर्थे इन्हेष च स्वने अश्वानामिति चकारात् हेषृ अपि अश्वानां स्वने । गजा गम्भीरं यथा स्यात् तथा जगर्जुः गर्जनं चक्रुः मार्यन्ति स्मेति वा । गज मदे गजि च स्वने इति चकारात् गजध्वने । करभा उष्ट्रा नानावाद्यश्रवणात् सन्त्रस्ताः सन्तः शब्दं चक्रुः रटे च वाचि, "तृफल" इत्यादिना अत एत्वं खिलोपश्च, पत्तिपङ्क्तयः पदातिसमूहाः चुक्रुवुः शब्दं चक्रुः, कुङ शब्दे कुञ चेति चकारात् शब्दे "किरौढोपम्" इति चपितृणः किरणात् अगुणत्वे "स्नुश्नोरनचि" इति उव् ॥ ५

অনুবাদ। বাদ্য শ্রবণে হর্ষান্বিত অশ্বগণ হ্রেষারব করিতে লাগিল, গজগণ গভীর গর্জ্জন করিতে লাগিল, হস্তিগর্জ্জন শ্রবণে ভীত হইয়া উষ্ট্রবর্গ কাঁদিতে লাগিল। পদাতিক গণও উদ্বিগ্ন হইয়া চীৎকার করিতে লাগিল। ৫

# कु[तु]रङ्गाः पुस्फुटुर्भीताः पुस्फुरुर्वृषभाः परम् ।
# नार्यश्चुक्षुभिरे मम्लुर्मुहुः शुशुचुः पतीन् ॥ ६

अन्वयः । कुरङ्गाः भीताः पुस्फुटुः, वृषभाः परं पुस्फुरुः, नार्यः चुक्षुभिरे, मम्लुः, मुहुः, पतीन् शुशुचुः ॥ ६

मल्लिनाथः । कुरङ्गा इति । कुरङ्गा मृगा भीताः पुस्फुटुर्भया-

भियो विश्लिष्टा इत्यर्थः । वृषभाः परमत्यर्थं पुस्फुरुः हृष्टा नेदुरित्यर्थः । नार्य्यश्चुक्षुभिरे प्रियविप्रयोगभयेन क्षुभिताः । मम्लु-र्म्लाना: । मुमुहुर्मूर्च्छिताः । पतीन् शुशुचुरशोचन् ॥ ६

भरत: । तुरङ्गा इत्यादि । गजादिदर्शनात् भीताः तुरङ्गाः पुस्फुटुः इतस्ततो गताः । स्फुट शि विकाशे । वृषभाः परमत्यर्थं पुस्फुरुश्चलिताः स्फुर शि स्फूर्त्तौ चले । नार्य्यश्चुक्षुभिरे पतिमरणशङ्कया क्षोभं प्रापुः । क्षुभ लुङ् सञ्चले । अत एव मम्लुः कान्तिरहिता बभूवुः । म्लै कान्तिसंक्षये "एचोऽयवायाव" इति आ, "आतोलोप इटि च" इत्यालोपः । ततो मुमुहुः मोहं प्रापुः । मुह ल शि वैचित्त्ये । पतीन् शुशुचुः शोचितवत्यः । शुच शोके ॥ ६

अनुवाद । ঐ শব্দে কুরঙ্গগণ ইতস্ততো বিশ্লিষ্ট হইল, বৃষকুল অতিশয় হুঙ্কার করিতে লাগিল, এবং নারীগণ পতিবিনাশশঙ্কায় ক্ষুব্ধ, ম্লান এবং মূঢ় হইয়া পতির শোক করিতে লাগিল । ৬

**जगर्जुर्जहृषुः शूरा रेजुस्तुष्टुविरे परैः ।**
**बबन्धुरङ्गुलित्राणि सन्नेहुः परिनिर्ययुः ॥ ७**

अन्वयः । शूराः जगर्ज्जुः, जहृषुः, रेजुः, परैः तुष्टुविरे, अङ्गुलित्राणि बबन्धुः, सन्नेहुः, परिनिर्ययुः ॥ ७

मल्लिनाथः । जगर्जुरिति । शूरा वीरभटा जगर्जुः समर-भयात् सिंहनादांश्चक्रुः । जहृषुर्हृष्टा रेजू रराजुः । "फणाञ्च सप्तानाम्" इति विकल्पादेत्वम् । अङ्गुलीस्त्रायन्त इत्यङ्गुलित्राणि । "आतोऽनुपसर्गे कः" । बबन्धुः । सन्नेहुः संवर्मयाञ्चक्रुः । णह बन्धने । "अत एकहल—" इत्येत्वाभ्यासलोपौ । परिनिर्ययुः परितो निर्याताः ॥ ७

भरत: । जगर्जुरित्यादि । शूरा जगर्जुः जेष्याम इति शब्दं चक्रुः । गर्ज शब्दे । तथा जहृषुः चिरात् प्राप्तः संग्राम इति मत्वा तुष्टाः, हृष उष्वञ्जि तुष्टौ । रेजुः शुशुभिरे । राजृ ऋ्व दीप्तौ षित्वात् फणादि, "तृफल" इत्यादिना अत एत्वं खिलोपश्च । परैः अन्यैः तुष्टुविरे स्तुताः । ष्टु अल स्तुतौ कर्मणि ठौ, "धेरादयः" इत्यादिना समासित्वाप्राप्तत्वात् धैरा-दिलोप ,श्वाद्यादिश्च इति षस्य सत्वात् "क्लित्वात्" इति ष: । अङ्गुलित्राणि बबन्धुः बद्धानि च । बन्धीग् बन्धक् बधक् बन्धे "स्यात् पित्किदा" इति कित्त्वाभावपक्षे हसुक्लोपऽथावित्यस्याप्रवृत्ते-र्नलोपाभावः । यद्वा "स्यात्ऽ्यपित्किदा" इत्यत्र वाशब्दो व्यवस्थावाची, तेन मन्यादेर्विभाषया कित्त्वम् बन्धादेस्तु कित्त्वाभाव एव, तेन ममथुः ममन्थुः ससञ्जे ससञ्जे इत्यादिरूपद्वयं दृश्यते । बबन्धुः बभन्धुः दद्ंशुरित्यादयो नित्यम् । परे तु इन्धां ॰लिटि च स्वञ्जो वेति नकारलोपार्थं सूत्रं कुर्वन्ति । इन्धधातोराम् न स्यात् । आमोऽभावपक्षे नित्यं नलोप: सञ्चस्तु वा अन्यत्र त्वा नलोपाभाव इति । अङ्गुलिं त्रायत इति हनगमादिति ड: । सन्नेहुः सन्नाहं कृतवन्तः णहञो बन्धे परिनिर्ययुः निर्गताः, या ल गतौ ॥ ७

অনুবাদ। বীরগণ জয়ী হইবে ভাবিয়া সিংহনাদ করিতেছিল, হৃষ্ট হইল, শোভা পাইল, অন্য লোকে তাহাদের প্রশংসা করিতে লাগিল, কেহ অঙ্গুলিত্র বাঁধিতে লাগিল, কেহ বা বর্ম্ম পরিতেছিল, কেহ বা যুদ্ধার্থ বাহির হইল। ৭

**धनूंष्यारोपयाञ्चक्रू रुरुहुस्ते[ऽरुरुहन्] रथादिषु ।**
**असीनुदवहुर्दीप्तान् गुर्वीरुच्चिक्षिपुर्गदाः ॥ ८**

अन्वयः। ते धनूंषि आरोपयाञ्चक्रुः, रथादिषु रुरुहुः, दीप्तान् असीन् उदवहुः, गुर्वीः गदाः उच्चिक्षिपुः ॥ ८

मल्लिनाथः। धनूंषीति। धनूंष्यारोपयाञ्चक्रुरारोपयामासुरधिज्यानि चक्रुरित्यर्थः। "रुहः पोऽन्यतरस्याम्" इति विकल्पात् पकारादेशः। ते योधा रथादिषु रुरुहुः रथादीन् रुरुहुरित्यर्थः। कर्म्मण्यधिकरणविवक्षायां सप्तमी। दीप्तानसीनुदवहुरुद्येमुः। वहु उद्यमने। गुर्वीर्गदा उच्चिक्षिपुरुत्क्षिप्तवन्तः ॥ ८

भरत। धनूंषीत्यादि। धनूंषि रथे हस्ते वा आरोपयाञ्चक्रुः, आरोपितवन्तः आरोपितगुणानि चक्रुरिति केचित। णि कर्त्ता जन्यो णिः. "रुहः पङ् वा" इति पङ्, "पुर्व्वङः" इति गुणः, त्यान्तत्वादाम। रथादिषु आरुरुहुः आरोहन्ति स्म, कर्म्मणोऽप्याधारत्वविवक्षया न द्वितीया। दीप्तान् असीन् खड्गान् उदवहुः उद्यतान चक्रुः, वह उद्यमे "ज्ञभ्रमवम" इत्यादिना खेस्त्वं का-रस्य अकारः। गर्व्वीर्महतीर्गदा उच्चिक्षिपुः उत्क्षिप्तवन्तः, क्षिप अ उँ क्षिप्यौ नुदि, "खेरा-त्वचः" इत्यादिना खेः पकारस्य लोपः, "ज्ञभ्रमवम" इत्यादिना खेः कस्य चत्वम् ॥ ८

অনুবাদ। তাহারা ধনুকে জ্যারোপণ, অশ্বরথাদিবাহনে আরোহণ, শাণিত অসি উত্তোলন ও মহাগদা নিক্ষেপ করিল। ৮

**शूलानि भ्रमयाञ्चक्रुर्बाणानाददिरे शुभान् ।**
**भ्रेमुश्चुकुर्दिरे रेसुर्ववल्गुश्च पदातयः ॥ ९**

अन्वयः। पदातयः शूलानि भ्रमयाञ्चक्रुः, शुभान् बाणान् आददिरे, भ्रेमुः, चुकुर्दिरे, रेसुः ववल्गुः च ॥ ९

मल्लिनाथः। शूलानीति। पदातयः शूलानि भ्रमयाञ्चक्रुः। भ्रमेरमन्तत्वान्मित्त्वे ह्रस्वत्वम्। शुभान् योग्यान् बाणान् आददिरे आत्तवन्तः। "आङो दो नास्यविहरणे" इत्यात्मनेपदम्। भ्रेमुर्युद्धे बभ्रमुः। "वा जॄभ्रमुत्रसाम्" इत्येत्वाभ्यासलोपविकल्पः। चुकुर्दिरे चिक्रीडुः। कुर्द खुर्द क्रीडायाम्। लिटि तङ्। रेसुर्नेदुः। रस शब्दे। "अत एकहल्—" इत्येत्वम्। ववल्गुर्वल्गितवन्तः ॥ ९

अन्वयः । गजानां शालीन् प्रददुः, कम्बलान् परितस्तरुः, कक्ष्या तेनुः, उच्छ्रितान् ध्वजान् च समुच्छश्रियुः ॥ ११

मल्लिनाथः । गजानामिति । गजानां शालीन् युद्धयोग्यपर्य्याणानि । 'शाला रक्षोपकरणे तथा शकुनिकान्तरे युद्धार्थगजपर्य्याणे' इति विश्वः । प्रददुर्निदधुः । कम्बलानास्तरणानि परितस्तरुः परिस्तीर्णवन्तः । "ऋच्छत्यृताम्" इति गुणः । कक्ष्या मध्यबन्धनानि तेनुर्वितेनुः । उच्छ्रितान् ध्वजांश्च समुच्छश्रियुः समुच्छ्रितवन्तः । श्रयतेर्लिटि उसि इयङादेशः ॥ ११

भरतः । गजानामित्यादि । हस्त्यारोहा गजानां शारीन् युद्धोपकरणानि प्रददुः पृष्ठे आरोपितवन्तः । "शारिर्युद्धोपकरणे तथा शाकुनिकान्तरे" इति विश्वः । कम्बलान् परितस्तरुः आस्तीर्णवन्तः, कुथादीति पाठे—चित्रकम्बलानित्यर्थः । "कुथः स्यात् चित्रकम्बले" इति विश्वः । स्तृञ् वि च्छादने इत्यस्य "ऋतो गुः कित्यथाम्" इति गुणः । कक्षाम् उदरात्यबन्धस्थितां रज्जुं तेनुः विस्तारितवन्तः तनु उ विस्तृतौ । "कक्षोदयाहालिका कायी प्रकोष्ठगजरज्जुषु" इति विश्वः । उन्नतशिखरान् ध्वजदण्डान् समुच्छश्रियुः उतश्रितवन्तः श्रिञ् सेवने, उतपूर्वोऽयमुतचेत्यपि "श्वीरसचि" इति रयः ॥ ११

अनुवाद । हस्तिपालकगण हस्तिपृষ্ঠে যুদ্ধোপযোগী আস্তরণ ও কম্বলে সাজাইতে লাগিল, উদরবন্ধনরজ্জু বিস্তার করিয়া ও উন্নতাগ্র ধ্বজা তুলিয়া দিল । ১১

विशश्वासयिषाञ्चक्रुरालिलिङ्गुश्च योषितः ।
आजघ्रुर्मूर्ध्नि बालांश्च चुचुम्बुश्च सुतप्रियाः ॥ १२

अन्वयः । ( वीराः ) योषितः विशश्वासयिषाञ्चक्रुः आलिलिङ्गुः च, सुतप्रियाः बालान् च मूर्ध्नि आजघ्रुः चुचुम्बुः च ॥ १२

मल्लिनाथः । वीति । वीराः प्रयाणसमये योषितः स्वकान्ता विशश्वासयिषाञ्चक्रुः सर्वथा निर्जित्यागमिष्याम इति विश्वासयितुमीषुरिच्छापूर्वकं विश्वसयामासुरित्यर्थः । श्वसेर्ण्यन्तात् सनि लिट "कास्प्रत्ययादाम्—" इत्याम्प्रत्यये कृञोऽनुप्रयोगः सनादिकार्य्यं च । आलिलिङ्गुराश्लिष्टवन्तश्च । गत्यर्था लिगिराङ्पूर्व आश्लेषार्थः । इदित्वान्नुम् । सुतप्रियाः प्रियसुताः । 'बहुव्रीहौ वा प्रियस्य' इति पूर्वनिपातविकल्पः । बालान्मूर्ध्नि आजघ्रुराघ्रातवन्तश्च । विश्लिष्टत्वादिति भावः । घ्रा गन्धोपादाने । श्लिष्टस्यातालापः । चुचुम्बुश्च प्रेम्णेति भावः ॥ १२

भरत:। विश्रीत्यादि। योधा योषित: स्त्रियो विश्रिम्भासम्भिताः विश्वासयितुं सान्त्वयितुमिच्छवन्त:, श्वस प्राणने जि: सन् त्यान्तत्वादाम्। तथा आलिलिङ्गु: आलिङ्गनं, चक्रु, लिगि गतौ आङ्पूर्वं आश्लेषमात्र। सुता: प्रिया येषां ते बालान् मूर्ध्नि आजघ्रु: शिरास आघ्रातवन्त:, घ्रा गन्धग्रहणे "झलन्तय" इत्यादिना खिर्घस्नात: अत्र नतौ जलम्। चुचुम्बुश्च मुखमवलन्यश्च, चुवि कि चुम्बनं। स्त्रियं आलिङ्ग्य बालकानामाघ्य यथाय जघ्नु-रित्यर्थ:॥ १२

অনুবাদ। যোদ্ধৃগণ নিশ্চয় আমরা ক্ৰন্দন করিবা অচিরে ফিরিতেছি বলিয়া যে সিৎ দিগকে আশ্বস্ত ও আলিঙ্গন করিল। পুত্রকন্যাদিগকে ভালবাসানিবন্ধন মস্তকাঘ্রাণ ও মুখচুম্বন করিল। ২১

**गम्भीरवेदिन: संज्ञां गजा जगृहुरच्युता:।**
**ववृधे शुशुभे चैषां मदो हृष्टैश्च पुप्लुवे॥ २२**

अन्वय:। गम्भीरवेदिन: गजा: अच्युता: संज्ञां जगृहु:, एषां मदश्च ववृधे, शुशुभे च, हृष्टै: पुप्लुवे॥ १२

मल्लिनाथ:। गम्भीरेति। गम्भीरवेदिनो मदान्धा गजा:। 'त्वग्भेदाच्छोणितस्रावान्मांसस्य च्यवनादपि। आत्मानं यो न जानाति तस्य गम्भीरवेदिता।' इति राजपुत्रीये। तेऽप्यच्युता अक्षताङ्कुशा एव संज्ञां तत्तत्सङ्केतं जगृहुर्जज्ञु:। लिट: कित्त्वात् "ग्रहिज्यावयि—" इति संप्रसारणम्। एषां गजानां मदश्च ववृधे शुशुभे च। हृष्टैस्तै: पुप्लुवे प्लुतं च। भावे लिट्॥ १३

भरत:। गम्भीरेत्यादि। अङ्कुश: दृढमाहन्यमाना अपि ये न विषीदन्ति, ते गम्भीरवेदिनो गजा:, अच्युता अङ्कुशैरहता अपि संज्ञां युद्धोपयुक्तां जगृहु: युद्धकुशलत्वात्, ग्रह उपादाने "ल्यग्रह" इत्यादिना खिर्जि: रकारस्य "झभलय" इत्यादिना अत्वं, "ग्रहस्वपाद्या:" इति प्रकृतिर्जि:। अच्युता इति च्युङ् विश्व दुत् वधे क्त "वनतनाद्यनिमाम्" इति नलोप:। "त्वग्भेदाद्रुधिरस्रावादन्तश्च्यवनादपि। संज्ञां न लभते यस्तु गजो गम्भीरवेद्यसौ"। एषां हस्तिनां मदो ववृधे शुशुभे च, वृधङ् दीप्तौ। मतै: गजै: हृष्टै: पुप्लुवे वेगेन गतम्। प्लुङ् सर्पणे भावे रूपम्॥ १३

অনুবাদ। তাহাদের মদমত্তগজেরা অঙ্কুশাহত না হইয়াই যুদ্ধসঙ্কেত শিখিতে পারিল। তাহাদের মদ ও শোভা বাড়িল এবং পুলকিতচিত্তে দৌড়াইতে লাগিল। ১৩

**मृगा: प्रदक्षिणं सस्रु: शिवा: सम्यग्ववाशिरे।**
**अवामै: पुस्फुरे देहै: प्रसेदे चित्तवृत्तिभि:॥ १४**

अन्वय:। मृगा: प्रदक्षिणं सस्रु:, शिवा: सम्यक् ववाशिरे, अवामै: देहै: पुस्फुरे, चित्तवृत्तिभि: प्रसेदे॥ १४

मल्लिनाथः । मृगा इति । ततः प्रचलतां तेषां मृगा हरिणा-दयः प्रदक्षिणं यथा तथा समुज्जग्मुः । शिवाः क्रोष्टारश्च सम्यक् ववाशिरे वामभागे चुक्रुशुरित्यर्थः । वाशृ शब्दकुत्सायाम् । अवामै-र्दक्षिणैर्देहैर्देहावयवैर्भुजादिभिः पुस्फुरे पस्पन्दे । भावे लिट् । चित्तवृत्तिभिः प्रसेदे प्रसन्नम् । भावे लिट् । मरिष्यतामप्येषां तादात्मिकविजयसूचनान्येतानि निमित्तानीति द्रष्टव्यम् ॥ १४

भरतः । मृगा इत्यादि । मृगाः प्रदक्षिणं समुद्गमनं चक्रुः, ऋ गतौ । शिवाः शृगालाः सम्यग्वामपार्श्वस्थाः सत्यो ववाशिरे शब्दं चक्रुः, वाशृ शब्दे, वाशृ इत्यपीति, श्रापक्षन्दात् शिवाशब्दः पुंस्यपि स्त्रीलिङ्ग एव । अवामैः दक्षिणैः, देहैः भुजादिभिः पुस्फुरे स्फुरितं, चित्तवृत्तिभिरपि प्रसेदे प्रसन्नं स्फुर स्फुरणे स्फूर्तौ चलने, षद ऌ विशरणे गतौ प्रपूर्वः प्रसन्नीभावे । भावे इदमद्वयम् ॥ १४

অনুবাদ । যাত্রাকালে মৃগগণ তাহাদের দক্ষিণভাগেতে চরিতেছিল, বামভাগে শৃগাল ডাকিতে লাগিল, দক্ষিণ অঙ্গ চক্ষুঃ বাহু প্রভৃতি অঙ্গ সকল স্পন্দন করিতে লাগিল, এবং চিত্ত প্রসন্ন হইল । ১৪

**प्राच्यमाञ्जिहिषाञ्चक्रे प्रहस्तो रावणाज्ञया ।**
**द्वारं ररंहतुर्याम्यं महापार्श्वमहोदरौ ॥१५**

अन्वयः । प्रहस्तः रावणाज्ञया प्राच्यं द्वारम् आञ्जिहिषाञ्चक्रे, महापार्श्वमहोदरौ याम्यं (द्वारं) ररंहतुः ॥ १५

मल्लिनाथः । प्राच्यमिति । ततः प्रहस्तो रावणाज्ञया प्राचि भवं प्राच्यं द्वारं प्राग्द्वारम् । "द्युप्राग्—" इत्यादिना यत् । आञ्जिहिषाञ्चक्रे अंहितुं गन्तुमियेष । तत्रासक्तोऽभूदित्यर्थः । अहि गतौ इति धातोरनुदात्तेतः सन्नन्तादाम्प्रत्यये कृञोऽनु-प्रयोगः । इदित्वान्नुमागमः । "अजादेर्द्वितीयस्य" इति हिद्विर्व-चनम् । "न न्द्राः—" इति निषेधात् नकारस्य निषेधः । "पूर्व-वत्सनः" । "आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य" इति तङ् । महापार्श्वमहोदरौ नाम राक्षसौ याम्यं दक्षिणं द्वारम् । "दित्य-दित्यादित्य—" इत्यत्र 'यमाच्चेति वक्तव्यम्' इति ण्यप्रत्ययः । ररंहतुर्जग्मतुः । रहि गतौ । इदित्वान्नुम् ॥ १५

भरत । प्राच्यमित्यादि । शत्रुमनिर्जित्य तुष्टा प्रहस्तो रावणाज्ञया प्राच्यं द्वारं पूर्वद्वारम् आञ्जिहिषाञ्चक्रे गन्तुमियेष, अहि गतौ सन् "सनीऽन्तरघ:" इतीम् "स्वादौ मवर्द्धोऽन्य नाग-

स्यादेरा ह्रं:" इति वचनात् सन्यङन्तो द्विरिति द्विनभागस्येव द्वित्व, त्यान्तत्वादाम् । प्राप्या भवमिति "ह्वे कात" इति ण्यः। महापार्श्वमहोदरौ याम्यं दाक्षं द्वार दुद्रुवतुः, रक्षि गथाम। यमौ द्व-त्य भ्रयति "विकारमङ्ग" इत्यादिना ण्यः ॥ १५

অনুবাদ। পরন্তু রাবণাত্মজ পূর্ব্বদ্বারলঙ্কায় যাইতে চাহিল, মহাপার্শ্বও মহোদর দক্ষিণদ্বার রক্ষায় চলিল। ১৫

## प्रययाविन्द्रजित्प्रत्यगियाय स्वयमुत्तरम् ।
## समध्यासिसिषाञ्चक्रे विरूपाक्षः पुरोदरम् ॥१६

अन्वयः। इन्द्रजित् प्रत्यक् ( द्वार ) प्रययौ, स्वयं ( रावणः ) उत्तरम् ( द्वार ) इयाय, विरूपाक्ष. पुरोदरं समध्यासिसिषाञ्चक्रे ॥ १६

मल्लिनाथः। प्रेति। अथेन्द्रजित् प्रत्यक् पश्चिमं द्वारं प्रययौ। स्वयं रावण उत्तरं द्वारमियाय। विरूपाक्षो नाम राक्षसः पुरोदरं पुरमध्यं समध्यासिसिषांचक्रे तदध्यासनासक्तोऽभूदित्यर्थः। आसेः सन्नन्तात्स्त्र्याम्प्रत्यये कृञोऽनुप्रयोगः। पूर्ववत् तङ् ॥ १६

भरतः। प्रययावित्यादि। इन्द्रजित् प्रत्यक् पश्चिमं द्वारं प्रययौ, या ल गतौ "आत औ णलः" इति औः, "टेर्लोपो डिति" इत्यालोपः। प्रतिपूर्वादञ्चतेः क्विबन्तात् दिक्शब्दात् "दिग्देशकालेऽस्तात्" इति सप्तम्याः अस्तात तस्य लोपः, प्रतीच्यां दिशीत्यर्थः। स्वयं रावण उत्तरं द्वारम् इयाय गतः, इण् ल गतौ "ञ्णित्यन्तेत्" इति वृद्धौ "स्वयोरियवर्णौ" इतीयः। विरूपाक्षः पुरोदरं लङ्कामध्यभाग समध्यासितुमिच्छा- [illegible] उपवेशने, समाधिपूर्वात सन् द्वम् सिषभागस्य द्वित्वं, त्यान्तत्वादाम् ॥ १६

অনুবাদ। ইন্দ্রজিৎ পশ্চিমদ্বারে, স্বয়ং ( রাবণ ) উত্তর দ্বারে উপস্থিত হইল এবং বিরূপাক্ষ ( রাক্ষস ) নগরমধ্যে রহিল। ১৬

## शुश्राव रामस्तत्सर्वं प्रतस्थे च ससैनिकः ।
## विस्फारयाञ्चकारास्त्रं बबन्धाथ च बाणधी ॥१७

अन्वयः। रामः तत्सर्वं शुश्राव, ससैनिकः प्रतस्थे च, अस्त्रं विस्फारयाञ्चकार, अथ बाणधी बबन्ध च ॥ १७

मल्लिनाथः। शुश्रावेति। रामस्तत्सर्वं प्रचुचेष्टितं शुश्राव। ससैनिकः प्रतस्थे च। अस्त्रं धनुर्विस्फारयाञ्चकार आधिज्यमाचकर्षेत्यर्थः। "चिस्फुरोर्णौ" इति वैभाषिकमात्वम्। गतमन्यत्। अथ बाणा धीयन्ते अनयोरिति बाणधी इषुधी। "कर्मण्यधिकरणे च" इति घोः किप्रत्ययः। बबन्ध च पृष्ठे बद्धवांश्च ॥ १७

भरतः। शुश्रावेत्यादि। अथानन्तरं रामः तत्सर्वं रावणचेष्टितं दूतद्वारा शुश्राव, गृ गतौ गुर्णौ। सैनिकैः सह प्रतस्थे प्रस्थितः, स्था स्थाने प्रपूर्वो गतिमाह 'प्रतिज्ञानिर्णय' इत्यादिना मम। सेनायां समवैतीति "ठधिकात्' इति णिकः। "सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते" इत्यमरः। अस्य धनुर्विस्फारयाञ्चकार आरोप्याकृष्टवान्, स्फुर स्मि स्फूर्त्यौ चलने 'क्रीजोर्ङाऽजा निस्फुर" इति पत्वे उकारस्यात्वं स्फुरधातो रूप वा, बाणधा तूणद्वयञ्च बाणा धार्यन्ते यत्रेति "ठाञ्ज" इति किः॥ १७

অনুবাদ। রাম সে সমস্ত শুনিলেন এবং সৈন্যে প্রস্থান করিলেন। তাহার পর ধনুকে আরোপণ করিয়া পৃষ্ঠে তূণীদ্বয় বাঁধিলেন। ১৭

**ईङ्गाञ्चक्रेऽथ सौमित्रिमनुजज्ञे बलानि च ।**
**नमश्चकार देवेभ्यः पर्णतल्पं मुमोच च ॥ १८**

अन्वयः। अथ (रामः) सौमित्रिम् ईङ्गाञ्चक्रे, बलानि च अनुजज्ञे, देवेभ्यः नमश्चकार, पर्णतल्पं मुमोच च ॥ १८

**मल्लिनाथः। ईङ्गामिति। स रामः सौमित्रिं लक्ष्मणमीङ्गाञ्चक्रे ईङ्गितवान् दृष्ट्यैव योद्धुमनुज्ञातवानित्यर्थः। ईङ्गतेर्लिट् "इजादेश्च गुरुमतोऽनृच्छः" इत्यामप्रत्ययः। गतमन्यत्। बलानि चानुजज्ञे योद्धुमिति शेषः। देवेभ्यो नमश्चकार अप्रतिबन्धेन जयसिद्धयेऽमिति भावः। पर्णतल्पं मुमोच तत्स्थानात्प्रचलित इत्यर्थः॥ १८**

भरतः। ईङ्गाञ्चक्रे इत्यादि। रामः सौमित्रिम् ईङ्गाञ्चक्रे दृष्टवान्, ईङ्ग इ दर्शने "इजादि" इत्याम्। बलानि सैन्यानि च अनुजज्ञे अनुज्ञातवान् युद्धार्थमित्यर्थात्, ज्ञा ग बोधने उपसर्गपतितरूपकोऽयमनुशब्दः, तेन "अनुज्ञानि" इत्यादिना सं, किंवा सौमित्रिं बलानि च ईङ्ग चक्रे अनुजज्ञे च। "अज्ञात्" इति स, शब्दी स्याकाङ्क्षा शब्देनैव प्रयुज्यते इति कर्मविवक्षायामपि कर्मानुक्तौ, किंवा अनुजज्ञे अनुज्ञातौ रक्षणाय विभक्तिव्यत्ययेन भावे रूपम्। देवेभ्यो नमश्चकार "शक्तार्थ" इत्यादिना चतुर्थी। ननु कथमत्र उपपदविभक्तेः "कारकविभक्तिर्बलीयसी" इति द्वितीया न स्यादिति चेन्न, अत्र नमःशब्दस्य वाचकत्वं नैव कर्मणोऽन्वयान्न द्वितीयाप्राप्तिः, यदा तु कर्म प्रणामार्थत्वं नमःशब्देन द्योत्यते तदा तद्योगेन द्वितीया। यथा—"नारायणं नमस्कृत्य" इत्यादि। पर्णतल्पं पल्लवरचितशय्यां मुमोच तत्याज। पर्णशालामिति क्वचित् पाठः॥ १८

অনুবাদ। তদনন্তর রাম লক্ষ্মণকে দৃষ্টি সঙ্কেতে যুদ্ধার্থে আদেশ দিলেন এবং সৈন্যদিগকেও যুদ্ধার্থ আজ্ঞা দিলেন। তাহার পর তিনি দেবতাদিগকে প্রণাম করিয়া তৃণশয্যা ত্যাগ করিলেন। ১৮

**चकासाञ्चक्रुरुत्तस्थुर्नेदुरानशिरे दिशः ।**
**वानरा भूधरान् दध्रुर्बभञ्जुश्च ततस्तरून् ॥ १९**

अन्वयः । ततः वानराः चकाशाञ्चक्रुः. उत्तस्थुः गेहेः, दिशः आनशिरे, भूधरान् रेधुः, तरून् बभञ्जुः च ॥ १९

मल्लिनाथः । चकासांचक्रुरिति । ततोऽनुष्ठानानन्तरं वानराश्चकासांचक्रुः रणरागाद्रेजुरित्यर्थः । चकासृ दीप्तौ । लिटि 'कास्यनेकाच इति वक्तव्यम्' इत्याम्प्रत्ययः । उत्तस्थुरुत्थिताः । ऊर्द्ध्वकर्मत्वात्र तङ् । गेहेर्भिर्व्वेष्टिर्, दिश आनशिरे व्याप्नुः । अशू व्याप्तौ । "अश्नोतेश्च" इति दीर्घाभ्यासादुत्तरस्य नुडागमः । भूधरान् रेधुरघ्नन्नित्यर्थः । "राधो हिंसायाम्" इत्येत्वाभ्यासलोपौ । तरून् बभञ्जुश्च ॥ १९

भरत । चकासामित्यादि । ततोऽनन्तरं वानराः चकासाञ्चक्रुः चकासृ "दीप्तौ" "।ंजादि" इत्याम् कनिश्चानुत्वात् । उत्तस्थुः उत्थिताः, गेहेः, नद्द विशीर्णौ । दिश आनशिरे व्याप्नुवन्ति स्म, अश् ङ न व्याप्तिसंहत्योः "अश्नोतेश्च दीर्घः" इति नेर न् । भूधरान् रेधु " उन्मूलितवन्तः, राधो सिद्धौ अस्य हिंसार्थ "तृफल" इत्यादिना पचे अात एत्वं खिल्लोपश्च । तरूंश्च बभञ्जुः, भञ्जो धौ मोटने "स्तात् व्यापिम्" इति पक्षे किन्त्वाभावात् नलोपाभावः ॥ १९

অনুবাদ । তাহার পর বানরগণ রণরাগে বিরাজমান হইল । প্রাসাদাদির উপর উঠিয়া রব করিতে করিতে চারিদিকে ব্যাপিয়া পড়িল । পর্ব্বতগুলি উৎপাটিত এবং তরু সকল ভগ্ন করিতে লাগিল । ১৯

ददाल भूर्नभो रक्तं गोष्पदघ्नं ववर्ष च ।
मृगाः प्रसुस्रुवुर्वामं खगाश्चुक्रुविरेऽशुभाः ॥२०

अन्वयः । भूः ददाल, नभः गोष्पदघ्नं रक्तं ववर्ष च, मृगाः वामं प्रसुस्रुवुः, खगाः अशुभाः चुक्रुविरे ॥ २०

मल्लिनाथः । अथास्य दुर्निमित्तान्याह—ददालेति । भूर्ददाल दलिता, नभश्च गोष्पदं पूरयित्वा गोष्पदघ्नम् । "वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम्" इति पूरेर्णमुल्प्रत्ययः ऊकारलोपश्च । रक्तं ववर्ष । मृगा हरिणा वामं प्रदक्षिणं प्रसुस्रुवुर्जग्मुः । भ्रंहत्युवङ् । खगाः पक्षिणोऽशुभाः प्रतिकूलाश्चुक्रुविरे चुकुशुः । कु शब्दे । पूर्ववदादेशः ॥ २०

भरतः । ददालेत्यादि । रामलक्ष्मणयोः नागपाशबन्धनसूचनार्थम् अमङ्गलं शोकचिह्नं उच्यते । भूमिर्ददाल दलनि मेः । नभ आकाशं गोष्पदं पूरयित्वा रक्तं ववर्ष,

वृष सेचने वृषु चेति चकारात् सेचने, पूरी आप्यायने इत्यस्मात् वर्षप्रमाणे क्षायम् ऊर्ध्वीपशेषेति परः। नभसि गोष्पदं प्राति पूरयतीति गोष्पदप्रं रक्तस्य विशेषणं, गोष्पदपूरणेनैव रक्तवर्षप्रमाणं गम्यते। प्रा च पूर्ती "इनजनात्" इति कः। मृगा वामं दिग्भागं प्रमसृपुर्गताः, सृ सर्पो गत्याम्। अशुभाः खगा चन्तूकाद्यः चुकुविरे कुङ् शब्दे। अशुभमिति पाठे—क्रियाविशेषणम्॥ २०

अनुवाद। तखन भूमिविदीर्ण हइते लागिल, नभोमण्डल गोष्पदपूर्ण करिया रक्तवृष्टि करिल, मृगकुल प्रतिकूल विचरण करितेछिल, एवं पाखगण अशुभ रव करिल। २०

उल्का ददृशिरे दीप्ता रुरुवुश्चाशि[वं]वाः शिवाः।
चक्माये च मही रामः शशङ्क चाशुभागमम्॥ २१

अन्वयः। दीप्ताः उल्काः ददृशिरे, शिवाः अशिवाः रुरुवुः, मही चक्माये च, रामः अशुभागमम च शशङ्क॥ २१

मल्लिनाथः। उल्का इति। दीप्ता उल्का ददृशिरे दृष्टाः। अशिवाः अशुभाः शिवाः क्रोष्टारश्च रुरुवुश्चुक्रुशुः। मही चक्माये चकम्पे। क्मायी विधूनने। रामस्याशुभागममनिष्टागमं शशङ्क॥ २१

भरतः। उल्का इत्यादि। दीप्ता उल्का दृश्यन्ते स्म, शिवाः शृगालाः अशुभं रवं चक्रुः, अशुभा इति पाठ—अनिष्टा इत्यर्थः, अशिवमिति क्वचित् पाठः। रु च ध्वनौ। मही चक्माये कम्पिता, क्माय्ङ् विधूनने। रामश्च अशुभस्यागमनं शशङ्क शङ्कितवान्, अकुशलदर्शनेन पर्याकुलत्वात्। शकि ङ् त्रासशङ्कयोः॥ २१

अनुवाद। उज्ज्वल उल्का देखा दिल, शृगालगण अशुभ रव करल, पृथिवी काँपिते लागिल, ताहाते रामचन्द्र अनिष्ट आशङ्का करिते लागिलेन। २२

रावणः शुश्रुवान् शत्रून् राक्षसानभ्युपेयुषः।
स्वयं युयुत्सयाञ्चक्रे प्राकाराग्रे निषेदिवान्॥२२

अन्वयः। रावणः राक्षसान् अभ्युपेयुषः शत्रून् शुश्रुवान्, प्राकाराग्रे निषेदिवान्, स्वयं युयुत्सयाञ्चक्रे॥ २२

मल्लिनाथः। रावण इति। रावणो राक्षसानभ्युपेयुषो योद्धुमभ्युपगतान् शत्रून् शुश्रुवान् श्रुतवान् प्राकाराग्रे निषेदिवान् प्राकारोपरि स्थितः। क्वसोरपि लिडादेशत्वात् तदन्तानां प्रयोगः। स्वयं युयुत्सयाञ्चक्रे योद्धुमिच्छावतश्चक्रे। प्रोत्साहयन् योधयामासेत्यर्थः। युधेः सन्नन्तात् लिट आम्प्रत्यये पूर्ववत्तङ्॥ २२

भरतः। रावण इत्यादि। रावणानन्युरैयुद्धोऽभिमुखमुपगतान् शत्रून् रामादीन् शुश्रुवान् रावणः स्वयं प्राकारस्याग्रे निषण्णः सन् राक्षसान् योद्धुमिच्छा कारयामास। युध्यतेः युद्धं मन् जिः भाग, इण यतौ "ठीपमवत्" इति क्रमः, वर्णोर्घसेक्वाञ्चिणान" इति इम, "यिणोऽष्यणो" इति यः, "खः किति" इति दीर्घं, "वसोर्वसम्" इति इमसहितस्य वस्य उत्वं सतः क्रमौ "नृफल" इत्यादिना अत एत्वं खिल्लोपश्च ॥ २२

অনুবাদ। শক্র যুদ্ধের জন্য লঙ্কাপুরীতে উপস্থিত শুনিয়া রাবণ স্বয়ং প্রাচীরের উপর বসিয়া রাক্ষসদিগকে যুদ্ধোৎসাহী করিতে প্রবৃত্ত হইল। ২২

**निरासू राक्षसा बाणान् प्रजह्रुः शूलपट्टिशान्।**
**असींश्च वाहयाञ्चक्रुः पाशैरा[श्चा]चकृषुस्ततैः ॥ २३**

अन्वयः। राक्षसाः बाणान् निरासुः शूलपट्टिशान् प्रजह्रुः, असीन् च वाहयाञ्चक्रुः, ततैः पाशैः आचकृषुः ॥ २३

**मल्लिनाथः। निरासुरिति। अथ राक्षसा बाणान् निरासुः परिपुः चिक्षिपुः। "अन आटः" इत्यभ्यासदीर्घः। शूलपट्टिशान् प्रजह्रुः प्रायुञ्जतेत्यर्थः। अनेकार्थत्वाद्धातूनाम्। "जातिरप्राणिनाम्" इत्येकवद्भावाकरणं चिन्त्यम्। असीन् खड्गांश्च वाहयांचक्रुः प्रवर्त्तयामासुः प्रायुञ्जतेत्यर्थः। ततैः प्रसारितैः पाशैराचकृषुराकृष्टवन्तश्च। असंयोगाल्लिट् कित्त्वान्न गुणः ॥ २३**

भरतः। निरासुरित्यादि। राक्षसा बाणान् निरासुः चिक्षिपुः, असु क्षेपे। शूलपट्टिशान् प्रजह्रुः शत्रोरुपरि त्यक्तवन्तः, ओ हाक् त्यागे। शूलानि च पट्टिशाश्चेति द्वन्द्वः, परं तु शूलसहिताः पट्टिशा इति शाकपार्थिवादिः द्वन्द्वे हि अप्राणिजातित्वात् नपुंसकत्वं स्यात् इत्याहुः। असीन् खड्गान् वाहयाञ्चक्रुः वह प्रापणे णिः। ततैर्विस्तृतैः पाशैः आचकृषुः चाकृष्टवन्तः। कृषी आकर्षणे। २३

অনুবাদ। অনন্তর রাক্ষসেরা বাণ নিক্ষেপ করিল, শূল ও পট্টিশ অস্ত্র ত্যাগ করিল, খড়্গ ব্যবহার এবং বিস্তৃত পাশ অস্ত্রে আকর্ষণ করিতে লাগিল। ২৭

**भल्लैश्च बिभि[वि]दुस्तीक्ष्णैर्विव्य[भि]धुस्तोमरैस्तथा।**
**गदाभिश्चूर्णयांचक्रुः शितैश्चक्रैश्च चिच्छिदुः ॥ २४**

अन्वयः। तीक्ष्णैः भल्लैः च बिभिदुः, तथा तोमरैः विविधुः, गदाभिः चूर्णयाञ्चक्रुः, शितैः चक्रैः च चिच्छिदुः ॥ २४

**मल्लिनाथः। भल्लैरिति। तीक्ष्णैर्भल्लैः सुच्छिद्रफलैर्बाणैर्विविधुः प्रजह्रुरित्यर्थः। व्यधेर्लिटि "ग्रहिज्यावयि—"इत्यादिना संप्रसा-**

रणम् । तथा तोमरैर्विभिदुर्विदारयामासुः । गदाभिश्चूर्णयांचक्रुः । सत्यापपाशेत्यादिना णिच्प्रत्ययः । चक्रैः शिरांसिच्छिदुः ॥ २४

भरतः । भल्लैरित्यादि । राक्षसाः तीक्ष्णैः भल्लैः विभिदुः, भिदिर् भ धौ भिदि । तथा तोमरैः विविधुः व्यधो ताडे व्यधग्रहेति सम्प्रसारणं, "ग्रहज्यावयि" इति प्रकृतेर्जि । गदाभिः चूर्णयाञ्चक्रुः चूर्णितवन्तः, चूर्ण क पेषे चूर्णशब्दाद्वा णिः "सत्यापपाशरूप" इति णिः । शितैः तीक्ष्णैः चक्रैः चिच्छिदुः छिदिर् द्वैधीकरणे ॥ २४

অনুবাদ। রাক্ষসেরা তীক্ষ্ণ ভল্ল অস্ত্রদ্বারা বিদারণ, তোমর অস্ত্রে বিদ্ধ, গদাদ্বারা চূর্ণ এবং শাণিত চক্রাস্ত্রদ্বারা ছেদন করিতে লাগিল। ২৪

वानरा मुष्टिभिर्जघ्नुर्ददंशुर्दशनैस्तथा ।
निरासुश्च गिरींस्तुङ्गान् द्रुमान् विचकरुस्तथा ॥ २५

अन्वयः । वानराः मुष्टिभिः जघ्नुः, तथा दशनैः ददंशुः, तुङ्गान गिरीन् च निरासुः तथा द्रुमान् विचकरुः ॥ २५

मल्लिनाथः । राक्षसयुद्धप्रकारमुक्त्वा वानरयुद्धप्रकारमाह— वानरा इति । वानरा मुष्टिभिर्जघ्नुः राक्षसानिति शेषः । "गमहन—"इत्युपधालोपः । तथा दशनैर्दन्तैर्ददंशुर्दष्टवन्तः । तुङ्गान् गिरीन् निरासुः चिक्षिपुः । असु क्षेपणे । लिट् । "अत आदेः" इत्यभ्यासदीर्घः । तथा द्रुमान् विचकरुर्विचिक्षिपुः । "ऋच्छत्यृताम्" इति गुणः ॥ २५

भरतः । वानरा इत्यादि । एवं राक्षसेषु युध्यमानेषु वानरा मुष्टिभिः जघ्नुः हतवन्तः राक्षसानित्यर्थात्, हन लो गतौ वधे "हनगम्"इत्युपधालोपः । तथा दन्तैः ददंशुः दशन्ति स्म । दनशी दशने तुङ्गान् उच्चान् गिरीन् निरासुः निरस्तवन्तः, तथा द्रुमान् वृक्षान् विचकरुः विक्षिप्तवन्तः, कॄ श विक्षेपे ऋतो गः "ऋच्छत्यृताम्" इति गः ॥ २५

অনুবাদ। বানরেরা রাক্ষসদিগকে মুষ্টিদ্বারা প্রহার ও দন্ত দ্বারা দংশন করিল, বৃহৎ প্রস্তর এবং প্রকাণ্ড বৃক্ষ নিক্ষেপ করিয়া মারিতে লাগিল। ২৫

लाङ्गूलैर्लोठयांचक्रुस्तलैर्निन्युश्च संक्षयम् ।
नावेश्च चक्रतुः क्रुद्धाः पिपिषुश्च क्षितौ बलात् ॥ २६

अन्वयः । क्रुद्धाः ( ते वानराः ) लाङ्गूलैः लोठयाञ्चक्रुः, तलैः संक्षयं निन्युः नावेश्च चक्रतुः, क्षितौ बलात् पिपिषुः च ॥ २६

मल्लिनाथः । लाङ्गूलैरिति । ते वानराः क्रुद्धा लाङ्गूलैः पुच्छैः

लोडयांचक्रुः पुच्छैः रावेटां ममन्थुरित्यर्थः। पुच्छादाम्प्रत्ययः। तलैः करतलाघातैश्च संचयं निन्युरमेषुः। नखैश्च चक्रतुर्विच्छिदुः। छिदो छेदने। लिटः किच्वाद्गुणप्रतिषेधः। बलात् चितौ पिपिषुश्चूर्णयामासुः॥ २६

भरतः। लाङ्गूलैरित्यादि। वानराः लाङ्गूलैः राक्षसान् ताडितवन्तः लुठ वादिवदित्यत्र वादिवदिति कठधातोरर्थे प्रतीपाने लपधाने इत्यर्थः। "धातवो हन्तिभाषार्थाः चकितो वा चुरादयः" इत्युक्तेः स्वार्थे णिः। ... प्रवेटैश्च मङ्गयं निन्युः प्रापितवन्तः, णौ ज प्रापणे चुर्भांरित्यादिना यत्वम्। नखैरपि ... छिदिर्, कुद्धाः सन्तः बलात् चितौ पिपिषुः पीो पिष् लृ चूर्णने॥ २६

अनुवाद। এবং তাহারা ক্রুদ্ধ হইয়া লাঙ্গুল জড়াইয়া মারিল, চপেটাঘাতে বধ, নখাঘাতে ছিন্ন ভিন্ন এবং মুষ্টিকায় ফেলিয়া চূর্ণ বিচূর্ণ করিতে লাগিলেন। ২৬

सम्बभुवुः कबन्धानि प्रोहुः शोणिततोयगाः।
तेरुर्भटास्यपद्मानि ध्वजैः फेनैरिवाबभे॥ २७

अन्वयः। कबन्धानि सम्बभुवुः, शोणिततोयगाः प्रोहुः, भटास्यपद्मानि तेरुः, ध्वजैः फेनैः इव आबभे॥ २७

मल्लिनाथः। समिति। कबन्धान्यपमूर्धकलेवराणि सम्बभुवुः सम्भूतानि। भवतेर्लिटि भेरुसि "भुवो वुग्लुङ्लिटोः" इति वुगागमः। शोणिततोयगा रक्तापगाः प्रोहुः प्रावहन्। "प्राद्वहः" इति परस्मैपदम्। वहेर्यजादित्वात् संप्रसारणे द्विर्भावः। "संप्रसारणाच्च" इति पूर्वरूपत्वे सवर्णदीर्घः। भटानामास्यपद्मानि तेरुस्तत्र प्लवन्ते स्म। "तृफलभजत्रपश्च" इत्येत्वाभ्यासलोपौ। ध्वजैः फेनैरिवाबभे भातम्। भातेर्भावे लिट्॥ २७

भरतः। स बभूवुरित्यादि। कबन्धानि सम्बभेवुः सम्भूतानि, भू सत्तायां "भुवो वुक् लौंच्यिचि" इति वुक् भवोऽङ् ध्यामिति लिरङ्। "कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धकलेवरम्" इत्यमरः। रक्तनद्यः प्रोहुः प्रवहन्ति स्म, प्रहता इत्यर्थः। वहि ञो प्रापणे ऐदित्वात् यजादिः "व्यथयङ" इत्यादिना ञिर्जि: "यङ्स्वपायो." इति मूलस्य जिः। भटानां योधानां मुखपद्मानि अत नद्यां तेरुः प्लवन्ते स्म, तृ तरेऽभिभवे प्लुत्याम् बतो वः 'तृफल' इत्यादिना एत्वं द्विलोपोऽपि। पतितैः ध्वजैः तत्र नद्यां फेनैरिव आबभे शोभितम्। भा ... दीप्तौ भावे रूपम्॥ २७

अनुवाद। রাক্ষসগণ মস্তক শূন্য হইল, রক্তের নদী বহিতে লাগিল, যোদ্ধগণের মুখকমল তাহাতে ভাসিতেছিল এবং তাহাদের ছত্রচ্যুত ধ্বজগুলি তাহার ফেনস্বরূপ শোভা পাইতে লাগিল। ২৭

रक्तपङ्के गजाः सेदुर्न प्रचक्रमिरे रथाः।
निममज्जुस्तुरङ्गाश्च गन्तुं नोत्सेहिरे भटाः ॥२८

अन्वयः। रक्तपङ्के गजाः सेदुः, रथाः न प्रचक्रमिरे, तुरङ्गाः च निममज्जुः, भटाः गन्तुं न उत्सेहिरे ॥ २८

मल्लिनाथः। रक्तेति। रक्तपङ्के पङ्कीभूतरक्ते गजाः सेदुः सन्ना मग्ना इत्यर्थः। रथा न प्रचक्रमिरे गन्तुं न प्रवृत्ताः। "प्रोपाभ्यां समर्थाभ्याम्" इति तङ्। तुरङ्गाश्च निममज्जुर्निमग्नाः। भटाः पदातयश्च गन्तुं नोत्सेहिरे न शेकुरित्यर्थः। "अत एकहल—" इत्येत्वाभ्यासलोपौ। "शकधृष—" इत्यादिना तुमुन् ॥ २८

भरतः। रक्तपङ्क इत्यादि। रक्तानां पङ्के गजा हस्तिनः सेदुः अवसादं प्रापुः, षद्‌ ऌ शौ विशरणे गत्याम्। तत्र रथा अपि गन्तुं न प्रारब्धाः, क्रमु गतौ, "प्रोपादारम्भे" इति तङ्। तुरङ्गाश्च तत्र निमग्नाः मस्जी ञ टु शुद्धे स्नाने "झल्झलोः" इति सस्य दत्वे सुवु- भिस्तुत्वात्। भटा योधा गन्तुं न उत्सहन्ते स्म, सहेः "तफल" इत्यादिना एत्वं, खेर्लोपः च ॥२८

অনুবাদ। হস্তীগুলি রক্তপঙ্কে অবসন্ন হইল, রথ চলিল না, অশ্বগুলিও ডুবিয়া গেল, সুতরাং সৈন্যগণ আর অগ্রসর হইতে পারিল না। ২৮

कोट्या कोट्या पुरद्वारमेकैकं रुरुधे द्विषाम्।
षट्त्रिंशद्धरिकोट्यश्च वव्रुर्वानराधिपम् ॥ २९

अन्वयः। द्विषाम् एकैकं पुरद्वारं कोट्या कोट्या रुरुधे, षट्त्रिंशत् हरिकोट्यः तु वानराधिपं वव्रुः ॥ २९

मल्लिनाथः। कोट्येति। द्विषां सम्बन्धि एकैकं पुरद्वारम्। "एकं बहुव्रीहिवत्" इति द्विर्भावः सुलोपश्च। कोट्या कोट्या हरीणामेकैकया कोट्या इत्यर्थः। वीप्सायां द्विरुक्तिः। रुरुधे रुद्धम्। अवशिष्टाः षडुत्तरास्त्रिंशत् षट्त्रिंशत् हरिकोट्यस्तु वानराधिपं सुग्रीवं वव्रुः परिवव्रुः, वृणोतेर्लिटि झेरुसि यणादेशः ॥ २९

भरतः। कोट्येत्यादि। द्विषां राक्षसानाम् एकैकं पुरद्वारं वानराणां कोट्या कोट्या रुरुधे रुद्धं, रुधिर्‌ञ् आवरणे कर्मणि ठौ। षट्त्रिंशद्वानरकोट्यः वानराधिपं सुग्रीवं वव्रुः आवृतवन्तः, वृ ञ वृतौ संख्यानामाच्छन्दित्वात् कोट्येत्येकवचनं वीप्सायां द्वित्वं कोऽर्थः [illegible] ॥ २९

অনুবাদ। শত্রুগণের এক একটী পুরদ্বার কোটী কোটী বানরে অবরুদ্ধ করিল, অপর ছত্রিশকোটী বানর কপিরাজ (সুগ্রীবকে) বেষ্টন করিয়া রহিল। ২৯

तस्तनुर्जज्वलुर्मम्लुर्जम्लुर्लुलुठिरे क्षताः ।
मुमूर्च्छुर्ववमू रक्तं ततृषुश्चोभये भटाः ॥३०

अन्वयः। उभये भटाः क्षताः तस्तनुः, जज्वलुः, मम्लुः, जग्लुः, लुलुठिरे, मुमूर्च्छुः, रक्तं ववमुः, ततृषुः ॥ ३०

मल्लिनाथः। तस्तनुरिति। उभये भटाः कपिराक्षसवीराः क्षताः परस्पराहताः सन्तः तस्तनुर्वेदनया चुक्रुशुः। स्तन शब्दे। जज्वलुः क्रोधाज्ज्वलिताः। मम्लुरङ्गशैथिल्यं गताः। जग्लुर्हर्षक्षयं गताः। लुलुठिरे क्षितौ लुठिताः। मुमूर्च्छुर्मूर्च्छिताः। रक्तं ववमुर्वमन्ति स्म उद्गिरन्ति स्म। वमु उद्गिरणे। "न शसददवादिगुणानाम्" इत्येत्वाभ्यासलोपप्रतिषेधः। ततृषुस्तृषिताश्च। गुणप्रतिषेधः ॥ ३०

भरतः। तस्तनुरित्यादि। उभये भटा रामरावणसम्बन्धिनः क्षताः सन्तः स्तनन्ति स्म। स्तन मि शब्दे, जज्वलुः कोपेन ज्वलन्ति स्म अर्थात् ज्वलनम् बललिप्सोः। मम्लुः म्लै कान्तिक्षये जग्लुः ग्लै क्षये। लुलुठिरे भूमौ लुठन्ति स्म। मुमूर्च्छुः मोहं गताः, मूर्च्छा संमोहे उच्छ्रये। मुमुहुरिति क्वचित्पाठः। रक्तं ववमुः वमन्ति स्म। टु वमु उद्गिरणे, फलभजेत्यादिना विभाषया एत्वं खिलोपश्च तदभावपक्षे रूपमिदम्। ततृषुः तृष ञि तृषि तृट् पिपासा। तत्रसुरिति पाठे—त्रासं गताः। त्रस भये। उभये इति सङ्घयुक्तमुक्तम् ॥ ३०

অনুবাদ। উভয় পক্ষে বীরগণ পরস্পর ক্ষত হওয়ায় চীৎকার করিতে লাগিল, ক্রোধে জ্বলিয়া উঠিল, তাহাদের অঙ্গপ্রত্যঙ্গ শিথিল ও তাহারা বিবর্ণ হইয়া ভূতলে লুণ্ঠিত হইতে লাগিল, মূর্চ্ছিত ও তৃষ্ণার্ত্ত হইয়া রক্তবমন করিল। ৩০

सम्पातिना प्रजङ्घोऽथ युयुधेऽसौ द्रुमाहतः ।
चकम्पेऽतीव चुक्रोश जीवनाशं ननाश च ॥३१

अन्वयः। अथ प्रजङ्घः सम्पातिना युयुधे, असौ द्रुमाहतः अतीव चकम्पे, चुक्रोश, जीवनाशं ननाश च ॥ ३१

मल्लिनाथः। एवं तुमुलयुद्धमुक्त्वा द्वन्द्वयुद्धमाह—सम्पातिनेति। अथ तुमुलयुद्धानन्तरं प्रजङ्घो नाम राक्षसः सम्पातिना नाम वानरेण सह युयुधे युध्यते स्म। असौ प्रजङ्घो द्रुमाहतोऽतीव चकम्पे, चुक्रोश चक्रन्द, जीवो नष्टो जीवनाशं ननाश। "कर्त्तोर्जीवपुरुषयोर्नशिवहोः" इति णमुल्प्रत्ययः। गतमन्यत्॥ ३१

भरतः। सम्पातिनेत्यादि। प्रजङ्घनामा राक्षसः सम्पातिनाम्ना वानरेण सह युयुधे युद्धं कृतवान्, युध्यौङ् युद्धे। असौ प्रजङ्घः द्रुमैराहतः सन् चकम्पे कम्पितः आसीत्। अतीव अत्यर्थं चुक्रोश शब्दं चकार, क्रुश औ रोदे हृती। जीवनाशं ननाश जीवन् सन् नष्टः। नश् लु यू नाशे कर्त्तृरूपाज्जीवात्रशो णमर्थे णमिति परः। स्वमते जीवनस्य नाशोऽदर्शनं यथाऽऽदिति नामक्रियाविशेषणम्॥ ३१

অনুবাদ। তুমুল যুদ্ধের পর প্রজঙ্ঘ রাক্ষস বানর সম্পাতির সহিত বাহু যুদ্ধ করিতেছিল, পরে সে বৃক্ষাহত হইয়া অতিশয় কম্পন ও রোদন করিতে করিতে প্রাণত্যাগ করিল। ৩১

## उत्खाते नलेनाजौ स्फुरत्प्रतपनाक्षिणी।
## जम्बुमाली जहौ प्राणान् ग्राव्णा मारुतिना हतः॥३२

अन्वयः। नलेन आजौ स्फुरत्प्रतपनाक्षिणी उत्खाते, जम्बुमाली मारुतिना ग्राव्णा हतः (सन्) प्राणान् जहौ॥ ३२

मल्लिनाथः। उदिति। अथ नलेन वानरेण आजौ रणे स्फुरती ये प्रतपनस्य राक्षसस्य अक्षिणी नेत्रे ते उत्खाते उत्खाते उत्पाटिते। स्वमतः कर्मणि लिट्। "गमहन—" इत्यादिनोपधालोपः। जम्बुमाली नाम राक्षसो मारुतिना हनूमता कर्त्रा ग्राव्णा करणेन हतः सन् प्राणान् जहौ तत्याज। जहातेर्लिट्। "आत औ णलः" इत्यौकारादेशः॥ ३२

भरतः। उत्खनाते इत्यादि। नलनाम्ना वानरेणाजौ युद्धे स्फुरतः प्रतपननाम्नो राक्षसस्य अक्षिणी चक्षुषी उत्खनाते उत्खाते, खनुञ् विदारे कर्मणि रूपं "हनगम्" इत्युङ्लोपः। जम्बुमाली राक्षसो मारुतिना हनूमता ग्राव्णा प्रस्तरेण हतः सन् प्राणान् जहौ त्यक्तवान्। औ हा ङ् त्यागे॥ ३२

অনুবাদ। যুদ্ধে নল প্রতপন রাক্ষসের জাজ্বল্যমান চক্ষুর্দ্বয় উৎপাটিত করিল। জম্বুমালী রাক্ষস হনুমানের পাষাণাঘাতে আহত হইয়া প্রাণত্যাগ করিল। ৩২

मित्रघ्नस्य प्रचुक्षोद गदयाङ्गं विभीषणः ।
सुग्रीवः प्रघ[सं]णां ने[भे]हे बहून् रामस्ततर्द च ॥३३

अन्वयः । विभीषणः मित्रघ्नस्य अङ्गं गदया प्रचुक्षोद, सुग्रीवः प्रघणं नेहे, रामः बहून् ततर्द च ॥ ३३

मल्लिनाथः । मित्रेति । विभीषणो मित्रघ्नस्य नाम राक्षसस्याङ्गं शरीरं गदया प्रचुक्षोद संचूर्णयामास । सुग्रीवः प्रघणं नाम राक्षसं नेहे जघान । णह हिंसायाम् । अनुदात्तेत्त्वात्तङ् । रामश्च बहूंस्ततर्द जघान । तर्द हिंसायाम् ॥ ३३

भरतः । मित्रघ्नस्येत्यादि । विभीषणो गदया मित्रघ्नस्य राक्षसस्य अङ्गं प्रचुक्षोद चूर्णयामास, क्षुधो क्षुदिर् क्षुत् संपेषणम् । सुग्रीवः प्रघसं राक्षसं नेभे जघान । णभतुभ ह ङ् चेति चकारात् हिंसे लङ्गी मेरप्यनुबन्धौ । रामश्च बहून् राक्षसान् ततर्द जघान, तर्द हिंसि वदुच धिनादिरे इत्यस्य वा रूपम् ॥ ३३

অনুবাদ। বিভীষণ গদাঘাতে মিত্রঘ্ন রাক্ষসের শরীর চূর্ণবিচূর্ণ করিলেন। সুগ্রীব প্রঘণকে বধ করিলেন, রামচন্দ্রও অনেক রাক্ষস নিহত করিলেন।৩৩

वज्रमुष्टे र्विशिश्लेष मैन्देनाभिहतं शिरः ।
नीलश्चकर्त्त चक्रेण निकुम्भस्य शिरः स्फुरत् ॥३४

अन्वयः । मैन्देन अभिहतं वज्रमुष्टेः शिरः विशिश्लेष, नीलः निकुम्भस्य स्फुरत्शिरः चक्रेण चकर्त्त ॥ ३४

मल्लिनाथः । वज्रेति । मैन्देन वानरेणाभिहतं वज्रमुष्टेर्नाम राक्षसस्य शिरो विशिश्लेष विश्लिष्टम् । नीलो नाम वानरो निकुम्भस्य स्फुरच्चलत् शिरश्चक्रेण चकर्त्त चिच्छेद ॥ ३४

भरतः । वज्रमुष्टेरित्यादि । वज्रमुष्टेः राक्षसस्य शिरो मैन्देन वानरेणाभिहतं सत् विशिश्लेष विश्लिष्टं, श्लिषो य लृजि श्लेषे, विपूर्वः पृथग्भावमाह । नीलो वानरो निकुम्भस्य राक्षसस्य स्फुरत् शिर दीप्तेन चक्रेण चकर्त्त चिच्छेद, कृती छेदने ॥ ३४

অনুবাদ। মৈন্দ বানর কর্তৃক আহত বজ্রমুষ্টি রাক্ষসের মস্তকটী বিযুক্ত হইল, নীলবানর চক্রাস্ত্রের দ্বারা নিকুম্ভ রাক্ষসের কম্পমান মস্তকটী কর্ত্তন করিল। ৩৪

विरूपाक्षो जहे प्राणैस्तृढः सौमित्रिपत्रिभिः ।
वि[प्र]मोचयाञ्चकारासून् द्विविदस्त्वशनिप्रभम् ॥३५

अन्वयः । विरूपाक्षः सौमित्रिपत्रिभिः तृढः प्राणैः जहे, द्विविदः तु अशनिप्रभं असून् विमोचयाञ्चकार ॥ ३५

मल्लिनाथः । विरूपेति । विरूपाक्षो नाम राक्षसः सौमित्रिपत्रिभिर्लक्ष्मणबाणैस्तृढः हिंसितः । तृह हिंसायामिति तौदादिकात् कर्मणि क्तः । ऊदित्वात् "यस्य विभाषा" इति निष्ठायामिट्प्रतिषेधः । ढत्वष्टुत्वढलोपाः । प्राणैः कर्तृभिर्जहे त्यक्तः । जहातेः कर्मणि लिट् । द्विविदस्तु अशनिप्रभं नाम राक्षसमसून् विमोचयाञ्चकार तं जघानेत्यर्थः । अत्र अणि कर्त्तुः कर्मत्वं चिन्त्यम् ॥३५

भरतः । विरूपाक्ष इत्यादि । सौमित्रेः पत्रिभिः बाणैः तृढो हतो विरूपाक्षः प्राणैः जहे त्यक्तः । ओ हा लि त्यागे, कर्मणि तप्, तृह ध ञ हिंसे क्तः, ढो ढः "ढभाक्तयोः" इति ध., "ष्टुभिः" इति ढः, "ढ्लोढि" इति ढलुक् ; तत्र ऋकारवर्जनात् न दीर्घः । द्विविदो वानरः अशनिप्रभ राक्षसम् असून् प्राणान् प्रमोचयाञ्चकार त्याजितवान् । मुच लृ श प औ मोचे ञान्तः । अत्र मुचेर्मोचनपूर्विकायां गतौ वर्त्तमानत्वेन "णौऽणौ ञेः" इत्यादिना प्रयोज्यस्य कर्मत्व योगविभागाद्वा, आपिशलिस्तु "गत्यर्थादिषु कर्मैव नीखाद्यादिषु कर्तृता ।" ॥ ३५

অনুবাদ । লক্ষ্মণের বাণে বিদ্ধ হইয়া বিরূপাক্ষ মরিল । দ্বিবিদ বানর অশনিপ্রভ রাক্ষসের প্রাণ বাহির করিল । ৩৫

गदा शक्रजिता जिघ्ये तां प्रतीयेष वालिजः ।
रथं ममन्थ सहयं शाखिनास्य ततोऽङ्गदः ॥३६

अन्वयः । शक्रजिता गदा जिघ्ये, तां ( गदां ) वालिजः प्रतीयेष, ततः अङ्गदः अस्य ( इन्द्रजितः ) सहयं रथं शाखिना ममन्थ ॥ ३६

मल्लिनाथः । गदेति । शक्रजिता इन्द्रजिता गदा जिघ्ये प्रजिघ्ये प्रहिता प्रयुक्तेत्यर्थः । हिनोतेः कर्मणि लिट् । "हेरचङि" इति कुत्वम् । "परनेकाचः—" इति यणादेशः । तां गदां वालिजोऽङ्गदः प्रतीयेष प्रतिजग्राह । इषेर्लिटि "अभ्यासस्यासवर्णे" इतीयङादेशः । ततो गदाप्रत्येषणानन्तरमङ्गदोऽस्येन्द्रजितः सहयं साश्वं रथं शाखिना वृक्षेण ममन्थ पिपेषेत्यर्थः । मन्थेः क्र्यादिकाल्लिट् ॥ ३६

ভরতः। গদেত্যাদি। ইন্দ্রজিতা গদা ক্ষিপ্তে প্রেষিতা, ক্ষিপ বধনেগতৌ, "হে: ক্লিপকাতিষিঃ" "মুখ্যঃ" ইত্যাদিনা যত্বম্। বালিজোঽঙ্গদঃ তাং গদাং প্রতীষেষ জগ্রাহ, ইষঃ "ইষুগমিযমাং" ইতি হ্রস্। ততোঽনন্তরং শাখিনা বৃক্ষেণ অঙ্গদোঽস্য শক্রজিতঃ সহয়ং রথং মমন্থ চূর্ণিতবান্॥ ৩৬

অনুবাদ। ইন্দ্রজিৎ গদা নিক্ষেপ করিলে অঙ্গদ তাহা ধরিল। তাহার পর অঙ্গদ বৃক্ষের আঘাতে ইন্দ্রজিতের রথ ও অশ্ব চূর্ণ করিল। ৩৬

**तत्कर्म वालिपुत्रस्य दृष्ट्वा विश्वं विसिष्मिये।**
**संवेसू राक्षसाः सर्वे बहु मेने च राघवः॥३७**

অন্বয়ঃ। বালিপুত্রস্য তৎকর্ম্ম দৃষ্ট্বা বিশ্বং বিসিষ্মিয়ে, সর্ব্বে রাক্ষসাঃ সংবেসুঃ, রাঘবঃ চ বহু মেনে॥ ৩৭

**मल्लिनाथः। तदिति। वालिपुत्रस्याङ्गदस्य तत् कर्म दृष्ट्वा विश्वं विसिष्मिये। अशक्यकरणादिति भावः। सर्वे राक्षसाः संवेसुः संत्रस्ताः। स्वनाशस्य कैमुत्यन्यायसिद्धत्वादिति भावः। राघवश्च बहु मेने। कृतसत्त्वादिति भावः॥ ३७**

ভরত। তৎকর্ম্মেত্যাদি। বালিপুত্রস্য অঙ্গদস্য তৎকর্ম্ম গদামথনরূপং দৃষ্ট্বা বিশ্বং ত্রৈলোক্যং বিসিষ্মিয়ে বিস্মিতং, স্মিঙ ঈষদ্ধসনে ইতীত্যঃ। সর্ব্বে রাক্ষসাঃ সংবেসুঃ সংত্রস্তাঃ ত্রস ত্রমীষ ভয়ে, তৃফলেত্যাদিনা এত্বং অভ্যাসলোপশ্চ। রাঘবশ্চ বহু মেনে অঙ্গদং শ্লাঘিতবান্। মন জ্ঞানে, মন্যোঙ্চ॥ ৩৭

অনুবাদ। অঙ্গদের সেই কার্য্য দেখিয়া জগৎ বিস্মিত এবং রাক্ষস সকল উদ্বিগ্ন হইল, রামও তাহার অনেক প্রশংসা করিলেন। ৩৭

**सुग्रीवो मुमुदे देवाः साध्वित्यूचुः सविस्मयाः।**
**विभीषणोऽभितुष्टाव प्रशशंसु प्लवङ्गमाः॥ ३८**

অন্বয়ঃ। সুগ্রীবঃ মুমুদে, দেবাঃ সবিস্ময়াঃ সাধু ইতি ঊচুঃ, বিভীষণঃ অভিতুষ্টাব, প্লবঙ্গমাঃ প্রশশংসুঃ॥ ৩৮

**मल्लिनाथः। सुग्रीव इति। सुग्रीवो मुमुदे पुत्रपौरुषोत्कर्षादिति भावः। देवाः सविस्मयाः सन्तश्चिरामिन्द्रजितमपि जिगायेति विस्मिताः सन्तः साध्वित्यूचुः। वचिस्वपियजादित्वात्संप्रसारणं दीर्घश्च। विभीषणोऽभितुष्टाव स्वयमिन्द्रजिच्छत्रुत्वभिज्ञत्वादिति भावः।**

प्लवङ्गमाः प्रशशंसुः स्ववर्गोत्कर्षादिति भावः । साभिप्रायविशेषणत्वात्परिकरः ॥ ३८

भरत । सुग्रीव इत्यादि । तत्कर्म दृष्ट्वा सुग्रीवो मुमुदे, मुद हर्षे । देवाः साध्वित्यूचिवन्तः, विभीषणोऽभितुष्टाव अभिमुखोभूय स्तुतिं कृतवान । ष्टुञ स्तुतौ णीञः स्तुस्तुमीति षत्वम् । वानराः प्रशशंसुः । शन्सु हिंसास्तुत्योः ॥ ३८

অনুবাদ। সুগ্রীব অলৌকিক পুত্র-কার্য্য দর্শনে আনন্দিত হইল। দেবতারা বিস্ময়ে সাধু সাধু ( ধন্য ধন্য ) বলিলেন। বিভীষণ নিকটে গিয়া স্তব করিলেন। বানরেরা প্রশংসা করিতে লাগিল। ৩৮

हि[ही] चित्रं लक्ष्मणेनोचे रावणिश्च तिरोदधे ।
विचकार ततो रामः शरान् संतत्रसुर्द्विषः ॥३९

अन्वयः । लक्ष्मणेन हि चित्रम् ( इति ) ऊचे, रावणिः च तिरोदधे, ततः रामः शरान् विचकार, द्विषः सन्तत्रसुः ॥ ३९

मल्लिनाथः । हीति । लक्ष्मणेन हि चित्रमिति । 'चित्रं हि विस्मयविषादयोः' इति विश्वः । आभीक्ष्ण्यविवक्षया समानार्थयोः सह प्रयोगः । इत्यूच उदितम् । वचेः कर्मणि लिट् । यजादित्वात् सम्प्रसारणं दीर्घ । रावणिरिन्द्रजिच्च तिरोदधे तिरोहितः । गूढं प्रहर्तुमिति भावः । दधातेः कर्त्तरि लिट् । तङ् । ततो रामः शरान् विचकार विचिक्षेप । कॄ विक्षेपे । लिटि णलि वृद्धिः । द्विषो राक्षसाः सन्तत्रसुः त्रेसुः । "वा जॄभ्रमुत्रसाम्" इति विकल्पादेत्वाभ्यासलोपौ ॥ ३९ ॥

भरत । ही चित्रमित्यादि । ही विस्मये । लक्ष्मणेन चित्रमिदं, कर्मण्यूचे । रावणपुत्रः इन्द्रजित् तिरोदधे मायया अदृश्यो भवति । रावणस्यापत्यमिति "बाह्वादेः" इति इञ् । ततोऽनन्तरं रामः शरान् विचकार विक्षिप्तवान् । कॄश् विक्षेपे । द्विष शत्रवः सन्त्रस्ताः, "तॄफल" इत्यादिना विभाषया एत्वविधानादेव तदभावः ॥ ३९

অনুবাদ। "কি আশ্চর্য্য!" এই কথা লক্ষ্মণ বলিলেন। ইন্দ্রজিৎও অদৃশ্য হইল। তাহার পর রাম উপর্য্যুপরি বাণ বর্ষণ করিলেন। শত্রুগণ উদ্বিগ্ন হইল। ৩৯

विभिन्ना जुघुरुर्घोरं जघ्नुः क्रव्याशिनो हतान् ।
सुस्रोत प्रा[व्र]णिनां रक्तं छिन्नाश्चेलुः सवं भुजाः ४०

अन्वय: । विभिन्ना: ( राक्षसा: ) घोरं जुघुरु:, क्रव्यादिन: हतान् जक्षु:, प्राणिनां रक्तं सुस्रोत, छिन्ना: भुजा: क्षणं चेलु: ॥ ४०

मल्लिनाथ: । विभिन्ना इति । विभिन्ना विदारिता राक्षसा घोरं भीमं जुघुरुश्चुक्रुशुः । घुर भीमार्थशब्दयो: । "कुहोश्चु:" । क्रव्यादिन: शवमांसभक्षका गृध्रगोमायुादयो हतान् राक्षसान् जक्षुर्भक्षयामासु: । "लिट्यन्यतरस्याम्" इत्यदेर्घस्लादेश: । "गम-हन—" इत्यादिनोपधालोप: । "खरि च" इति चर्त्वम् । प्राणिनां रक्तं सुस्रोत । स्रुगतिर् क्षरणे । कर्त्तरि लिट् । स्वरितेत्त्वात्तङ् । छिन्ना भुजा: क्षणं चेलु: छिन्नच्छिन्नगोधापुच्छवत् कम्पिता इत्यर्थ: ॥ ४०

भरत: । विभिन्नेत्यादि । द्विषो रामबाणै: विभिन्ना: सन्तो घोरं जुघुरु: शब्दयाञ्चक्रु: । घुर श ध्वनौ भीमार्थे । क्रव्यादिन: शृगालादयो हतान् द्विषो जक्षु: भक्षितवन्त:, अदन्तौ भवे, "ल्या वा" इति घस्लादेश:, भवे तु घसौ चेत्यस्य वा रूपं, "हनगम" इत्युक् लोप: "झपभकषो:" इति घस्य कत्वे "क्रिलात्" इति प: । प्राणिनां शरै: क्षतानां द्विषां रक्तं सुस्रोत । स्रु गतिर क्षरणे । भुजाश्छिन्ना: सन्त: क्षणं चेलु: । चल गमने ॥ ४०

অনুবাদ । বাণবিদ্ধ রাক্ষসেরা ঘোর ঘুর্ঘুর রব এবং মাংসাশী জন্তুগণ হত রাক্ষসদিগকে ভক্ষণ করিতে লাগিল । শরক্ষত প্রাণিদিগের রক্তস্রোত বহিল । ছিন্ন হস্তগুলি ( মুহূর্ত্তের জন্য ) কিছুক্ষণ নাড়িতেছিল । ৪০

**कृत्तैरपि दृढक्रोधो वीरवक्त्रैर्न तत्यजे ।**
**पलायांचक्रिरे शेषा जिह्रियु: शूरमानिन: ॥ ४१**

अन्वय: । कृत्तै: अपि वीरवक्त्रै: दृढक्रोध: न तत्यजे, शेषा: पलायाञ्चक्रिरे, शूरमानिन: जिह्रियु: ॥ ४१

मल्लिनाथ: । कृत्तैरिति । कृत्तैश्छिन्नैरपि वीरवक्त्रैर्दृढोऽनुबद्ध: क्रोधो न तत्यजे न त्यक्त: । तथाप्योष्ठदष्टभ्रुकुट्याद्यनुवृत्तेरिति भाव: । त्यजे: कर्मणि लिट् । शेषा हतशेषा: पलायाञ्चक्रिरे पलायिता: । अयते कर्त्तरि लिटि तङ् । "दयायासश्च" इत्याम्-प्रत्यय: । "उपसर्गस्यायतौ" इति लत्वम् । शूरमानिन: तत्रापि शूराभिमानिन: । "मन:" इति णिनि: । जिह्रियुर्व्रीडिता: । ह्री लज्जायाम् । भियह्रीयर्थ्वादेश: ॥ ४१

भरतः। कृत्तैरित्यादि। शूराणां मुण्डैः छिन्नैरपि दृढक्रोधो न तत्यजे न त्यक्तः, सन्दष्टाधरमुकुट्यादीनां तथैव विस्फारात्। त्यज हानौ कर्म्मणि रूपम् केचित् पलायाञ्चक्रिरे पलायिताः। 'अयङ् गतौ परापूर्वः'। विंजादि "इत्याम् जीरलः" इत्यत्र योगविभागात् लत्वमभिधानात्। शेषा ये न पलायितास्ते शूरमानिनो जिह्रियुः, ह्रीलज्जे "भृ ह्री"इत्यादिना श्य। शूरम् आत्मानं मन्यत इति यह्रादित्वात् णिन्॥ ४१

অনুবাদ। বীরগণের মুণ্ডগুলি ছিন্ন হইয়াও সেই দৃঢ় ক্রোধ ত্যাগ করিল না। হতাবশিষ্ট রাক্ষসেরা পলায়ন করিল। বীরাভিমানীরা লজ্জিত হইল। ৪১

# राघवोऽन दयांचक्रे दधुर्धैर्य्यं न केचन।
# मम्रे पतङ्गवद्वीरैर्हाहेति च विचुक्रुशे॥ ४२

अन्वयः। राघवः न दयाञ्चक्रे, केचन धैर्य्यं न दधुः, वीरैः पतङ्गवत् मम्रे, हाहेति विचुक्रुशे॥ ४२

**मल्लिनाथः।** राघव इति। राघवो रामो न दयांचक्रे न दयते स्म। निर्दयो ममर्देत्यर्थः। 'दयतेः कर्त्तरि लिटि तङ् "दयायासश्च" इत्याम्प्रत्यये कृञोऽनुप्रयोगः। केचन केचिदपि धैर्य्यं न दधुः न कोऽपि तस्याग्रे स्थातुं शेकुरित्यर्थः। वीरैः पतङ्गवत् शलभवत् मम्रे मृतं न तु केनापि जीवितमित्यर्थः। म्रियतेर्भावे लिट्। हाहेति विचुक्रुशे च दुःखादुच्चैर्विक्रुष्टं च। क्रोशतेर्भावे लिट्॥ ४२

भरतः। राघव इत्यादि। रामो न दयाञ्चक्रे। ञि दय य्रहर्षे गतौ वधे दाने-ऽवने, विंजादीत्याम्। केचित् धैर्य्यं न दधुः भूतवन्तः, सर्व एव व्याकुला इत्यर्थः। डुधाञ् धारणे तसेर्चौत्यालोपः। वीरैः पतङ्गवत् शलभैरिव मम्रे मृतं, मृङ प्राणत्यागे भावे रूपम्। हाहेति च विचुक्रुशे रुदितम्। क्रुशजो रोदे इतौ, भावे रूपम्॥ ४२

অনুবাদ। রাম তখন নির্দ্দয় হইয়া মারিতে লাগিলেন। ধৈর্য্য ধরিয়া কেহ তাঁহার নিকটে থাকিবার যোগ্য ছিল না! বীরেরা পতঙ্গবৎ মরিতে এবং হাহারবে কাঁদিতে লাগিল। ৪২

# तिरोबभूवे सूर्य्येण प्रापे च निशयास्पदम्।
# जग्रसे कालरात्रीव वानरान् राक्षसांश्च सा॥ ४३

अन्वय:। सूर्य्येण तिरोबभूवे, निशया आस्पदं च प्रापे, सा कालरात्रीव वानरान् राक्षसान् च जघसे ॥ ४२

मल्लिनाथ:। तिर इति। सूर्य्येण तिरोबभूवेऽन्तर्दधेऽस्तमितमित्यर्थ:। भुवो भावे लिट्। निशया रात्रया आस्पदं प्रतिष्ठा-स्थिति:। "आस्पदं प्रतिष्ठायाम्" इति निपातनात् सुड़ागम:। प्रापे प्राप्तम्। निशाप्युपस्थितेत्यर्थ:। कर्मणि लिट्। सा निशा कालरात्रीव प्रलयकालरात्रिरिव। "रात्रेश्चाजसौ" इति संज्ञायां ङीप्प्रत्यय:। वानरान् राक्षसांश्च उग्रसे जघास। तस्यां रात्रा-मुभयबलसंहारी महारण: प्रवृत्त इत्यर्थ: ॥ ४२

भरत:। तिर इत्यादि। सूर्य्येण तिरोबभूवे अस्तं गतं, भावे रूपम्। भुवोऽङ्ख्यामिति पक्षे विरङ्। निशया आस्पद स्थानं प्रापे प्राप्तं, कर्म्मणि रूपम्। आङ: पदे सुट् आस्पदं स्थाने प्रभुत्वे चेति पर:, स्वमते मनीषादित्वात्। सा निशा कालरात्रीव वानरान् राक्षमांश्च जघसे भक्षितवती। घस स्वसुङ् भक्षे। कालो यम: तेन प्रयुक्ता रात्रि: कालरात्रि:, शाकपार्थिवादिति पर:। स्वमते सम्बन्धविवक्षया षष्ठीसमास:। पाञ्चोनादीत्यादिना पक्षे ईप् ॥ ४२

অনুবাদ। সূর্য্য অস্তে গেলেন, রাত্রি উপস্থিত হইল। সেই রাত্রিকাল রাত্রির ন্যায় বানর ও রাক্ষসদিগকে গ্রাস করিতে লাগিল ( অর্থাৎ তুমুল সংগ্রামে উভয়পক্ষীয় অনেক সৈন্য মরিল )। ৪৩

**चुकोपेन्द्रजिदत्युग्रं सर्पास्त्रं चाजुहाव सः।**
**आजुहुवे तिरोभूत: परानीकं जहास च ॥ ४४**

अन्वय:। इन्द्रजित् चुकोप, अत्युग्रं सर्पास्त्रं च आजुहाव, तिरोभूत: ( एव ) परानीकम् आजुहुवे, जहास च ॥ ४४

मल्लिनाथ:। चुकोपेति। अथ स इन्द्रजिच्चुकोप। अत्युग्रं सर्पास्त्रं आजुहाव चाहूतवांश्च। "अभ्यस्तस्य च" इति सम्प्रसारणे द्विर्वचनं पश्चात् हुविरादेश:। तिरोभूतोऽन्तर्हित एव परानीकं परबलमाजुहुवे मया सह युध्यस्वेति सस्पर्धमाहूतवान्। "स्पर्धायामाङ:" इति तङ्। पूर्ववत्सम्प्रसारणम्। "लिटस्तझयोरेशिरेच्" इत्येशादेशे उवङादेश:। जहास च मम्मायया हता: स्थेति जहास च ॥ ४४

भरतः । चुकोपेत्यादि । रामपराक्रमदर्शनात् इन्द्रजित् चुकोप । कुप्य इर कोपे । भन्युग्रं सर्परूपमस्त्रम् आजुहाव आह्वतवान् । तिरोभूतः सन् परानीकं शत्रुसैन्यम् आजुहवे स्पर्द्धितवान् । "स्पर्द्धायामाङ्" इति मं, ह्वे ञ स्पर्द्धे शब्दे च उभयत्र "व्ययग्रह" इति कोर्जिः । जहास च हसितवांश्च । हस हासे ॥ ४४

অনুবাদ। ইন্দ্রজিৎ ক্রুদ্ধ হইল এবং অতি ভয়ঙ্কর নাগপাশ অস্ত্র স্মরণ করিল। পরে মেঘের অন্তরালে প্রচ্ছন্নভাবে থাকিয়া শত্রুসৈন্যকে ডাকিতে এবং হাসিতে লাগিল। ( অর্থাৎ আর আমার সঙ্গে যুদ্ধ কর্ বলিয়া ডাকিল এবং আমার মায়ায় তোরা মরিবি বলিয়া হাসিতে লাগিল ) ৪৪

**बबाधे च बलं कृत्स्नं वि[नि] जग्राह च सायकैः ।**
**उत्ससर्ज शरांस्तेऽस्य सर्पसाच्च प्रपेदिरे ॥ ४५**

अन्वयः । कृत्स्नं बलं बबाधे, सायकैः विजग्राह च, शरान् उत्ससर्ज, ते अस्य ( शराः ) सर्पसाच्च प्रपेदिरे ॥ ४५

मल्लिनाथः । बबाध इति । कृत्स्नं बलं बबाधे विलोड़यामास च । बाध्र विलोड़ने । सायकैर्विजग्राह च तुतोदेत्यर्थः । शरानुत्ससर्ज । ते उत्सृष्टाः शराः अस्य परस्य बलस्य सर्पसात् कार्त्स्न्येन सर्पीभूताः । "विभाषा" साति कार्त्स्न्ये" इति सातिप्रत्ययः । प्रपेदिरे सम्प्रापाः ॥४५

भरतः । बबाध इत्यादि । स इन्द्रजित् कृत्स्नं रामबलं बबाधे अभिभूतवान् । बाधृङ विहृतौ । सायकैः शरैः निगृहीतवांश्च । असौ यान् शरान् उत्ससर्ज क्षिप्तवान् । सृजोङ्विसर्गेऽथ सृजौ श चेति चकाराद्विसर्गे । ते शराः अस्य रामबलस्य सर्पसात् सर्पभूता प्रपेदिरे सम्पद्यन्ते स्म । "कार्त्स्न्यायत्योः" इति चमात् । पौ पदङ् गतौ । "तृफल" इति एत्वं खिल्लोपश्च ॥ ४५

অনুবাদ। এবং সমস্ত রামসৈন্যকে বিলোড়িত ও বাণ বর্ষণে জর্জ্জরিত করিল। যে বাণ নিক্ষেপ করিল; সেই বাণগুলি সমস্তই সর্প হইয়া রামসৈন্য সমীপে উপস্থিত হইল। ৪৫

**आचिचाय स तैः सेनामाचिकाय च राघवौ ।**
**बभाषे च न मे मायां जिगायेन्द्रोऽपि किं नृभिः ४६**

अन्वयः । सः सेनाम् तैः आचिचाय, राघवौ च आचिकाय, मे मायाम् इन्द्रः अपि न जिगाय, नृभिः किम् ? इति बभाषे ॥ ४६

मल्लिनाथः । आचिचायेति । स इन्द्रजित् सेनां कपिसेनां तैः सर्पैराचिचाय आचितवान्, राघवौ च आचिकाय आचितवान् । चिनोतेर्लिटि णलि कुत्वायादेशौ । "विभाषा चेः" इति कुत्वविकल्पः । मे मायामिन्द्रोऽपि न जिगाय । "सन्लिटोर्जेः" इति कुत्वम । नृभिर्नरैः किं क्रियत इति शेषः । इति बभाण ॥४६

भरतः । आचिचायेत्यादि । स इन्द्रजित् तैः शरैः रामसेनाम् आचिचाय, राघवौ रामलक्ष्मणौ आचिकाय आच्छादितवान् । चिनचिञ् चित्या "चेः किर्वासन्ल्योः" इति विभाषया किः । एवञ्च बभाण उक्तवान् । रट भण चेति चकारात् शब्दे । किं बभाणेत्याह—मम मायाम् इन्द्रोऽपि न जिगाय, नृभिः मनुष्यैः किं ? न किञ्चित् प्रयोजन-मित्यर्थः । "जेर्गिः सन्ल्योः" इति ग्यादेशः ॥ ४६

অনুবাদ। সে কপিসৈন্য এবং রাম লক্ষ্মণকে সেই সর্পবাণে ছাইয়া ফেলিল এবং "আমার মায়া ইন্দ্রও এড়াইতে পারে না, মানুষের সাধ্য কি ?" এই কথাও বলিল। ৪৬

आचिक्याते च भूयोऽपि राघवौ तेन पन्नगैः ।
तौ मुमुहतुरुद्विग्नौ वसुधायां च पेततुः ॥४৭

अन्वयः । तेन (इन्द्रजिता) भूयः अपि राघवौ पन्नगैः आचिक्याते, तौ उद्विग्नौ मुमुहतुः, वसुधायां च पेततुः ॥ ४৭

मल्लिनाथः । आचिक्यात इति । तेनेन्द्रजितापि भूयोऽपि राघवौ पन्नगैराचिक्याते आचितौ । चिनोतेः कर्मणि लिटि पूर्व-वत्कुत्वम् । तौ राघवावुद्विग्नौ चकितौ मुमुहतुः । मुह वैचित्त्ये । वसुधायां पेततुः पतितौ च । "अत एकहल्—" आदिकार्यम् ॥४৭

भरतः । आचिक्याते चेत्यादि । तेन इन्द्रजिता भूयः पुनरपि पन्नगैः सर्पास्त्रैः राघवौ आचिक्याते आच्छादितौ । कर्मणि चिञो रूपम् । च पादपूरणे वक्ष्यमाणक्रियापेक्षया समुच्चये वा । तौ च तत उद्विग्नौ व्याकुलौ मुमुहतुः मोहं प्रापतुः । मुह्य लृङि वैचित्त्ये । भूमौ च पेततुः पतितौ । पत लृज गत्याम् ॥ ४৭

৪৭। ইন্দ্রজিৎ পুনর্ব্বার রাম লক্ষ্মণকে সর্পবাণে সমাচ্ছন্ন করিল। তাঁহারা ব্যাকুলচিত্ত, মূর্চ্ছিত ও ভূতলে পতিত হইলেন। ৪৭

ततो रामेति चक्रन्दुस्त्रेसुः परिदिदेविरे ।
निशश्वसुश्च सेनान्यः प्रोचुर्धिगिति चात्मनः ॥४৮

अन्वयः। ततः सेनान्यः 'राम इति' चक्रन्दुः, बेसुः, परिदिदेविरे, निशश्वसुः, आत्मनः धिक् इति च प्रोचुः॥ ४८

मल्लिनाथः। तत इति। ततः पातानन्तरं सेनान्यः सुग्रीवादिसेनापतयः। "एरनेकाचः—" इति यणादेशः। रामेति चक्रन्दुश्चुक्रुशुः। बेसुस्त्रस्ताः। गतमेतत्। परिदिदेविरे विलेपुः। देवृ देवने। देवनमत्र परिदेवनम्। निशश्वसुर्दीर्घमुष्णं च निश्वसितवन्तः। आत्मनो धिगिति प्रोचुश्च। आत्मनिन्दां चक्रुरित्यर्थः॥ ४८

भरतः। तत इत्यादि। पतनानन्तरं सेनापतयो नीलादयो रामेति चक्रन्दुः शब्दं चक्रुः। क्रदि रोदने आह्वाने। बेसुः भयं प्रापुः। त्रस्य चलीप भयं। परिदिदेविरे परिदेवनं चक्रुः। देवङ् तु देवने, "ऋभवृयथ्हर्षः" इति खेरेकारस्य ह्रस्व इकारः, "एचो युगस्वम्" इति वचनात्। निशश्वसुः निश्वासं त्यक्तवन्तः। श्वस प्राणने। आत्मनो धिगिति च प्रोचुः उक्तवन्तः। "धिक्समया" इति द्वितीया॥ ४८

অনুবাদ। তাহার পর সেনাপতিগণ "হা রাম হা রাম" বলিয়া কাঁদিতে লাগিল। উদ্বিগ্ন হইয়া বিলাপ ও দীর্ঘ উষ্ণ নিশ্বাস ত্যাগ করিল এবং "আমাদিগকে ধিক্" এই কথা বলিল। ৪৮

**मन्युं शेकुर्न ते रोद्धुं नास्रं संरुरुधुः पतत्।**
**विविदुर्नेन्द्रजिन्मार्गं परीयुश्च प्लवङ्गमाः॥ ४९**

अन्वयः। ते मन्युं रोद्धुं न शेकुः, पतत् अस्रं न संरुरुधुः, इन्द्रजिन्मार्गं न विविदुः प्लवङ्गमाः परीयुः॥ ४९

मल्लिनाथः। मन्युमिति। ते कपीन्द्र मन्युं कोपं [शोकं]रोद्धुं निवारयितुं न शेकुः। पतत् स्रवत् अस्रमस्रु रोद्धुं रुरुधुः शेकुरित्यर्थः। इन्द्रजितो मार्गं न विवदुः। अनेन मार्गेण गत इति न निश्चिक्युरित्यर्थः। प्लवङ्गमाः परीयुः समन्तात् गतवन्तः, क्वासौ अगमदिति॥ ४९

भरतः। मन्युमित्यादि। ते वानरसेनान्यः मन्युं शोक रोद्धुम् आवरीतुं न शेकुः न शक्ताः। शक्लृ शक्तौ, रुधिर्धो लिङ् आहतौ। पतदस्रं रोदनजलं न संरुरुधुः न वारितवन्तः। इन्द्रजितो मार्गं पन्थानं न विविदुः न जानन्ति स्म, कुतो गत इति। विदन्तमतौ प्लवङ्गमाः परीयुः सर्वतो गताः क्वासावगमदिति। इण गतौ॥ ४९

অনুবাদ। সেই বানরগণ শোক (বা ক্রোধ) এবং গলৎ অশ্রু নিবারণ করিতে পারিল না। ইন্দ্রজিৎ কোন্ পথে কোথায় গেল, তাহা জানিতে পারিল না এবং তাহার অনুসন্ধানার্থ ইতস্ততঃ ধাবিত হইল। ৪৯।

দধাবাম্ভিস্ততশ্চক্ষুঃ সুগ্রীবস্য বিভীষণঃ।
বিদাংচকার ধৌতাক্ষঃ স রিপুং খে ননর্দ চ ॥ ৫০

অন্বয়ঃ। ততঃ বিভীষণঃ সুগ্রীবস্য চক্ষুঃ অম্ভিঃ দধাব, ধৌতাক্ষঃ সঃ (সুগ্রীবঃ) রিপুং খে বিদাঞ্চকার ননর্দ চ ॥ ৫০

মল্লিনাথঃ। দধাবেতি। তত উক্তোপদ্রবানন্তরং বিভীষণঃ সুগ্রীবস্য চক্ষুঃ অম্ভিরভিমন্ত্রিতোদকৈর্দধাব পরিমমার্জ। ধাবু গতিশুদ্ধ্যোঃ। অথ ধৌতাক্ষঃ স সুগ্রীবঃ খে রিপুং বিদাঞ্চকার বিবেদ দদর্শেত্যর্থঃ। ননর্দ জগর্জ চ ॥ ৫০

ভরতঃ। দধাবেত্যাদি। ততোঽনন্তরং বিভীষণঃ সুগ্রীবস্য চক্ষুঃ অম্ভির্জলৈঃ দধাব প্রক্ষালিতবান্। ধাবুঞ্ জবে শুদ্ধৌ। সুগ্রীবঃ ধৌতাক্ষঃ প্রক্ষালিতচক্ষুঃ সন্ খে আকাশে স্থিতং রিপুম্ ইন্দ্রজিতং বিদাঞ্চকার জ্ঞাতবান্। "ভাম্ বা আম্" ইতি আম্। ননর্দ চ কুতেদানীং যাস্যসীতি। নর্দ শব্দে ॥ ৫০

অনুবাদ। তাহার পর বিভীষণ সুগ্রীবের চক্ষুর্দ্বয় জল দিয়া ধুইয়া দিলেন, তখন সে ধৌতনেত্রে জানিতে পারিল যে, ইন্দ্রজিৎ শূন্যে রহিয়াছে। (অগ্নি কোথায় যাইবে বলিয়া) গর্জ্জন করিতে লাগিল। ৫০

উজ্জুগূরে ততঃ শৈলং হন্তুমিন্দ্রজিতং কপিঃ।
বিভা [হা] য রাবণিস্তস্মাদানংহে চান্তিকং পিতুঃ ৫১

অন্বয়ঃ। ততঃ কপিঃ ইন্দ্রজিতং হন্তুং শৈলম্ উজ্জুগূরে, রাবণিঃ তস্মাৎ বিভায় পিতুঃ অন্তিকম্ আনংহে ॥ ৫১

মল্লিনাথঃ। উদিতি। তত ইন্দ্রজিদ্দর্শনানন্তরং কপিঃ সুগ্রীব ইন্দ্রজিতং হন্তুং শৈলমুজ্জুগূরে উৎক্ষিপ। গুরী হিংসাগত্যোরিতি দৈবাদিকাল্লিট্। রাবণিরিন্দ্রজিৎ তস্মাৎকপের্বিভায় পিতু রাবণস্যান্তিকমানংহে জগাম। অহি গতৌ। লিট্। "অত আদেঃ" ইত্যভ্যাসদীর্ঘঃ। "তস্মান্নুড্ দ্বিহলঃ" ইতি নুডাগমঃ ॥ ৫১

ভরতঃ। উজ্জুগূর ইত্যাদি। ততোঽনন্তরং কপিঃ সুগ্রীবঃ ইন্দ্রজিতং হন্তুং শৈলম্

उपजुगूहे उपश्लिष्टवान्। गूहौ य ङ् वधे गत्याम् उपपूर्वं उपश्लेषणेऽपि वर्त्तते, शिशुरङ्क उपम इत्यसौ तु कस्मैपदः। रावणपुत्रः तस्मात् विभाय भयं प्राप। ञिभीति भीत्याम्। भीतः सन् पितुः अन्तिकं समीपम् आगतः गतः। अपक्रतौ, "आन्तादात्" इति धरान्। विभायेत्यत्र विह्वायेति पाठे युक्तं त्यक्त्वा तस्मात् आकाशात् पितुरन्तिकमानञ्च इत्यर्थः॥ ५१

অনুবাদ। তাহার পর সুগ্রীব ইন্দ্রজিৎকে মারিবার জন্য প্রস্তর নিক্ষেপ করিল। তাহাতে রাবণ পুত্র ভয় পাইল এবং পিতার নিকটে গমন করিল। ৫১

# आचचक्षे च वृत्तान्तं प्रजहर्ष च रावणः।
# गाढं चोपजुगूहैनं शिरस्युपशिशिङ्घ च ॥५२

अन्वयः। (सः) च वृत्तान्तम् आचचक्षे, रावणः च प्रजहर्ष, एनं गाढम् उपजुगूह च, शिरसि उपशिशिङ्घ च॥ ५२

**मल्लिनाथः। आचचक्ष इति। वृत्तान्तं नागपाशवृत्तान्तमाचचक्षे आख्यातवान्। रावणः प्रजहर्ष प्रहृष्टश्च। एवं पुत्रं गाढमुपजुगूह आलिलिङ्ग च। "ऊदुपधाया गोहः" इत्युत्वम्। शिरस्युपशिशिङ्घ आघ्रातवांश्च। शिघि आघ्राणे। इतित्वानुम्॥ ५२**

भरतः। आचचक्षेत्यादि। स इन्द्रजित् रामबन्धनरूप वृत्तान्तम् आचचक्षे पितरम् इत्यर्थात्, चक्षङ् ल वर्दे, "वाऽसरूपो वा" इति पक्षे क्शाङ्ख्याजादेशाभावः। रावणश्च प्रजहर्ष प्रकृष्ट हर्षं प्राप। हृष्यत्ति इत्यर्थौ। एनं पुत्रं गाढम् उपजुगूह च आलिङ्गितवांश्च, गुहस्य आवरण संवृतौ उपपूर्वं आलिङ्गनमाह—"गुहो गोहः"इति दीर्घत्वम्। शिरसि उपशिशिङ्घ च आघ्रातवांश्च संहर्षविस्फारोऽयम्। शिघि आघ्राणे॥ ५२

অনুবাদ। এবং নাগপাশ বন্ধন বৃত্তান্ত পিতাকে বলিল, রাবণ তাহাতে সন্তুষ্ট হইল এবং পুত্রকে প্রগাঢ়রূপে আলিঙ্গন ও তাহার মস্তক আঘ্রাণ করিল। ৫২

# ध्वजानुद्दुधुवुस्तुङ्गान् मांसं चेमुर्जगुः पपुः।
# कामयांचक्रिरे कान्तास्ततस्तुष्टा निशाचराः ॥५३

अन्वयः। ततः निशाचराः तुष्टाः (सन्तः) तुङ्गान् ध्वजान् उद्दुधुवुः, मांसं चेमुः, जगुः, पपुः, कान्ताः कामयाञ्चक्रिरे॥ ५३

**मल्लिनाथः। ध्वजानिति। ततो नागपाशबन्धश्रवणानन्तरं निशाचरास्तुष्टाः सन्तस्तुङ्गान् ध्वजानुद्दुधुवुः उच्चिक्षिपुः, धू विधं-**

नने। मांसं चेमुर्जक्षुः। चमु अदने। "अत एकहल्—" इत्ये-त्वादि। जगुर्गायन्ति स्म। पपुर्मधून्यपिबन्। कान्ताः कामिनीः कामयाञ्चक्रिरे रेमिर इत्यर्थः। कमेर्णिङ्न्तात्लिटाम्प्रत्यये कृञो-ऽनुप्रयोगी तङ्॥ ५३

भरतः। ध्वजानित्यादि। निशाचरा अपि रामबन्धनात् तुष्टाः सन्तः तुङ्गान् ध्वजान् उच्छुश्रुवुः उत्क्षिप्तवन्तः। धुञ शिक् कम्पने धुञिकम्पे काधूनसि, धूञ चेत्यस्य वा रूपम्। मांसं चेमुः भक्षितवन्तः, चमूचमछमजमजिमक्षमु भत्ते। जगुर्गानं कृतवन्तः। गै गाने, पपुः मद्यादिकं पीतवन्तः। पा पाने। कान्ता: कामयाञ्चक्रिरे कामितवन्तः। कमुकङ् स्पृहि, "णाऽरे"इति णिचकोऽपि। णामलनादाम्॥ ५३

অনুবাদ। তাহার পর রাক্ষসেরা সন্তুষ্ট হইয়া অত্যুচ্চ ধ্বজা তুলিয়া দিল এবং মাংস ভোজন, গান, মদ্যাদি পান করিতে লাগিল, ও কামিনী কামনা করিল। ৫৩

**दर्शयांचक्रिरे रामं सीतां राज्ञश्च शासनात्।**
**तस्या मिमीलतुर्नेत्रे लुलुठे पुष्पकोदरे॥ ५४**

अन्वयः। राज्ञः शासनात् सीतां रामं दर्शयाञ्चक्रिरे, तस्याः नेत्रे मिमीलतुः, (सा) पुष्पकोदरे लुलुठे॥ ५४

मल्लिनाथः। दर्शयामिति। राज्ञो रावणस्य शासनात् सीतां सीतया रामं दर्शयाञ्चक्रिरे। सीतां पुष्पकमारोप्य रणे पतितं रामं दर्शितवन्तस्तेत्यर्थः। तद्दर्शनात् सा रामनिराशा स्ववशमेष्य-तीति दुराशयेति भावः। अभिवादिदृशोरात्मनेपद उपसंख्याना-दणिकर्त्तुर्वा कर्म्मत्वम्। तदेतदस्माभिर्घण्टापथे 'स सन्ततं दर्शयते गतस्मयः' इत्यत्र यथाभाष्यं सम्यग्विवेचितमिति नात्र भरः कृतः। तस्या नेत्रे मिमीलतुर्मीलिते। पुष्पकस्योदरेऽभ्यन्तरे लुलुठे लुठित-वती॥ ५४

भरतः। दर्शयामित्यादि। तादृशं पतिं दृष्ट्वा सीता ममानुकूला स्यात् इत्यभिप्रायं कुर्वंती राज्ञः रावणस्य शासनात् आज्ञया राक्षसाः पुष्पके आरोप्य सीतां रामं दर्शितवन्तः। णौऽणौरित्यादिना प्रयोज्यस्य कर्मत्वम्। तस्याः सीतायाः नेत्रे मिमीलतुः मुद्रणं प्रापतुः। मील निमेषे। सीता पुष्पकरथमध्ये लुलुठे पतिता। लुलुठङ् प्रतीघाते॥ ५४

অনুবাদ। রাজার আদেশে রাক্ষসেরা সীতাকে (পুষ্পকরথে তুলিয়া নাগপাশবদ্ধ অবস্থায়) রামকে দেখাইল। তাঁহার চক্ষুর্দ্বয় নিমীলিত হইল

এবং রথমধ্যে পড়িয়া তিনি গড়াইতে লাগিলেন ( অর্থাৎ চক্ষু দুইটী বুজিয়া আসিল তখন রথমধ্যে লুণ্ঠিত হইতে লাগিলেন )। ৫৪

प्राणा दध्वंसिरे गात्रं तस्तम्भे च प्रिये हृते।
उच्छ्वास चिराद्दीना रुरोदासौ रराम च ॥५५

अन्वय:। प्रिये हृते [ सति ] प्राणा: दध्वंसिरे, गात्रं च तस्तम्भे, चिरात् उच्छ्वास, असौ दीना रुरोद, रराम च ॥ ५५

मल्लिनाथ:। प्राणा इति। प्रिये हृते सति प्राणा दध्वंसिरे ध्वस्ता:। गात्रं तस्तम्भे स्तब्धं च, निस्पन्दं जातं चेत्यर्थ:। स्तम्भु प्रतिबन्धे। लङ्। चिरादुच्छ्वास उज्जिजीव। अथासौ दीना अनाथा सती रुरोद अश्रूणि मुमोच रराम विललाप च ॥ ५५

भरत:। प्राणा इत्यादि। प्रिये रामे हृते सति तस्या: प्राणा दध्वंसिरे ध्वस्ता:। ध्वन्सु ध्वन्स् गतौ भ्रंशे। गात्रञ्च तस्तम्भे काष्ठवत् निश्चलमभूत्। स्तम्भिङ् स्तम्भे। चिरादुच्छ्वास श्वासं प्रवृत्तवती। श्वस च लु प्राणने। ततो दीना दु:खिता रुरोद क्रन्दितवती। रुद रोदे। रराम च वक्ष्यमाणं विलापं चकार। रस शब्दे ॥ ५५

অনুবাদ। প্রিয় রাম নিহত হওয়ায় সীতার প্রাণবায়ু ( যেন ) ধ্বংসপ্রাপ্ত হইল, গাত্র কাষ্ঠবৎ নিশ্চল ( অসাড় ) হইতে লাগিল। তিনি বহুক্ষণ পরে নিশ্বাস ফেলিলেন এবং দুঃখিত হইয়া রোদন ও বিলাপ করিতে লাগিলেন।৫৫

लौ[लो]हबन्धैर्बबन्धे नु वज्रेण किं विनिर्ममे।
मनो मे न विना रामाद्यत्पुस्फोट सहस्रधा ॥५६

अन्वय:। मे मन: लौहबन्धै: बबन्धे नु ? वज्रेण विनिर्ममे किं ? यद् रामात् विना सहस्रधा न पुस्फोट ॥ ५६

मल्लिनाथ:। लौहैरिति। मे मनो लौहैरायसैर्बन्धैर्बबन्धे बद्धम्। कर्म्मणि लिट्। वज्रेणायुधेन विनिर्ममे नु विनिर्म्मितं किम्। माङ: कर्म्मणि लिट्। यद्यस्माद्रामात् विना रामेण विनाभूतमपि। "पृथग्विना—" इत्यादिना पक्षे पञ्चमी। सहस्रधा न पुस्फोट न विददे। अतो लौहबद्धं वज्रमयं वा नूनमन्यथा विदीर्य्येतेत्यर्थ: ॥ ५६

भरत:। लौहबन्धैरित्यादि। लौहविकारै: बन्धै: मे मम मन: किं बबन्धे बद्धम् यथा

विधाता। ग्रन्थौ म, ग्रन्थक्, ग्रथक्, ग्रन्थे। म धिनर्क्ते। किं वा वज्रेण निर्मितम्। मा त्व माने कर्म्मणि रूपद्वयम। यस्मात् रामेण विना मद्धृदयं सहस्रधा न स्फुटितं, स्फुटिर्विसर्ग्गे, विश्लेषो रहितार्थः, "सङ्ख्याया" इति पञ्चमी। "संख्याया धीच् प्रकारे" इति धाच्॥ ५६

অনুবাদ। যে হেতু রামবিহীন হইয়াও সহস্র খণ্ডে বিভক্ত হইল না তবে কি বিধাতা আমার মনকে লৌহবন্ধনে আবদ্ধ করিয়াছেন? না বজ্রের দ্বারা নির্ম্মিত করিয়াছেন? ৫৬

उत्तेरिथ समुद्रं त्वं
मदर्थेऽरीन् निजघ्निथ[जिहिंसिथ]।
ममार[ममर्थ] चातिघोरां मां
धिग्जीवितलघूकृताम्॥ ५७

अन्वय। मदर्थे त्वं समुद्रम् उत्तेरिथ, अरीन् निजघ्निथ, ममार च, (तथापि) जीवितलघूकृताम् अतिघोरां च मां धिक्॥ ५७

मल्लिनाथः। उदिति। मदर्थे मम कृते त्वं समुद्रमुत्तेरिथ उत्तीर्णोऽसि। तरतेर्लिटि थलि इडागमे "थलि च सेटि" "तॄफल-भजत्रपश्च" इत्येत्वाभ्यासलोपौ। अरीन् निजघ्निथ जिहिंसिथ। हन्तेर्लिटि थलि "गमहन—" इत्यादिनोपधालोपः। ममार च मृतश्चासि। मृङ् प्राणत्यागे। लुङ्लिङ्विषयादन्यत्र "म्रियतेः कर्त्तरि प्रस्मैपदम्"। तथापि जीवितेन जीवनेन लघूकृतां तुच्छीकृतामत एवातिघोरामतिक्रूरां मां धिक् गर्हे॥ ५७

भरतः। उत्तेरिथेत्यादि। हे प्रिय। मदर्थे मत्प्रयोजननिमित्तं त्वं समुद्रम् उत्तीर्णवान्, तॄ तरेऽभिभवे प्लुत्यां, "तॄफल" इति अत एत्वं भिन्लोपश्च, "वृतो वेम" इत्यत्र "अठौद्दीपमे:" इत्युक्तेरिमो दीर्घाभावः। अरीन् निजघ्निथ हतवानसि। हन लौ गतौ वधे, "सृजदृशः च पानास्वत:" इति पक्षे इम्, "हनगम" इत्यादौ अणाविन्यस्य क्वचिद्व्यभिचारादङो लोपः। जिहिंसिथेति पाठे हिंसि ध कि हिंसे इत्यस्य रूपम्। ममर्थ च मृतोऽप्यसि। मृङ् मृतौ, "सृक्रष्टौक्ते मम्" इति नियमादत्रत पं, "नेमृतस्यपोऽपृष्कु:" इत्यनेन "नेमसम्" इत्यादिना प्राप्त इम् प्रतिषिध्यते। मदर्थे इति सर्वत्र योज्यम्। अतोऽतिघोरां स्वामिघातकत्वेन मां धिक् जीवनेन लघूकृता स्वामिनाशेऽपि जीवनाल्लघुत्वम्॥ ५७

অনুবাদ। তুমি আমার জন্য সমুদ্র পার হইলে, শত্রু বধ করিলে, এবং নিজে মরিলে, তথাপি জীবন গেল না. অতএব অসার পতিঘাতিনী আমাকে ধিক্। ৫৭

**न जिजीव[वा] सुखी तातः प्राणता रहितस्त्वया।**
**मृतेऽपि त्वयि जीवन्त्या किं मयाऽऽणकभार्यया॥ ५८**

अन्वयः। तातः (दशरथः) प्राणता त्वया रहितः न जिजीव (अतः) सुखी, त्वयि मृते अपि जीवन्त्या मया आणकभार्यया किम्? ५८

मल्लिनाथः। नेति। तातो दशरथः प्राणता जीवता त्वया रहितो न तु मृतेन। अन प्राणने। लटः शत्रादेशः। तथापि न जिजीव। अतः सुखी। त्वयि मृतेऽपि जीवन्त्या अत एव आणक-भार्यया कुत्सितकलत्रेण। 'कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः' इत्यमरः। "पापाणके कुत्सितैः" इति समासः। मया किं प्रयोजनम्। त्वां विना जीवतोऽपि मृत एव धन्य इति भावः॥ ५८

भरतः। न जिजीवेत्यादि हे प्रिय। प्राणता जीवतापि त्वया रहितः सन् वियुक्तः सन् मम तातो दुःखितो न जीवितवान्। जीव च प्राणने। त्वयि मृतेऽपि जीवन्त्या आणक-भार्यया कुत्सितभार्यया मया किं प्रयोजनम्? इत्युक्त्वा रराम चेति पूर्वेण सम्बन्धः। "कुपूय-कुत्सितावद्यखेटगर्ह्याणकाः समाः" इत्यमरः॥ ५८

অনুবাদ। তুমি জীবিত থাকিতেও পিতা দশরথ তোমার অভাবে বাঁচিলেন না সুতরাং তিনি সুখী, কিন্তু তুমি মরিলে অথচ আমি জীবিতা অতএব আমার ন্যায় কুভার্যার জীবনে প্রয়োজন কি? । ৫৮

**सा जुगुप्सांप्रचक्रेऽसून्**
**जगर्हे लक्षणानि च।**
**देहभाञ्जि मुहुः[ततः] केशान्**
**लुलुञ्च लुलुठे तथा[मुहुः]॥ ५९**

अन्वयः। सा असून् जुगुप्सांप्रचक्रे, देहभाञ्जि लक्षणानि च मुहुः जगर्हे, केशान् लुलुञ्च, तथा लुलुठे॥ ५९

मल्लिनाथः। सेति। सा सीता असून् प्राणान् जुगुप्साञ्चक्रे जुगुप्सितवती। गुपेः सन्नन्तात्क्रियाम्प्रत्यये कृञोऽनुप्रयोगः। प्रोप-सर्गव्यवधानं तु उपसर्गस्य धात्वर्थाभिव्यञ्जकस्य धातुशरीरान्तः-पतितत्वान्न दोषः इत्युक्तं प्राक् उक्षांप्रचक्रुः इत्यत्र। केचित्

जुगुप्सन्त इति जुगुप्सान् गर्ह्यानिति जुगुप्सधातोर्घञि प्रसक्तपाठं कल्पयन्ति। देहभाञ्जि देहस्थानि लक्षणानि भाग्यचिह्नानि च मुहुर्जगर्हे वैयर्थ्यादिति निनिन्द। केशान् शिरोरुहान् लुलुञ्च लुलाव। अवनौ लुलुठे परिलुलुठे॥ ५९

भरत:। सैत्यादि। सा सीता प्राणान् निनिन्द प्रियेण विना अवस्थानात्। गुपू ङ् गोपनकुत्सनयोः, "तिजगुप" इति सन्, इमोऽभावश्च। क्रमादित्याद्यादिना अर्थनिन्दार्थ-नियमः, आत्मनेपदम्, सोपसर्गस्य क्रमोऽनुप्रयोगः। किं वा जुगुप्साधात्वनि निन्दां प्रचक्रे। "संख्यादः" इति च:। अमून् लक्षणानि च जगर्हे इत्यनेनान्वयः। देहस्थितानि अवैधव्य-चिह्नानि निन्दितवती। गर्हङ् कुत्सने। मुहुः वारंवारं केशानुत्पाटितवती। लुञ्चापनयने गती, तथा लुलुठे पतिता॥ ५९

অনুবাদ। তিনি নিজের জীবনকে ধিক্কার দিলেন এবং দেহস্থ অবৈধব্য সূচক চিহ্নগুলির পুনঃ পুনঃ নিন্দা করিলেন, কেশগুলি উৎপাটন করিলেন এবং ভূতলে লুন্ঠিত হইতে লাগিলেন। ৫৯

जग्लौ दध्यौ वितस्तान क्षणं प्राण न विव्यथे।
देवं निनिन्द चक्रन्द दंदहे चातीव मन्युना॥ ६०

अन्वयः। सा जग्लौ, दध्यौ, वितस्तान, क्षणं न प्राण, विव्यथे, देवं निनिन्द, चक्रन्द, मन्युना च अतीव दंदहे॥ ६०

मल्लिनाथः। जग्लाविति। जग्लौ शोकात् ग्लाना। दध्यौ चिन्तयामास। वितस्तान दुःखात्कमपि कण्ठध्वनिं सन्ततान। स्तन शब्दे। क्षणं न प्राण न जिजीव मुहुर्मुहुर्मूर्च्छेत्यर्थः। अन प्राणने। लिट्। "अत आदेः" इत्यभ्यासदीर्घः। विव्यथे लब्ध-संज्ञापि व्यथितवती। व्यथेर्लिट्। "लिट्यभ्यासस्योभयेषाम्" इत्य-भ्यासस्य सम्प्रसारणम्। देवं निनिन्द। चक्रन्द विललाप। मन्युना शोकाग्निना अतीवात्यन्तं दंदहे दग्धा। दहेः कर्मणि लिट्। "अत एकहल्—" इत्येत्वादिकार्य्यम्॥ ६०

भरत:। जग्लावित्यादि। सा जग्लौ ग्लानिं प्राप, ग्लै क्षये। दध्यौ चिन्तितवती, ध्यै चिन्तने। वितस्तान शब्दं चक्रे। स्तन मि शब्दे। क्षणं न प्राण मूर्च्छया निस्पन्दत्वात् जीवितवती, अन ष् लु प्राणने। "प्राग्वती ष:" इत्यादिना पाक्षिक णत्वम्! विव्यथे लब्धसंज्ञा सती दुःखं प्राप, व्यथ ष स ङ दुःखे चाले, "व्यथयह" इति सेर्जिः देवं निनिन्द निन्दितवती। णिदि कुत्सने। चक्रन्द, रुरोद, मन्युना शोकेन अत्यर्थं दंदहे दग्धा। दहो दाहे, कर्मणि अप्रम्॥ ६०

অনুবাদ। সীতা শোকে ম্লান ও চিন্তিতা হইলেন, দুঃখে আর্ত্তনাদ করিতে লাগিলেন, মুহুর্মুহু মূর্চ্ছিত ও মূর্চ্ছান্তে ব্যথিত হইলেন। অদৃষ্টনিন্দা ও ক্রন্দন আরম্ভ করিলেন শোকানলে অতিশয় দগ্ধ হইতে লাগিলেন। ৭০

**आश्वासयांचकाराथ त्रिजटा तां निनाय च।**
**ततः प्रजागरांचक्रुर्वानराः सविभीषणाः॥ ६१**

अन्वयः। अथ त्रिजटा तां आश्वासयाञ्चकार निनाय च, ततः सविभीषणाः वानराः प्रजागराञ्चक्रुः॥ ६१

**मल्लिनाथः। आश्वासयामिति। अथ सीताविलापानन्तरं त्रिजटा नाम काचित्तां सीतामाश्वासयाञ्चकार तामाश्वस्य निनायान्यतो नीतवती। ततः सविभीषणा वानराः प्रजागराञ्चक्रुः जजागरुः। जागृ निद्राक्षये। लिट्। "उषविदजागृभ्योऽन्यतरस्याम्" इत्यामप्रत्ययः॥ ६१**

भरतः। आश्वासयामित्यादि। अथानन्तरं, रावणस्य भगिनी त्रिजटा राक्षसी तां सीताम् आश्वासयाञ्चकार, तव प्रियो न मृत इति अशोकवनिकां नीतवती च। ततोऽनन्तरं विभीषणेन सह वानरा जाग्रति स्म। राघवयोः रक्षार्थमालोकयाञ्चक्रुरित्यर्थः। जागृ च जागरे "दयायासश्च" इति पाक्षिक आम्॥ ६१

অনুবাদ। অনন্তর রাবণভগিনী ত্রিজটা সীতাকে (রাম মরেন নাই বলিয়া) আশ্বাস দিল এবং অশোকবনে লইয়া গেল, তাহার পর বানরেরা বিভীষণের সহিত জাগরিত হইল। ৭১

**चिचेत रामस्तत्कृच्छ्रमोषाञ्चक्रे शुचाथ सः।**
**मन्युश्चास्य समापिप्ये विरुराव च लक्ष्मणम्॥ ६२**

अन्वयः। रामः तत् कृच्छ्रं चिचेत; अथ सः शुचा ओषाञ्चक्रे, अस्य मन्युः च समापिप्ये लक्ष्मणं विरुराव च॥ ६२

**मल्लिनाथः। चिचेतेति। रामस्तत्कृच्छ्रं पाशबन्धदुःखं चिचेत जज्ञौ। अथ ज्ञानानन्तरं स रामः शुचा शोकाग्निना ओषाञ्चक्रे दग्धः। उष दाहे। कर्मणि लिट्। "उषविद—" इत्यादिना विकल्पादामप्रत्ययः। अस्य रामस्य मन्युः शोकः समापिप्ये ववृधे। प्यै प्यायी वृद्धौ। लिट्। "प्यायः पीः" इति पीभावे द्विर्भावः।**

"एरनेकाचः—"इति यणादेशः। लक्ष्मणं प्रति विरुराव विललापेत्यर्थः॥ ६२

भरतः। चिचेतेत्यादि। रामः तत् लक्ष्मं नागपाशबन्धनरूपं चिचेत ज्ञातवान्। चिती संज्ञाने। अथानन्तरं शुचा शोकेन स रामः शोषाञ्चक्रे दग्धः। उषु दाहे। "दरिद्राकासकासः" इत्याम्। अस्य रामस्य मन्युः शोकः समाप्ये संवृद्धः। श्री प्यायी ङ् वृद्धौ "प्यायः पीयेङ्ख्योः। लक्ष्मणञ्च विरुराव आहूतवान्। रु ल ध्वनौ॥ ६२

अनुवाद। রাম সেই পাশ বন্ধন জানিতে পারিয়া শোকে দগ্ধ হইতে লাগিলেন, তাঁহার শোক বাড়িল, অমনি লক্ষ্মণের জন্য বিলাপ করিতে লাগিলেন। ৬২

**समी[हे]षे मर्त्तुमानर्चे तेन वाचाखिलं बलम्।**
**आपपृच्छे च सुग्रीवं स्वं देशं विससर्ज च॥ ६३**

अन्वयः। तेन (रामेण) मर्त्तुं समीषे, अखिलं बलं वाचा आनर्च, सुग्रीवम् च आपपृच्छे, स्वं देशं विससर्ज च॥ ६३

मल्लिनाथः। समिति। तेन रामेण मर्त्तुं प्राणांस्त्यक्तुं समीषे इष्यते स्म। इषेरविवक्षिते कर्मणि भावे लिट्। अखिलं बलं वाचा प्रियोक्त्या आनर्चे अर्चितम्। अर्चेर्भौवादिकात्कर्मणि लिट्। "अत आदेः" इत्यभ्यासदीर्घे "तस्मान्नुड् द्विहलः" इति नुडागमः। सुग्रीवमापपृच्छे आपृष्टवान् परलोकयात्रां निश्चित्य आमन्त्रितवानित्यर्थः पृच्छतेः कर्त्तरि लिट्। आङि नुप्रच्छयोरुपसंख्यानात्तङ्। स्वं देशं प्रति विससर्ज किष्किन्धां गच्छेत्यादिष्टवानित्यर्थः॥ ६३

भरतः। समीहे इत्यादि। तेन रामेण मर्त्तुं समीहे समीहितम्। ईहङ चेष्टे भावे रूपं, कर्त्तरि इत्यन्य, "गुर्विजाद्"गमोऽनित्यत्वं ये वदन्ति तन्मते रूपमिदं, समीहे ईहिवे समीहिरे इत्यादयश्चिन्त्या इति केचित्, ऋषिवचनादिति केचित्। न्यासकृदादयोऽपि गुर्विआदेरामोऽनित्यत्वमाहुः। समीषे इति पाठे इषु श वाञ्छे। तेन रामेण वाचा बलम् आनर्चे पूजितं,मतान्तरे भवद्भिः किं न कृतं? महाग्यात् तु सर्वं निष्फलमभूदिति। अर्चक् पूजे अर्चयति चकारात् पूजे, "स्वाम्लादादि" इति स्वेरान् कर्मणि रूपम्। रामः सुग्रीवम् आपपृच्छे आमन्त्रितवान्, एहि मित्र! मां परित्यज्यस्वेति प्रच्छी श ज्ञीप्से, "विपराजि" इति तं, "त्वां न वेप्रच्छाम्"इति जिनिषेधः। स्वदेशं किष्किन्ध्यां विससर्ज सुग्रीवं प्रस्थापयितुमारेभे इत्यर्थः। सृजी श च विसर्गे॥ ६३

অনুবাদ। তিনি মৃত্যু ইচ্ছা করিলেন, প্রিয়বাক্যে সমস্ত সৈন্যের সম্মান প্রকাশ করিলেন। মৃত্যু নিশ্চয় বুঝিয়া সুগ্রীবকে ডাকিলেন এবং স্বর্গে যাও বলিয়া বিদায় দিলেন। ৬৩

**आदिदेश स किष्किन्ध्यां राघवौ नेतुमङ्गदम्।**
**प्रतिजज्ञे स्वयं चैव सुग्रीवो रक्षसां वधम्॥ ६४**

अन्वय:। स: सुग्रीव: राघवौ किष्किन्ध्यां नेतुं अङ्गदम् आदिदेश, रक्षसां वधं च स्वयं प्रतिजज्ञे च॥ ६४

मल्लिनाथ:। आदिदेशेति। रामेणैवमुक्त: सुग्रीव: राघवौ किष्किन्ध्यां नेतुमङ्गदमादिदेश। एतौ किष्किन्ध्यां नयेत्यादिष्टवानित्यर्थ:। रक्षसां वधं च स्वयमेव प्रतिजज्ञे च। अहमेव वैरिवधं करिष्यामीति प्रतिज्ञातवांश्च। "संप्रतिभ्यामनाध्याने" इति प्रतिपूर्वाज्जानाते: सकर्मकात्तङ्॥ ६४

भरत। आदिदेशेत्यादि। स सुग्रीवो राघवौ किष्किन्ध्यां नेतुम् अङ्गदम् आदिदेश उक्तवान्, दिश ङ् प्रीचे चकाराद्दाने वर्त्तते, आङ्पूर्व: कथनार्थ:, मनोरमाकृत् तु दिश अतिसर्जने इति पठित्वा व्याख्यष्ट—अतिसर्जनं दानं विज्ञानं कथनं वेति। स्वयञ्च रक्षसां वधं प्रतिज्ञातवान्। ज्ञा अवबोधने "सम्प्रते: अस्मृतौ" इति मम्॥ ६४

অনুবাদ। সেই সুগ্রীব রামলক্ষ্মণকে কিষ্কিন্ধ্যায় লইয়া যাইতে অঙ্গদকে আদেশ করিলেন এবং স্বয়ং রাক্ষসবধে প্রতিজ্ঞা করিলেন। ৬৪

**नागास्त्रमिदमेतस्य विपक्षस्तार्क्ष्यसंस्मृति:।**
**विभीषणादिति श्रुत्वा तं प्र[नि]दध्यौ रघूत्तम:॥ ६५**

अन्वय:। इदं नागास्त्रम्, एतस्य विपक्ष: तार्क्ष्यसंस्मृति:—इति विभीषणात् श्रुत्वा रघूत्तम: तं प्रदध्यौ॥ ६५

मल्लिनाथ:। नागेति। इदं नागास्त्रं, न शरा इत्यर्थ: एतस्य नागास्त्रस्य विपक्ष: प्रतीकारस्तार्क्ष्यसंस्मृति: गरुडसंस्मरणम्। इति विभीषणाच्छ्रुत्वा राघवस्तं तार्क्ष्यं प्रदध्यौ सस्मार॥ ६५

भरत:। नागास्त्रमित्यादि। इदं नागास्त्रम् एतस्य नागास्त्रस्य शत्रु: गरुडस्मरणम् इति विभीषणात् श्रुत्वा राघवस्त गरुडं प्रदध्यौ चिन्तितवान्॥ ६५

অনুবাদ। এটী নাগাস্ত্র (শর নহে) ইহার শত্রু গরুড়ের স্মরণই ইহার

প্রতীকারোপায় বিভীষণের মুখে এই কথা শুনিয়া রঘুবর গরুড়ের স্মরণ করিলেন । ৬৫ ।

ततो विजघटे शैलैरुद्वेलं पुप्लुवेऽम्बुधिः ।
वृक्षेभ्यश्चुच्युते पुष्पैर्विरेजुर्भासुरा दिशः ॥ ६६

अन्वयः । ततः शैलैः विजघटे, अम्बुधिः उद्वेलं पुप्लुवे, वृक्षेभ्यः पुष्पैः चुच्युते, दिशः भासुराः विरेजुः ॥ ६६

मल्लिनाथः । तत इति । ततो ध्यानानन्तरं शैलैर्विजघटे विघटितम् । घटेर्भावे लिट् । अम्बुधिरुद्वेलमुल्लङ्घितवेलं यथा तथा पुप्लुवे सुप्लुवे इत्यर्थः । कर्त्तरि लिट् । वृक्षेभ्यः । "अपादाने पञ्चमी" । पुष्पैश्चुच्युते च्युतम् । च्यवतेर्भावे लिट् । एतत्सर्वं तार्क्ष्यपक्षपवनवेगादित्यवधेयम् । दिशो भासुरा भास्वराः सत्यस्तत्प्रभासेति भावः । "भञ्जभासमिदो घुरच्" । विरेजुः रराजुः । फणादिविकल्पादेत्वाद्यभावः ॥ ६६

भरतः । तत इत्यादि । ततो ध्यानानन्तरं तत्पक्षवायुवेगात् शैलैः विजघटे विघटितं, घटि ष ङ् म चेष्टे, विपूर्वो विश्लेषमाह, भावे रूपम् । अम्बुधिः समुद्रो वेलामतिक्रम्य पुप्लुवे गतः, प्लु ङ् च सर्पणे । वृक्षेभ्यः पुष्पैः चुच्युते स्खलितं, च्युत च्युतिर् क्षरे । भावे रूपम् । स्वर्णपक्षप्रभाभिर्भासनशीला दिशो विरेजुः राजन्ते स्म । राज् ऋ ञ दीप्तौ "तृफल:"इति पक्षे एत्वाभावः ॥ ६६

অনুবাদ । তাহার পর গরুড়পক্ষ বায়ুবেগে পর্ব্বত ফাটিয়া পড়িল, সমুদ্রতীর অতিক্রম করিয়া ক্ষুব্ধ হইতে লাগিল, বৃক্ষ হইতে পুষ্প খসিয়া পড়িল এবং স্বর্ণপক্ষ প্রভায় দিঙ্মণ্ডল উদ্‌ভাসিত হইয়া বিরাজ করিতেছিল । ৬৬

जगाहिरेऽम्बुधिं नागा ववौ वायुर्मनोहरः[रमः] ।
तेजांसि शाश[शंश]मास्वक्रुः शरबन्धा विशिश्लिषुः ॥ ६७

अन्वयः । नागाः अम्बुधिं जगाहिरे, मनोहरः वायुः ववौ, तेजांसि शासमास्वक्रुः, शरबन्धा विशिश्लिषुः ॥ ६७

मल्लिनाथः । जगाहिर इति । नागाः सर्पा अम्बुधिं जगाहिरे प्रविष्टाः, तार्क्ष्यत्रासादिति भावः । मनोहरः शैत्यमान्द्यादियोगात् सुखस्पर्श इत्यर्थः । वायुर्ववौ वाति स्म । तेजांसि चन्द्रतारकादि-

प्रकाशाः शाम्यमाश्चक्रुस्ताश्च तेजोऽभिभवान्मृषां शेमुरित्यर्थः। शेमे: यङन्तालिट्याम्प्रत्यये यलोपयलोपौ। शरबन्धाः नागपाशा विशि-श्लिषुर्निवृत्ताः॥ ६७

भरत:। जगाहिरे इत्यादि। नागा भयात् अम्बुधिं जगाहिरे प्रविष्टाः; गाहू विलोड़े। मनोरमो वायुस्तत्पवमानः शुभसूचकः स्वाभाविको वा, वाति स्म। वा गन्धनहिंसनयोः। रवादीनां तेजांसि तत्तेजसा भृशं शान्तानि, शमु भ्य इत्यस्मे, "सूत्रमु" इति यङ् यङो लुक्, द्वित्वं "अमजपः" इति सुगागमः शान्तत्वादाम्। शमयाञ्चक्रुरिति पाठे गरुडस्य तेजांसि नागान्निवारयन्ति स्म इत्यर्थः। शराणां बन्धा विश्लिष्टाः तत्प्रभावात्॥ ६७

अनुवाद। সর্পগণ গরুড়ের ভয়ে সমুদ্রে প্রবিষ্ট হইল; শৈত্যাদি গুণে মনোহর বায়ু বহিল, সূর্য্যতেজঃ প্রশমিত এবং নাগপাশ শিথিল হইল। ৬৭

**भेजिरेऽक्षतवद्योधा लेभे संज्ञां च लक्ष्मणः।**
**विभीषणोऽ[पि]ति बभ्राजे गरुत्मान्प्राप चान्तिकम्॥ ६८**

अन्वयः। योधाः अक्षतवत् भेजिरे, लक्ष्मणः च संज्ञां लेभे, विभीषणः अतिबभ्राजे, गरुत्मान् च अन्तिकं प्राप॥ ६८

मल्लिनाथः। भेजिर इति। योधा अक्षतवदक्षतैस्तुल्यं भेजिरे। फणादिविकल्पादेत्वादि। लक्ष्मणश्च संज्ञां लेभे। विभीषणोऽति-बभ्राजेऽतिरराजे भ्राजृ दीप्तौ। फणादिविकल्पादेत्वाद्यभावः। गरुत्मांश्चान्तिकं रामसमीपं प्राप॥ ६८

भरत:। भेजिरे इत्यादि। योधा अक्षता इव भेजिरे शोभन्ते स्म। भ्राजृ अ च ट् च धकारादासि "तृफल" इत्यादिना पाक्षिकमेत्वं खिन्नीपक्ष। लक्ष्मणश्च संज्ञां चेतनां लब्धवान्। डुलभष् प्राप्तौ। विभीषणोऽपि बभ्राजे समीहितं मे सम्पन्नमिति, एत्वाभावपक्षे रूपम्। गरुत्मान् गरुड़ो राघवस्यान्तिकं समीपं प्राप, गरुतः पक्षिणोऽनुजीविनः प्रशस्ता वा पक्षाः सन्त्यस्येति गरुत्मान्। "क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते" इति न्यायात् "मोऽनु मञ्झयादतु" इत्यस्य विषयेऽपि मतुरस्यार्थः इत्यस्याभिनिवेशः "वसोर्थः संप्रसमंतुप्योः" इति ज्ञापकात् "मोऽनुमञ्झयादतुः" इत्यस्य क्वचिद्व्यभिचार इति देवीदास-चक्रवर्त्तिनोक्तम्। "यवादिभ्यो मतुः" इति परः। "न दन्तस्थो" इति पदत्वनिषेधात् न नत्वम्॥ ६८

অনুবাদ তখন রামসৈন্যগণ অক্ষতবৎ শোভা পাইল, লক্ষ্মণও চৈতন্য লাভ করিলেন। বিভীষণ অভীষ্টসিদ্ধি হওয়ায় অতিশয় আনন্দিত হইলেন, গরুড়ও রামের নিকটে উপস্থিত হইলেন। ৬৮

स[सं]पस्पर्शाथ काकुत्स्थौ जज्ञाते तौ गतव्यथौ।
तयोरात्मानमाचख्यौ ययौ चाथ यथागतम्॥ ६९

अन्वयः। अथ सः काकुत्स्थौ पस्पर्श, तौ गतव्यथौ जज्ञाते, तयोः आत्मानम् आचख्यौ, अथ यथागतं च ययौ॥ ६९

मल्लिनाथः। स इति। अथ स गरुत्मान् काकुत्स्थौ रामलक्ष्मणौ पस्पर्श। तौ गतव्यथौ निर्व्यथौ जज्ञाते जातौ। जनी प्रादुर्भावे। कर्त्तरि लिट्। "गमहन—" इत्युपधालोपः। तयोः राघवयोरात्मानमाचख्यौ गरुत्मानहमिति कथयामास। ख्या प्रकथने लिट्। यथागतं ययौ चापि। आगमनमार्गेणैव जगामेत्यर्थः॥ ६९

भरतः। सपस्पर्शेत्यादि। अथानन्तरं स गरुत्मान् काकुत्स्थौ संपस्पर्श, स्पृश श्रौ स्पृशि। तौ च स्पृष्टौ गतव्यथौ जज्ञाते जातौ, जनीम्यङ् जनने, "हनगम्" इत्युङ्लोपः "ज्ञाजनोर्जा" इति जस्य जः। तयोः काकुत्स्थयोः स्थाने आत्मानम् आचख्यौ कथितवान् अहं गरुड़ इति। ख्या स गतौ, चक्षिङः ख्याञादेशो वा। यथागतं तथा ययौ गतः॥ ६९

অনুবাদ। অনন্তর গরুড় রামলক্ষ্মণকে স্পর্শ করিল, তাঁহারা ব্যথাশূন্য হইলেন। তৎপরে সে রামলক্ষ্মণের নিকট নিজের পরিচয় দিল এবং যে পথে আসিয়াছিল সেই পথেই প্রস্থান করিল। ৬৯

स्वेनुस्तित्विषुरुद्ययेमुरुच्चखनुः पर्वतांस्तरून्।
वानरा दद्रमुस्त्राथ संग्रामं चाशशंसिरे॥ ७०

अन्वयः। अथ वानराः स्वेनुः, तित्विषुः, उद्ययेमुः, पर्वतान् तरून् च उच्चखनुः, दद्रमुः, संग्रामं च आशशंसिरे॥ ७०

मल्लिनाथः। स्वेनुरिति। अथ वानराः स्वेनुः सस्वनुः। स्वन शब्दे। फणादिविकल्पादेत्वाद। तित्विषुर्दिदीपिरे। त्विष दीप्तौ। उद्ययेमुरुद्यताः। "अत एकहल्—" इत्येत्वम्। पर्वतांस्तरूंश्च उच्चखनुरुत्खातवन्त इत्यर्थः। खनतेः "गमहन—"इत्यादिनोपधालोपः। दद्रमुर्इतस्ततो जग्मुः। द्रम गतौ। संग्रामं युद्धमाशशंसिरे आचकाङ्क्षुः। आङ्पूर्वाच्छंसतेरिच्छार्थे तङ्। आङः शासु इच्छायाम्। शंसतेश्चेति वचनाद्॥ ७०

भरत: । खेलुरित्यादि । अथानन्तरं वानराः खेलुर्जयशब्दं चक्रुः । खल च चेति चकारात् शब्दे, "तृफल" इति पृषे एत्वम् । तिलिषुः दीप्यन्ते स्म, लिषीड् भावे । उदयेमुः उद्यमं चक्रुः । यमोड् विरतौ । पर्वतान् तरुंश्च उत्खनुः । खनुड् विदारणे । "हनगम्"इत्युङ् लोपः । दद्रमुः अटून् प्रतिजग्मुः । द्रमु गतौ । संग्रामश्च आशशंसिरे इच्छन्ति स्म । शनसु इंसास्तुत्योः आङ्पूर्वं इच्छामाह । यदुक्तम्—"आशंसतिः स्यादि-च्छायां शंसनीति स्तुतौ पदम्" इति ॥ ७०

অনুবাদ। অনন্তর বানরগণ জয়ধ্বনি করিল, আনন্দে হৃষ্ট হইল, যুদ্ধের উদ্যোগ করিল, পর্ব্বত ও বৃক্ষ উৎপাটিত করিতে লাগিল, ইতঃস্ততো ভ্রমণ এবং যুদ্ধ প্রার্থনা করিল। ৭০

# डुढौकिरे पुनर्लङ्कां बुबुधे तान् दशाननः ।
# जीवतश्च विवेदारीन् बभ्रंशा[प्ये]ऽसौ धृतेस्ततः ॥ ७१

अन्वय । (वानराः) पुनः लङ्कां डुढौकिरे, दशाननः तान् बुबुधे, अरीन् जीवतः विवेद, ततः असौ धृतेः बभ्रंश ॥ ७१

मल्लिनाथः । डुढौकिर इति । वानराः पुनर्लङ्कां डुढौकिरे जग्मुः । दशाननस्तान् लङ्कागतान् बुबुधे । अरीन् जीवतः प्राणतो विवेद । ततः शत्रुजीवनादसौ दशास्यो धृतेर्धैर्याद्बभ्रंश भ्रष्टश्च्युतः । भ्रंशु अधःपतने ॥ ७१

भरत । डुढौकिरे इत्यादि । वानराः पुनर्लङ्कां डुढौकिरे जग्मुः । ढौक त्रौक टिलङ् गत्यां औरीकारस्य कस्य उकारः । दशाननः तान् बुबुधे ज्ञातवान् । बुध्यीङ् वेदने । अरींश्च रामादीन् जीवतो विवेद जानाति स्म । विद ल मतौ "ज्ञाम्वाद्याम्" इत्यस्याभावपक्षे रूपम् । ततः धृतेः धैर्याद् असौ भ्रष्टः, भ्रंश चेति चकारादधः पते ॥ ७१

অনুবাদ। তাহারা পুনর্ব্বার লঙ্কায় গেল, দশানন বুঝিল তাহারা লঙ্কায় আসিয়াছে। শত্রুরা জীবিত আছে তাহাও জানিল। তন্নিমিত্ত সে ধৈর্য্য-চ্যুত হইল। ৭১

# सस्रंसे शरबन्धेन दिव्येनेति बुबुन्द सः ।
# बभाजाथ परं मोहमूहाञ्चक्रे जयं न च ॥ ७२

अन्वयः । सः दिव्येन शरबन्धेन सस्रंसे इति बुबुन्द, अथ परं मोहं बभाज, जयं च न ऊहाञ्चक्रे ॥ ७२

मल्लिनाथः। ससंस इति। स रावणो दिव्येन शरबन्धेन नागपाशबन्धेन ससंसे स्रस्तम्। संसु गतौ। भावे लिट्। इति बुबुन्द शुश्राव। उबुन्दिर् निशामने। अथ श्रवणानन्तरं मोहं बभाज प्राप। इतिकर्त्तव्यतामूढ़ोऽभूदित्यर्थः। अत एव जयं च नोहांचक्रे न तर्कयामास। ऊह वितर्के। लिट् "इजादेश्च गुरुमतोऽनृच्छः" इत्याम्प्रत्ययः॥ ७२

भरतः। ससंसे इत्यादि। दिव्येन शरबन्धेन ससंसे स्रस्तमिति स दशाननो बुबुन्द श्रुतवान्। स्रंसु अधःपतने। बुन्दिर् निशामने। अथानन्तरं परं मोहं मूर्च्छां बभाज। भजतो भागसेवयोः। स्वकीयञ्च जयं न ऊहाञ्चक्रे, ऊहङ् वितर्के "इजादि" इत्याम्॥ ७२

অনুবাদ। সে দিব্য নাগপাশ বন্ধন শিথিল হইয়াছে ইহা শুনিল। অনন্তর কর্ত্তব্যবিমূঢ় হইল, সুতরাং স্বকীয় জয়ের বিষয়ও ভাবিতে পারিল না। ৭২

**धूम्राक्षोऽथ प्रतिष्ठासाञ्चक्रे रावणसम्मतः।**
**सिंहास्यैर्युयुजे तस्य वृकास्यैश्च रथः खगैः॥ ७३**

अन्वयः। अथ धूम्राक्षः रावणसम्मतः (सन्) प्रतिष्ठासाञ्चक्रे, तस्य रथः सिंहास्यैः वृकास्यैः च खगैः युयुजे॥ ७३

मल्लिनाथः। धूम्रेति। अथ मोहानन्तरं धूम्राक्षो नाम राक्षसो रावणेन सम्मतोऽनुज्ञातः सन्। इति तृतीयासमासः। मन्यतेः सम्पूर्वादनुज्ञानार्थत्वाद्भूते क्तः। न तु 'मतिबुद्धि—" इत्यादिना वर्त्तमाने क्तः। अतो न समासाद्यनुपपत्तिः। प्रतिष्ठासांचक्रे युद्धाय प्रस्थातुमियेष। प्रपूर्वात् तिष्ठतेः सन्नन्ताल्लिटि "कास्प्रत्ययात्—" इत्याम्प्रत्ययः। प्रपूर्वस्य 'तिष्ठतेरात्मनेपदित्वात् "पूर्ववत् सनः" "आम्प्रत्ययवत्—" इति सर्वत्र तङ्। तस्य रथः सिंहास्यैः सिंहमुखैर्वृकास्यैर्वृकमुखैश्च खगैः खेचरैर्वाहनैरिति शेषः। युयुजे योजितः। युजेः कर्मणि लिटि तङ्॥ ७३

भरतः। धूम्राक्ष इत्यादि। अथानन्तरं धूम्राक्षो राक्षसो रावणेन सम्मतोऽनुज्ञातः सन् प्रस्थातुमिच्छाञ्चक्रे। "प्रतिष्ठा निर्णय" इत्यादिना प्रपूर्वस्थाधातोर्मे, "क्तिन्नात्" इति मतं सनः षत्वाभावात् "आदेशप्रत्यययोः" "सिवौ: से सः षः" इति न नियमः, आमन्तादाम्। तस्य रथः सिंहमुखैः वृकमुखैश्च खगैः आकाशगामिभिः युयुजे युक्तः। युजिर्योगे च युतौ कर्मणि रूपम्। "लोक ईदात्मनो तङ्" इत्यतः॥ ७३

অনুবাদ। তৎপরে ধূম্রাক্ষ রাক্ষস রাবণাজ্ঞায় যুদ্ধযাত্রায় ইচ্ছুক হইল, তাহার রথ খানি সিংহমুখ এবং ব্যাঘ্রমুখ খেচর বাহনে যোজিত হইল। ৭৩

**त्वक्त्रैः संविव्युरङ्गानि[व्ययुर्दंहान्]वाहनान्यधिशिश्रियिरे**
**आनर्जुर्नृभुजोऽस्त्राणि ववसुश्चाहवक्षितिम् ॥७४**

अन्वयः। नृभुजः त्वक्त्रैः अङ्गानि संविव्युः, वाहनानि अधिशिश्रियिरे, अस्त्राणि आनर्जुः, आहवक्षितिं च ववसुः ॥ ७४

मल्लिनाथः। त्वक्त्रैरिति। नृभुजो राक्षसास्त्वचं त्रायन्त इति त्वक्त्राणि तनुत्राणि। "आतोऽनुपसर्गे कः"। तैरङ्गानि गात्राणि संविव्युः संवव्रुः। व्येञ् संवरणे। लिटि झेरुसि किति यजादित्वा-त्सम्प्रसारणे द्विर्भावे च सति "एरनेकाचः—" इति यणादेशः। 'संविव्यिरे' इति पाठे "लिटस्तझयोरेशिरेच्"। शेषं समानम्। वाहनानि गजादीनि अधिशिश्रियिरे अधिष्ठितवन्तः। "एरनेकाचः—" इति यणादेशः। "अधिशीङ्—" इति कर्मत्वम्। अस्त्राणि धनु-रादीनि आनर्जुर्जगृहुः। अर्ज प्रतियत्ने। लिट्। "अत आदेः" इत्यभ्यासदीर्घः। "तस्मान्नुड् द्विहलः"। आहवक्षितिं रणभूमिं ववसुर्जग्मुः। वस्त्र गतौ ॥ ७४

भरतः। त्वक्त्रैरित्यादि। नृभुजो राक्षसाः प्राणसम्बन्धिनः त्वक्त्रैः सन्नाहैः देहान् संविव्युः आच्छादितवन्तः। व्येञ् वृतौ "अदादह" इति णिः, जिवान्यः किलीति परं झेरभावः "ना व्येञ्याम्" इति आनिषेधः, तेन "एचोऽयित्या" इत्यस्य न प्रवृत्तिः, "यलाथवा-भावः" इत्ययादेशः। त्वचं त्रायत इति "हनजनात" इति डः। "एचोऽयित्या" इत्यत्र आशतीति विषय सप्तमी तेनादन्तत्वात्। वाहनानि अश्वादीनि अधिशिश्रियिरे आरूढवन्तः। शीङ् श्रि स्वप्ने, अधिपूर्व आरोहणेऽपि "मूर्ध्नः" इत्यादिना णत्व, "कर्मक्रिया" इत्यादिना क्रियाश्रयत्वेन ढत्वे द्वितीया, आरोहणार्थस्य सकर्मकत्वात् शीङोऽधिशयनेऽद्विमित्यादौ आरोहणार्थे तात्पर्याभावादाधारस्य कर्मत्वम्। अस्त्राणि आनर्जुः जगृहुः। अर्ज अर्जने "स्नान्तादादि" इति नुगम्, आनर्चुरिति पाठे अर्चधातो रूपम। आहवक्षितिं रणभूमिं ववसुः गतवन्तः। वस्त्र गत्याम् ॥ ७४

অনুবাদ। রাক্ষসেরা লৌহবর্ম্মে গাত্র ঢাকিল, গজবাজী আরোহণে, অস্ত্র গ্রহণ করিয়া এবং যুদ্ধক্ষেত্রে গমন করিল। ৭৪

**अध्युवास रथं तेये पुरासुष्वाव चाशुभम्।**
**संवाद[श्राव]याञ्चकाराद्ध्यां धूम्राक्षस्त्वरि तथा ॥७५**

अन्वयः। धूम्राक्षः रथम् अध्युवास, पुरात् तेये, अशुभं च चुक्षाव, आख्यां संवादयांचकार, तथा तत्वरे॥ ७५

मल्लिनाथः। अधीति। धूम्राक्षो रथमध्युवास। रथे उवासेत्यर्थः। "उपान्वध्याङ्-वसः" इति कर्मत्वम्। पुरान्नगरात्तेये निर्गतः। तय गतौ। कर्त्तरि लिट्। अनुदात्तेत्त्वात्तङ्। "अत एकहल्—" इत्येत्वाभ्यासलोपौ। अशुभं यथा तथा चुक्षाव क्षुतवान्। स्वक्षुतमत्यशुभमिति भावः। क्षु शब्दे। आख्यां स्वनाम संवादयांचकार श्रावितवान्, बन्दिभिः श्रावयामासेत्यर्थः। तथा तत्वरे युद्धाय त्वरितवानित्यर्थः। त्वरतेर्लिट्॥ ७५

भरतः। अध्युवासेत्यादि। धूम्राक्षो रथम् अध्युवास आरुढः, वसँ ऐ निवासे, "व्यच-ग्रह" इति स्विर्जिः, "कर्म्मक्रिया" इत्यादिना आधारस्य कर्म्मत्वम्। पुरात् लङ्कायाः तेये गतः। तयङ् तिरचयोः, "तृफल" इत्यादिना एत्वं खिलोपश्च। अशुभम् अशोभनं चुक्षाव क्षुतं, क्षु लटुच्चने। आख्यां स्वनाम श्रावितवान् वानरान् इत्यर्थात्। श्र ल गतौ जिः स्यान्तत्वादाम्। तथा युद्धाय त्वरां चक्रे। ञित्वरं मङ् त्वरे॥ ७५

অনুবাদ। ধূম্রাক্ষ রথে উঠিয়া নগর হইতে বাহির হইল, অশুভ শব্দ করিতে লাগিল এবং বানরের নিকট নিজ নাম ঘোষণা করিয়া যুদ্ধযাত্রায় ব্যস্ত হইল। ৭৫

वि [नि] लिल्ये मूर्ध्नि गृध्रोऽस्य
क्रू [रा] रं ध्वाङ्क्षा ववाशिरे।
शिशीके शोणितं व्योम
चचाल क्ष्मातलं तथा॥ ७६

अन्वयः। अस्य मूर्ध्नि गृध्रो विलिल्ये, ध्वाङ्क्षाः क्रूरं ववाशिरे, व्योम शोणितं शिशीके, तथा क्ष्मातलं चचाल॥ ७६

मल्लिनाथः। अथास्य दुर्निमित्तान्याह—विलिल्य इति। अस्य धूम्राक्षस्य मूर्ध्नि गृध्रो विलिल्ये तस्थावित्यर्थः। लीङ् श्लेषणे। "एर-नेकाचः—" इति यण्। ध्वाङ्क्षाः काकाः क्रूरं ववाशिरे चुक्रुशुः। वाशृ शब्दकुत्सायाम् लिट्। व्योम आकाशं शोणितं शिशीके क्षरितं ववर्षेत्यर्थः। शीकृ सेचने। तथा क्ष्मातलं चचाल चकम्पे॥ ७६

भरतः। निलिल्ये इत्यादि। अस्य धूम्राक्षस्य गच्छतो मूर्ध्नि गृध्रो विलीनः। लीङ् श्लेषे लिटि "सुधी:" इति यत्वम्। क्रूरा अशुभशंसिनी ध्वाङ्क्षाः काका ववाशिरे वाशृङ् ङपि षपि शब्दात् शब्दे। व्योम आकाशं कर्तृ, शोणितं शिशीकं ववर्ष। शीकृङ् सेके। क्ष्मातलं तथा चचाल चलति स्म। चल गतौ ॥ ७६

অনুবাদ। যাত্রাকালে ধূম্রাক্ষের মস্তকে গৃধ্র বসিল, কাকেরা কর্কশ স্বরে রব করিতেছিল, নভোমণ্ডল রক্তবর্ষণ আরম্ভ করিল এবং ভূমিকম্প হইতে লাগিল। ৭৬

## ततः प्रजघटे युद्धं शस्त्राण्यासुः परस्परम्।
## वव्रश्चुराजुघूर्णुश्च स्वेमुस्तुष्टुभि[कूर्दि]रे तथा ॥ ७७

अन्वयः। ततः युद्धं प्रजघटे, परस्परं शस्त्राणि आसुः, वव्रश्चुः आजुघूर्णुः स्वेमुः तुष्टुभिरे च ॥ ७७

मल्लिनाथः। तत इति। ततो दुर्निमित्तानन्तरं युद्धं प्रजघटे प्रववृते। परस्परं शस्त्राण्यासुश्चिक्षिपुः। असु क्षेपणे। लिट्। "अत आदेः" वव्रश्चुः परस्परं चिच्छिदुः। आजुघूर्णुर्बभ्रमुः। घूर्ण भ्रमणे। 'घोणते घूर्णते घोणति घूर्णति' इति भट्टमल्लः। स्वेमुः सस्वनुः। स्यमु शब्दे। फणादित्वादेत्वम्। तथा तुष्टुभिरे स्तुभितः ॥ ७७

भरतः। तत इत्यादि। अनन्तरं युद्धं प्रजघटे प्रवृत्तं, घट चेष्टे। परस्परं शस्त्राणि आसुः चिक्षिपुः, हरिराक्षसा इत्यग्रिमश्लोकेनान्वयः। असु क्षेपे। परस्परं वव्रश्चुः। ओ व्रश्चू छेदे "स्यां न वेपस्काम्" इति जिनपंथः। आजुघूर्णुः चक्रवद् भ्रमन्ति स्म। घूर्णस्य भ्रमणे। जुघूर्णिरे च। वव्रश्चुरिति क्वचित् पाठः। स्वेमुः शब्दं चक्रुः स्यमुणश ध्वनने, षित्त्वात् फणादिः, तृफलन्त्यादिना पाक्षिकमेत्वं विज्ञेयम्। चकूर्दिरे क्रीडितवन्तः, कूर्दङ् क्रीडायाम् ॥ ७७

অনুবাদ। তৎপরে যুদ্ধ আরম্ভ হইল, পরস্পরে অস্ত্র নিক্ষেপে কাটাকাটি করিতে লাগিল এবং ইতস্ততঃ ভ্রমণ ও সিংহনাদ করিতে শুরু হইল। ৭৭

## ततजुभ्र्जिरे फेणुर्बहुधा हरिराक्षसाः।
## वी[धी]रा न बिभयाञ्चक्रुर्भीषयाञ्चक्रिरे परान् ॥ ७८

अन्वयः। वीराः हरिराक्षसाः रुरुजुः, भेजिरे, बहुधा फेणुः, न बिभयाञ्चक्रुः, परान् भीषयाञ्चक्रिरे ॥ ७८

मल्लिनाथः। रुरुजुरिति। वीरा हरिराक्षसा रुरुजुः परस्परं बभञ्जुः। रुजो भङ्गे। भेजिरे रेजुः। बहुधा फेणुर्नानाविधा गतीश्चक्रुरित्यर्थः। फण गतौ। फणादित्वादुभयत्र पाक्षिकमेत्वम्। न तु बिभयाञ्चक्रुर्न बिभ्युः। "भीह्रीभृहुवां श्लुवच्च" इति विकल्पादाम्प्रत्ययः। किं तु परान् भीषयाञ्चक्रिरे भीषितवन्तः। बिभेतेर्ण्यन्ताल्लिटि "भीस्म्योर्हेतुभये" इति तङ्। तद्वदनुप्रयोगेऽपि तङ्। "भियो हेतुभये षुक्" इति षुगागमः ॥ ७८

भरतः। रुरुजुरित्यादि। हरयो वानरा राक्षसाश्च परस्परं रुरुजुः भग्नवन्तः। रुजो भङ्गे। भेजिरे शुशुभिरे। भ्राजृभ्ञ्च टु चेति चकारात्रासि, तृ-फलेति पाक्षिकमेत्व स्थिर्णोपश्च। बहुभिः प्रकारैः फेणुः। फणभिश्च गतौ। वीराः शत्रून् बिभयाञ्चक्रुः बिभ्यति स्म। ञिभी भये भीत्यां "भीह्री" इति पाक्षिकः। प्रशाम् लोत्वान् "ह्रादीनां गुणः" इति गुणः। परान् शत्रून् भीषयन्ते स्म। "भीभीष् वा" इति भीषादेशो अस्य त्यान्तत्वादाम् ॥ ७८

অনুবাদ। বানর ও রাক্ষস বীরেরা পরস্পর আহত হইয়া ক্লান্ত হইলেও সমরক্ষেত্রে বিরাজ করিতেছিল, নানাবিধ গতি চাতুর্য্য দেখাইল, ভয় পাইল না, পরন্তু শত্রুপক্ষকে ভীত করিয়া তুলিল। ৭৮

रक्तं प्रचुश्चुतुः क्षुण्णाः शिश्वियुः क्षु[र] रविक्षताः ।
अस्यतां शुशुवुर्बाणान् भुजाः साङ्गुष्ठमुष्टयः ॥ ७९

अन्वयः। क्षुण्णाः रक्तं प्रचुश्चुतुः क्षुरविक्षताः शिश्वियुः, बाणान् अस्यतां साङ्गुष्ठमुष्टयः भुजाः शुशुवुः ॥ ७९

मल्लिनाथः। रक्तमिति। क्षुण्णाः प्रहृता रक्तं प्रचुश्चुतुश्चक्षरुः। क्षुरविक्षताः शस्त्रहताः केचन शिश्वियुरुच्छूनाः। "विभाषा श्वेः" इत्यसम्प्रसारणपक्षे इयङादेशः। बाणानस्यतां क्षिपतां धन्विनां सम्बन्धिनः शरविक्षताः साङ्गुष्ठमुष्टयस्तथैव बद्धमुष्टयो भुजाः शुशुवुरुच्छूनाः। सम्प्रसारणपक्षे उवङादेशः ॥ ७९

भरतः। रक्तमित्यादि। केचित् क्षुण्णाः खण्डिताः सन्तो रक्तं क्षरन्ति स्म। श्चुतिर् क्षरे। केचित् शिश्वियुः शस्त्रविक्षताः शोणयुक्ताः बभूवुः। द्वयो[illegible]

बाणान् अस्यतां क्षिप्यतां योधानाम् अङ्गुष्ठमुष्टिना सहिता भुजाः शरविघ्नताः सन्तः मुमुचु
र्मताः पतिता इत्यर्थः। "श्वे जिर्वा यङ् व्यौः" इति पाणिनिकी जिः ॥ ७९

অনুবাদ। যুদ্ধে প্রবৃত্ত হইয়া কেহ কেহ রক্ত বমন করিল, কেহ বা ক্ষুরাস্ত্রে ক্ষতবিক্ষত হইয়া শোণযুক্ত হইল। বাণনিক্ষেপ করিতে করিতে কাহারও বা মুষ্টিবদ্ধ হস্তগুলি শরাঘাতে পড়িয়া গেল। ৭৯

रणे चिक्रीड़ धूम्राक्षः
तं ततर्जानिलात्मजः।
आददे च शिलां गुर्व्वीं
[साध्व] पिपेषास्य रथं तया ॥८०

अन्वयः। धूम्राक्षः रणे चिक्रीड़, तम् अनिलात्मजः ततर्ज। गुर्व्वीं शिलाम् आददे, तया अस्य रथं पिपेष ॥ ८०

मल्लिनाथः। रणे इति। धूम्राक्षो रणे चिक्रीड़। तं धूम्राक्ष-मनिलात्मजो हनुमान् ततर्ज तर्जितवान्। तर्जभर्त्सवादिकात्मिट्। गुर्व्वीं शिलां आददे जग्राह। तया शिलया अस्य धूम्राक्षस्य रथं पिपेष चूर्णितवान् ॥ ८०

भरतः। रणे इत्यादि। धूम्राक्षो रणे क्रीड़ितवान्। क्रीड़ृ खेले। अनिलात्मजो हनूमान् तं धूम्राक्षं ततर्ज। तर्ज भर्त्से। शिलाम् आददे जग्राह च। आङ् पूर्वो दा ग्रहणे। तया शिलया अस्य धूम्राक्षस्य अश्वेन सहितं रथं पिपेष। धौ पिष् लृ चूर्णने ॥ ८०

অনুবাদ। ধূম্রাক্ষ রণস্থলে ক্রীড়া করিতে লাগিল, তখন হনূমান্ তাহাকে ভর্ৎসনা করিতে করিতে একখান বৃহৎ প্রস্তর ধরিল এবং সেই প্রস্তর দ্বারা ধূম্রাক্ষের রথখানি চূর্ণবিচূর্ণ করিল। ৮০

पपात राक्षसो भूमौ पपा
[रा]ट च भयङ्करः[म्]।
तुतोद गदया चारिं
तं दुधा[ध्रा]वाद्रिणा कपिः ॥ ८१

अन्वयः। भयङ्करः राक्षसः भूमौ पपात, अरिं पपाट, गदया तुतोद च; कपिः तं अद्रिणा दुधाव ॥ ८१

मल्लिनाथः। पपातेति। भयङ्करो राक्षसो धूम्राक्षो भूमौ

पपात, ततोऽरिं पपाट अभिजगाम च, गदया तुतोद च । कपिस्तं धूम्राक्षमद्रिणा दुधाव जघानेत्यर्थः । धूञ् कम्पने ॥ ८१

भरतः । पपातेत्यादि । धूम्राक्षो राक्षसो भूमौ पपात । पत्लृ गत्याम् । ररोट शब्दं चक्रे । रट भाषि । ततः उत्थितः सन् गदया च अरिं हनूमन्तं तुतोद पीड़ितवान् । तुदशो व्यथे । कपिः हनूमान् पर्वतेन तं राक्षसं दुधाव मारितवान् । धुञ् कम्प । अनेकार्थत्वात् हिंसायामपि । जघानेति क्वचित् पाठः, दुद्रावेति च क्वचित् ॥ ८१

অনুবাদ। ভীষণ রাক্ষস ভূতলে পড়িয়া শত্রুর সম্মুখীন হইল এবং গদাদ্বারা তাহাকে প্রপীড়িত করিল, তখন হনুমান তাহাকে প্রস্তর দ্বারা আঘাত করিল। ৮১

अकम्पनस्ततो योद्धुं चकमे रावणाज्ञया ।
स रथेनाभिदुद्राव जुघुरे चातिभैरवम् ॥ ८२

अन्वयः । ततः अकम्पनः रावणाज्ञया योद्धुं चकमे, स रथेन अभिदुद्राव, अतिभैरवं च जुघुरे ॥ ८२

मल्लिनाथः । अकम्पन इति । ततो धूम्राक्षवधानन्तरमकम्पनो नाम राक्षसो रावणाज्ञया योद्धुं चकमे कामयाञ्चक्रे । "आयादय आर्धधातुके वा" इति विकल्पात् कमेर्णिङभावः । सोऽकम्पनो रथेनाभिदुद्राव अरीनभिजगाम । अतिभैरवमतिभयङ्करं यथा तथा जुघुरे जुघोष । घुर भीमार्थशब्दयोः ॥ ८२

भरतः । अकम्पन इत्यादि । ततोऽनन्तरम् अकम्पनो राक्षसो रावणस्य आज्ञया योद्धुं चकमे इष्टवान् । कमु कङ् स्पृहि "वार्" इत्यनेन णिङोऽभावपक्षे रूपम् । सोऽकम्पनो रथेन अभिदुद्राव अभिमुखं गतः । द्रु घु तौ गतौ । अतिभैरवम् अतिभयङ्करं जुघुरे शब्दं चकार । घुषङो हिंसाज्यान्योः अनेकार्थत्वात् शब्देऽपि, घुर,श ध्वनौ भीमार्थे इत्यस्य भावे रूप वा । तनेति विभक्तिव्यत्ययेन सम्बन्धः, क्वचित् परस्मैपदिनोऽपि आत्मनेपादत्वात् कर्त्तरि रूपं वा शब्दार्थघुरधातुरपि आत्मनेपदी इति जयमङ्गला । जुघोषेति केचित् पठन्ति ॥ ८२

অনুবাদ। ধূম্রাক্ষবধের পর অকম্পন নামক রাক্ষস রাবণাজ্ঞায় যুদ্ধকামনা করিল, সে রথারোহণে শত্রুর সম্মুখে গেল এবং অতিভীষণ সিংহনাদ করিল। ৮২

पस्पन्दे तस्य वामाक्षि सस्वनुश्चाशिवाः खगाः ।
तान् बभ्राजावमत्यासौ बभासे च रथे शरैः ॥ ८३

अन्वयः। तस्य वामाक्षि पस्पन्दे, अशिवाः खगाः च सस्वनुः, तान् अवमत्य असौ वव्राज, रणे शरैः च बभासे॥ ८३

मल्लिनाथः। पस्पन्द इति। तस्याकम्पनस्य वामाक्षि वामनेत्रं पस्पन्दे पुस्फोर। अशिवा अमङ्गलाः खगा उलूकादयः सस्वनुः कूजुः। स्वनु शब्दे। फणादिविकल्पादेत्वाभावः। असावकम्पन-स्तानुत्पातानवमत्यानादृत्य वव्राज योद्धुं जगाम। रणे शरैर्बभासे दिदीपे च॥ ८३

भरतः। पस्पन्द इत्यादि। अक्षुयलमुच्यते—तस्य अकम्पनस्य वाम चक्षुः स्पन्दते स्म, स्पदिङ् ईषत्कम्पे। अशुभसूचकाः खगाः पक्षिणः सस्वनुः शब्दं चक्रुः। स्वनुणाय ध्वनने, तृफलेत्यादिरप्रवृत्तिपक्षे रूपम्। असौ अकम्पनः तान् खगान् अवमत्य अवज्ञाय वव्राज। व्रज गतौ। रणे शरैश्च बभासे। भासृङ् दीप्तौ॥ ८३

অনুবাদ। তাহার বামচক্ষু কাঁপিয়া উঠিল, অশুভসূচক পেচকাদি পক্ষিগণ ডাকিতে লাগিল। সে সমস্ত অগ্রাহ্য করিয়া যুদ্ধে গেল এবং রণস্থলে শরজালে উদ্ভাত হইল। ৮৩

खमूयुर्वसुधामूवुः सायका रज्जुवत्तताः।
तस्माद्बलैरपत्रेपे पुप्रोथास्मै न कश्चन॥ ८४

अन्वयः। रज्जुवत्तताः सायकाः खम् ऊयुः, वसुधाम् ऊवुः, तस्मात् बलैः अपत्रेपे, अस्मै कश्चन न पुप्रोथ॥ ८४

मल्लिनाथः। खमिति। रज्जुवत् तन्तुवत् तता विस्तृताः प्रसा-रिताः सायकाः खमाकाशमूयुर्वयन्ति स्म, वसुधामूवुर्वयन्ति स्म। तन्तुभिरिव सायकैर्द्यावापृथिव्यौ प्रोते इत्यर्थः। वेञ् तन्तुसन्ताने। लिट्। "वेञो वयिः" इति वयिरादेशः। "लिटि वयो यः" इति यकारस्य सम्प्रसारणप्रतिषेधे "ग्रहिज्यावयि—" इति वकारस्य सम्प्रसारणम्। "वश्चान्यतरस्यां किति" इति यकारस्य वैकल्पिके वकारे द्वैरूप्यम्। तस्मात् तं वीक्ष्य। "ल्यब्लोपे पञ्चमी"। बलै-र्वानरबलैरपत्रेपे अपत्रपितम्। भावे लिट्। "तृफलभजत्रपश्च" इत्येत्वम्। अस्मै अकम्पनाय कश्चन कोऽपि न पुप्रोथ न प्रबभूवे-त्यर्थः। प्रोथृ पर्य्याप्तौ। "नमः स्वस्ति—"इत्यत्रालंशब्देन पर्य्याप्त्यर्थग्रहणात् तद्योगे चतुर्थी॥ ८४

भरतः। खमूयुरित्यादि। तेन रज्जुवत्तता विसृता: सायकाः खम् आकाशम् ऊयुः वसुधाञ्च ऊयुः आवृतवन्तः। ऐङ्वे स्युतौ, "वेञो वयथा" इति पाक्षिकी वयादेशः. व्यय-यहेत्यादौ वयथञ्चात् ठ्यां न वेप्रच्छामित्यस्याप्रवृत्तिः, तेन व्ययग्रहेत्यादिना ङ्खोर्जिः यङ्-व्यपाव्यीरिति प्रकृतेर्जिः, यत्र, कितीत्यस्य पञ्चद्वये रूपम्। तस्मात् अकम्पनं वीक्ष्य वानर-सैन्यैः अपत्रेपे लज्जितं, त्रपूषमिङ् क्रिथि। तृफलेत्यादिना एत्वं गिलोपश्च, भावे रूपम्। तस्मादिति अन्यारध्येत्यादिना ग्यबर्थे पञ्चमी। अस्मै अकम्पनाय कश्चन वीरो न पुप्रोष न समर्थः। प्रीषृज् पर्य्याप्तौ स्वेरीकारस्य ह्रस्व उकारः, शक्तार्थेत्यादिना चतुर्थी॥ ८४

অনুবাদ। রজ্জুবৎ বিসৃত অকম্পনের বাণ ভূতল ও নভোমণ্ডলে ব্যাপ্ত হইল, তাহাকে দেখিয়া কপি সৈন্য লজ্জা পাইল, কেহই তাহার উপর প্রভুত্ব দেখাইতে পারিল না। ৮৪

स भस्मसाच्चकारारीन्
दुधा[दा]व च कृतान्तवत्।
चुक्रोध मारुतिस्ताल-
मुच्च[खु चा]खान महाशिखम्॥ ८५

अन्वयः। सः अरीन् भस्मसात् चकार, कृतान्तवत् च दुधाव, मारुतिः चुक्रोध, महाशिखं च तालम् उच्चखान॥ ८५

मल्लिनाथः। स इति। सोऽकम्पनोऽरीन् भस्मसाच्चकार कात्स्न्र्येन भस्मीचकार। "विभाषा सातिकात्स्न्र्ये" इति साति-प्रत्ययः। कृतान्तवद्धाव कम्पयामास। अन्तकवत्सर्वानयं संहरिष्य-तीति भयमजनयदित्यर्थः। अथ मारुतिर्हनूमान् चुक्रोध क्रुद्धश्च महाशिखमुदग्रतालं तालवृक्षमुच्चखान उत्पाटयामास॥ ८५

भरतः। स भस्मसादित्यादि। सोऽकम्पनः अरीन् भस्मसाच्चकार कात्स्न्र्येन भस्मी-भूतांश्चकार, "कात्स्न्र्यायत्त्योः" इत्यादिना सातृ। कृतान्तवत् यम इव दुदाव पीड़ित-वान्। दुङ् न दु उपतापे। तं दृष्ट्वा मारुतिः हनूमान् चुक्रोध क्रुद्धः, क्रुध नृ यौ कोपे। महाशिखम् अतिदीर्घं तालवृक्षञ्च उत्खातवान्। खनु ञ् विदारणे। खन-गमित्युप-लोपः॥ ८५

অনুবাদ। অকম্পন শত্রুসৈন্য ভস্মীভূত ও কম্পিত করিল, হনূমান্ ক্রুদ্ধ হইয়া অত্যুচ্চ একটী তালবৃক্ষ উৎপাটিত করিল ৮৫

**यमायाकम्पनं तेन निरुवाप महापशुम् ।**
**बभ्रज्ज निहते तस्मिन् शोको रावणमग्निवत् ॥ ८६**

अन्वय । (सः) तेन अकम्पनं यमाय महापशुम् निरुवाप ; तस्मिन् निहते शोकः अग्निवत् रावणं बभ्रज्ज ॥ ८६

मल्लिनाथः । यमायेति । स मारुतिस्तेन तालेन करणेन अकम्पनमेव पशुं यमाय देवतायै निरुवाप निरूप्तवान् दत्तवानित्यर्थः । यद्यपि चरुपुरोडाशादीनां निर्वापः पशूनामालम्भस्तथाप्यत्र उभयानुगते दानमात्रे प्रयोगः । तालेन तं जघानेति फलितार्थः । अत्र वपेर्यजादित्वेऽपि लिटोऽकित्त्वान्न धातोः सम्प्रसारणम् । अभ्यासस्य तु "लिट्यभ्यासस्य" इति भवत्येव । तस्मिन्नकम्पने हते शोको रावणमग्निवदग्निना तुल्यं बभ्रज्ज पपाच ददाहेत्यर्थः । भ्रस्ज पाके । लिटि णलि "झलां जश् झशि" इति सकारस्य जश्त्वं दकारः । तस्य चुत्वे जकारः । "भ्रस्जो रोपधयोरमन्यतरस्याम्" इति रमागमपक्षे बभर्ज्जेति रूपम् ॥ ८६

भरतः । यमायेत्यादि । तेन तालवृक्षेण हनूमान् अकम्पनं महापशुमिव यमाय निरुवाप दत्तवान् । वपोऽत् डु मुण्डतन्तुवीजोप्त्योः निष्पूर्वो दाने वर्त्तते, व्यथ-यङेति खलिः । तस्मिन् अकम्पने निहते सति शोकोऽग्निरिव रावणं बभ्रज्ज ददाह, भ्रस्जओष पाके झल्झशोरिति सस्य दत्वे स्तुश्चुभिश्चुरादिति जः, भ्रस्जोऽरे णौ भर्ज्ज वेत्यस्याप्रवृत्तिपक्षे रूपम् ॥ ८६

অনুবাদ। হনূমান্ সেই তালবৃক্ষ দ্বারা অকম্পনরূপ মহা পশুকে যমরাজের উদ্দেশে দান করিল। ৮৬

**स बिभे[भ्रे]ष प्रचुचोद दन्तैरोष्ठं चखाद च ।**
**प्रगोपायांचकाराशु यत्नेन परितः पुरम् ॥ ८७**

अन्वयः । स बिभेष, प्रचुचोद, दन्तैः ओष्ठं चखाद च ; आशु यत्नेन पुरं परितः प्रगोपायाञ्चकार ॥ ८७

मल्लिनाथः । स इति । स रावणो बिभेष चचाल चकितोऽभूदित्यर्थः । भेषृ चलने । प्रचुचोद रोषादयत्किञ्चित्पुरोवर्त्तिहस्तलग्नं वस्तु चूर्णयामास । चुद सञ्चूर्णने । दन्तैरोष्ठं चखाद च ।

ददंश चेत्यर्थः। आशु यत्नेन पुरं लङ्कां परितः सर्वतः प्रगोपायाञ्चकार ररक्ष। सर्वत्र रक्षिणो निहितवानित्यर्थः। गुपू रक्षणे। लिट्। "आयादय आर्धधातुके वा" इति विकल्पादायप्रत्ययः। ततः "कास्प्रत्ययाद्—" इत्याम्प्रत्ययः॥ ८७

भरतः। स विभ्येति्यादि। स रावणो बिभ्रम चलितः, धैर्य्यादित्यर्थात्। अ चुक्षु क्रन्दने। क्रोधात् प्रत्वौद लोष्टादीन् चूर्णितवान्। अधो मुदिर मृदि। दन्तैरोष्ठं चखाद दष्टवान्। स्वाशु भक्षणे खद स्थैर्य्ये वधे वा। पुरं लङ्का परितः समन्तात् आशु शीघ्रं यत्न न प्रगोपायाञ्चकार रक्षितवान्। गुपू रक्षे, "वाऽऽयं" इति पाक्षिकः आयः कान्तत्वादाम्॥ ८७

अनुवाद। রাবণ চঞ্চল হইল, ক্রোধে সম্মুখাগত বস্তু বা ব্যক্তি যাহা পায়, তাহাই চূর্ণ এবং দন্তদ্বারা ওষ্ঠ দংশন করিল। তখনই সযত্নে লঙ্কার চতুর্দ্দিকে রক্ষক নিযুক্ত করিল। ৮৭

प्रहस्तमर्थयांचक्रे योद्धुमद्भुतविक्रमम्।
किं विचारेण राजेन्द्र युद्धार्था वयमित्यसौ॥ ८८

भवा[चक्षा]णाशङ्कितो योद्धुमुत्सेहे[ऽथ]च महारथः
नियेमिरेऽस्य योद्धारश्चक्लृपे चाश्वकुञ्जरम्॥ ८९

अन्वय। अद्भुतविक्रमं प्रहस्तं योद्धुम् अर्थयाञ्चक्रे, असौ—"हे राजेन्द्र! वयं युद्धार्थाः, किं विचारेण" इति बभाण। अथ स महारथः अशङ्कितः योद्धुम् उत्सेहे, अस्य योद्धारः नियेमिरे, अश्वकुञ्जरं च चक्लृपे॥ ८८—८९

मल्लिनाथः। प्रहस्तमिति। अद्भुतविक्रमं प्रहस्ताख्यं प्रधानामात्यं योद्धुमर्थयाञ्चक्रे प्रार्थितवान्। अर्थयतेः स्वार्थण्यन्तादात्मनेपदिनो लिट्याम्प्रत्यये तङ्। असावित्थं प्रार्थितः प्रहस्तः हे राजेन्द्र! वयं युद्धार्था युद्धप्रयोजनका योद्धुमेव संवर्धिताः तद्विचारेण किमिति बभाणेत्युत्तरेण सम्बन्धः॥ ८८

मल्लिनाथः। बभाणेति। बभाणेति पूर्वशेषः। महारथः प्रहस्तोऽशङ्कितः सन् योद्धुमुत्सेहे उत्साहवानासीत्। 'स्थेयान् प्रयत्न उत्साहः' स च वीररसस्य स्थायी। ते तत्सम्पन्ना जाता इत्यर्थः। अस्य प्रहस्तस्य योद्धारः सहायभूता योधा नियेमिरे नियमिताः

यमेः कर्मणि लिट्। उभयत्रापि "अत एकहल्—" इत्येत्वम्। अश्वकुञ्जरम्। सेनाङ्गत्वाद्द्वन्द्वैकवद्भावः। चक्लृपे एतावदिति क्लृप्तं जातम्। कर्त्तरि लिट्॥ ८९

भरतः। प्रहस्तमित्यादि। रावणः अद्भुतविक्रमं प्रहस्तं योद्धुं प्रार्थितवान्, अर्थङ् याचने। असौ प्रहस्त इति चक्राणेति वक्ष्यमाणेन सम्बन्धः। किं चक्राणेत्याह,—हे राजेन्द्र! किं विचारेण यतो वयं युद्धप्रयोजना एव॥ ८८

भरतः। चक्राणेत्यादि। पूर्वोक्तं चक्राण उक्तवान्। क्रण च शब्दे। उक्त्वा महारथोऽसौ निःशङ्कः सन् योद्धुमुत्सहते स्म। अस्य प्रहस्तस्य अनुजीविनो योद्धारो रावणेन नियेमिरे नियमिताः, प्रहस्तेनैव सह एतावद्भिर्योद्धव्यमिति, यमो ङ विरतौ, निपूर्वो नियमनार्थः, कर्मणि रूपम्। अश्वकुञ्जरं चक्लृपे सज्जीकृतम्। क्लृपूङ् च कम्पने, क्लृपः क्लृपाऽक्लपादौ। अश्वाश्च कुञ्जराश्चेति समाहारद्वन्द्वः, सेनाङ्गत्वात् समाहार इति पक्षः। महान् रथो यस्य स तथा, महारथशब्दः पारिभाषिकोऽप्यस्ति। तथा च,—"रथेनैकेन यो वीरः शास्ति यवकुलं महत्। महारथः स विज्ञेयः संग्रामेषु परायणः॥" इति॥ ८९

অনুবাদ। যুদ্ধ করিবার জন্য অদ্ভুত প্রভাব প্রহস্তকে বলিল। সে বলিল, মহারাজ! যুদ্ধের জন্যইত আমাদিগকে রাখিয়াছেন, তবে আর বিচারে প্রয়োজন কি?। ৮৮

অনুবাদ। এবং মহারথ (প্রহস্ত) নিঃশঙ্ক চিত্তে যুদ্ধ করিতে উৎসাহী হইল, প্রহস্তের সহায় যোদ্ধৃবর্গকে তাহার সহিত যুক্ত করা হইল এবং অশ্ব হস্তী সংগৃহীত হইল। ৮৯

युयुजुः स्यन्दनानश्वैरीजुर्देवान् पुरोहिताः।
आनर्चुर्ब्राह्मणान् सम्यगाशिषश्चाशशा.[शं]सिरे॥९०

अन्वयः। स्यन्दनान् अश्वैः (सह) युयुजुः, पुरोहिताः देवान् ईजुः, ब्राह्मणान् सम्यक् आनर्चुः (ते) आशिषः च आशशंसिरे॥९०

मल्लिनाथः। युयुजुरिति। स्यन्दनान् रथानश्वैः सह युयुजुर्युञ्जन्ति स्म सारथय इति शेषः। पुरोहिता देवान् ईजुः पूजयामासुः। यज देवपूजादौ। लिट्। यजादीनां किति सम्प्रसारणम्। ब्राह्मणान् सम्यगानर्चुरर्चयामासुः। अर्चभौवादिकाल्लिट्। "अत आदेः"। "तस्मान्नुड्द्विहलः" इति नुट्। ते ब्राह्मणा आशिषो मनोरथान् आशशंसिरे सत्याः सन्तु यजमानस्य कामा इत्याशशंसिरे इत्यर्थः। 'आङः शासु इच्छायाम्' इति तङ्॥ ९०

भरत:। युयुजुरित्यादि। अश्वैः स्यन्दनान् रथान् युयुजुः सन्नह्यन्ति स्म, अश्वांश्च युञ्जन्ति इत्यर्थात्। युजिर्योगे च युतो युज कि संयमे इत्यस्य ण्यादिपक्षे वा रूपम्। पुरोहिता देवान् यजन्ति स्म। यजेरौ देवार्च्चादानसङ्गतिकरणे कर्त्तुः फलवत्त्वाभावात् पं। व्यथ-यतीति खेर्जिः, ग्रह स्वपाद्योरिति मूलस्य जिः। ब्राह्मणांश्च पूजयन्ति स्म। स्यान्तादाटीति अर्थैः खेरान्। ते ब्राह्मणा अर्च्चिताः सन्तः आशिषश्च आशशंसिरे इच्छन्ति स्म। आङः शसु इच्छायाम्। आशशासिरे इति पाठे—आङः शास इच्छायामपि ॥ ९०

অনুবাদ। সারথিরা রথে অশ্ব যোজনা করিল, পুরোহিতেরা দেবারাধনায় প্রবৃত্ত হইলেন ব্রাহ্মণগণের উপযুক্ত অর্চনা করা হইল এবং তাঁহারা রাজার:আশীর্ব্বাদ প্রার্থনা করিলেন। ৯০

**ऊहिरे मूर्ध्नि सिद्धार्था गावश्चालेभिरे भटैः।**
**प्रचुक्षुवुर्महास्त्राणि जिज्ञासांचक्रिरे हयान् ॥ ९१**

अन्वय:। भटैः मूर्ध्नि सिद्धार्थाः ऊहिरे, गावः च आलेभिरे, महास्त्राणि प्रचुक्षुवुः, हयान् जिज्ञासाञ्चक्रिरे ॥ ९१

मल्लिनाथ:। ऊहिर इति। भटैर्योधैर्मूर्ध्नि सिद्धार्थाः श्वेतसर्षपा ऊहिरे ऊढ़ाः। वहेः कर्मणि लिट्। यजादित्वात् सम्प्रसारणम्। गावश्चालेभिरे स्पृष्टाः। लभे. कर्मणि लिट्। "अत एकहल—" इत्येत्वम्। महास्त्राणि प्रचुक्षुवुः उत्तेजयामासुः। क्ष्णु तेजने। हयान् जिज्ञासाञ्चक्रिरे ज्ञातुमीषुः। शक्तिविषये परीक्षाञ्चक्रिर इत्यर्थः। जानातेः सन्नन्तात् कर्त्तरि लिट्याम्प्रत्ययः। "ज्ञाश्रुस्मृदृशां सनः" इति लिट्यनुप्रयोगेऽपि तङ् ॥ ९१

भरत:। ऊहिरे इत्यादि। भटैः योधैः मूर्ध्नि सिद्धार्थाः श्वेतसर्षपा ऊहिरे धृता मङ्गलार्थम्। वहेर्णौ प्रापणे, "व्यथ-ग्रह":इति खेर्जिः, "ग्रह-स्वपाद्योः" इति प्रकृतेर्जिः। गावश्च आलेभिरे स्पृष्टाः, लभ डुलभँष् प्राप्तौ आङ्पूर्वः स्पर्शनेऽपि कर्म्मणि रूपम्। महास्त्राणि प्रचुक्षुवुः तेजितवन्तः। भटा इति विभक्ति-व्यत्ययेनानुषज्यते, क्ष्णु तेजने। हयान् ज्ञातुमिच्छाञ्चक्रुः, किमेते युद्धकुशला न वेति। ज्ञा अवबोधने। "ज्ञा श्रु स्मृ दृशां सनः" इति तङ् ॥ ९१

অনুবাদ। যোদ্ধৃবর্গ মঙ্গল-কামনায় মস্তকে শ্বেতসরিষা ধারণ এবং গো-স্পর্শ করিল, মহাস্ত্র শাণিত এবং কোন্ কোন্ অশ্ব যুদ্ধের উপযুক্ত তাহার পরীক্ষা করিতে লাগিল। ৯১

ललुः खड्गान् ममार्जुश्च ममृजुश्च परश्वधान्।
अलंचक्रे समालेभे ववसे बुभुजे पपे॥ ९२

अन्वयः। खड्गान् ललुः ममार्जुः च, परश्वधान् ममृजुः च, अलञ्चक्रे समालेभे ववसे बुभुजे पपे॥ ९२

मल्लिनाथः। ललुरिति। खड्गान् ललुः आदधिरे। ला आदाने। ममार्जुश्च शोधयामासुः। तथा परश्वधान् परशूंश्च ममृजुः शोधितवन्तः। उभयत्र मृजूष् शुद्धौ। लिट्। भैरवास "मृजेरजादौ संक्रमे विभाषा वृद्धिर्वक्तव्या" इति वृद्धिविकल्पाद् द्वैरूप्यम्। तथा तैरलञ्चक्रेऽलङ्कृतम्। समालेभे समालब्धम्। समालब्धोऽनुलेपनम्। ववसे वसितम्। वस आच्छादने। बुभुजे भुक्तम्। पपे पीतम्। पा पाने। सर्वत्राविवक्षितकर्मत्वाद् भावे लिट्॥ ९२

भरतः। ललुरित्यादि। भटाः खड्गान् गृहीतवन्तः, लल ग्रहे। ममार्जुः खड्गान् शुद्धान् चक्रुः। तथा परश्वधान् परशून् ममृजुः शोधितवन्तः। मृज ल शुद्धौ "मृजो ऽकङिति निर्वा" इति रूपद्वयम्। अलञ्चक्रे योद्धृभिरिति वक्ष्यमाणेन सम्बन्धः। समालेभे अनुलेपनं कृतं, ववसे आच्छादनं कृतं, वसल स्तौ। बुभुजे भुक्तं, भुज धौ वाच्ये भक्ष। पपे पीतं, पा पाने, सर्वत्र भावे ठी॥ ९२

অনুবাদ। যোদ্ধারা খড়্গ লইল ও মার্জিত করিল, কুঠারগুলিও মার্জিত করিল, অলঙ্কার ধারণ, চন্দনাদি লেপন, বস্ত্রপরিধান, ভোজন ও পান করিল। ৯২

जहसे च क्षणं यानैर्निजग्मे योद्धृभिस्ततः।
विप्रान् प्रहृष्ट आनर्च जुहाव च विभावसुम्॥ ९३

अन्वयः। ततः योद्धृभिः क्षणं जहसे च, यानैर्निजग्मे; प्रहृष्टः विप्रान् आनर्च, विभावसुं जुहाव च॥ ९३

मल्लिनाथः। जहस इति। ततो योद्धृभिः क्षणं जहसे हसितं विनोदितमित्यर्थः। ततः यानैर्वाहनैः करणैर्निजग्मे निर्गतम्। उभयत्र भावे लिट्। "गमहन—" इत्यादिना गमेरुपधालोपः। अथ प्रहृष्टो। विप्रानानर्च पूजयामास। गतमेतत्। विभावसुमग्निं जुहाव च जयार्थमित्यर्थः॥ ९३

भरत: । जहसीत्यादि । योद्धृभि: क्षणं जहसे हसितं, यानै: रथादिभि: निर्जग्मे निर्गतम् । ततोऽनन्तरं प्रहृष्टो विप्रान् आनर्च पूजितवान् । विभावसुम् अग्निं जुहाव प्रीणितवान् । हु ह्नि होमेऽदने च' इत्यादानेप्यार्थत्वात् प्रीणनेऽपि ॥ ९३

অনুবাদ । তৎপরে যোদ্ধৃগণ কিছুক্ষণ হাস্য কৌতুক করিয়া রথারোহণে নির্গত হইল, পরে প্রহৃষ্ট ব্রাহ্মণের অর্চনা করিল ও অগ্নিতে আহুতি দিল ।৯৩

**संवर्गयांचकाराप्तान् चन्दनेन लिलेप च ।**
**चचाम मधु माद्वींकं त्वक्रं चाचकचे वरम् ॥ ९४**

अन्वय: । आप्तान् संवर्गयाञ्चकार, चन्दनेन लिलेप च, माद्वींकं मधु चचाम, वरं त्वक्रं च आचकचे ॥ ९४

मल्लिनाथ: । समिति । आप्तान् हितान् संवर्गयाञ्चकार सम्यग्वर्गी चकार, "तत्करोति—" इति ण्यन्ताल्लिट् । चन्दनेन लिलेप । मृद्वीकाया विकारो माद्वींकं मधु द्राक्षासवं चचाम पपावित्यर्थ: । चमु अदने । वरं श्रेष्ठं त्वचं त्रायत इति त्वक्त्रं कवचं च । "आतोऽनुपसर्गे क:" । आचकचे आबबन्ध । कच बन्धने । कर्त्तरि लिटि तङ् ॥ ९४

भरत: । संवर्गयामित्यादि । प्रहृष्ट आप्तान् जनान् संवर्गयाञ्चकार सम्भावितवान् तन्नात्मीयसमुदायो वर्ग:, दक्षिणाहस्तादिदानेन शपथपूर्वकं संवर्गितवान् समृद्धीकृतवानित्यर्थ: । संवर्गं करोतीति णिच् । चन्दनेन लिलेप लेपनं कृतवान् । लिप्-पौरुषक्षेपे । मधु माध्वीकं मद्यं चचाम, वरं श्रेष्ठं त्वक्त्रं कवचम् आचकचे बद्धवान् । कच बन्धने: ॥ ९४

অনুবাদ । প্রহৃষ্ট আত্মীয় বর্গকে স্বদলভুক্ত করিয়া চন্দনে অঙ্গলেপন, দ্রাক্ষামদ্য পান এবং শ্রেষ্ঠ কবচ বন্ধন করিল । ৯৪

**उष्णीषं व्यामुमोचाथ [मुमुचे चाथ]**
**रथं च जुजुषे शुभम् ।**
**आललम्बे महास्त्राणि**
**गन्तुं प्रववृते तत: ॥ ९५**

अथ उष्णीषं व्यामुमोच, शुभं रथं च जुजुषे, महास्त्राणि आललम्बे, तत:

मल्लिनाथः। उष्णीषमिति। अथोष्णीषं शिरस्त्राणं व्यामुमोच आमुक्तवान्। शुभं रथं च जुजुषे निषेवे आरूरोहेत्यर्थः। जुषी प्रीतिसेवनयोः। महास्त्राण्यालेभे दधारेत्यर्थः। ततो गन्तुं प्रववृते प्रवृत्त इत्यर्थः॥ ९५

भरतः। उष्णीषमित्यादि। चारु उष्णीषं शिरस्त्राणं मुकुटं वा मुमुचे परिदधे मुचल्ट मोक्षणे भौवे, परिधानेऽपि दृश्यते। "उष्णीषस्तु शिरोवेष्टे किरीटे लक्षणान्तरे" इति विश्वः। शुभं शोभमानं रथं जजुषे सेवितवान् आरूढ इत्यर्थः। शक्नोति जुष मुदि सेवे। महास्त्राणि आललम्बे जग्राह। लबि ङ अवस्रंसने च। ततोऽनन्तरं गन्तुं प्रवृत्तः। वृत ङ्ल्लु वर्त्तने॥ ९५

অনুবাদ। তদনন্তর মুকুট পরিল, সুশোভিত রথে আরোহণ এবং মহাস্ত্রগুলি গ্রহণ করিল, তৎপরে গমনে প্রবৃত্ত হইল। ৯৫

**आजघ्नुस्तूर्यजातानि तुष्टुवुश्चानुजीविनः।**
**रजः प्रववृते[धे]घोरं घोषश्च व्यानशे दिशः॥ ९६**

अन्वयः। तूर्यजातानि आजघ्नुः, अनुजीविनः च तुष्टुवुः, घोरं रजः प्रववृते, घोषः च दिशः व्यानशे॥ ९६

मल्लिनाथः। आजघ्नुरिति। तूर्यजातानि पटहादिवाद्यजातानि आजघ्नुस्ताड़यामासुः। अनुजीविनः सेवका बन्द्यादयस्तुष्टुवुरस्तुवंश्च। घोरं भीमं रजो धूलिः प्रववृते प्रवृत्तम्। घोषो दिशो व्यानशे व्याप च। "अश्नोतेश्च" इति नुड़ागमः॥ ९६

भरतः। आजघ्नुरित्यादि। तूर्यसमूहान् आजघ्नुः वाद्यकारास्ताडितवन्तः, आत्माङ्गाद्यादित्यस्याविषयः आत्माङ्गकर्मकत्वाभावात् यनगमित्युङ्लोपः। अनुजीविनो जयजयेति स्तुवन्ति स्म। ष्टु ल स्तुतौ क्तिलादिति षत्वे ष्टुभिरिति: टः। घोरं भीषणं रजो वर्त्तते स्म। प्रवबृध इति क्वचित् पाठः। घोषः कोलाहलश्च दिशो व्याप्तवान्। अशूङ् व्याप्तिसंहत्योः स्यान्तादादीति.खेराम्॥ ९६

অনুবাদ। বাদ্যকরেরা বাদ্যযন্ত্র বাজাইল, বন্দীগণ স্তবপাঠ করিল; ভয়ঙ্কর ধূলি উত্থিত হইল এবং সৈন্য কলরবে দিক্‌ব্যাপ্ত হইল। ৯৬

**तं यान्तं दद्रुवु[दद्रशु]र्गृध्राः क्रव्यादाश्च सिषेविरे।**
**आववुर्वायवो घोराः खादुल्काश्च प्रपेतुः॥ ९७**

अन्वयः । तं यान्तं गृध्राः दुद्रुवुः, क्रव्यादाः च सिषेविरे, घोराः वायवः आववुः, खात् उल्काः च प्रचस्खलुः ॥ ९७

मल्लिनाथः । अथ सार्द्धत्रयेणास्य दुर्निमित्तान्याह—तमित्यादि । यान्तं महारणाय गच्छन्तं प्रहस्तं गृध्रा दुद्रुवुरभिद्रुताः । क्रव्यमदन्तीति क्रव्यादाः शृगालादयः । अदेः "क्रव्ये च" इति विच्प्रत्ययः । ते च सिषेविरे । घोरा भीमा वायव आववुः समन्ताद्वान्ति स्म । खादाकाशादुल्काश्च प्रचस्खलुः प्रपेतुरित्यर्थः । स्खल सञ्चलने ॥ ९७

भरतः । तं यान्तमित्यादि । गृध्रा अपशकुनसूचकाः पक्षिणः तं यान्तं गच्छन्तं प्रहस्तं दद्रुवुः गतवन्तः । दुद्रुवुरिति पाठे—द्रु सु गतौ । क्रव्यादः शृगालाः सेवितवन्तः सेवृङ् सेवने, विरैकारस्य ह्रस्व इकारः । घोराः प्रतिकूला वायवः सर्वतो वान्ति स्म । वा ल-गमनहिंसयोः । तदा तस्मिन् काले उल्काः प्रचस्खलुः आकाशात् पतन्ति स्म स्खल सञ्चलने ॥ ९७

অনুবাদ । প্রহস্তের যাত্রাকালে শকুনিগণ পশ্চাৎ ধাবিত হইল, মাংসাশী শৃগালাদি সঙ্গে চলিল, প্রচণ্ড বায়ু বহিল এবং আকাশ হইতে উল্কাপাত হইতে লাগিল । ৯৭

सस्यन्दे शोणितं व्योम
रणाङ्गानि प्रजज्वलुः ।
रथाः प्रचस्खलुः साश्वा नेहाञ्चक्रे-
[ न रंरंहा ] ऽश्वकुञ्जरम् ॥ ९८

अन्वयः । व्योम शोणितं सस्यन्दे, रणाङ्गानि प्रजज्वलुः साश्वाः रथाः प्रचस्खलुः, अश्वकुञ्जरं न ईहाञ्चक्रे ॥ ९८

मल्लिनाथः । सस्यन्द इति । व्योम आकाशं शोणितं सस्यन्दे प्रसुस्राव ववर्षेत्यर्थः । स्यन्दू प्रस्रवणे । रणाङ्गान्यायुधानि प्रजज्वलुः प्रज्वलितानि । साश्वा रथाः प्रचस्खलुः प्रस्खलिताः । अश्वकुञ्जरं नेहाञ्चक्रे न चेष्टते स्म । ईह चेष्टायाम् । "इजादेश्च गुरुमतोऽनृच्छः" इत्याम्प्रत्ययः ॥ ९८

भरतः । सस्यन्द इत्यादि । व्योम आकाशं कर्तृ शोणितं स्रवति स्म । स्यन्दू स्रुतौ । रणाङ्गानि खड्गादीनि ज्वलन्ति स्म, ज्वल अ म , चलाभिन्नेः । अश्वैः सह रथाः

स्खलन्ति स्म । स्खल मि चये चले । अश्वकुञ्जरं काऽऽ, न रथेड न अगाम । रुद्धि गत्याम् । नैहाचक्रे इति पाठे—न चेष्टते स्मेत्यर्थः ॥ ९८

অনুবাদ। নভোমণ্ডল রক্ত বর্ষণ করিল, অস্ত্রগুলি জ্বলিল, অশ্বসহ রথ সকল পড়িতে লাগিল, হস্তী অশ্বের গতিরোধ হইল। ৯৮

प्रतोदा जगलुर्वामिमानर्ज्जु[र्स्नु]र्यज्ञिया मृगाः ।
ददाल भूः पुपूरे द्यौः कपीनामपि निःस्वनैः ॥ ९९

अन्वयः । प्रतोदाः जगलुः, यज्ञियाः मृगाः वामं आनर्ज्जुः, भूः ददाल, कपीनाम् निःस्वनैः द्यौः अपि पुपूरे ॥ ९९

मल्लिनाथः । प्रेति । प्रतोदाः प्राजनदण्डा जगलुः सारथिहस्तेभ्यो गलिताः । यज्ञिया यज्ञार्हा मृगाः कृष्णसाराः । "यज्ञर्त्विग्भ्यां घखञौ" इति घप्रत्ययः । वाममप्रदक्षिणमानर्जुर्जग्मुः । अर्ज गतौ । लिट् । "अत आदेः" । "तस्मान्नुड् द्विहलः" । भूर्ददाल दलिता । कपीनां निःस्वनैः सिंहनादैर्द्यौरपि पुपूरे पूरिता । पूरी आप्यायने । कर्मणि लिट् । स्वोत्साहक्षयवत् परोत्साहवृद्धिरपि स्वस्य दुर्निमित्तमिति भावः ॥ ९९

भरतः । प्रतोदा इत्यादि । सारथिहस्तात् प्रतोदाः ताडनदण्डाः गलिताः । गल अदे । अनेकार्थत्वात् पतनेऽपि । यज्ञार्हा मृगा कृष्णसारादयो वामं भाग गताः । अर्ज ऋज्ञौ गतौ । आनर्ज्जुरिति पाठे अनज् धजि व्यक्तिगतिम्रक्षणे । भूमिः ददाल विदीर्णा । दल मि भेदे । जिह्मालिति पाठे ज्वल म चाल्ने । कपीनां निःस्वनैः द्यौः आकाशं पुपूरं पूर्णा । तथा अशुभं दृष्ट्वा कपीनां हर्षनिःस्वनो जात इति भावः । पूरी ङ् पूर्त्तौ ॥ ९९

অনুবাদ। সারথির হস্ত হইতে চাবুক পড়িয়া গেল, যজ্ঞমৃগেরা বামভাগে চরিতে লাগিল, পৃথ্বী বিদীর্ণ হইল এবং কপির কোলাহলে গগনপূর্ণ হইল। ৯৯

मिमेह रक्तं हस्त्यश्वं राक्षसाश्च निटि[ति]ष्ठिवुः ।
ततः शुशुभतुः सेने निर्दयं च प्रजक्षतुः ॥ १००

अन्वयः । हस्त्यश्वं रक्तं मिमेह, राक्षसाः च निटिष्ठिवुः, ततः सेने शुशुभतुः, निर्दयं च प्रजक्षतुः ॥ १००

मल्लिनाथः । मिमेहेति । हस्त्यश्वं रक्तं मिमेह मूत्रयामास ।

मिह सेचने। राक्षसाश्च रक्तं निटिष्ठिवुर्निष्ठ्यूतवन्तः। ष्ठिवु निरसने। "शर्पूर्वाः खयः" इत्यभ्यासे टकारः शेषः। ततो दुर्निमित्तानन्तरं सेने कपिराक्षससेने शुशुभतुः रेजतुः। निर्दयं यथा तथा प्रजह्रतुर्युयुधाते ॥ १००

भरतः। मिमेहेत्यादि। हस्त्यश्वं कर्तृ, रक्तं मिमेह मूत्रितवत्, मिहो सेचि। राक्षसाश्च रक्तं निष्ठीवन्ति स्म, ष्ठिवु निरसने, ष्ठिवक्लम्वीरिति पाक्षिकः खेलकारः। तत ईदृशामङ्गलनिमित्तानन्तरं द्वे सेने शुशुभतः, शुभ शुम्भ दीपनार्थसगोरित्यस्य रूपम्। शुभ-लुङ् दीप्तौ, क्वचिदात्मनेऽपि परस्मैपदित्वमिति केचित्। निर्दयश्च प्रहारं चक्रतुः। इत्य युत्याम् ॥ १००

অনুবাদ। হস্তী ও ঘোটকেরা রক্তপ্রস্রাব করিয়াছিল, রাক্ষসদের মুখ হইতে রক্ত নির্গত হইয়াছিল, তাহার পর উভয়পক্ষীয় সেনা হর্ষচিত্তে নির্দয় হইয়া প্রহারে প্রবৃত্ত হইল। ১০০

दिद्विषुर्दुद्रुवुश्चच्छुश्चक्लमुः सुषुपुर्हताः।
चखादिरे चखादुश्च विलेपुश्च रणे भटाः ॥ १०१

अन्वयः। रणे भटाः दिद्विषुः दुद्रुवुः चच्छुः चक्लमुः, हताः सुषुपुः चखादिरे चखादुः विलेपुः च ॥ १०१

मल्लिनाथः। दिद्विषुरिति। रणे भटा दिद्विषुर्द्वेषं चक्रुः। दुद्रुवुरभिजग्मुः। द्रु अभिगमने। चच्छुश्चिच्छिदुः। छो छेदने। लिट्। "आदेचः—" इत्यात्वे द्विर्भावादिकार्ये "आतो लोपः"। चक्लमुः क्लान्ताः। हताः सुषुपुर्दीर्घं सुप्ताः। ञि ष्वप् शये। लिटि कित्वात्सम्प्रसारणे द्विर्भावादिकार्यम्। चखादिरे परैः खादिताः। कर्मणि लिट्। चखादुः परानखादंश्च। विलेपुः परिदिदेविरे च। "अत एकहल्—" इत्येत्वम् ॥ १०१

भरतः। दिद्विषुरित्यादि। भटा रणे द्वेषं चक्रुः द्विषीञ वैरे। दुद्रुवुः अभिमुखं जग्मुः। द्रु ल अभिसर्पणे। चच्छुः छिन्नवन्तः। छो लूनौ च, हताः सन्तश्चक्लमुः मोहं गताः। क्लिमु क्लमुभिर्ग्लानौ। सुषुपुः भूमौ पतिताः। स्वपो ञि शये। अनेन मरणं लक्ष्यते। "व्यय-ग्रह" इति खेर्जिः, "ग्रह-स्वपाद्यो;" इति प्रकृतेर्जिः। चखादिरे अन्यैः खादिताः चिखिदिरे इति पाठे दैन्यं गताः। खिदङ् धौ दैन्ये। चखादुश्च अन्यान् खादितवन्तः। खादङ् भक्षणे। विलेपुः विलापं चक्रुः, ञ्च लप भाषे, विपूर्वः परिदेवने ॥ १०१

অনুবাদ। যুদ্ধস্থলে সৈনিকগণ পরস্পর দ্বেষ করিতে লাগিল এবং পরস্পরের অভিমুখে অগ্রসর হইতে লাগিল, কাটাকাটি করিয়া ক্লান্ত ও নিগত হইয়া ভূতলে শয়ন করিল. বিপক্ষ কর্তৃক ভক্ষিত এবং বিপক্ষকে ভক্ষণ ও বিলাপ করিতে লাগিল। ১০১

प्रहस्तस्य पुरोऽमात्यान् जिहिंसुर्दधृषुस्तथा।
वानराः कर्म सेनानी रक्षसां चक्षमे न तत्॥ १०२

अन्वयः। वानराः प्रहस्तस्य पुरः अमात्यान् जिहिंसुः, तथा दधृषुः, रक्षसां सेनानीः तत् कर्म न चक्षमे॥ १०२

मल्लिनाथः। प्रहस्तस्येति। वानराः प्रहस्तस्य पुरोऽग्रेऽमात्यान् जिहिंसुर्जघ्नुः। हिंसेर्लिटि "भ्रेकम"। तथा दधृषुः प्रजगल्भिरे। धृषेरपितो लिटः कित्त्वान्न गुणः। रक्षसां सेनां नयतीति सेनानीः सेनापतिः प्रहस्तः। नयतेः संपदादिना क्विप्। तत्कर्म वानरपौरुषं न सेहे॥ १०२

भरतः। प्रहस्तस्येत्यादि। वानराः प्रहस्तस्य पुरोऽग्रतोऽमात्यान् हिंसन्ति स्म। हिस धि कि हिंसे। अमा सहार्थे "त्यताद्यचिरः" इत्यादिना त्य.। तथा दधृषुः, जि धृषा न प्रागल्भ्ये तत् वानरैः कृतं कर्म रक्षसां सेनानीः प्रहस्तो न चक्षते स्म। चमू ज जि मर्षे॥ १०२

অনুবাদ। বানরসৈন্যদল প্রহস্তের সম্মুখেই রাক্ষস অমাত্যগণকে মারিতে এবং গর্ব করিতে লাগিল। রাক্ষসসেনাপতি প্রহস্ত তাহা সহ্য করিতে পারিল না। ১০২

ऊर्णुनाव स शस्त्रौघैर्वानराणामनीकिनीम्।
शशास च बहून् योधान् जीवितेन विवेच च॥१०३

अन्वयः। सः वानराणाम् अनीकिनीं शस्त्रौघैः ऊर्णुनाव. बहून् योधान् शशास च, जीवितेन च विवेच॥ १०३

मल्लिनाथः। ऊर्णुनावेति। स प्रहस्तो वानराणामनीकिनीं सेनां शस्त्रौघैः शरजालैरूर्णुनावाच्छादयामास। ऊर्णुञ् आच्छादने। लिट्। "अजादेर्द्वितीयस्य" इति "न न्द्राः संयोगादयः" इति नुशब्दस्य द्विर्भावः। णलि वृद्ध्यावादेशौ गुणवद्भावात् "इजादेश्च—"

इत्याम्प्रत्ययो न भवति । 'वाच्य ऊर्णोर्णुवद्भावो यत्वाप्सिद्धिः प्रयोजनम् । आमश्च प्रतिषेधार्थम्' इति वचनात् । बहून् योधान् प्रघास प्रजहार च । घस्लृ हिंसायाम् । जीवितेन विवेच पृथक्चकार च, प्राणैर्वियोजयामासेत्यर्थः । विचिर् पृथग्भावे ॥ १०३

भरतः । ऊर्णुनावेत्यादि । स प्रहस्तो वानराणाम् अनीकिनीं सेनां शस्त्रसमूहैः ऊर्णुनाव आच्छादितवान् । ऊर्णु लङ् आच्छादने, "भिजादि" इत्यादौ ऊर्णुवर्जनाद्याम्, नाजन्तादेरादिर्द्वि: स्यादौ नवद्रोय इति वचनात् नोर्णव द्वित्वम् । बहून् योधान् प्रघास जघान, घस बधे । जीवितेन च विवेच पृथक् कृतवान् । विचिर्ण् धौत पृथक्के ॥ १०३

অনুবাদ। প্রহস্ত অস্ত্রজালে বানরসেনা আচ্ছাদিত করিল এবং অনেক যোদ্ধাকে প্রহার ও প্রাণবিযুক্ত করিল। ১০৩

**आससञ्ज भयं तेषां दिद्युते च यथा रविः ।**
**नाययास द्विषद्देहैर्जुगू[जगा]हे च दिशो दश ॥ १०४**

अन्वयः । तेषां भयम् आससञ्ज, रविः यथा दिद्युते तथा ( दिद्युते ), द्विषद्देहैः दिशः च जुगूहे, नाययास ॥ १०४

मल्लिनाथः । आससञ्जेति । प्रहस्तेषां कपीनां भयमाससञ्ज आसञ्जितवान् । रविर्यथा रविरिव दिद्युते दिदीपे । द्विषद्देहैर्वानरशरीरैर्दश दिशो जुगूहे संववार । गुह संवरणे । नाययास आयासं न गत इत्यर्थः । यसु प्रयत्ने ॥ १०४

भरतः । आससञ्जेत्यादि । प्रहस्तस्तेषां वानराणां भयम् आससञ्ज आरोपितवान् । सन्जो जि सङ्गे, अन्तर्भूतण्यर्थोऽत्र बोध्यः, सन्जेरकर्मकत्वात । किं वा भयं कर्तृ आससञ्ज आसक्तावत् । प्रहस्तो रविरिव द्योतते स्म । द्युत् लृर्दीप, अपिशब्दात् द्युत्यां "द्युत् स्वाप्योः स्वेर्जिः" इति जिः । युध्यमानोऽपि नाययास नायासं प्राप । इयंसु यतने, आङ्पूर्वः श्रमे । द्विषां देहैः कपिशरीरैः करणभूतैः दश दिशो जगाहे विष्टब्धवान्, ङ गाह्ृ वेलोडने ॥ १०४

অনুবাদ। সে তাহাদের মনে ভয়ের সঞ্চার ঘটাইল এবং সূর্য্যবৎ উদ্দীপিত হইল। শত্রুর মৃত কলেবরে দশদিক আচ্ছন্ন করিল তাহাতে তাহার কষ্ট হইল না। ১০৪

केचित् संचुकुटुर्भीता लेजिरेऽन्ये पराजिताः।
संग्रामाद्बभ्रशुः केचिद्ययाचुश्चापरेऽभयम् ॥ १०५

अन्वयः। केचित् भीताः (सन्तः) संचुकुटुः, अन्ये पराजिताः (सन्तः) लेजिरे, केचित् संग्रामात् बभ्रशुः, अपरे अभयं ययाचुः ॥ १०५

मल्लिनाथः। केचिदिति। केचिद्वानरा भीताः सन्तः संचुकुटुः संचुकुटुरित्यर्थः। कुट कौटिल्ये। अन्ये पराजिता लेजिरे ललज्जिरे। लज व्रीडायाम्। अनुदात्तेत्त्वात्तङ्। "अत एकहल्—" इत्येत्वम्। केचित् संग्रामात् समराद्बभ्रशुर्भ्रष्टाः। अपरेऽभयं ययाचुः। याचिरभयपदो ॥ १०५

भरतः। केचिदित्यादि। केचन भीताः सन्तः सचुकुटुः कौटिल्यं प्रापुः, कुटिलयुद्धाश्रयणात्। कुट श्रि कौटिल्ये। अन्ये पराजिताः लेजिरे प्रहस्तेन भर्त्सिताः, लज भर्त्सने, कर्मणि रूपम्। केचित् संग्रामात् बभ्रशुः पलायिताः। भ्रंशु अधःपाते। अपरे अभयं देहीति याचितवन्तः। टुयाचृञ् याचने ॥ १०५

অনুবাদ। কোন কোন বানর ভয়ে কুটিলতা অবলম্বন করিল, অপর কতকগুলি পরাজিত হইয়া লজ্জিত হইল। কেহ কেহ যুদ্ধস্থান হইতে পলায়ন করিল, অপর কতকগুলি অভয়ভিক্ষা চাহিল। ১০৫

एवं विजिग्ये तां सेनां प्रहस्तोऽतिदद्रर्प च।
शशाम न च संक्रुद्धो निजुगोप निशाचरान् ॥१०६

अन्वयः। प्रहस्तः एवं तां सेनां विजिग्ये, अतिदद्रर्प च, संक्रुद्धः न शशाम च, निशाचरान् निजुगोप ॥ १०६

मल्लिनाथः। एवमिति। प्रहस्त एवं तां सेनां कपिबलं विजिग्ये जितवान्। लिटि "विपराभ्यां जेः" इति तङ्। "सन्लिटोर्जेः" इति कुत्वम्। "परनेकाचः—" इति यणादेशः। अतिदद्रर्प च अत्यन्तं विजयहृष्टश्चाभूत्। संक्रुद्धो न शशाम च न क्रोधाद्विरराम चेत्यर्थः। निशाचरान् निजुगोप नितरां ररक्ष। गुपू रक्षणे। आर्धधातुके विकल्पादायादेशाभावः ॥ १०६

भरतः। एवमित्यादि। उक्तप्रकारेण प्रहस्तः तां कपिसेनां विजितवान्। जि जये। "वि-प राजि" इति तं, "जेर्गि: सन्टोः"। अत्यर्थं दर्पोऽपि जातः, दृप्यतेः

हर्षगर्वयोः, दृप णि सन्दीपन इत्यस्य वा णेरभावपक्षे रूपम्। संक्रुद्धः सन् न शाम्यो बभूव, शमु दर्शने। निशाचरान् निर्जुगोप। गुपू रक्षे। "आर्द्ध" इति पक्षे आयस्याभावः। निर्जुगोप इति क्वचित् पाठः॥ १०६

অনুবাদ। প্রহস্ত এইরূপে সেই বানরসেনা ক্ষয় করিয়া অত্যন্ত দর্পিত হইল, কিছুতেই তাহার ক্রোধের উপশম হইল না। তখন অপর রাক্ষস-গুলিকে বিশেষরূপে রক্ষা করিতে লাগিল। ১০৬

**चुक्रुधे तत्र नीलेन तरुश्चोच्चिक्षिपे महान्।**
**प्रहस्तोऽभिहतस्तेन बाणान् विससृजे बहून्॥१०७**

अन्वयः। तत्र नीलेन चुक्रुधे, महान् तरुः च उच्चिक्षिपे, तेन अभिहतः प्रहस्तः बहून् बाणान् विससृजे॥ १०७

मल्लिनाथः। चुक्रुध इति। तत्र कपिसेनायां नीलेन कपिना चुक्रुधे क्रुद्धम्। भावे लिट्। महांस्तरुश्चोच्चिक्षिपे च तस्योपरि उत्क्षिप्तश्च। कर्म्मणि लिट्। प्रहस्तो वृक्षेणाभिहत सन् बहून् बाणान् विससृजे नलस्योपरि मुमुचे। सृजेर्दैवादिकाल्लिटि तङ्॥१०७

भरतः। चुक्रुध इत्यादि। तत्र प्रहस्तविषये नीलेन चुक्रुधे क्रोधः कृतः, क्रुध् क्रुधौ कोपे, भावे रूपम्। महान् तरुश्च तस्योपरि उच्चिक्षिपे उत्क्षिप्तः, क्षिप श औ क्षिपि कर्म्मणि रूपम्। तेन नीलेन तरुणा, वा अभिहतः प्रहस्तो बहून् बाणान् विससृजे त्यक्तवान्। सृज्यीङ् विसर्गे॥ १०७

অনুবাদ। তন্মধ্যে নীলবানর ক্রুদ্ধ হইয়া প্রহস্তের উপর একটা বিশাল বৃক্ষ নিক্ষেপ করিল। সেই বৃক্ষে আহত হইয়া প্রহস্ত অনেক বাণ নিক্ষেপ করিল। ১০৭

**सेहे कपी रिपोरस्त्रांस्तरुणाथ ततर्द च।***
**धरित्रीं मुसली तेये प्रहस्तश्चिखिदे न च॥ १०८**

अन्वयः। कपिः सेहे, अथ रिपोः अस्त्रान् तरुणा ततर्द च, (ततः) प्रहस्तः मुसली (सन्) धरित्रीं तेये, न च चिखिदे॥ १०८

* "सेहे कपी रथाश्वांश्च रिपोस्ततर्द शाखिना" इति पाठान्तरम्।

मल्लिनाथः। सेह इति। कपिर्नीलः सेहे तान् बाणान् सोढ़वान्। 'सहेर्भौवादिकात्कर्तरि लिट्। तङ्। "अत एकहल्—" इत्येत्वम्। अथ रिपोरश्वान् रथाश्वान् तरुणा वृक्षेण ततर्द हिंसितवान्। उत्तृदिर हिंसानादरयोः। ततर्हेति पाठे तृहि हिंसायाम्। ततः प्रहस्तो मुसलमस्यास्तीति मुसली मुसलायुधः सन् धरित्रीं तेये जगाम। पदातिरिव सन् युयुध इत्यर्थः। तय गतौ। "अत एकहल्—" इत्येत्वम्। न चिखिदे च तथापि न खिन्नश्चेत्यर्थः। खिद दैन्येः। तौदादिकाद्दैवादिकाद्वा। लिटितङ्॥ १०८

भरतः। सेहे इत्यादि। कपिः नीलः सेहे सोढ़वान्, तद्बाणक्षेपमित्यर्थात्। रिपोः प्रहस्तस्य रथम् अश्वांश्च शाखिना ततर्द। तर्द हिंसे। ततः प्रहस्तो मुसलान्वितः सन् धरित्रीं तेये गतः, तयङ् गतिरक्षयोः, न च चिखिदे खेदं प्राप्तः। खिदङ्कौ दैन्ये॥ १०८

অনুবাদ। নীল সে বাণবর্ষণ সহ্য করিয়া শত্রুর অশ্বগুলিকে বৃক্ষাঘাতে মারিতে লাগিল, তখন প্রহস্ত মুষল লইয়া ভূতলে অবতীর্ণ হইল। কিন্তু সে কোনরূপে ছিন্ন হইল না। ১০৮

संदुधुक्षे तयोः कोपः पस्फाये चास्त्रलाघवम्।
नुनोद शाखिनं नीलः आवव्रे मुसली तरुम्॥१०९

अन्वयः। तयोः कोपः सन्दुधुक्षे, अस्त्रलाघवं पस्फाये च, (अथ) नीलः शाखिनं नुनोद, मुसली (प्रहस्तः) तरुम् आवव्रे॥ १०९

मल्लिनाथः। समिति। तयोः कपिराक्षसयोः कोपः संदुधुक्षे संदिदीपे। धुक्ष संदीपने। अस्त्रलाघवमस्त्रपाटवं च पस्फाये। स्फायी ओप्यायी वृद्धौ। अथ नीलः शाखिनं वृक्षं नुनोदः चिक्षेपेत्यर्थः। णुद प्रेरणे। मुसली मुसलपाणिः प्रहस्तस्तरुमावव्रे वारयामास। वृञ् संवरणे॥ १०९

भरतः। सन्दुधुक्षे इत्यादि। तयोः नीलप्रहस्तयोः कोपः सन्दुधुक्षे संप्रदीप्तः, धिक्ष धुक्ष् सन्दीपने क्लेशे जीवे। अस्त्रविषये लाघवं शीघ्रता ववृधे च, स्फायीङ् वृद्धौ। नीलः शाखिनं नुनोद, णुदश् प्रेरणे। मुसली प्रहस्तस्तं निवारितवान्। वृञ न वृञ वृणौ॥ १०९

অনুবাদ। উভয় পক্ষের ক্রোধ প্রদীপ্ত হইল। অস্ত্রচালনে ক্ষিপ্রকারিতা বৃদ্ধি পাইল। নীল আবার বৃক্ষ নিক্ষেপ করিল, এবং প্রহস্ত মূষল দ্বারা তাহা নিবারণ করিল। ১০৯

**वियत्यानभ्रतुर्भूमौ मण्डलानि विचेरतुः।**
**प्रदुद्रुवतुरन्योन्यं वीरौ शश्रमतुर्न च॥ ११०**

अन्वयः। वीरौ (नीलप्रहस्तौ) वियति आनभ्रतुः, भूमौ मण्डलानि विचेरतुः, अन्योन्यं प्रदुद्रुवतुः, न च शश्रमतुः॥ ११०

मल्लिनाथः। वियतीति। वीरौ तौ नीलप्रहस्तौ वियत्याकाशे आनभ्रतुजग्मतुश्चेरतुरित्यर्थः। भ्रम गतौ। द्विर्भावादिकार्ये "अत आदेः"। "तस्मान्नुड् द्विहलः"। आनर्च्छतुरिति पाठे ऋच्छ गतौ लिट्। "इजादेश्च गुरुमतः—" इत्याम्प्रत्ययो न भवति "अनृच्छ" इति प्रतिषेधात्। "ऋच्छत्यृताम्" इति गुणः। "द्विर्वचनेऽचि" इति स्थानिवद्भावाद्द्विर्वचनम्। "हलादिः शेषः"। "उरत्"। "अत आदेः" इत्यादिना। भूमौ मण्डलानि मण्डलाकारविधानि विचेरतुः। "अत एकहल्—" इत्येत्वम्। अन्योन्यं प्रदुद्रुवतुरभिद्रुतावित्यर्थः। द्रु गतौ। लिट्यतुस्। "अचि श्नुधातुभ्रुवाम्—" इत्युवङादेशः। तथापि न शश्रमतुर्न श्रान्तौ च॥ ११०

भरतः। वियतीत्यादि। तौ नीलप्रहस्तौ वीरौ वियति आकाशे गतौ, भ्रम गत्वा "आन्नादादि" इति खेरान्। भूमौ मण्डलानि तिर्य्यग्भ्रमणानि विचेरतुः विहितवन्तौ। अन्योऽन्यं प्रदुद्रुवतुः उपतापितौ। दुर्गोपतापे, द्रु स्रु गतौ, न तु शश्रमतुः श्रान्तौ श्रमुग्लानि-श्चं तप खेदयोः॥ ११०

অনুবাদ। বীরদ্বয় একবার শূন্যে একবার ভূতলে বিচরণ করিয়া পরস্পর পরস্পরকে আক্রমণ করিতে লাগিল, তথাপি শ্রান্ত হইল না। ১১০

**समीरयांचकाराथ राक्षसस्य कपिः शिलाम्।**
**स्वतस्तया ममारासावाशिश्राय च भूतलम्॥ १११**

अन्वयः। अथ कपिः राक्षसस्य शिलां समीरयाञ्चकार, असौ (प्रहस्तः) तया स्वतः (हतः सन्) ममार, भूतलं च आशिश्राय॥ १११

मल्लिनाथः। समिति। अथ कपिर्नीलो राक्षसस्य शिलां समीरयांचकार चिक्षिपवान्। असौ प्रहस्तस्तया शिलया हतो ममार मृतः। भूतलमाशिश्राय च भुवि पपातेत्यर्थः॥ १११

भरतः। समीत्यादि। अथानन्तरं कपिः नीलः राक्षसस्य प्रहस्तस्य शिलां समीरयाञ्चकार विक्षिप्तवान्। ईर्कि गतौ तुदि। तया शिलया हतस्ताडितोऽसौ प्रहस्तो मृतः। "मृङ् प्रीण्ये मम्" इति नियमात् पम्। भूतलञ्च आश्रितवान्। श्रिञ सेवने॥ १११

অনুবাদ। অনন্তর নীল প্রহস্তের উপর শিলা নিক্ষেপ করিল, তাহার আঘাতে সে হত হইয়া ভূতলে পতিত হইল। ১১১

तुतुषुर्वानराः सर्वे नेशुश्चित्राः क्षपा[निशा]चराः।
जेरुराशा दशास्यस्य सैन्यं नीलं नुनाव च॥ ११२

अन्वयः। सर्वे वानराः तुतुषुः, चित्राः क्षपाचराः नेशुः, दशास्यस्य आशाः जेरुः, सैन्यं नीलं नुनाव च॥ ११२

मल्लिनाथः। तुतुषुरिति। सर्वे वानरास्तुतुषुस्तुष्टाः। चित्राश्चित्रचरित्रा मायाविनः क्षपाचरा राक्षसा नेशुर्नष्टाः। णश अदर्शने। "अत एकहल्—" इत्येत्वम्। दशास्यस्य आशा विजयाशंसा जेरुर्जीर्णाः। जृष् वयोहानौ। लिटि। "वा जॄभ्रमुत्रसाम्" इत्येत्वाभ्यासलोपौ। सैन्यं वानरसेना नीलं नुनाव तुष्टाव च। णु स्तुतौ। लिटि णलि वृद्ध्यावादेशौ॥ ११२

भरतः। तुतुषुरित्यादि। ततः सर्वे वानरा तुष्टाः। तुषन्त् यौ अि च, चकारात् तुष्टौ। तुष्टुवुरिति पाठे—नीलमिति योज्यम्। चित्रा नानाप्रकारा निशाचरा नेशुः पलायिताः। णशन्तु जू नाशे। दशास्यस्य आशा मनोरथा जीर्णाः, जू गि कि ज्यानौ क्तलीषु: कित्त्वा द फलेत्यादिना पाक्षिकमेत्वं खिल्लोपश्च। गेलुरिति पाठे—गल अदे. अनेकार्थत्वात् गतावपि। सर्वमेव सैन्यं कर्तृ नीलं नुनाव। नु स्तुतौ। णुञि स्तवने वा॥ ११२

অনুবাদ। তখন বানর সকল সন্তুষ্ট হইল, মায়াবী নিশাচরগণ পলায়ন করিল, দশাননের বিজয়াশা ফুরাইল, এবং সৈন্যগণ নীলের প্রশংসা করিতে লাগিল। ১১২

यदा न फेलुः क्षणदाचराणां
मनोरथा रामबलाभियोगे

लङ्कां तदा भेजुरुदीर्णदैन्या
व्याचख्युरुच्चैश्च हतं प्रहस्तम् ॥ ११२

इति भट्टिकाव्ये तिङन्तकाण्डे लिड्विलसितो नाम प्रथमः
काव्यस्य चतुर्दशः सर्गः ॥ १४

अन्वयः। यदा रामबलाभियोगे क्षणदाचराणां मनोरथाः न फेलुः, तदा (ते) उदीर्णदैन्याः (सन्तः) लङ्कां भेजुः, हतं प्रहस्तम् उच्चैः व्याचख्युः च ॥ ११२

मल्लिनाथः। यदेति। यदा रामबलस्याभियोगेऽभियाने सति क्षणदाचराणां मनोरथा न फेलुर्न फलिताः। फल निष्पत्तौ। लिटि झेरुसि "तॄफलभजत्रपश्च" इत्येत्वाभ्यासलोपौ। तदा तस्मिन् काले उदीर्णदैन्या उदितदैन्याः सन्तो लङ्कां भेजुः। पूर्ववदेत्वादि। हतं प्रहस्तमुच्चैराचख्युः रावणाय कथयामासुः। ख्या प्रकथने। झेरुस्यातो लोपः ॥ ११२

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहामहोपाध्यायकोलाचल-मल्लिनाथसूरिविरचिते भट्टिकाव्यव्याख्याने सर्वपथीनाख्याने लिड्विलासो नाम चतुर्दशः सर्गः ॥ १४

भरतः। यदा नेत्यादि। रामबलस्य हनने क्षणदाचराणां राक्षसानां मनोरथा यदा न फेलुः। फल निष्पत्तौ। तृफलेति एत्व खिलोपश्च। तदा निशाचरा लङ्कां भेजुः सेवितवन्तः। भज श्रौ भागसेवयोः। हतं प्रहस्तम् उच्चैः आख्यातवन्तश्च रावणमित्यर्थात्। ख्यान ख्यातौ, चक्षिङः ख्याञ् वा, उदीर्णं महत् दैन्यं येषाम्। ऋ गि गत्यां क्तः ॥ ११२
इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मज-श्रीभरतसेनविरचितायां
मुग्धबोधिन्यां भट्टिटीकायां भरतस्तो नाम चतुर्दशः सर्गः ॥ ११४

অনুবাদ। রামসৈন্যের অভিযানে যখন রাক্ষসদিগের মনোরথ বিফল হইল, তখন তাহারা দুঃখিত হইয়া লঙ্কায় প্রস্থান পূর্ব্বক "প্রহস্ত নিহত হইয়াছে" এই কথা উচ্চৈঃস্বরে রাবণকে নিবেদন করিল। ১১২

ইতি চতুর্দ্দশ সর্গ।

## अथ पञ्चदशः सर्गः ।

राक्षसेन्द्रस्ततोऽभैषीदैक्षिष्ट परितः पुरम् ।
प्रातिष्ठिपच्च बोधार्थं कुम्भकर्णस्य राक्षसान् ॥ १

अन्वयः । ततः राक्षसेन्द्रः अभैषीत्, पुरं परितः ऐक्षिष्ट, कुम्भकर्णस्य बोधार्थं राक्षसान् प्रातिष्ठिपत् च ॥ १

मल्लिनाथः । अथास्मिन् सर्गे लुङ्लकारमधिकृत्याह—राक्षसेन्द्र इति । ततः प्रहस्तवधानन्तरं राक्षसेन्द्रो रावणोऽभैषीद्भीतः । ञि भी भये । लुङि सिचि वृद्धिः । "अस्तिसिचोऽपृक्ते" इतीट् । पुरं लङ्कां परितः सर्वत ऐक्षिष्ट दृष्टवान् । ईक्ष दर्शने । लुङि तङि सिच् । "आडजादीनाम्" इत्याटो वृद्धिः । कुम्भकर्णस्य बोधार्थं राक्षसान् प्रातिष्ठिपत् प्रस्थापयामास च । प्रपूर्वात्तिष्ठतेर्णौ चङि द्विर्वचनम् । "शर्पूर्वाः खयः" इति चर्त्वम् । सन्वद्भावे "सन्यतः" इत्यभ्यासस्य इत्वम् । "तिष्ठतेरित्" इति धातोरिकारः ॥ १

भरतः । अथ टीमधिकृत्य तद्विलसितमुच्यते । पाणिनिमते लुङिति संज्ञा । राक्षसेन्द्र इत्यादि । राक्षसेन्द्रो रावणः, ततः प्रहस्तवधात् अभैषीत् भीतः । ञि भी ञि भीत्यां, "भवद्भूतभव्ये विभः" इति भूतसामान्ये टौ "घोटीधीत्वम्" इति धातोः आदौ मिस्वादम्, "ध्वां सिः" "नेमेकाजात्" इति इमो भावः, "व्रजवद" इत्यादिना विः, "वदाद्यविसे." इति ईम्, "क्विलात्" इति षः । परितः समन्तात् पुरं लङ्कां वीक्षितवान् । किमत्र स्थानं शक्यते न वेति । ईक्षङ् दर्शने । "भूयोऽमजादे" इति अमि कृते पुरत्वम्, "आदिगीषोः" इति सन्धिः, "वसोऽरस्य" इति ईम् षत्वं, "ष्टुभिः" इति तस्य टः । राक्षसान् कुम्भकर्णस्य बोधार्थं प्रस्थापितवांश्च । ष्ठा स्थाने ञिः प्रेरणे, "क्रीव्ली" इत्यादिना पादन्तत्वात्पत्, "ञिश्रिद्रुस्रु कम्" इति चङ् . "स्थांजौजाङ्गोः" इतीत्वं "धुरिट्टांङ्" इत्येर्लोपः ॥ १

অনুবাদ । প্রহস্ত নিধনের পর রাবণ ভীত হইল, লঙ্কাপুরীর চারিদিক্ দেখিতে লাগিল এবং কুম্ভকর্ণকে জাগরিত করিবার জন্য রাক্ষসদিগকে প্রেরণ করিল । ১

तेऽभ्यगुर्भवनं तस्य सुप्तं चैक्षिषताथ तम् ।
आहार्षुस्तुमुलान् शब्दान् दण्डैश्चावधिषुर्भृशं[द्रुत]म्

अन्वयः । ते ( राक्षसाः ) तस्य भवनम् अभ्यगुः, अथ सुप्तं च तम् ऐक्षिषत, तुमुलान् शब्दान् आहार्षुः, दण्डैः भृशं अवधिषुः च ॥ २

मल्लिनाथः। त इति। ते राक्षसास्तस्य कुम्भकर्णस्य भवनमभ्यगुरभिगताः। "इणो गा लुङि" इति गादेशः। "गातिस्था—" इति सिचो लुक्। "उस्यपदान्तात्" इति पररूपत्वम्। अथ सुप्तं तं कुम्भकर्णमैक्षिषताद्राक्षुः, ईक्ष दर्शने। लुङि सिचोऽडागमः। तुमुलान् सङ्कुलान् शब्दान् व्याहार्षुरूचुः। 'व्याहार उक्तिर्लपितम्' इत्यमरः। भृशं दण्डैरवधिषुरताडयंश्च। "लुङि च" इति हनो वधादेशः। तस्यादन्तत्वादिडागमः। अतो लोपस्य स्थानिवद्भावान्न हलन्तलक्षणा वृद्धिः। "इट ईटि" इति सलोपः॥ २

भरतः। तेऽभ्यगुरित्यादि। ते राक्षसाः तस्य कुम्भकर्णस्य भवनं गृहम् अभ्यगुः गतवन्तः। इण गतौ। "गा ल्याम्" इति इणो गादेशः, "अनुक्तिवे:" "भूस्थापिबदेश्च" इति सेर्लुक्, "उस्येचि" इत्यालोपः। सुप्तं तं कुम्भकर्णम् ऐक्षिषत दृष्टवन्तः "मान्तोऽदनत."। अथानन्तरं प्रबोधार्थं तुमुलान् महतः शब्दान् व्याहार्षुः व्याहृतवन्तः, अकुर्वित्यर्थः। हञ् कृत्वा "नेमिकाजात्" इति इमनिषेधः, "व्रजवद" इत्यादिना व्रिः, "अनुक्तिवे:"। दण्डैश्च द्रुतम् आवधिषुः, "हनवधष्टि" इति वधादेशः, इसादिः, "सेम" इत्यादौ वधवर्जनान्न व्रिः॥२

অনুবাদ। তাহারা কুম্ভকর্ণের শয়নগৃহে গেল এবং দেখিল সে নিদ্রিত। তখন তাহারা তুমুল শব্দ করিয়া দণ্ড দ্বারা অতিশয় তাড়না করিল। ২

**केशानलुञ्चिषुस्तस्य गजान् गात्रेष्वचिक्र[विभ्र]मन्।**
**शीतैरभ्यषिचंस्तोयैरलातैश्चाप्यदम्भिषुः॥ ३**

अन्वयः। तस्य केशान् अलुञ्चिषुः, गात्रेषु गजान् अचिक्रमन्, शीतैः तोयैः अभ्यषिचन्, अलातैः अदम्भिषुः॥ ३

मल्लिनाथः। केशानिति। तस्य कुम्भकर्णस्य केशानलुञ्चिषुरुत्पाटयामासुः। लुञ्चेः सिचीट्। गात्रेष्वङ्गेषु गजान् अचिक्रमन् क्रमयन्ति स्म। क्रमेर्णौ चङि "सन्यतः" इत्यभ्यासस्येत्वे मित्वाद्ध्रस्वः। शीतैस्तोयैरभ्यषिञ्चन् सिषिचुः। अत्र सिचिरभ्युक्षणे वर्त्तते। तेन 'उदकस्य करणत्वम्। "लिपिसिचिह्वश्च" इत्यङ्। अलातैरुल्मुकैरदम्भिषुरचालयन्। दम्भु चलने॥ ३

भरतः। केशानित्यादि। ते राक्षसाः तस्य कुम्भकर्णस्य केशान् अलुञ्चिषुः उत्पाटितवन्तः। लुञ्चापनयने। गात्रेषु हस्तिनो भ्रमयन्ति स्म। भ्रमु चल चालौ, णिः चङ् द्वित्वं, "[illegible]" इति [illegible] इत्यादिना [illegible] [illegible]

पाठे क्रमु गती। शीतैः तीव्रैः चभिषिञ्चन्ति स्म। षिच् चरणे क्षरणे, अभिपूर्वः प्रोक्षण-
माह। तेन तोयानां करणत्वं "कर्तृकरण" इत्यादिना ङः, "स्रोपोतोड्दिवोः गौरः" इत्यादिना
षत्वम्। ज्वलितैः अङ्गारैः अपि अदन्दशुः दग्धवन्तः। दन्भु न दम्भे, अनेकार्थत्वात्
दाहार्थः॥ ३

অনুবাদ। রাক্ষসেরা কুম্ভকর্ণের কেশ উৎপাটন, গাত্রের উপর হস্তীচালন, শীতল জলে শরীর প্লাবন এবং জ্বলন্ত অঙ্গার দ্বারা দগ্ধ করিতে লাগিল। ৩

**नखैरकर्त्तिषुस्तीक्ष्णैरदाङ्क्षुर्दशनैस्तथा।**
**शितैरतोत्सुः शूलैश्च भेरीश्चानीनदन् दृढाः[शुभाः]॥४**

अन्वयः। तीक्ष्णैः नखैः अकर्तिषुः, तथा दशनैः अदाङ्क्षुः, शितैः शूलैः च अतोत्सुः, दृढाः भेरीः च अनीनदन्॥ ४

मल्लिनाथः। नखैरिति। तीक्ष्णैर्नखैरकर्तिषुः कृत्तवन्तः। कृती छेदने। सिचीट्। लघूपधगुणः। तथा दशनैरदाङ्क्षुर्दष्टवन्तः दन्श दंशने। सिचि हलन्तलक्षणा वृद्धिः। "व्रश—" आदिना षत्वम्। "षढोः कः सि" इति कत्वम्। शितैः शूलैरतोत्सुः। तुद व्यथने। हलन्तलक्षणा वृद्धिः। दृढा भेरीश्च अनीनदन् अनादयन्। अवीवदन्निति पाठे अवादयन्नित्यर्थः। उभयत्रापि णौ चङ्युपधाया ह्रस्वः॥ ४

भरतः। नखैरित्यादि। तीक्ष्णैः नखैः चिच्छिदुः। कृती अप छिदि। तथा तीक्ष्णैः दन्तैः दशन्ति स्म। दन्शी दंशने, क्त्यां सिः औदित्त्वात् नेम्, अनिमत्वात् "व्रज-वद" इत्यादिना वृः, "व्रश्चाज" इति षङ्, "षढोः क." ओर्नुः "अदमी क्लित्वात्" इति नः, "अनुस्विरः"। शितैः तीक्ष्णैः शूलैरपि व्यथयन्ति स्म। तुद अर्त्ती व्यथे। अनिम्-त्वात् वृः, "भप्भसोः" इति दस्य तः। शुभाः शोभनाः उच्चैःशब्दा भेरीः वादितवन्तः। नदेर्णः कर्तुः फलवत्त्वाविवक्षार्थं पम्, नदकृषाकृणन्दशयारित्यस्मात् चुरादेः आन्मादाजिरङ्, हित्वं अत्र ; ङः स्वः सन्वत् अलोपः॥ ४

অনুবাদ। তাহারা তীক্ষ্ণ নখদ্বারা চর্মচ্ছেদন এবং তীক্ষ্ণ দন্তদ্বারা দংশন করিল, শাণিত শূলাস্ত্র দ্বারা গাত্রে বাধা জন্মাইল এবং সুদৃঢ় ভেরী কর্ণের নিকটে বাজাইতে লাগিল। ৪

**स तान्नाजीगणत्सर्वानिच्छयाबुध च स्वयम्।**
**अबूबुधत मां कस्मादप्राक्षीच्च निशाचरान्॥ ५**

अन्वयः। स सर्व्वान् तान् न अजीगणत्, स्वयम् इच्छया च अबुद्ध, मां कस्मात् अबूबुधत इति निशाचरान् अप्राक्षीत् च॥ ५

मल्लिनाथः। स इति। स कुम्भकर्णः सर्वांस्तान् कालकालकेशलुञ्चनादिबाधान् नाजीगणत् न गणयति स्म। गण संख्याने। णौ चङि "ई च गणः" इत्यभ्यासस्य वैभाषिक ईकारः। किं तु स्वयमेवेच्छया कालप्राप्तया अबुद्ध बुद्धवान्। बुध अवगमने। "झलो झलि" इति सलोपः। झषस्तथोर्धोऽधः" इति तकारस्य धत्वम्। मां कस्मादबूबुधत बोधितवन्तः। बुधेर्णौ चङ्युपधाया ह्रस्वः। "दीर्घो लघोः" इत्यभ्यासदीर्घः। "तस्थस्थमिपाम्—" इति थस्य तादेशः। इति निशाचरान् अप्राक्षीत् पप्रच्छ। प्रच्छ ज्ञीप्सायाम्। हलन्तलक्षणा वृद्धिः। "व्रश्च—" इत्यादिना "षढोः—" इति षत्वकत्वे॥ ५

भरतः। स तानित्यादि। स कुम्भकर्णः तान् तुमुलशब्दादीन् न गणयति स्म। गणतुक् संख्याने चुर्य्यादिः अदन्तत्वात् "णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्" इत्यस्य न विषयः। "ई च गणः" पीडयितिवशी:" इत्यकारलोपः। वेङ् गणकयति पाचिकः खेरीङ्। स्वयम् इच्छया च अबुद्ध:। बुध्यीङ् वेदने "पदरुजीङ् घेप्याय" इत्यस्याप्रतिपत्ते सिः। तस्य "इगुङ्भंदोत्वनिम्" इति किस्त्वात् गुणाभावः। "झसखात्" इति सेर्लोपः। "ढभात्तथोः" इति धः। 'झपूझसोः" इति धस्य दः। "खेः सन्वत्" इति दीर्घः। प्रच्छीव शीर्षे। अनिमुत्वादृद्धिः, "षढो कः"॥ ५

অনুবাদ। সে সে সমস্ত গ্রাহ্য করিল না। স্বয়ং ইচ্ছা করিয়া জাগরিত হইল, কি জন্য আমাকে জাগাইলে এই কথা রাক্ষসদিগকে জিজ্ঞাসা করিল। ৫

तेऽभाषिषत राजा त्वां दिदृक्षुः क्षणदाचर।
सोऽस्नासीद्व्यलिपन्मांसमप्सासीद्वारुणीमपात्॥ ६

अन्वयः। ते (राक्षसाः हे) 'क्षणदाचर! राजा त्वां दिदृक्षुः" इति अभाषिषत, सः (कुम्भकर्णः) अस्नासीत्, व्यलिपत्, मांसम् अप्सासीत्, वारुणीम् अपात्॥ ६

मल्लिनाथः। त इति। ते पृष्टा राक्षसा—हे क्षणदाचर कुम्भकर्ण! राजा रावणस्त्वां दिदृक्षुर्द्रष्टुमिच्छुरित्यभाषिषत प्रत्यवोचन्। भाषेर्लुङि तङि सिचीट्। स एवमुक्तः कुम्भकर्णोऽस्नासीत् स्नातः। ष्णा शौचे। "यमरम—" इति सगिडागमौ। वारुणीं सुरामपात् पीतवान् "गातिस्था—" इत्यादिना सिचो लुक्॥ ६

भरतः। तेऽभाषिषतेत्यादि। ते दूता निशाचरा भाषितवन्तः। भाषङ् व्यक्तायां वाचि अभाषिषत। किमित्याह—हे क्षणदाचर! राजा रावणः त्वां द्रष्टुमिच्छुः। "न लोकाव्यय—" इत्यादौ उदन्तवर्जनात् न कर्म्मणः षष्ठी। स कुम्भकर्णः स्नातवान्। ष्णा च शौचने। "आत्वादि" इति षत्वस्य सत्वे तन्निमित्तस्य णत्वस्य नत्वं, "च्लेः सिः" "यमरमनमातां सक् च" इति सक्, "यम रम" इति इट्सकौ, "अस्तिसिचो वा ति" इति सिलोपः, इट ईटि। अनेकार्थत्वात् स्नानमप्यार्थस्यन्वे, स्नातः सन्। व्यलिपत् चन्दनानुलेपनं कृतवान्। लिप लिपोऽस्य लेपे, "लिपिसिचि" इत्यादिना ङः। मांसम् अघसत् भक्षितवान्। घस्लृ अदने। वारुणीं मदिराम् अपात्। पा पाने। "गा-स्थाघु" इति सिलुक्॥ ६

अनुवाद। তাহারা বলিল, হে নিশাবিহারিন্? রাবণরাজ আপনাকে দেখিতে ইচ্ছুক। সে তখন স্নান, চন্দনলেপন, মাংসভক্ষণ ও বারুণী মদ্যপান করিতে লাগিল। ৬

**न्यवसिष्ट ततो द्रष्टुं रावणं प्रावृतद्‌गृहात्।**
**राजायान्तं तमद्राक्षीदुदस्थाच्चेषदासनात्॥ ७**

अन्वयः। (सः) न्यवसिष्ट, ततः रावणं द्रष्टुं गृहात् प्रावृतत्; राजा आयान्तं तम् अद्राक्षीत्, आसनात् ईषत् उदस्थात् च॥ ७

मल्लिनाथः। न्यवसिष्टेति। न्यवसिष्ट निवसितवान्। वस आच्छादने। लुङि यङि सिचीट्। ततः प्रसाधनानन्तरं रावणं द्रष्टुं गृहात् प्रावृतत् प्रवृत्तो निर्गत इत्यर्थः। वृतु वर्त्तने "द्युद्भ्यो लुङि" इति परस्मैपदम्। द्युतादित्वादङ्। राजा रावणः आयान्तमागच्छन्तं कुम्भकर्णमद्राक्षीत् दृष्टवान्। दृशिर् प्रेक्षणे। "इरितो वा" इति विकल्पादङभावपक्षे हलन्तलक्षणा वृद्धिः। "सृजिदृशोर्झल्यमकिति" इत्यमागमः। "व्रश्च—" आदिना षत्वादिकार्य्यम्। आसनादीषदुदस्थात् उत्थितश्च। ष्ठा गतिनिवृत्तौ। "गातिस्था—" इत्यादिना सिचो लुक्॥ ७

भरतः। न्यवेत्यादि। कुम्भकर्णो न्यवसिष्ट राजदर्शनोचितवस्त्रं परिहितवान्। वस आच्छादने। ततोऽनन्तरं स्वकीयाद्‌गृहात् रावणं द्रष्टुं प्रवृत्तः। वृत वृतु वर्त्तने, "द्युद्भ्यो लुङि" इति द्युतादित्वात् ङः, तेनैव पम्। राजा रावणः तम् आगच्छन्तम् अद्राक्षीत् दृष्टवान्, दृशिर् प्रेक्षणे, इरित्वात् पाक्षिको ङः, तदभावे "च्लेः सिः" "शल इगुपधादनिटः क्सः" इत्यादौ दृशवर्जनान्न क्सः, "सृजिदृशोर्झल्यमकिति" "ऋदृशः" अनिट्त्वात् "वदव्रज" इति वृद्धिः, "व्रश्चभ्रस्ज" इति षत्, "षढोः कः सि" "सिवात्" इति षः। ष्ठा आसनात् ईषदुत्थितः। उत्पूर्वतिष्ठतेरूर्ध्वचेष्टायां पम्। "उदोऽनूर्ध्वकर्म्मणि" इत्युक्तेः "गाति-स्थाघु-पाभूभ्यः" इति सिलुक्॥ ७

অনুবাদ। সে বস্ত্র পরিধান করিয়া রাবণকে দেখিবার জন্য গৃহ হইতে নির্গত হইল, রাবণ তাহাকে আসিতে দেখিয়া সিংহাসন হইতে একটু উঠিয়া দাঁড়াইল। ৭

**अतुषत्पीठमासने निरदिक्षच्च काञ्चनम्।**
**अस्मेष्ट कुम्भकर्णोऽल्पमुपाविक्षदथान्तिके॥ ८**

अन्वयः। (सः) अतुषत्, आसने काञ्चनं पीठम् च निरदिक्षत्; अथ कुम्भकर्णः अल्पम् अस्मेष्ट, अन्तिके उपाविक्षत्॥ ८

मल्लिनाथः। अतुषदिति। अतुषत् हृष्टा तुष्टः। पुषादित्वादङ्। आसनेऽन्तिके काञ्चनं सौवर्णं पीठं निरदिक्षत् निर्दिष्टवांश्च। दिश अतिसर्जने। "शल इगुपधादनिटः क्सः"। अथ कुम्भकर्णोऽल्पमस्मेष्ट अत्यादराद्धसन् गाम्भीर्य्यादल्पं हसितवानिति न धात्वर्थनिर्देशेन पुनरुक्तिः। स्मिङ् ईषद्धसने। सिचि गुणः। षत्वष्टुत्वे। अन्तिके उपाविक्षत् उपविष्टः न तु काञ्चनपीठे इति भावः। विशेः पूर्ववत् क्सः॥ ८

भरतः। अतुषदित्यादि। हृष्टा अतुषत् तुष्टोऽभूत्। तुषधातोरपि च, चकारात् तुष्टौ, पुषादित्वात् ङः, "लितीङ्गीपि इवितस्तु वा" इत्यनेनैवेष्टसिद्धौ पूर्वाचार्य्यक्रमदर्शनात्। "शासलिदद्युतपुषादेः" इत्यादिसूत्रस्य तथाकरणे मुग्धबोधस्य कविकल्पद्रुमात् प्राक् कृतत्वात् गौरवं न वाच्यम् एवमन्यत्रापि अवधेयम्। आसने आत्मन आसने समीपदेशे काञ्चनं पीठम् आदिष्टवान्, दिशेः "इमसोऽनिनिमुङ्" इति सङ्, "षढोः कः सि" काञ्चनस्य विकार इति "विकारसङ्घ" इति अः। अनन्तरं कुम्भकर्णोऽल्पम् अस्मेष्ट स्मितं चकार, स्मिङ् स्मिते। यद्यपि स्मितम् ईषद्धसनं तथापि राजसान्निध्ये स्मितस्याप्यनौचित्यादनुपलभ्यमानहसनायाल्पम् इत्युक्तं, हास्यमात्रेऽपि स्मितमिति केचित्। स्मितोत्पत्तिः कार्य्यवशाशाद्भ्रातुरादरदर्शनात् "नैमेकाजात्" इति इमनिषेधः। अन्तिके रावणसमीपे उपविष्टवान्, अर्थात् काञ्चनपीठे। विद्यासागरस्तु अल्पं रावणपीठापेक्षया स्वल्पं काञ्चनपीठमुपाविक्षदित्याह, तन्न साधु, आधारप्रसङ्गात्, शौ विश प्रवेशे उपपूर्वं आसने॥ ८

অনুবাদ। রাবণ তাহাকে দেখিয়া সন্তুষ্ট হইল এবং নিজের পার্শ্বেই তাহার জন্য স্বর্ণাসন নির্দ্দিষ্ট করিল। অনন্তর কুম্ভকর্ণ ঈষৎ হাস্য করিয়া নিকটেই বসিল। ৮

अवादीन्मां किमित्याह्वो
राज्ञा च प्रत्यवादि सः ।
ना[मा]ज्ञासीस्त्वं सुखी रामो
यदकार्षीत् स रक्षसाम् ॥ ९

अन्वयः । मां किम् आह्वः इति अवादीत्, राज्ञा च स प्रत्यवादि,—त्वं सुखी, स रामः रक्षसां यत् अकार्षीत्, तत् नाज्ञासीः ॥ ९

मल्लिनाथः । अवादीदिति । मां किमित्याह्व आहूतवानसि । "लिपिसिचिह्वश्च" इत्यङ् । आतो लोपः । इति स कुम्भकर्णो-ऽवादीदप्राक्षीदित्यर्थः । "वदव्रज—" इति वृद्धिः । राज्ञा प्रत्यवादि प्रत्युक्तश्च । वदेः कर्मणि लुङि चिणि वृद्धिः । सुखी निद्रासुखा-सक्तस्त्वं रामो रक्षसां यदकार्षीत् । सिचि वृद्धिः । चस्तदर्थः । तन्नाज्ञासीर्न ज्ञातवानसि जानातेर्लुङ् । "यमरम—" इति सगिटौ ॥ ९

भरतः । अवादीदित्यादि । उपविश्य कुम्भकर्णो रावणम् अवादीत् उक्तवान्, वदे वाचि व्रजवदेति वृः । किमवादीदित्याह—किमिति कस्मात् कारणात् त्वं माम् आह्वः आहूतवान् । ह्वेञ् स्पर्द्धे "वक्तव्य" इति ङः, "एचोऽयवायावः" "उपेचि" इत्यालोपः । राज्ञा रावणेन च स कुम्भकर्णः प्रत्यवादि प्रत्युक्तः, "रतनार्यंगिभ्या" "इतीष् ञित्यन्तेऽभुक्तः" इति वृः, "इयस्तनलोपः" । स नरात्मा रामो रक्षसां यत् कृतवान् भयम् इत्यर्थात् तत्सर्वं सुखी त्वं न ज्ञातवान् । ज्ञा ग बोधने यमरमेति इमसनौ ज्ञस् ज्ञातौ ज्ञणदञ्जुज्ञातौ वा "नेमिकान्" इति इमनिषेधः व्रजवदेत्यादिना वृः ॥ ९

অনুবাদ । আমাকে কেন ডাকিয়াছ, সে এই কথা জিজ্ঞাসা করিল, রাজা রাবণও তাহাকে প্রত্যুত্তর দিল যে, তুমিই সুখী । সেই রাম রাক্ষস-দিগের যাহা করিয়াছে তাহা তুমি জান না । ৯

उदतारीदुदन्वन्तं पुरं नः परितोऽरुधत् ।
अ[व्य]द्योतिष्ट रणे शस्त्रैरनैषीद्राक्षसान् क्षयम् ॥ १०

अन्वयः । ( रामः ) उदन्वन्तम् उदतारीत्, नः पुरं परितः अरुधत्, रणे शस्त्रैः अद्योतिष्ट, राक्षसान् क्षयम् अनैषीत् ॥ १०

मल्लिनाथः । रामकृतमेवाह—उदिति । उदन्वन्तमुदधिम् ।

"उदन्वानुदधौ च" इति निपातनात्साधु । उदतारीदुत्तीर्णवान् । सिचि वृद्धिः । "इट ईटि" इति सलोपः । नोऽस्माकं पुरं परितोऽरुधत् प्रारौत्सीत् । रुधिर् आवरणे । "इरितो वा" इति विकल्पादङ् । रणे शस्त्रैरद्योतिष्ट दिदीपे । "द्युद्भ्यो लुङि" इति विकल्पात्पक्षे तङ् । राक्षसान् क्षयमनैषीत् नीतवान् । नयतेः सिचि वृद्धिः ॥१०

भरतः । उदतारीदित्यादि । राम उदन्वन्तं समुद्रम् उत्तीर्णवान्, तॄ तरेऽभिभवे लुङि "च्लेः सिः", "वृतो वा" इति दीर्घ, "अस्तिसिचः" इतीट्, "इट ईटि" इति सिचो लोपः । "सिचि वृद्धिः" इति वृद्धिः । उदकं विद्यतेऽस्य इत्युदन्वान्, मनीषादित्वात् मस्य नत्वम् । अस्माकं पुरं परितः समन्तात् रुद्धवान्, रुधिरीत् आवृतौ इरित्त्वात् "इरितो वा" इत्यादिना पाक्षिको ङः । रणे शस्त्रैः विद्योतितवान्, द्युत लुङ्यपि अपिशब्दात् द्युत्यां "द्युतादिभ्यो लुङि" ङविधानात् पं गम्यते ङित्त्वान्न भवत्येव, तेन च्लेः द्युतादित्वभयपदित्वं न सिच् । राक्षसान् क्षयं नीतवान् । णीञ् प्रापणे तस्य नाग्नासीरिति सम्बन्धः ॥ १०

অনুবাদ। শত্রু সমুদ্র পার হইয়াছে, আমাদের নগরের চারিদিক অবরোধ করিয়াছে, যুদ্ধস্থলে অস্ত্রশস্ত্র দেদীপ্যমান হইয়া রাক্ষসকুল ক্ষয় করিয়াছে। ১০

**न प्रावोचमहं किञ्चिदप्रियं यावदजीविषम् ।**
**बन्धुस्त्वमर्थि[च्चि]तः स्नेहान्मा द्विषो न वधीर्मम ॥११**

अन्वयः । अहं यावत् अजीविषं, ( तावत् ) किञ्चित् प्रियं न प्रावोचं, बन्धुः त्वं स्नेहात् अर्थितः ( सन् ) मम द्विषः न मा वधीः किम् ॥ ११

मल्लिनाथः । न च साम्ना सन्धिरित्याह—नेति । अहं यावदजीविषं जीवितोऽस्मि तावत्कस्यापि किञ्चित् प्रियं न प्रावोचं नोक्तवानस्मि । तच्च त्वं जानास्येवेति भावः । "वच उम्" इत्युमागमः । किन्तु बन्धुस्त्वं स्नेहादर्थितः सन् मम द्विषः शत्रून् न मा वधीः किन्तु जहीत्यर्थः । प्रतिषेधद्वयस्य विध्यर्थत्वात् । माङि "लुङि च" इति हनो वधादेशः । "न माङ्योगे" इत्यडभावः ॥ ११

भरतः । न प्रावोचमित्यादि । यावन्तं कालम् अहं जीवितवान् तावन्तं कालं किञ्चित् प्रियं न प्रावोचं नोक्तवान् अपि प्रार्थयामि च इति भावः । सम्प्रति बन्धुस्त्वमिति

ज्ञात्वा स्नेहात् प्रार्थितोऽसि मम प्रियः ग्रन्तून् त्वं मा न वधीः किन्तु मारय वधीरापि "वनस्य" इत्यादिना ङः "वचनर्वाच्य्नाम्" इति चोचादेशः, जीव प्राचे हन नी गती वधे, "माटौ वा" इति टौ। "चौटाग्नेषु" इति मायोगेऽमोऽभावः, "हनवधटौ" इति वधादेशः॥ ११

অনুবাদ। আমি যতদিন জীবিত আছি, ততদিন কাহাকেও প্রিয়বাক্য বলি নাই (তাহা ত জানত) কিন্তু তুমি বন্ধু (অনুজ) এই জন্য স্নেহ সহকারে জানাইলাম, তুমি শত্রুনাশ কর (করিবে না কি?)।১১

वीर्यं मा न दर्श[...] त्रास्थाः क्षतां पुरी[र]म्
तवाद्राक्ष्म वयं वी[...]ः पुरा सुरान्॥ १२

अन्वयः। (हे वीर!) त्वं वीर्यं न मा दर्शः? क्षतां पुरीं न त्रास्थाः? वयं तव वीर्यम् अद्राक्ष्म, त्वं पुरा सुरान् अजैषीः॥ १२

मल्लिनाथः। वीर्यमिति। हे वीर! त्वं वीर्यं पराक्रमं न मा दर्शः किं तु दर्शयेत्यर्थः। दृशेर्णौ चङि सिपि रूपम्। सम्भावात् सनीव कार्यम्। क्षतां वानरोपहतां पुरीं न मा त्रास्थाः किन्तु त्रायस्वेत्यर्थः। त्रैङ् पालने। "आदेचः—" इत्यात्वम् लुङि थासि च्लेः सिजादेशः। प्रतिषेधद्वयादि पूर्ववद्व्याख्येयम्। न चाशक्तिशङ्का त्वयि कार्येत्याह—वयं तव वीर्यं पराक्रममद्राक्ष्म अपश्यामैवेत्यर्थः। "न दृशः" इति क्सादेशनिषेधः। "इरितो वा" इति विकल्पादङभावपक्षे च्लेः सिचि "सृजिदृशोः—" इत्यामागमे हलन्तलक्षणा वृद्धिः। अग्रादिकार्यम्। वीर्यमेवाह— त्वं पुरा सुरान् देवानजैषीः। जेर्लुङि सिचि वृद्धिः॥ १२

भरतः। वीर्यमित्यादि। त्वं वीर्यं सामर्थ्यं मा न दर्शः किन्तु दर्शय, दृशेर्णौ णिनादङ्। क्षतां शरैः पीडितां पुरं त्रास्थाः मा न त्रास्थाः किन्तु त्रायस्व, त्रैङ् पालने। न त्वम् असमर्थः, यतः तव वीर्यं वयं दृष्टवन्तः, दृश् प्रेक्षे इरित्वात् क्सामङ्प्रतिपक्षे सिः, वद्व्रोऽकिदिति ऋतोऽरः अनिमत्वात् अजवदिति त्रिः अङ्, षढोः कः सि। त्वं पुरा पूर्वस्मिन् काले सुरान् जितवान्, जि जये च॥ १२

অনুবাদ। হে বীর! তুমি পরাক্রম দেখাইবে কি? বানর-পীড়িত

লঙ্কাকে পরিত্রাণ করিবে না? তোমার বীর্য্য আমরা দেখিয়াছি, তুমি পূর্ব্বে দেবগণকে জয় করিয়াছ। ১২

**अवोचत्कुम्भकर्णस्तं वयं मन्त्रेऽभ्यधाम यत्।**
**न त्वं सर्वं तदश्रौषीः फलं तस्येदमागमत्॥ १३**

अन्वयः। कुम्भकर्णः तम् अवोचत्—वयं मन्त्रे यत् अभ्यधाम, तत् सर्वं न त्वम् अश्रौषीः, तस्य इदं फलम् आगमत॥ १३

मल्लिनाथः। अवोचदिति। अथ कुम्भकर्णस्तं रावणम-वोचत्। "वच उम्"। षड्भिस्तदेवाह—वयं मन्त्रे पूर्वं विचार-काले यदभ्यधाम अवोचाम। "गातिस्था—" इत्यादिना सिचो लुक्। त्वं तत्सर्वं नाश्रौषीः किमपि नाश्रौषीरित्यर्थः। श्रु श्रवणे। लुङि सिपि सिचि वृद्धिः। तस्याश्रवणस्येदं तदुक्तं फल-मागमत्। गमेर्लृदित्वादङ्॥ १३

भरतः। अवोचदित्यादि। इत्युक्तवन्तं तं रावणं कुम्भकर्णं उक्तवान्, वचेः पूर्ववत् ङः वोचादेशश्च। मन्त्रे मन्त्रणायां वयं यदुक्तवन्तः तत्सर्वं त्वं न श्रुतवान् तस्याश्रवणस्य इदं फलं विनाशरूपम् आगतम्, डु धाञ् लु धारणे पुष्टौ दानेऽभिपूर्वो भाषणे वर्त्तते "भूस्थापिबर्दम:" इति सेर्लुक्, दंत्यनेन दा-धा-दंमि दासंज्ञकस्य ग्रहणात् श्रु न् गतौ श्रुतौ "भेभिन्नाच्" इति इमृनिषेधः, गमृस्त्र गत्यां लृदित्वात् ङः॥ १३

অনুবাদ। কুম্ভকর্ণ রাবণকে বলিল, আমরা মন্ত্রণার সময়ে যাহা যাহা বলিয়াছিলাম, সে সমস্ত তুমি গ্রাহ্য কর নাই (এখন) তাহার এই ফল উপস্থিত। ১৩

**प्राज्ञवाक्यान्यवामंस्था मूर्खवाक्येष्ववास्थिथाः।**
**अध्यगीष्ठास्य शास्त्राणि प्रत्यपत्था हितं न च॥ १४**

अन्वयः। प्राज्ञवाक्यानि अवामंस्था, मूर्खवाक्येषु अवास्थिथाः, शास्त्राणि च अध्यगीष्ठाः, हितं च न प्रत्यपत्थाः॥ १४

मल्लिनाथः। प्राज्ञेति। प्राज्ञानां विभीषणादीनां वाक्यान्य-वामंस्थास्तिरस्कृतवान्। मन ज्ञाने। थासि सिच्। मूर्खवाक्येषु प्रहस्तादिप्रलापेषु अवास्थिथा अवस्थितोऽसि। "समवप्रविभ्यः स्थः" इति तङ्। 'स्थाघ्वोरिच" इतीत्वं सिचः कित्त्वं च।

"झलादझलात्" इति सलोपः। शास्त्राणि चाध्यगीष्ठा अधीतवानसि। इङ् अध्ययने। "विभाषा लुङ्लृङोः" इति गाङादेशः। "घुमास्था—" इत्यादिना ईकारादेशः। हितं न प्रत्यपत्थाः न प्रतिपन्नोऽसि। निष्फलं ते श्रुतमपीत्यर्थः। पद गतौ। लुङि थासि "झलो झलि" इति सलोपः। "खरि च" इति चर्त्वम्॥ १४

भरतः। प्राज्ञवाक्यानीत्यादि। त्वं प्राज्ञानां विभीषणादीनां वाक्यानि अवामंस्थाः अवज्ञातवान्, मनदृङ् बोधे। मूर्खाणां प्रहस्तादीनां वाक्येषु अवास्थितोऽसि "प्रतिज्ञानिर्णय" इत्यादिना अवपूर्वतिष्ठतेर्मे, "स्थाघ्वोरिच्च" इति इत्, गुणाभावश्च "झस्वादङ्गात्" इति सलोपः। शास्त्राणि अधीतवानसि, किन्तु हितं न प्रतिपन्नवानसि, अधीङ् अध्ययने अध्युपसर्गमादाय सहप्रयोगनियमार्थं "गाङ्लिटि" इति गादेशः, दीर्घादिभ्यो गुणाभावः अष्टार्थः। घलानगुरियुक्तत्र थौपदङ् गतौ झलन्ताज्झलीति सलोपः॥ १४

অনুবাদ। তুমি বিভীষণাদি প্রাজ্ঞ ব্যক্তির বাক্য অবহেলা করিয়া প্রহস্তাদি মূর্খ ব্যক্তির বাক্যে আস্থা স্থাপন করিয়াছ। অনেক শাস্ত্র অধ্যয়ন করিয়াছ সত্য কিন্তু তাহার হিত উপদেশ গ্রহণ করিতে পার নাই। ১৪

मूर्खास्त्वामववञ्चन्त ये विग्रहमचीकरन्।
अभाणीन्माल्यवान् युक्तमचंस्थास्त्वं न तन्मदात्॥ १५

अन्वयः। (ते) मूर्खाः त्वाम् अववञ्चन्त, ये विग्रहम् अचीकरन् माल्यवान् युक्तम् अभाणीत्, त्वं तत् मदात् न अचंस्थाः॥ १५

मल्लिनाथः। मूर्खा इति। मूर्खा मूढास्त्वामववञ्चन्त वञ्चयामासुः। वञ्च प्रलम्भने। "गृधिवञ्च्योः प्रलम्भने" इति ताङ् णौ चङ्। वञ्चनमेवाह—ये मूर्खा विग्रहं विरोधमचीकरन् त्वया अकारयन्। इदमेव वञ्चनमित्यर्थः। करोतेर्णौ चङ्। अभ्यासकाकारस्य चुत्वम्। "सन्वतः"। "दीर्घो लघोः"। माल्यवान् युक्तमभाणीदब्रवीत्। "इट ईटि" इति सलोपः। त्वं मदात्तज्जातामहेनोक्तं नाचंस्था नासहिष्ठाः। चमूष् सहने। ऊदित्वात् "स्वरतिसूति—" इत्यादिना विकल्पादिड्भावः॥ १५

भरतः। मूर्खास्त्वामित्यादि। ये प्रहस्तादयो विग्रहं कारितवन्तः ते मूर्खाः त्वां वञ्चितवन्तः, माल्यवान् यद्युक्तं वाक्यम् उक्तवान् त्वं मदात् सोढवान्, वञ्च क्व वञ्चि

मतारि "वश्चिगर्द्दैः" इति मं, "जिम्रि" इत्यङ्ख्रजीआन्तादङ् "भाङ्गुक स्वः" इति रुस्वत्वं "स्त्रिः सन्वद्री" इति सन्वत् "स्यस्येस्मानि" इति इत्वं, "इस्मादंघस्य" इति दीर्घत्वम् । अथ च चकारात् शब्दे "इवादिः सेमः" इति पदे त्रिः, चमूङ् जिवच चकारान्मर्षे ऊदित्वात् "वे मूदित्स्वर" इत्यस्याप्रवृत्तिपदे वोर्नुः ॥ १५

অনুবাদ। মূর্খেরা তোমাকে বঞ্চিত করিয়াছে। যাহারা তোমাকে দিয়া বিরোধ করাইয়াছে তাহারা মূর্খ মালাবান্ যুক্তিযুক্ত কথাই বলিয়াছিলেন, তুমি তাহা মদগর্ব্বে সহ্য করিতে পার নাই। ১৫

**राघवस्यामुषः कान्तामाप्तैरुक्तो न चार्पिपः ।**

**मा नानुभूः स्वकान् दोषान् मा मुहो मा रुषोऽधुना ॥**

अन्वयः । राघवस्य कान्ताम् अमुषः, आप्तैः उक्तः न अर्पिपः, च स्वकान् दोषान् मा न अनुभूः, अधुना मा मुहः, मा रुषः ॥ १६

मल्लिनाथः । राघवस्येति । राघवस्य कान्तामुषः खण्डित- वानसि । मुष खण्डने । इष्टवियोजनमेव खण्डनम् । दैवादिकः । अस्यैव पुष्यादित्वादङ् । दिवाद्यन्तर्गणपुषादिरिति काशिका । अतो नात्र मुष स्तेये इति भौवादिकस्य क्र्यादिकस्य वा ग्रहणम् । आप्तैर्मातामहादिभिरुक्तो नार्पिपः न प्रत्यर्पितवानसि । अर्त्तेर्णौ चङ् । "अर्त्तिह्री—" इत्यादिना पुगागमे "पुगन्तस्य—" इति गुणः । "द्विर्वचनेऽचि" इति णिलोपस्य स्थानिवद्भावात् "अजादेर्द्वितीयस्य" इति पिशब्दस्य द्विरुक्तिः । स्वकान् दोषान् मा नानुभूः अनुभव । गतमेतत् । अधुना मा मुहः न मुह्य । मा रुषः न रुष्य । किं तु मोहरोषौ विहाय प्राप्तमनुभवेत्यर्थः । मुह वैचित्त्ये । रुष कोपे । माङि लुङि उभयत्र पुषादित्वादङ् ॥ १६

भरतः । राघवस्येत्यादि । प्रमादित्वमपि तवास्ति, यतस्त्वं राघवस्य कान्ताम् अमुष अपहृतवान्, मुष्य इ छिदि, अनेकार्थत्वादपहारार्थः, कान्तावियोजनमेव वाव छेदः, "आव- सिद्द्रत्" इत्यादिना पचे ङः । आप्तैः विभीषणादिभिः उक्तोऽपि त्वं तां न चार्पितवानसि, ऋ लि गत्या ऋ प्रापणे च "ह्रीवृलीरी" इत्यादिना पन् पुग, "नाजन्तादेरादिर्द्विः", "स्वा- दीनवद्गीऽर्थ" इति वचनात् पीत्यस्य द्वित्वं णेर्लोपः । अधुना स्वीयान् दोषान् आत्मीयचेष्टि- तानि मा न अनुभूः किन्तु अनुभव, अनुपूर्वभव ते "भूस्थापिव" इति सेर्लुक् । त्वं मा मुहः मोहं मा गमः, रुषः रोषं मा कार्षीः, मुहूङ्कि वैचित्त्ये रुषिरिं क्रुधि आभ्यां "आद्यसिद्दुरत्" इति ङः ॥ १६

অনুবাদ। তুমি রামের পত্নীহরণ করিয়াছ, আত্মীয়গণ কর্ত্তৃক অনুরুদ্ধ হইয়াও তাঁহাকে প্রত্যর্পণ কর নাই। নিজের দোষ অনুভব করিতে পার নাই, এখন মুগ্ধ বা ক্রুদ্ধ হইও না। ১৬

**तस्याप्यत्यक्रमीत् कालो यत्तदाहमवादिषम्।**
**अघानिषत रक्षांसि परैः कोषं[षं] त्वमव्ययीः॥१७**

अन्वयः। अहं तदा यत् अवादिषम् तस्य अपि कालो अत्यक्रमीत्, रक्षांसि परैः अघानिषत त्वं कोषम् अव्ययीः॥ १७

मल्लिनाथः। तस्येति। अहं तदा यदवादिषं रामः सन्धेय इति तस्य सन्धेरपि कालोऽत्यक्रमीत् अतिक्रान्तः। "स्नुक्रमोरनात्मनेपदनिमित्ते" इतीट्। "ह्म्यन्त"—इति वृद्धिप्रतिषेधः। "इट ईटि" इति सलोपः। तथाहि—रक्षांसि राक्षसाः परैः शत्रुभिरघानिषत हताः। "स्यसिच्सीयुट्—"इत्यादिना हन्तेश्चिण्वदिटि वृद्धिः। "हो हन्तेः—" इति कुत्वम्। कोषं धनं त्वमव्ययीः व्ययमकार्षीः, लङ्कादाहे उपेक्षणात्। व्यय गतौ इति धातुर्भौवादिकः, धातूनामनेकार्थत्वात् व्यय वित्तविसर्गमाचष्टे। "ह्म्यन्त—" इति वृद्धिप्रतिषेधः। "इट ईटि" इति सलोपः। व्यय वित्तसमुत्सर्गे इति चौरादिकात् "आधृषाद्वा" इति विकल्पात् णिजभावपक्षे वा रूपमिति केचित्॥ १७

भरतः। तस्येत्यादि। तस्मिन् काले तव यत् अहम् अवादिषं रामेण सह सन्धिः क्रियताम् इत्युक्तवानस्मि तस्यापि सन्धेः कालोऽतिक्रान्तः, यतः परैः शत्रुभिः रक्षांसि हतानि, त्वं कोषद्रव्य व्ययितवानसि लङ्कादाहे तस्यारक्षणात् वीरेभ्यः प्रदानाच्च, क्रम्य क्रमु गतौ "इसादेः सेम" इत्यादौ मान्तवर्जनान्न त्रिः, हन्तेः कर्म्मणि "हनयदृहृशच" इति चिण्, "हनसाङ्क" इत्यादौ इण्वर्ज्जनान्न तङ्, "चिर्हीघोज् चिति च" इति घः, "मान्तोऽदन्तः" इत्यत्. व्ययश्च गत्याम् अनेकार्थत्वात् व्ययार्थेऽपि यान्तत्वान्न त्रिः॥ १७

অনুবাদ। আমি তখন যাহা বলিয়াছিলাম, তাহারও সময় অতীত হইয়াছে, শত্রুরা রাক্ষসদিগকে বধ করিয়াছে, তুমি ধনাগারের ধন ব্যয় করিয়া ফেলিয়াছ। ১৭

**सन्धानकारणं तेजो**
**न्यग्भूतेऽक्रुयास्तथा।**

यस्त्वं वैरेण [वैराणि]कोषं च
सहदण्डमजिग्लपः ॥ १८

अन्वयः। सन्धानकारणं ते तेजः न्यक् अभूत, तथा अक्रथाः, यः त्वं वैरेण सहदण्डं कोषं च अजिग्लपः ॥ १८

मल्लिनाथः। सन्धानेति किं च सन्धाने कारणं कारणभूतं तेजः प्रभावो न्यङ्—नीचमभूत्। "गातिस्था—" इत्यादिना सिचो लुक्। तथा अक्रथाः न्यग्भूतमकार्षीः। "तनादिभ्यस्तथासोः" इति सिचो लुक्। यस्त्वं वैरेण यत्नभावेन सहदण्डं समैन्यं कोषं चाजिग्लपोऽनीनशः। ग्लायतेर्णिचि पुगागमे "ग्लास्नावनुवमां च" इति मित्वाद्ध्रस्वत्वम्। ततो लुङि चङि णिलोपः। कोषदण्डक्षयात् क्षीणतेजसस्ते यातव्यपक्षस्य कुतः सन्धानमितर्थः ॥ १८

भरतः। सन्धेत्यादि। त्वं तथा अक्रथाः कृतवानसि यथा सन्धानकारणं तव तेजो न्यग्भूतं, को हि तेजस्विना सन्धिं करोति, कृञः "इगुकुर्मादि" इति सेः किस्वादगुणाभाव, "भयस्वात्" इति सिलोपः। यद्यस्मात् त्वं वैराणि वीरभावान् वीरयोग्यानि दुर्गाणि वा अतुलानि वा सह दण्डं सैन्येन सह कोषञ्च ग्लपितवानसि, ग्लै क्षमे णिः, "क्रीङ्जीरी" इति पक् ॥ १८

অনুবাদ। সন্ধির কারণীভূত যে তোমার তেজঃ তাহা হীন হইয়াছে, তুমিই তাহাই করিয়াছ। যেহেতু তুমি শত্রুতা করিয়া সৈন্য ও কোশ সমস্তই নষ্ট করিয়াছ। ১৮

अक्रुधच्चाभ्यधाद्वाक्यं कुम्भकर्णं दशाननः।
किं त्वं मामजुगुप्सिष्ठा नेदिधः किं[स्व]पराक्रमम् ॥

अन्वयः। (अथ) दशाननः कुम्भकर्णम् अक्रुधत्, वाक्यम् च अभ्यधात्, त्वं मां किम् अजुगुप्सिष्ठाः, किं पराक्रमं नेदिधः ॥ १९

मल्लिनाथः। अक्रुधदिति। अथ दशाननः कुम्भकर्णमक्रुधत् क्रुद्धवान्। क्रुध क्रोधे। पुषादित्वादङ्। अत्र कोपस्य नात्यन्तिककत्वात् भार्य्यां क्रुध्यतीतिवत् कर्मत्वमेव न संप्रदानत्वम्। यं प्रति कोप इति विशेषणादिति। वाक्यम् अभ्यधादवादिच। "गातिस्था—" इत्यादिना सिचो लुक्। तदेवाह—त्वं मां किमर्थम् अजुगुप्सिष्ठा अगर्हिष्ठाः। गुपेः स्वार्थिकसनन्तात् लुङि थासि सिचीट्। पराक्रमं किमर्थं

त्वं नेदिधः नैधितवान्। एध वृद्धौ। णौ चङि णिलोपस्य स्थानिवत्त्वात् "अजादेर्द्वितीयस्य" इति धिशब्दस्य द्वित्वम्॥ १९

भरतः। अक्रुधदित्यादि। एवमुक्तो दशाननोऽक्रुधत्, क्रुध ऌ यी कोपे, पुषादित्वात् ङः। कुम्भकर्णञ्च उक्तवान्, डु धाञ् ऌ धारणे, पुष्टौ दाने टौ भुग्धापिबेति सेर्लुक्। किमभ्यधादित्याह—किं त्वं मां निन्दितवानसि, गुपङ गोपनकुत्सनयोः "कितिजगुपः" इति सन् निन्दायां तिग्मानार्जवनिन्दासु इत्युक्तेः। स्वपराक्रमं किं न वर्द्धितवानसि। एधङ् वृद्धौ आत्मादङ् द्वित्वञ्च॥ १९

অনুবাদ। দশানন ক্রুদ্ধ হইয়া কুম্ভকর্ণকে বলিল তুমি আমাকে নিন্দা কর কেন, নিজের পরাক্রম প্রদর্শন কর না কেন? । ১৯

मा जि[मो ज्जि]ग्रहः सुनीतानि
मा स्म क्रंस्था न संयुगे।
मोपालब्धाः कृतैर्दोषै-
र्मा न वाचीर्हितं भ[प]रम्॥ २०

अन्वयः। सुनीतानि मा जिग्रहः, संयुगे न मा स्म क्रंस्थाः, कृतैः दोषैः मा उपालब्धाः, हितं भरं न मा वाचीः॥ २०

मल्लिनाथः। मेति। सुनीतानि सुनीतीर्मा जिग्रहः मा ग्राहय नोपदिशेत्यर्थः। ग्रहेर्णौ चङ्। संयुगे युद्धे न मा क्रंस्थाः किन्तु क्रमस्व उत्साहयस्वेत्यर्थः। "वृत्तिसर्गतायनेषु क्रमः" इति क्रमेर्लुङि सर्गे तङ्। सर्ग उत्साहः। माङ्योगादि पूर्ववत्। कृतैर्दोषैरपराधैर्मोपालब्धाः नोपालभस्व। लभेर्लुङि थासि 'झलो झलि' इति सलोपः। "झषस्तथोः—" इति धत्वम्। हितं पथ्यं भरं कार्यभारं मा न वाचीर्मा न वह? वहेत्यर्थः। वह प्रापणे। हलन्तलक्षणा वृद्धिः। गतमन्यत्॥ २०

भरतः। मोज्जिग्रह इत्यादि। शोभनानि नीतानि न उद्ग्राहय यद्‌दर्शयन्नादङ्। प्रस्तुतमुपन्यस्यन्नाह—संयुगे युद्धविषये मास्म न क्रंस्थाः, किन्तु अवश्यम् उत्साहं कुरु, "मास्म चोक्तौ" इति सर्वकाले टी। "वृत्त्युत्साहतायने क्रमः" इति मं, "कुक्रमोऽमि" इति अवर्जनादिमोऽभावः। कृतैर्दोषैः मा उपालब्धाः नोपालभस्व, न भर्त्सयेत्यर्थः। लभ डौक्ष मासी "झसस्तात्झसि" इति सिलोपः। हितं युक्तं परं मा न वाचीः अपितु अवश्यं वहीत भावः। वहेंभी प्रापणे अनिमत्वादमिः "डौक् कः"॥ २०

অনুবাদ। আমাকে সুনীতি উপদেশ দিতে হইবে না, যুদ্ধে উৎসাহী হও। দোষ দেখাইয়া তিরস্কার করিও না, হিতকর কার্য্যভার বহন কর। ২০

कुम्भकर्णस्ततोऽगर्जीद्भटांश्चान्यान् न्यवीवृतत्।
उपायंस्त महास्त्राणि निरगाच्च द्रुतं पुरः॥ २१

अन्वयः। ततः कुम्भकर्णः अगर्जीत्, अन्यान् भटान् च न्यवीवृतत्, महास्त्राणि उपायंस्त, द्रुतं पुरः निरगात् च॥ २१

मल्लिनाथः। कुम्भेति। ततो रावणक्रोधोक्त्यनन्तरं कुम्भकर्णोऽगर्जीत् स्वामिचित्तानुसाराद्योद्धुं निश्चित्य जगर्जेत्यर्थः। अन्यान् भटान् न्यवीवृतत् एकवीरत्वाभिमानात् निवर्त्तितवानित्यर्थः। वृतु वर्त्तने। णौ चाङि "उर्ऋत्" इत्युपधाऋकारस्य विकल्पेन ऋकारः। "उरत्" इत्यभ्यासऋकारस्य अकारः। ततः सन्वत्कार्य्यम्। महास्त्राण्युपायंस्त जग्राह। उपशब्दः पादपूरणार्थः। आङ्पूर्व्वाद्यमेर्लुङि "समुदाङ्भ्यो यमोऽग्रन्थे" इति तङ्। द्रुतं पुरः पुरान्निरगाच्च॥२१

भरतः। कुम्भकर्ण इत्यादि। ततो रावणवाक्यानन्तरं कुम्भकर्णो गर्जितवान्, गर्जीश्शब्दे। अन्यान् भटान् योद्धुमुद्यतान् निवर्त्तयामास, वृतेर्ण्यन्तादङ्। महास्त्राणि उपायंस्त स्वीचकार, यमो विरतौ "उपयमो विवाहे" इति तं, विवाहः स्वीकार इति व्याख्यानं "यमः सूचने चानूद्वाहे" इति पक्षे सं. कित्त्वाभावात् नलोपाभावः, किं वा आङ्पूर्व्वस्य यमोऽमिन्त्रान्त इत्यादिना तम्। पुरो लङ्कायाः सकाशात् शीघ्रं निर्गतः, "इणो गा" "भूसुपिव" इति सिचो लुक्॥ २१

অনুবাদ। তাহার পর কুম্ভকর্ণ (যুদ্ধার্থ) গর্জ্জন করিতে লাগিল, (নিজেকে অজেয় ভাবিয়া অন্য বীরগণকে যুদ্ধে যাইতে নিষেধ করিল, প্রধান প্রধান অস্ত্র গুলি গ্রহণ করিল, এবং অবিলম্বে নগর হইতে নির্গত হইল। ২১

मूर्द्ध्ना दिवमिवालेखीत् खं व्यापद्वपुषोरुणा।
पादाभ्यां क्ष्मामिवाभैत्सीद् दृष्ट्याधाक्षीदिव द्विषः॥२२

अन्वयः। (सः) मूर्द्ध्ना दिवम् आलेखीत् इव, उरुणा वपुषा खं व्यापत्, पादाभ्यां क्ष्माम् अभैत्सीत् इव, दृष्ट्या द्विषः अधाक्षीत् इव॥ २२

मल्लिनाथः। मूर्ध्नेति। पुराभिगच्छन् स कुम्भकर्णो मूर्ध्ना दिवमलेखीदिव अस्पृाक्षीदिव। अभ्रङ्कषमूर्धेत्यर्थः। "इट ईटि" इति सलोपः। उरुणा महता वपुषा खमाकाशं व्यापत् व्याप्तवान्। आपेर्लुङि लृदित्वादङ्। पादाभ्यां क्ष्मां भूमिमभैत्सीदिव अदारयदिव। भिदिर् विदारणे। सिचि वृद्धिः। दृष्ट्या द्विषः शत्रूनधाक्षीदिव ददाहेव। दह भस्मीकरणे। सिचि हलन्तलक्षणा वृद्धिः। अनिट्त्वात् न "ह्मयन्त—" इति निषेध.। भष्भावादिकार्यम्॥ २२

भरतः। मूर्ध्नेत्यादि। स गच्छन् मूर्ध्ना दिवम् आकाशं स्पृष्टवानिव, लिखम् लिखने। उरुणा महता वपुषा शरीरेण खम् आकाशं व्याप्तवानिव, आप्लृ व्याप्तौ लृदित्वात् ङः। चरणाभ्यां क्ष्मां भूमिं भिन्नवानिव, अभै भिदिर्भिदि ङाभावपक्षे सिः अनिमत्वात् वृद्धिः। दर्शनमात्रेणैव शत्रून् दग्धवानिव, दहौ दाहे, दाहेर्धः "झभान्तसादिजवाम्" इति षः "झपभसौ." इति: कः॥ २२

অনুবাদ। কুম্ভকর্ণের মস্তক দ্বারা যেন স্বর্গ স্পর্শ করিল, প্রকাণ্ড কলেবর দ্বারা আকাশ ব্যাপ্ত করিল, চরণদ্বয় দ্বারা পৃথিবীকে যেন বিদীর্ণ করিল এবং দৃষ্টিপাতে শত্রুগণকে যেন দগ্ধ করিতে লাগিল। ২২

दग्धशैल इवाभासीत् प्राक्रंस्त च्यमेघवत्।
अ[प्रा]चकम्पदुदन्वन्तं राक्षसानप्यतित्रसत्॥ २३

अन्वयः। (सः) दग्धशैल इव अभासीत्, क्षयमेघवत् प्राक्रंस्त, उदन्वन्तम् अचकम्पत्, राक्षसान् अपि अतित्रसत्॥ २३

मल्लिनाथः। दग्धेति। महत्त्वात् कृष्णवर्णत्वाच्च दग्धशैल इवाभासीत् बभौ। भा दीप्तौ। "यमरमनम—" इति सगिटौ। क्षयमेघवत् कल्पान्तमेघेन तुल्यं प्राक्रंस्त गन्तुं प्रक्रान्त इत्यर्थः। "प्रोपाभ्यां समर्थाभ्याम्" इति क्रमेर्लुङि तङि सिचि "स्नुक्रमोरनात्मनेपदनिमित्ते" इति निषेधात् नेडागमः। उदन्वन्तमुदधिम्। उदन्वानुदधौ च" इति निपातः। अचकम्पत् पादन्यासभरात् कम्पयामास। कपि चलने। णौ चङ्। राक्षसानपि किमुत कपीनिति भावः, अतित्रसत् त्रासयामास। त्रसेर्णौ चङ्युपधाया ह्रस्वः॥ २३

भरतः। दग्धेत्यादि। अतिकृष्णत्वात् महत्त्वाच्च दग्धपर्वत इव स भाति स्म, भा च दीप्तौ "यमरम" इति इमसगौ। प्रलयसम्बन्धिमेघ इव प्रक्रमते स्म, "प्रोपाभ्यारम्भे" इति

नम् । गच्छन् समुद्रमपि कम्पितवान्, कपिरूढ् विभाषी आत्मादङ् । न केवलं कपीन् राक्षसानपि त्रासयामास. सर्वेभ्यात्मादङ् ॥ २२

अनुवाद । (গমনকালে) দগ্ধপর্ব্বতবৎ শোভা পাইতে লাগিল, মহাপ্রলয়কালীন মেঘের ন্যায় চলিতেছিল, সমুদ্রকে কম্পিত করিয়া তুলিল অধিক কি রাক্ষসদিগকেও ভয়গ্রস্ত করিয়া তুলিল। ২৩

सपक्षोऽद्रिरिवाचालीन्न्यश्वसीत् कल्पवायुवत् ।
अभार्षीद्ध्वनिना लोकानभ्राजिष्ट क्षयाग्निवत् ॥२४

अन्वयः । (सः) सपक्षः अद्रिः इव अचालीत्, कल्पवायुवत् न्यश्वसीत्, ध्वनिना लोकान् अभार्षीत्, क्षयाग्निवत् अभ्राजिष्ट ॥ २४

मल्लिनाथः । सपक्ष इति । सपक्षो बाहुधूननात् पक्षवानद्रिरिव अचालीत् चलितः । "अतो ल्रान्तस्य" इति वृद्धिः । कल्पवायुवत् न्यश्वसीत् । तत्तुल्योऽस्य निश्वास इत्यर्थः । "ह्म्यन्त—" इति वृद्धिप्रतिषेधः । ध्वनिना सिंहनादेन लोकानभार्षीद्भृतवान् । पूरितवानित्यर्थः । भृञ् भरणे सिचि वृद्धिः । क्षयाग्निवत् कल्पान्तवह्निवत् अभ्राजिष्ट । लोहितशिरोरुहत्वात् तद्वद्दीप्तिष्टेत्यर्थः । भ्राजृ दीप्तौ । लुङि सिचीट् ॥ २४

भरतः । सपक्ष इत्यादि । स पक्षयुक्तः पर्वत इव चलितः बाह्वोः पक्षतुल्यत्वात्, चलि-मंगवदित्यादिना वृः । प्रलयवायुरिव निश्वासं चकार, "ह्म्यादेः सेटः" इत्यादौ श्वस-वर्ज्जनात् न वृः । ध्वनिना लोकत्रयं पूरितवान्, भृ लि द तु स् भृतिपुष्ट्योः, "नेमे-चाप्" इति पनिम् प्रलयाग्निरिव भ्राजते स्म, लोकविनाशकत्वात् पिङ्गलकेशत्वाच भ्राजृङ् चतुर्थराशिस ॥ २४

অনুবাদ। সে পক্ষযুক্ত পর্ব্বতবৎ চলিতে লাগিল, যুগান্তবায়ুর ন্যায় নিশ্বাস ফেলিতেছিল, সিংহনাদে ত্রিভুবন পরিপূর্ণ করিল এবং লোহিতকেশ-হেতু কল্পান্তচিহ্নবৎ শোভা পাইতে লাগিল। ২৪

अनंसीद्भूर्भरेणास्य रंहसा शाखिनोऽलुठन् ।
सिंहाः प्राद्रुद्रुवन् भीताः प्राक्षुभन् कुलपर्वताः ॥२५

अन्वयः । अस्य भरेण भूः अनंसीत्, रंहसा शाखिनः अलुठन्, सिंहाः भीताः (सन्तः) प्राद्रुद्रुवन्, कुलपर्वताः प्राक्षुभन् ॥ २५

मल्लिनाथः । अनंसीदिति । अस्य रक्षसो भरेण देहगौरवेण भूरनंसीत् ननाम । "यमरमनम—" इति सगिटौ । रंहसा वेगेन शाखिनो वृक्षा अलुठन् पतित्वा लुठिताः । लुठ प्रतिघाते । द्युतादित्वादङ् । "द्युद्भ्यो लुङि" इति पक्षे परस्मैपदम् । सिंहा भीताः प्रादुद्रुवन् प्रद्रुताः । द्रु गतौ । "णिश्रि—" इत्यादिना चङ् । उवङादेशः । कुलपर्व्वताः प्राक्षुभन् प्रक्षुभिताश्चलिता इत्यर्थः । क्षुभ सञ्चलने । द्युतादित्वादङ्, परस्मैपदं च पूर्व्ववत् ॥ २५

अन्वयः । अनंसीदित्यादि । अस्य भरेण भूः नमति स्म, "यमरम" इति इम्सकौ । अस्य रंहसा वेगेन शाखिनो वृक्षाः पतिताः, लुलुञ्च विलोटविलोडयोः, लृदित्वात् ङः । ठान्तपाठे द्युतादित्वात् ङः तेनैव पम् । सिंहाः भीताः सन्तः पलायिताः, द्रु स्रु गतौ "णिश्रिद्रुस्रुकमः" इति चङ् । कुलपर्वताः क्षोभं प्रापुः, क्षुभङ् सञ्चले द्युतादित्वात् ङः ॥ २५

অনুবাদ। ইহার দেহভারে পৃথিবী অবনত এবং বেগে বৃক্ষ সকল ভূমিতে লুণ্ঠিত হইল। সিংহগণ ভয়ে পলায়ন করিল। মহেন্দ্রাদি কুলপর্ব্বত-গুলি বিচলিত হইল। ২৫

उत्पाताः प्रावृतंस्तस्य द्यौरश्चोतिष्ट शोणितम् ।
वायवोऽवासिषुर्भीमाः क्रूराश्चाकुषत द्विजाः ॥ २६

अन्वयः । तस्य उत्पाताः प्रावृतन्, द्यौः शोणितम् अश्चोतिष्ट, भीमाः वायवः अवासिषुः, क्रूराः द्विजाः च अकुषत ॥ २६

मल्लिनाथः । उत्पाता इति । तस्य गच्छतोऽग्रे उत्पाता दुर्निमित्तानि प्रावृतन् प्रावर्त्तिषत । वृतु वर्त्तने । द्युतादित्वादङ् ना परस्मैपदञ्च । तानेवाह—द्यौराकाशः शोणितमश्चोतिष्ट असिचत् ववर्षेत्यर्थः । श्चोत सेचने । लुङि तङि सिचीट् । भीमाः वायवोऽवासिषुः वान्ति स्म । वा गतिगन्धनयोः । "यमरम—" इति सगिटौ । क्रूरा द्विजाः पक्षिणश्चोलूकादयोऽकुषत शब्दायन्ते स्म । कुङ् शब्दे । भौवादिकोऽनिट् । लुङि तङि कुटादित्वेन सिचः कित्त्वान्न गुणः ॥ २६

अन्वयः । उत्पाता इत्यादि । गच्छतः तस्य उत्पाताः विनाशसूचकाः प्रवृत्ताः, द्यु

ववर्षेऽद्युतादित्वात् ङः। द्यौः आकाशं शोणितं ववर्ष च, वृषु सेचने। भीमाः प्रचण्डा वायवः वान्ति स्म, वा च गतिगन्धनयोः, यमरमेति इमागमौ सगुणिटः। क्रूरा भयदा द्विजाः पक्षिणश्च शब्दं चक्रुः कुचिङ् आतंस्वरे, कुटां चरीभूषितीति नियमाद्धा-भावः नैमित्तिकाजिति चनिम् ॥ २६

অনুবাদ। যাত্রাকালে তাহার অগ্রে পরবর্ত্তী উপৎপাত আরম্ভ হইল—আকাশ রক্তবর্ষণ করিল, ভয়ঙ্কর বায়ু বহিল, পেচকাদি বিহঙ্গকুল কর্কশ রব করিল। ২৬

**अस्पन्दिष्टाक्षि वामं च घोराश्चाराटिषुः शिवाः ।**
**न्यपप्तन् मुसले गृध्रा दीप्तयापाति चोल्कया ॥ २७**

अन्वयः। (तस्य) वामम् अक्षि च अस्पन्दिष्ट, घोराः शिवाः च अराटिषुः, मुसले गृध्राः न्यपतन्, दीप्तया उल्कया अपाति च ॥ २७

मल्लिनाथः। अस्पन्दिष्टेति। किञ्चास्य वाममक्षि चास्पन्दिष्टा-स्फुरत्। घोराः शिवाः क्रोष्टारश्च अराटिषुरराविषुः। रट शब्दे। "अतो हलादेः" इति पक्षे वृद्धिः। मुसले मुसलायुधे गृध्रा न्यपप्तन् निपतिताः। पतॢ गतौ। ऌदित्वादङ्। "पतः पुम्" इति पुमागमः। दीप्तया ज्वलितया चोल्कया अपाति। भावे लुङ् ॥ २७

भरतः। अस्पन्दिष्टेत्यादि। अस्य वामम् अक्षि स्पन्दते स्म, स्पदिङ् ईषत्कम्पे। क्रूराः भीमाः शृगालाः शब्दं चक्रुः, रट वाचि "हलादेः सेमः" इति वृद्धिः। मुसले गृध्राः पतिताः, पतॢन्श गत्यां ऌदित्त्वात् ङः, "वच्यस्यतिपताम्" इति पमागमः। दीप्तया उल्कया च पतितं, "रतनोर्यणिन्यौ" इति भावे इण्, "इनस्तनलोपः" ॥ २७

অনুবাদ। এবং বামচক্ষুঃ স্পন্দিত হইল। শৃগালেরা ভয়ঙ্কর রব করিল। মুসল অস্ত্রের উপর শকুনি বসিল এবং জ্বলন্ত উল্‌কা সকল পতিত হইল। ২৮

**आंहिष्ट तानसंमान्य दर्पात् स प्रधनक्षितिम् ।**
**ततोऽनर्दीदनन्दीच्च शत्रूनाह्वास्त चाहवे ॥ २८**

अन्वयः। सः दर्पात् तान् (उत्पातान्) असंमान्य प्रधनक्षितिम् आंहिष्ट, ततः अनर्दीत्, अनन्दीत् च, आहवे शत्रून् च आह्वास्त ॥ २८

मल्लिनाथः। आंहिष्टेति। स कुम्भकर्णो दर्पात्तानुत्पातान-

संमान्यामाद्दत्य प्रधनक्षितिं युद्धभूमिम्। 'युद्धमायोधनं जन्यं प्रधनं प्रविदारणम्' इत्यमरः। आंहिष्टागमत्। अहि गतौ। सिचीट्। इदित्वान्नुम्। अजादित्वादाड्वृद्धिः। ततोऽनर्दीत् ननर्द। नर्द कुत्सिते शब्दे। "इट ईटि" इति सलोपः। अनन्दीत् ननन्द च। नदि समृद्धौ। पूर्व्ववत् सलोपः। नुमागमश्च। आहवे रणे निमित्ते शत्रूनाह्वास्त सस्पर्द्धमाह्वतवांश्च। ह्वयतेः "स्पर्धायामाङः" इति तङ्। "लिपिसिचिह्वश्च"। "आत्मनेपदेष्वन्यतरस्याम्" इत्यङ-भावपक्षे सिच् ॥ २८

भरतः। आंहिष्टेत्यादि। स कुम्भकर्णः तान् उत्पातान् दर्पात् अवमान्य प्रधनक्षितिं रणस्थलीम् आंहिष्ट गतः, अहिङ गतौ, मान किंचार्थे इत्यस्मात् क्त्वा। ततोऽनर्दीत् सिंहनादं चकार, नर्द शब्दे। अनन्दीत् आनन्दयुक्तो बभूव। आहवे युद्धे शत्रून् आह्वत-वान्, "स्पर्द्धायामाङः" इति तं, "वक्ष्यस्य" इति पाक्षिकोऽङस्तदभावे सिः ॥ २८

অনুবাদ। কুম্ভকর্ণ বীরত্বগর্ব্বে সেই উপদ্রব অগ্রাহ্য করিয়া যুদ্ধক্ষেত্রে গমন পূর্ব্বক সিংহনাদ করিল; এবং আনন্দপ্রকাশ করিতে লাগিল, পরে শত্রুগণকে যুদ্ধে আহ্বান করিল। ২৮

**प्राशीन्न चातृपत् क्रूरः क्षुच्चास्याववृधद्भ्रतः।**
**अधाद्वसामधासीच्च रुधिरं वनवासिनाम् ॥ २९**

अन्वयः। क्रूरः (सः) प्राशीत् न च अतृपत्, अश्नतः अस्य क्षुत् च अववृधत्, वन-वासिनां (कपीनां) वसाम् अधात्, रुधिरं च अधासीत् ॥ २९

मल्लिनाथः। प्राशीदिति। क्रूरो हिंस्रः स राक्षसः प्राशीद-शितवान् कपिमांसमिति शेषः। अश भोजने। "इट ईटि" इति सलोपः, आड्वृद्धिः। नातृपन्न तृप्तश्च। तृप प्रीणने। पुषादित्वा-दङ्। अश्नतः भुञ्जानस्यास्य क्षुदववृधत् अवर्द्धिष्ट। वृधु वर्द्धने। द्युतादित्वादङ्। "द्युद्भ्यो लुङि" इति परस्मैपदम्। वनवासिनां कपीनां वसां हृन्मेदः। 'हृन्मेदस्तु वसा' इत्यमरः। अधात् अपात्। धेट् पाने। "विभाषा धेट्श्व्योः" इति चङभावपक्षे "विभाषा घ्राधेट्शाच्छासः" इति पक्षे सिचो लुक्। रुधिरं चाधा-सीत्। लुक्चङोरभावे "यमरमनम—" इति सगिटौ 'इट ईटि' इति सलोपः। चङ्पक्षे द्विर्भावे आतो लोपे च अदधत्। "एवं च

लुङि चिण्लोपश्च विकल्पविधानतः। अधादधासीददधदिति धेटश्चिरूपता" ॥ २९

भरतः। प्राशीदित्यादि। प्राशीत् भक्षितवान् कपीन् इत्यर्थात्, अशन् भोजने। असौ कुम्भ तुष्टाशयो न हृतः, जिज्ञ तृप्यभ्यकारात् प्रीणने पुषादित्वात् ङः। अक्षतः स्वादतोऽप्यस्य चुत् बुभुक्षा वर्धते स्म, वृध ङ् च वृद्धौ द्युतादित्वात ङः। असौ वनवासिनां वानराणां वसां पपौ रुधिरञ्च अधासीत् पपौ, धेट पाने, "श्रिभ्यःच्छासाम्य:" इति पक्षे सिलुक् तदभावपक्षे यमरमेति इमुसर्गौ, अमन्तादिति सिलोपः ॥ २९

अनुवाद। হিংস্র রাক্ষস. বানরমাংস ভক্ষণ করিল; কিন্তু তাহাতে তৃপ্ত হইল না। ভক্ষণসত্ত্বেও তাহার ক্ষুধা বৃদ্ধি পাইল এবং বনবাসী বানরের রুধিরপান ও বসাভক্ষণ করিল। ২৯

मांसेनास्याश्वतां कुक्षी जठरं चाप्यशिश्वियत्।
बहूनामम्लुचत् प्राणानम्लोचीच्च रणे यशः ॥ ३०

अन्वयः। अस्य कुक्षी मांसेन आश्वताम्, जठरं च अशिश्वियत्, रणे बहूनां प्राणान् अम्लुचत्, यशः च अम्लोचीत् ॥ ३०

मल्लिनाथः। मांसेनेति। अस्य कुम्भकर्णस्य कुक्षी जठरपार्श्वे मांसेन कपिमांसेनाश्वतां शूनौ। ओ श्वि गतिवृद्ध्योः। लुङि तसस्तामादेशः। 'श्वयतेः' इत्यत्वे पररूपत्वम्। जठरमुदरं चापि अशिश्वियदुच्छूनम्। 'विभाषा धेट्श्व्योः' इति चङि द्विर्वचनमियङादेशश्च। रणे बहूनां द्विषां प्राणानम्लुचदपाहरत्। म्लुचु स्तेयकरणे। 'जृस्तम्भु—' इत्यादिना विकल्पाच्चेरङादेशः। किञ्च तेषां यशश्च अम्लोचीत्। अङभावपक्षे सिचि 'इट ईटि' इति सलोपः ॥ ३०

भरतः। मांसेनेत्यादि। अस्य कुम्भकर्णस्य कुक्षी उदरपार्श्वौ वानरादीनां मांसेन अश्वतां शूनौ, टुओ श्वि गतिवृद्ध्योः, "शासलिद्युत" इत्यादिना पक्षे ङः, "वच्यस्विपताम्" इति श्वादेशः। अस्य जठरम् उदरञ्च आशिश्वियत् ववृधे, जिश्रीत्यादिना पक्षेऽङ्। असौ बहूनां प्राणान् अम्लुचत् जहार, रणे बहूनां यशोऽम्लोचीत, म्लुचु इर् चौर्ये, शासलिद्युतादित्यादिना पाक्षिको ङस्तदभावपक्षे सिः। अम्लोचीदिति ठ म्लुचु इत्यस्य यशः पापेत्यर्थः ॥ ३०

अनुवाद। কুম্ভকর্ণের উদর ও উদরপার্শ্বদ্বয় বানরমাংসে স্ফীত হইল, যুদ্ধকালে অনেকের প্রাণ ও যশঃহরণ করিল। ৩০

सामर्थ्यञ्चापि सोऽस्तम्भीद्विक्रमं त[चा]स्य नास्तभन्।
शाखिनः केचिदध्यष्ठुन्यमाङ्क्षुरपरेऽम्बुधौ ॥ ३१

अन्वयः। सः (कपीनां) सामर्थ्यं च अस्तम्भीत्, ते (कपयः) तस्य विक्रमं न अस्तभन्, केचित् शाखिनः अध्यष्ठुः, अपरे अम्बुधौ न्यमाङ्क्षुः ॥ ३१

मल्लिनाथः। सामर्थ्यमिति। स कुम्भकर्णः सामर्थ्यं कपीनां प्रभावं चास्तम्भीत् स्तम्भितवान्। स्तम्भेरङ्भावपक्षे सिचि "इट ईटि" इति सलोपः। ते तस्य विक्रमं नास्तभन् स्तम्भितुं न शेकुरित्यर्थः। "जॄस्तम्भु—" इति च्लेरङादेशः। अङो ङित्वादनुनासिकलोपः। किन्तु केचित् कपयः शाखिनो वृक्षान् अध्यष्ठुः अधिष्ठितवन्तः। तिष्ठतेर्लुङि झेरुसि "गातिस्था—" इत्यादिना सिचो लुक्। "उस्यपदान्तात्" इति पररूपत्वम्। "अडभ्यासव्यवायेऽपि" इति षत्वे ष्टुत्वम्। "अधिशीङ्स्थासां कर्म"। अपरेऽम्बुधौ न्यमाङ्क्षुर्निमग्नाः। टु मस्जो शुद्धौ। लुङि सिचि "मस्जिनशोर्झलि" इति मस्जेर्नुमागमः पूर्वो नुमागमः। "स्कोः—" इति सकारलोपः। हलन्तलक्षणा वृद्धिः। कुत्वश्रुत्वादि ॥ ३१

भरतः। सामर्थ्यञ्चापीत्यादि। स कुम्भकर्णः शत्रूणां सामर्थ्यं म् अस्तम्भीत् निवारितवान्। अस्य विक्रमं केचिदपि नास्तभन् न निवारितवन्तः, स्तन्भ स्तम्भ स्कन्भ रोधने सौत्राः, पूर्ववत् पक्षे ङस्तदभावे सिः, ङे "इमुङ्नलोपोऽणौ" इति नस्य लोपः। केचित् भयात् वृक्षान् अधितिष्ठन्ति स्म, भूस्थेति सेर्लुक् "शीकःस्तु स्तभ" इति षत्वम्। अपरेऽम्बुधौ निमग्नाः, मस्जौ शुद्धे स्नानेऽनिमत्वाद्वृद्धिः, "नुन् रधीमुचाम्" इत्यादिना नुन्, स्त्रादेः सलोपः, "श्चकाज्" इति षङ्, षढोः कः, स्नोर्नुम्पेजसनोः क्रिलादेति षः अमुम् ॥ ३१

अनुवाद। कुम्भकर्ण वानरगणের শক্তি স্তম্ভন করিল, বানরেরা তাহার শক্তি স্তম্ভিত করিতে পারিল না তখন কতকগুলি বৃক্ষারোহণ করিল আর কতকগুলি সমুদ্রে নিমগ্ন হইয়া রহিল ॥ ৩১

अन्ये त्वलङ्घिषुः शैलान् गुहास्वन्ये न्यलेषत।
केचिदासिषत स्तब्धा भयात्केचिदघूर्णिषुः ॥ ३२

अन्वयः। अन्ये शैलान् अलङ्घिषुः, अन्ये गुहासु न्यलेषत, केचित् भयात् स्तब्धाः आसिषत, केचित् (भयात्) अघूर्णिषुः ॥ ३२

मल्लिनाथः । अन्य इति । किश्चेति चार्थः । अन्ये वानराः शैलानलङ्घिषुरारूढा इत्यर्थः । लघेर्गत्यर्थाल्लुङि सिचि "नेटि" इति वृद्धिप्रतिषेधः । इदित्वान्नुम् । अन्ये गुहासु न्यलेषत निलीनाः । लीङ् श्लेषणे । लुङि तङि सिचि गुणः । केचिद् भयात् स्तब्धा निश्चला आसिषत पाषाणवत् स्थिता इत्यर्थः । केचिद्भयादघूर्णिषुर्भ्रान्ताः । घूर्ण भ्रमणे ॥ ३२

भरतः । अन्य इत्यादि । अन्ये कपयः शैलान् अलङ्घिषुः तद्वधाकुलत्वात्, लघि शोषे अनेकार्थत्वाद्गतावपि, लघिङ् अभुगत्योरित्यस्य क्वचिदात्मनेपदिनोऽपि परस्मैपदित्वाद्रूपम् । अन्ये गुहासु लीनाः, लीङ्यमोश्लेषणे, नैकाजिति अनिम् । केचित् स्तब्धाः सन्तः स्थाणुवत् आसन्ते स्म, जिलासङ् उपवेशे । केचित् भयात् घूर्णन्ते स्म । घूर्णङ् भ्रमणे ॥ ३२

অনুবাদ। অপর কতকগুলি পর্ব্বতে আরোহণ করিল, কেহ কেহ গুহা মধ্যে লুকায়িত হইল, কতকগুলি ভয়ে পাষাণবৎ নিশ্চল হইয়া রহিল, কেহবা ভয়ে ঘুরিতে লাগিল। ৩২

**उदतारिषुरम्भोधिं वानराः सेतुनापरे ।**
**अलज्जिष्टाङ्गदस्तत्र प्रत्यवास्थित चोर्जितम् ॥ ३३**

अन्वयः । अपरे वानराः सेतुना अम्भोधिम् उदतारिषुः, तत्र अङ्गदः अलज्जिष्ट, ऊर्जितं प्रत्यवास्थित च ॥ ३३

मल्लिनाथः । उदिति । अपरे वानराः सेतुना सेतुमार्गेणाम्भोधिमुदतारिषुरुत्तीर्णाः । तरतेः सिचि वृद्धिः । तत्र तेषां मध्येऽङ्गदोऽलज्जिष्ट, हा कष्टं पलायन्त इति लज्जितवान् । अथोर्जितं प्रगल्भं यथा तथा प्रत्यवास्थित प्रातिपक्ष्येण स्थितवानित्यर्थः । तिष्ठतेर्लुङि "समवप्रविभ्यः स्थः" इति तङ् । "स्थाघ्वोरिच्च" इतीत्वं कित्त्वं च । कित्त्वान्न गुणः । "ह्रस्वादङ्गात्" इति सलोपः ॥ ३३

भरतः । उदतारिषुरित्यादि । अपरे वानराः सेतुना समुद्रम् उत्तीर्णाः, तृ तरेऽभिभवे प्लुत्याम् अजन्तत्वादनजवदिति त्रिः । वानरेषु एवम्भूतेषु सत्सु तत्र अङ्गदो लज्जते स्म । लस्जि व्रीड् वजङ् व्रीडे । ऊर्जितं पराक्रमश्च प्रत्यवास्थित प्रतिपन्नवान्, प्रतिष्ठानिर्यंयेत्यादिना मं, स्थादीङि: भासस्वादिति सिलोपः ॥ ३३

অনুবাদ। অপর বানরের সেতুপথে সমুদ্র পার হইল, তমধ্যে অঙ্গদ

সকলের পলায়নে লজ্জিত হইল। পরে নিজবীর্য্য প্রকাশ-সহকারে শত্রুর-প্রতিকূলে অবস্থান করিল ॥ ৩৩

**सत्वं समदुधुक्षच्च वानराणामयुद्ध च।**
**ततः शैलानुदक्षैप्सुरुदगूरिषत द्रुमान् ॥ ३४**

अन्वयः। वानराणां सत्वं च समदुधुक्षत्, अयुद्ध च, ततः (वानराः) शैलान् उदक्षैप्सुः, द्रुमान् उदगूरिषत ॥ ३४

मल्लिनाथः। सत्वमिति। वानराणां सत्वं बलं समदुधुक्षत् संधुक्षितवांश्च। धुक्ष सन्दीपने। णौ चङ्। स्वयमयुद्ध च युद्धं कृतवांश्च। युध संप्रहारे। लुङि तङ्। "झलो झलि" इति सलोपः। "झषस्तथोः—" इति धत्वम्। ततो वानराः शैलानुदक्षैप्सुरुत्क्षिप्तवन्तः। क्षिप प्रेरणे। हलन्तलक्षणा वृद्धिः। द्रुमानुदगूरिषत उद्गूर्णवन्तः। गूरी उद्यमने। सिचीट् ॥ ३४

भरतः। सत्वमित्यादि। अङ्गदो वानराणां सत्त्वं बलं संधुक्षयामास। धुक्षङ् सन्दीपे। आन्तादङ्। स्वयञ्च युध्यते स्म। युध्यौ ङ् युद्धे, "झसम्यान्" इति सिलोपः। ततः संधुक्षणानन्तरं शैलान् उत्क्षिप्तवन्तः। कपिव्याघ्रा इत्यग्रिमश्लोकेनान्वयः। क्षिप प्रशौ क्षिप्यौ शुदि। अनिमत्वात् "व्रजवद" इति वृः। द्रुमांश्च उद्गूर्णवन्तः। गूरङ्क उद्यमे। "धुर्य्योर्क्विर्वा" इति ञेरभावपक्षे रूपम्। गूरी यक्ष वधे गत्यामित्यस्य रूपं वा। गुरी ङ शि उद्यमे इत्यस्य तु नायं प्रयोगो ङस्वोङ्त्वात् ॥ ३४

অনুবাদ। অঙ্গদ উৎসাহদানে বানরদিগের বল বর্দ্ধিত করিল এবং স্বয়ং যুদ্ধে প্রবৃত্ত হইল। তখন কপিগণ শৈল ও বৃক্ষ উৎপাটন করিতে লাগিল। ৩৪

**अनर्दिषुः कपिव्याघ्राः सम्यक् चायुत्सताहवे।**
**तानमर्दीदखादीच्च निरास्थच्च तलाहतान् ॥ ३५**

अन्वयः। (अथ) कपिव्याघ्राः अनर्दिषुः, आहवे च सम्यक् अयुत्सत, (कुम्भकर्णः) तान् अमर्द्दीत्, अखादीत्, तलाहतान् निरास्थत् च ॥ ३५

मल्लिनाथः। अनर्दिषुरिति। अथ कपिव्याघ्राः कपिश्रेष्ठाः। उपमितसमासः। अनर्दिषुः अगर्जिषुः। नर्द कुत्सिते शब्दे। सिचीट्। "नेटि" इति वृद्धिप्रतिषेधः। आहवे सङ्ग्रामेऽयुत्सत

युद्धं क्षतवन्तश्च। युध संप्रहारे। लुङि तङि सिचः। "लिङ्-सिचावात्मनेपदेषु" इति सिचः कित्त्वात् न लघूपधगुणः। अथ कुम्भकर्णस्तान् कपीनमर्दीत् ममर्द। मृद चोदे। क्रैयादिः। "इट ईटि" इति सलोपः। अखादीदभक्षयच्च। खाद्ट भक्षणे। पूर्ववत् सलोपः। तलैराहतानिराख्यत् निरस्तवांश्च। असु क्षेपणे। "अस्यतिवक्तिख्यातिभ्योऽङ्"। "अस्यतेस्थुक्"। आङ्वृद्धिः॥ ३५

भरतः। अनर्दिषुरित्यादि। कपिश्रेष्ठा नर्दितवन्तः, मारय मारयेति शब्दं चक्रुः। नर्द शब्दे। सम्यक् निर्भयं संग्रामे युध्यन्त स्म। "इगुङ्कुर्मधि" इति कित्त्वात् गुणाभावः। तान् वानरान् मर्दितवान्, कुम्भकर्ण इत्यग्रिमश्लोकेनान्वयः। मृदग क्षुदि। अखादीत खाद्ट भक्षणे। तलेन हस्ताघातेन आहतवान्, निरास्थश्च इतस्ततः चिक्षेप च। असु इर क्षेपे। "वच्यस्यश्विपताम्" इति अथार्दिशः॥ ३५

অনুবাদ। প্রধান প্রধান বানরেরা মার মার রবে গর্জ্জন করিতে করিতে নির্ভয়চিত্তে যুদ্ধ করিল। তখন কুম্ভকর্ণ তাহাদিগকে মর্দ্দন, ভক্ষণ ও চপেটাঘাতে ইতস্ততঃ নিক্ষেপ করিতে লাগিল। ৩৫

प्राचुचूर्णच्च पादाभ्यामबिभीषत च द्रुतम्।
अतर्हीं[र्दी]च्चैव शूलेन कुम्भकर्णः प्लवङ्गमान्॥ ३६

अन्वयः। कुम्भकर्णः प्लवङ्गमान् पादाभ्यां प्राचुचूर्णत, द्रुतम् अबिभीषत च, शूलेन एव च अतर्हीत्॥ ३६

मल्लिनाथः। प्रेति। कुम्भकर्णः प्लवङ्गमान् पादाभ्यां प्राचुचूर्णत् प्रकर्षेण चूर्णितवान्। चूर्णयतेः "सत्यापपाश—" इति ण्यन्तात् लुङि चङि द्विर्भावेऽभ्यासकार्यम्। द्रुतमबिभीषत च भीषितवांश्च। ञि भी भये। ण्यन्ताल्लुङि "भीस्म्योर्हेतुभये" इति तङि "भियो हेतुभये षुक्" चङि द्विर्भावेऽभ्यासकार्यम्। शूलेन शूलायुधेन अतर्हीत् अहिंसीदेव च। तृहू हिंसायाम्। "ह्मयन्त—" इति वृद्धिप्रतिषेधः॥ ३६

भरतः। प्राचुचूर्णदित्यादि। पादाभ्यां चूर्णयामास। चूर्ण पेषे, चुरादिर्ञ्यन्तात् चङ्। द्रुतं भीषयते स्म। "भीभीम् वा" इति ञो पाञ्चिमते भीषादेशो नाम कर्तृ। कुम्भकर्णः

एव भयस्य उत्पत्तेः। शूलेन चं अमर्दीत्। मर्द हिंसे। अमर्हीदिति पाठे—मह अर्हम्भ्य हिंसे इत्यस्य रूपम्॥ ३६

অনুবাদ। কুম্ভকর্ণ বানরদিগকে পদদলিত এবং সত্বর ভয়ব্যাকুলিত করিয়া শূলাস্ত্রদ্বারা বধ করিতে লাগিল। ৩৬

**अतौत्सीद्गदया गाढमपिषच्चोपगूहनैः।**
**जानुभ्यामदम[मी]च्चान्यान् हस्तवर्त्तमवीवृतत्॥ ३७**

अन्वयः। (कांश्चित) गदया अतौत्सीत्, गाढम् उपगूहनैः अपिषत् च जानुभ्याम् अदमत्, अन्यान् च हस्तवर्त्तम् अवीवृतत्॥ ३७

मल्लिनाथः। अतौत्सीदिति। कांश्चिद्गदया अतौत्सीत् तुतोद। तुद व्यथने। हलन्तलक्षणा वृद्धिः। कांश्चिद्गाढं यथा तथा उपगूहनैराश्लेषणैरपिषच्च। पिषॢ संचूर्णने। ऌदित्वादङ्। कांश्चिज्जानुभ्यामदमत् जानुभ्यामवष्टभ्याहतवानित्यर्थः। दमु उपशमे। दैवादिकः। पुषादित्वादङ्। केचिददमीति पठित्वा "ह्म्यन्त—" इति वृद्धिप्रतिषेध इति व्याख्यातम्। अन्यान् हस्तेन वर्त्तयित्वा हस्तवर्त्तम्। वृतेर्ण्यन्तात् "हस्ते वर्त्तिग्रहोः" इति णमुल्। अवीवृतत् वर्त्तयति स्म, हस्ते कृत्वा आपिपदित्यर्थः। वृतु वर्त्तने। णौ चङ्। "उ ऋत्" इत्युपधाऋकारस्य विकल्पेन ऋकारः। "उरत्" इत्यभ्यासऋकारस्याकारे सन्वद्भावे कृतेऽयम्॥ ३७

भरतः। अतौत्सीदित्यादि। गदया कांश्चित प्लवङ्गमान् गाढ़म् अत्यर्थम् अतौत्सीत्। तुद ग श्रौ व्यथनेऽनिट्‌त्वादनिः। अन्यान् उपगूहनैः आलिङ्गनैः पिष्टवान्, धौ पिषॢ चूर्णने ऌदित्वात् ङः। अन्यान् जानुभ्यां दमितवान्। दम्शु चूर्णने। मान्तत्वान्न ञिः। अन्यान् हस्तवर्त्तमवीवृतत् हस्ताभ्यां पीड़यित्वा चूर्णितवान् इत्यर्थः। वृतेर्ण्यन्तादङ् "वर्द्धुको धुः" इति पक्षे गुणाभावः। हस्तवर्त्तमिति-हस्ताभ्यां वर्त्तयित्वा गमार्थत्वं णम्, तदनुप्रयोगमवेति परः, समते णम् वेत्यस्य योगविभागात्॥ ३७

অনুবাদ। কতকগুলিকে গদাঘাতে ব্যথিত, গাঢ় আলিঙ্গনে চূর্ণিত ও দুই জানুদ্বারা আহত করিল এবং অপরগুলিকে হস্তে তুলিয়াই চূর্ণিত করিল। ৩৭

अदालिषुः शिला देहे चूर्णीभूवन् महाद्रुमाः।
शिमानसौ च नाचेतीत्तावसौ * नापि चाक्षुभत् ३८

अन्वयः। (तस्य) देहे शिलाः अदालिषुः, महाद्रुमाः चूर्णीभूवन्, असौ तान् शिमान् च न अचेतीत्, असौ अपि च न अक्षुभत्॥ ३८

मल्लिनाथः। अदालिषुरिति। तस्य कुम्भकर्णस्य देहे वानरैः क्षिप्ताः शिला अदालिषुर्दीर्णाः। दल विशरणे। भौवादिकः। "अतो ल्रान्तस्य" इति वृद्धिः। महाद्रुमाश्चूर्णीभूवन् चूर्णीभूताः। अभूततद्भावे च्विः। असौ कुम्भकर्णस्तान् द्रुमान् नाचेतीत् नाज्ञासीच्च। चिती संज्ञाने। भौवादिकः। "नेटि" इति वृद्धिप्रतिषेधः। अपि च नाक्षुभत् नाचालीत्। क्षुभ्यतेः पुषादित्वादङ्॥ ३८

भरतः। अदालिषुरित्यादि। कपिभिः क्षिप्ताः शिलाः तस्य कुम्भकर्णस्य देहे अदालिषुः विदीर्णाः। दल मि भेदे। व्रजवदिति वृः। महाद्रुमाः चूर्णीभूताः। "भुवोवुक् टौव्यपि"। तान् वृक्षान् असौ कुम्भकर्णो न अचेतीत्। चिती संज्ञाने नापि क्षुभितः। क्षुभ लृ ङ सचली पुषादिः॥ ३८

অনুবাদ। বানরনিক্ষিপ্ত প্রস্তর ও বৃক্ষগুলি কুম্ভকর্ণের গাত্রে পড়িয়া চূর্ণ হইয়া গেল, সে তাহা জানিতেও পারিল না এবং তাহাতে সে ক্ষুভিত ও হইল না। ৩৮

अद्राष्टां तं रघुव्याघ्रौ व्या[ख्या]ख्यत्तेनं विभीषणः।
एष व्यजेष्ट देवेन्द्रं नाशङ्किष्ट विवस्वतः॥ ३९

अन्वयः। रघुव्याघ्रौ तम् अद्राष्टाम्, एनं विभीषणः व्याख्यत् च,—एष देवेन्द्रं व्यजेष्ट, विवस्वतः न अशङ्किष्ट॥ ३९

मल्लिनाथः। अद्राष्टामिति। रघुव्याघ्रौ रामलक्ष्मणौ तं कुम्भकर्णमद्राष्टां दृष्टवन्तौ। दृशिर् प्रेक्षणे। लुङि "इरितो वा" इत्यङभावपक्षे "न दृशः" इति क्सप्रतिषेधे "सृजिदृशोः—" इत्यमागमे हलन्तलक्षणा वृद्धिः। "व्रश्च—" इत्यादिना षत्वे ष्टुत्वम्। एनं विभीषणो व्याख्यत् कुम्भकर्णोऽयमित्याचष्टेत्यर्थः। ख्या

* "शिमांस्तस्य न चाचेतीत्तावसौ" इति पाठान्तरम्।

प्रकथने।" "अर्त्तिवलिह्व्यातिभ्योऽङ्" इत्याल्लोपः। एष देवेन्द्रं व्यजेष्ट विजितवान्। "विपराभ्यां जेः" इति तङ्। सिचि गुणे सत्यष्टुत्वे। विवस्वतः सूर्य्यादप्यशङ्किष्ट, नाभैषीदित्यर्थः॥ ३९

भरतः। अद्राक्षामित्यादि। रघुव्याघ्रौ तं कुम्भकर्णं दृष्टवन्तौ। ईरद्भ्यो प्रेचे। "इरितो वा" इति च्लेरङ्, "क्सस्याचि" इति क्सलोपः। शल्इगुपधादिति क्सः, इरितो वेति अङ्। विभीषण एनमाख्यातवान्। ख्याल ख्याने कथने। अस्यतिवक्तीति अङ्, उसेत्याल्लोपः। केन प्रकारेणाख्यदित्याह—एष देवेन्द्रं जितवान्। "विपराजे" इति तङ्। विवस्वतः सूर्यादपि नायं शङ्कितवान्। शकिङ् शङ्कायाम्॥ ३९

অনুবাদ। রঘুকুলশ্রেষ্ঠ রামলক্ষ্মণ কুম্ভকর্ণকে দেখিতে পাইলেন। বিভীষণ কুম্ভকর্ণের পরিচয় বলিলেন যে এই বীর দেবরাজকে জয় করিয়াছে, এ সূর্য্যকেও ভয় করে না। ৩৯

**यक्षेन्द्रशक्तिमच्छासीन्नाप्रोथीदस्य कश्चन।**

**कुम्भकर्णाच्च[न्न]मा भैष्टं युवामस्मान्नृपात्मजौ॥४०**

अन्वयः। (एषः) यक्षेन्द्रशक्तिम् अच्छासीत्, कश्चन अस्य न अप्रोथीत्, (हे) नृपात्मजौ! युवाम् अस्मात् कुम्भकर्णात् च मा भैष्टम्॥ ४०

मल्लिनाथः। यक्षेति। एष यक्षेन्द्रस्य कुबेरस्य शक्तिं शक्त्या-युधमच्छासीदच्छैत्सीत्। छो छेदने। "आदेच—" इत्यात्वे सगिटौ। अस्य कश्चन नाप्रोथीत् न पर्य्याप्तः। सम्बन्धसामान्ये षष्ठी। प्रोथृ पर्य्याप्तौ। "नेटि" इति वृद्धिप्रतिषेधः। हे नृपा-त्मजौ! युवामस्मात्कुम्भकर्णाद्मा भैष्टं मा बिभीतं च। ञि भी भये। सिचि वृद्धिः॥ ४०

भरतः। यक्षेन्द्रेत्यादि। यक्षेन्द्रस्य कुबेरस्य शक्तिम् अस्त्रविशेषं सामर्थ्यं वा अच्छासीत् चिच्छेद। छो य लूनौ "वेश्याच्छासाम्" इत्यस्याप्रतिपत्ते "यमरम" इति इमसकौ, "अस्माजभ्सीन देमि" इति सेलोपः। अस्य कुम्भकर्णस्य कश्चित् नाप्रोथीत् न शक्तः। प्रोथृ ञ् पर्य्याप्ती, पर्य्याप्तं सामर्थ्यम्। "शक्तार्थ" इत्यादिना चतुर्थीप्राप्तौ सम्बन्धविवक्षया षष्ठी शक्तार्थे; षष्ठ्यपीष्यत इत्यन्ये। अस्य शक्तिं कश्चन नाप्रोथीत् न हिंसितवान्, अने-कार्थत्वात् हिंसार्थत्वमपीति भट्टभास्करः। हे नृपात्मजौ! अस्मात् कुम्भकर्णात् युवां मा भैष्टमिति। ञि भी लि भीत्यां, "भ्यासि:" नेसेकाजिति इमनिषेधः, शलवदिति त्रिः॥ ४०

অনুবাদ। এই বীর কুবেরের শক্তি অস্ত্র ছেদন করিয়াছে, কেহ ইহার

সমকক্ষ নাই, হে নৃপনন্দনযুগল! আপনারা এই কুম্ভকর্ণকে অগ্র করিবেন না। ৪০

घ्नन्तं मोपेक्षिषाथां च मा न कार्ष्टमिहादरम्।

अमुं मा न वधिष्टेति रामोऽवादीत्ततः कपीन्॥ ४१

अन्वयः। (किञ्च) घ्नन्तं एनं मा उपेक्षिषाथाम्, इह (कुम्भकर्णे) आदरं मा न कार्ष्ट ; ततः रामः अमुं मा न वधिष्ट, इति कपीन् अवादीत्॥ ४१

मल्लिनाथः। घ्नन्तमिति। किं च घ्नन्तमेनं मोपेक्षिषाथामुपेक्षां न कुर्वतमित्यर्थः। इह अस्मिन् कुम्भकर्णे आदरं मा न कार्ष्ट किं तु कुरुतम्। ततो विभीषणवाक्यानन्तरं रामोऽमुं राक्षसं मा न वधिष्ट किं तु हत। "लुङि च" इति हनो वधादेशः। इति कपीनवादित्॥ ४१

भरतः। घ्नन्तमित्यादि। घ्नन्तं प्रहरन्तम् एनं युवां मा उपेक्षिषाथाम्। ईक्षङ् दर्शने, उपपूर्वोऽयम् अनादरे वर्त्तते। इह कुम्भकर्णे आदरं मा कार्ष्ट, किन्तु अवश्यं कुरुतं, क्सजभ्यां सिः, व्रजवदेति व्रिः। इत्येवं विभीषण आख्यत इत्यर्थः। ततोऽनन्तरं रामो वानरान् अवादीत् उक्तवान्। किं तदित्याह—अमुं कुम्भकर्णं यूयं मा न वधिष्ट किन्तु अवश्यं हतेति। हनवधष्टीति वधादेशः॥ ४१

অনুবাদ। হননোদ্যত বলিয়া ইহাকে উপেক্ষা করিবেন না, ইহার বধে যত্ন করুন, বিভীষণ ইহা বলিলে রাম কপিগণকে বলিলেন ইহাকে বধ কর। ৪১

ते व्यरासिषुराह्वन्त राक्षसं चाप्यपिप्लवन्।

न्य[व]वभासन् स्वकाः शक्तीर्द्रुमशैलं व्यकारिषुः॥४२

अन्वयः। ते (वानराः) व्यरासिषुः राक्षसम् आह्वन्त, अपिप्लवन् च, स्वकाः शक्तीः न्यवभासयन्, द्रुमशैलं व्यकारिषुः॥ ४२

मल्लिनाथः। त इति। ते कपयो व्यरासिषुरनादिषुः। राक्षसमाह्वन्त सस्पर्धमाहूतवन्तः। "स्पर्धायामाङः" इति तङ्। "लिपिसिचिह्वश्च"। "आत्मनेपदेष्वन्यतरस्याम्" इत्यङ्। अपिप्लवन् वानराश्वी प्लवनं चाप्यकारयन्। प्लवतेर्णौ चङि सन्वत्त्वाद्यं "स्रवतिशृणोति—" इत्यादिना विकल्पात् सत्त्वेत्वम्। स्वकाः शक्तीः स्वसामर्थ्यान् न्यवभासयन् अभासयन् प्रकाशयन्ति

स्रोत्यर्थः। भासेर्णौ चङि "भ्राजभास—" इत्यादिना विकल्पात् उपधाह्रस्वाभावः। द्रुमांश्च शैलांश्च द्रुमशैलम्। "जातिरप्राणिनाम्" इति द्वन्द्वैकवद्भावः। व्यकारिषुर्विचिक्षिपुः। कॄ विक्षेपे। सिचि वृद्धिः॥ ४२

भरतः। ते व्यरासिषुरित्यादि। ते वानरा व्यरासिषुः किलकिलाशब्दं चक्रुः। रस शब्दे, इसादेः सेम इति त्रिः। राक्षसं कुम्भकर्णं स्पर्द्धमाना आह्वयन्तः। स्पर्द्धायामाङ इति मं, वक्ष्यसेत्यादिना ङः। तमेव अपिप्लवन्। प्लुङ्च सर्पणे। आह्लादक्लिष्टेः सन्वत्, पुप्लुद्रुधुपुप्लुङ्कां वेति पक्षे सेवकारस्य इकारः। स्वका आत्मीयाः शक्तीः सामर्थ्यानि प्रकाशितवन्तः। भासृङ् दीप्तौ। आह्लादङ्। भ्राजभासभासेत्यादिना पक्षे चङो ह्रस्वः, तदभावपक्षे खेः सन्वद्भावविषयाविषयः, परे लघुस्वराभावात्। द्रुमशैल तदुपरि क्षिप्तवन्तः। कृश् विक्षेपे। व्रजवदेति त्रिः। द्रुमाश्च शैलाश्चेति समाहारः॥ ४२

অনুবাদ। বানরেরা কিল কিল শব্দ করিয়া উঠিল। কুম্ভকর্ণকে পরাজয় করিবার জন্য যুদ্ধে আহ্বান করিতে লাগিল। সৈন্যসাগরে কুম্ভকর্ণকে যেন ভাসাইয়া দিল। স্ব স্ব শক্তি প্রকাশ করিয়া তাহার উপর বৃক্ষ ও প্রস্তর নিক্ষেপ করিল। ৪২

**ते तं व्याशिषताचोटसुः पादैर्दन्तैस्तथाच्छिदन्।**
**आर्जिजत् परभो वृक्षं नीलस्त्वादित पर्वतम्॥ ४३**

अन्वयः। ते (वानराः) तं व्याशिषत, पादैः अचोटसुः, तथा दन्तैः अच्छिदन्, शरभः वृक्षम् आर्जिजत् नीलः तु पर्वतम् आदित॥ ४३

मल्लिनाथः। त इति। वानरास्तं कुम्भकर्णं व्याशिषत व्यापुः। अशू व्याप्तौ। सिचोट्। आङ्त्वात्। पादैरचोटसुरपिषन्। क्षुदिर सम्पेषणे। हलन्तलक्षणा वृद्धिः। तथा दन्तैरच्छिदन् चिच्छिदुः। छिदिर् द्वैधीकरणे। "इरितो वा" इत्यङ्। शरभो नाम वानरो वृक्षमार्जिजत् अर्जितवान् गृहीतवान्। अर्ज प्रतियत्ने। स्वार्थण्यन्ताच्चङ्। रेफवर्जितस्य जिशब्दस्य द्विर्वचने सन्वत्कार्यम्। नीलश्च पर्वतमादित आत्तवान्। डुदाञ् दाने। "स्थाघ्वोरिच्च" इतीत्त्वं च। "ह्रस्वादङ्गात्" इति सलोपः॥ ४३

भरतः। ते तमित्यादि। ते वानराः तं कुम्भकर्णं व्याप्नुवन्तः। अशूलङ् व्याप्तिसंहत्योः, वेमूदिति पक्षे इम्। पादैः क्षुण्णवन्तः। अथो क्षुदिर्क्षुदि इरित्वात् पाक्षिकङाभावे सिः, अनिमत्वादनिः। तथा दन्तैः अच्छिदन्। छिदिर् धौञ् छेदे, इरित्वात्

पद्ये कः। शरभनामा कपिः वृक्षम् आर्जिजत् गृहीतुं यतते स्म। अर्जक् संस्कारे, गुडेः स्वसंस्कारी गृहमेध्यानुकूलव्यापारः। चुरादिआत्मादङ्। नीलः पर्वतम् आदित अग्राह। अङ्पूर्व्वदाञ् ग्रहणे, स्यादोर्ङिः॥ ४३

অনুবাদ। বানরেরা কুম্ভকর্ণকে ঘিরিয়া ফেলিল। পদাঘাতে এবং দশনাঘাতে ছিন্নভিন্ন করিতে লাগিল। শরভবানর বৃক্ষ ও নীলবানর পর্ব্বত সংগ্রহ করিল। ৪৩

# ऋषभोऽद्रीनुदक्षेप्सीत्ते तैररिमतर्दिषुः।
# अस्फूर्जीद्गिरिशृङ्गं च व्यस्राक्षीद्गन्धमादनः॥ ४४

अन्वयः। ऋषभः अद्रीन् उदक्षेप्सीत्, ते ( वानराः ) तैः अरिम् अतर्दिषुः, गन्धमादनः अस्फूर्जीत्, गिरिशृङ्गं च व्यस्राक्षीत्॥ ४४

मल्लिनाथः। ऋषभ इति। ऋषभोऽद्रीनुदक्षेप्सीदुत्क्षिप्तवान्। क्षिप प्रेरणे। सिचि हलन्तलक्षणा वृद्धिः। ते वानरास्तैरद्र्यादिभिररिं कुम्भकर्णमतर्दिषुर्जिहिंसुः। तर्द हिंसायाम्। गन्धमादनोऽस्फूर्जीद्वज्रवज्जुघोष। 'इट ईटि' इति सलोपः। 'नेटि' इति वृद्धिप्रतिषेधः। गिरिशृङ्गं च व्यस्राक्षीद्विससर्ज। "सृजिदृशोः—" इत्यमागमे हलन्तलक्षणा वृद्धिः। "व्रश्च—" इत्यादिना षत्वे कत्वषत्वे॥ ४४

भरतः। ऋषभ इत्यादि। ऋषभो नाम कपिः पर्व्वतान् उत्क्षिप्तवान्। क्षिपश्चर्जो क्षिप्यौ तुदि, अनिमत्वादन्निः। ते शरभादयः तैः वृक्षादिभिः अरिं कुम्भकर्णम् अतर्दिषुः। तर्द हिंसे। गन्धमादनः कपिः अस्फूर्जीत् वज्रवत् शब्दञ्चकार। टुओ स्फूर्जा वज्रनिर्घोषे। गिरिशृङ्गञ्च क्षिप्तवान्। सृजीव च चकाराविसर्गे वद्रोऽकिदिति ऋद्र अनिमत्वादन्निः, षङ् षढोः कः॥ ४४

অনুবাদ। ঋষভ কপি কতকগুলি পর্ব্বত নিক্ষেপ করিল, অন্য বানরেরা সেই পর্ব্বতাদিদ্বারা শত্রুকে প্রহার করিতে লাগিল, গন্ধমাদন কপি গর্জ্জন করিয়া এবং গিরিশৃঙ্গ নিক্ষেপ করিতেছিল। ৪৪

# अकूर्दिष्ट व्यकारीच्च गवाक्षो भूधरान् बहून्।
# न[स]तान[म्ना]जीगणद्वीरः कुम्भकर्णोऽव्यथिष्ट न॥४५

अन्वयः। गवाक्षः अकूर्दिष्ट, बहून् भूधरान् च व्यकारीत्, वीरः कुम्भकर्णः तान् न अजीगणत्, न च अव्यथिष्ट॥ ४५

मल्लिनाथः। अकूर्दिष्टेति। गवाक्षो नाम कपिः अकूर्दिष्ट रणे चिक्रीड़। कुर्द खुर्द क्रीड़ायाम्। बहून् भूधरान् व्यकारीत् विक्षिप्तवान्। कॄ विक्षेपे। सिचि वृद्धिः। 'इट ईटि' इति सलोपः। वीरः कुम्भकर्णस्तान् भूधरान् नाजीगणत्। गण संख्याने। णौ चङ्। 'ई च गणः' इत्यभ्यासस्य विभाषा ईकारः। नाव्यथिष्ट न चचाल। व्यथ भयचलनयोः॥ ४५

भरतः। अकूर्दिष्टेत्यादि। गवाक्षो नाम कपि अकूर्दिष्ट क्रीडापूर्वकं चेष्टते स्म। कुर्द कूर्दङ् क्रीडायाम्। बहून् पर्वतान् [illegible] क्षिपे। स कुम्भकर्णः तान् ग्रस्मादीन् न गणयामास। गणत्व [illegible], बकुलणकथ इति पाणिकाः [illegible]। न च व्यथितो बभूव, यतो वीरः। व्यथ भय[illegible]॥ ४५

অনুবাদ। গবাক্ষ রণক্রীড়া প্রদর্শন পূর্ব্বক অনেক পর্ব্বত নিক্ষেপ করিল, কুম্ভকর্ণ তাহা গ্রাহ্যই করিল না। যুদ্ধেও বিচলিত হইল না। ৪৫

**अमन्थीच्च परानीकमक्रोष्ट च निरङ्कुशः।**
**निहन्तुं चात्वरिष्टारीनजक्षीच्चाङ्कमागतान्॥ ४६**

अन्वयः। (सः) परानीकम् च अमन्थीत, निरङ्कुशः अक्रोष्ट च, अरीन् निहन्तुम् अत्वरिष्ट च, अङ्कम् आगतान् च अजक्षीत्॥ ४६

मल्लिनाथः। अमन्थीदिति। परानीकममन्थीत् विलोड़ितवांश्च। मन्थ विलोड़ने। क्रैयादिकः। "नेटि" इति वृद्धिप्रतिषेधः। निरङ्कुशोऽप्रतिघातः सन् अक्रोष्ट चचार। क्रुङ् गतौ। लुङि तङि सिचि गुणः। अरीन् निहन्तुमत्वरिष्ट संभ्रान्तवान्। ञित्वरा संभ्रमे। अङ्के समीपमागतानजक्षीद्भक्षितवांश्च। जक्ष भक्षहसनयोः। "नेटि" इति वृद्धिप्रतिषेधः॥ ४६

भरतः। अमन्थीदित्यादि। कुम्भकर्णः [illegible] परानीकं शत्रुसैन्यञ्च [illegible]। मन्थ गाढ़े। निरङ्कुशोऽप्रतिहतः सन् गतिं चकार। क्रुङ च सर्पणे। [illegible]। अरीन् निहन्तुं त्वरां चक्रे, अङ्कमागतान् क्रोडप्रविष्टान् भक्षितवान्। जक्षल भक्षहासयोः॥ ४६

অনুবাদ। কুম্ভকর্ণ শত্রুসৈন্য বিলোড়িত করিয়া অবাধে রণে সঞ্চরণ করিতে লাগিল। শত্রুবধে ত্বরান্বিত এবং সমীপাগত শত্রুদল ভক্ষণ করিতে লাগিল। ৪৬

व्या[न्य]क्रुक्षद्वानरानीकं संपलायिष्ट चायति।
हस्ताभ्यां नश्यदक्राक्षीद्भीमे चोपाधितानने॥ ४७

अन्वयः। आयति (तस्मिन् कुम्भकर्णे) वानरानीकं व्याक्रुक्षत्, संपलायिष्ट च (सः) नश्यत् हस्ताभ्याम् अक्राक्षीत्, भीमे आनने उपाधित च॥ ४७

मल्लिनाथः। व्याक्रुक्षदिति। तस्मिन् कुम्भकर्णे आयति आगच्छति सति। इणो लटः शत्रादेशः। वानरानीकं कर्त्तृ, व्याक्रुक्षत् व्याचुक्रोश। क्रुश आह्वाने रोदने च। "शल इगुपधादनिटः क्सः"। संपलायिष्ट पलायितं च। "उपसर्गस्यायतौ" इति रेफस्य लत्वम्। स नश्यत् पलायमानं तद्वानरानीकं कर्म, हस्ताभ्यामक्राक्षीदाकृष्टवान्। कृष विलेखने। सिच्। "अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्" इत्यमागमे हलन्तलक्षणा वृद्धिः। कत्वादिकार्यम्। भीमे आनने उपाधित उपहितवांश्च। डुधाञ्। "स्थाघ्वोरिच्च" इत्यादि गतम्॥ ४७

भरतः। व्यक्रुक्षदित्यादि। अस्मिन् आयति समागच्छति सति वानरसैन्यं विक्रोशति स्म। क्रुशौज रोदे इतौ इगसोऽनिमिजुङ इति सक्, संपलायते स्म। अयङ् गतौ परापूर्वः मनीषादित्वाल्लकारः। कुम्भकर्णो नश्यत् पलायमानं वानरसैन्यं हस्ताभ्याम् आकृष्टवान्। कृषमृशस्पृशेत्यादिना पाचिकः सिः, वर्द्धोऽकिति पाचिकस्यकारस्य रः, अनिम्त्वाद्वृद्धिः, षढोः कः। भीमे आनने उपाधित न्यस्तवान्। डुधाञ्‌लि धारणे पुष्टौ दाने, स्थादोर्डिरिति ङिः, गुणाभावश्च, दासंज्ञकस्य ग्रहणात्॥ ४७

অনুবাদ। কুম্ভকর্ণ নিকটে আসিলে বানরসৈন্য রোদন পূর্ব্বক পলায়ন করিতে লাগিল। তখন সে পলায়মান সৈন্যগণকে দুই হস্তে ধরিয়া ভীষণ বদনে নিক্ষিপ্ত করিতে লাগিল। ৪৭

रक्तेना[क्तैर]चिक्लिदद्भूमिं सैन्यैश्चातस्तरद्धतैः।
नातार्प्सीद्भक्षयन् क्रूरो नाश्रमद्-घ्नन् प्लवङ्गमान्॥४८

अन्वयः। रक्तेन भूमिम् अचिक्लिदत्, हतैः सैन्यैः च अतस्तरत्, क्रूरः भक्षयन् न अतार्प्सीत्, प्लवङ्गमान् घ्नन् न च अश्रमत्॥ ४८

मल्लिनाथः। रक्तेनेति। रक्तेन भूमिमचिक्लिदत् क्लिन्नामकरोत्। क्लिदू आर्द्रीभावे। "णौ चङ्युपधाया ह्रस्वः"। हतैः

सैन्यैरतस्तरत् आच्छादयश्च। स्तृञ् आच्छादने। णौ चङि "अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम्" इत्यभ्यासस्य अकारः। क्रूरो वानरान् भक्षयन् नातापर्सीत् न तृप्तः। तृप प्रीणने। सिच्पक्षे रूपं "पितॄननतार्सीत्" इत्यत्रैव गतम्। प्लवङ्गमान् घ्नन् नाश्रमत् न श्रान्तः। पुषादित्वादङ्॥ ४८

भरतः। रक्तैरित्यादि। स कपिसैन्यस्य रक्तैः भूमिम् आर्द्रतां नीतवान्। क्लिदू इर् क्लेदे आन्नादङ्। हतैः सैन्यैः भूमिम् आच्छादितवान्। स्तृञ्‌ती स्तृञ्‌गि च्छादने वा। आन्नादङ्। क्रूरोऽसौ तान् भक्षयन्नपि न तृप्तो बभूव। जिल्ह तृप्यूच, चकारात् पौषवे। क्षयजग्रसस्पृशेत्यादिना पक्षे सिः, वद्रोऽकिदित्यस्य पक्षेऽप्रवृत्तिः, रधादित्वात् पक्षे इमोऽभावः, नेत व्रजवदेत्यादिना त्रिः। प्लवङ्गमान् घ्नन् श्रान्तो न जात। श्रमुष्यङि इर्ंपःखेदयोः, पुषादित्वात् ङः, इरनुबन्धेन कस्यचिन्मते विभाषा दर्शिता॥ ४८

অনুবাদ। রণস্থল বানররক্তে কর্দ্দমাক্ত এবং নিহত সৈন্যদেহে আচ্ছন্ন করিয়া সেই ক্রূর বহুসৈন্য ভক্ষণেও তৃপ্ত হইল না। বহুতর বানরবধেও শ্রম বোধ করিল না। ৪৮

न योद्धुमशकन् केचिन्नाढौकिषत केचन।
प्राणशन्नासिकाभ्यां च वक्त्रेण च वनौकसः॥ ४९

अन्वयः। केचित् वनौकसः योद्धुं न अशकन्, केचन न अढौकिषत (केचन) नासिकाभ्यां वक्त्रेण च प्राणशन्॥ ४९

मल्लिनाथः। नेति। केचिदपि वनौकसो वानरा योद्धुं नाशकन् न शक्ताः। ऌदित्वादङ्। केचन नाढौकिषत नाचेष्टिषत। आनने क्षिप्तास्तु नासिकाभ्यां नासारन्ध्राभ्यां च वक्त्रेण वक्त्रविवरेण च प्राणशन् प्रणष्टाः प्रभ्रष्टा निर्गता इत्यर्थः। णश अदर्शने। पुषादित्वादङ्। "उपसर्गादसमासेऽपि णोपदेशस्य" इति णत्वम्॥ ४९

भरतः। न योद्धुमित्यादि। केचित् वनौकसो वानराः योद्धुं न शक्ताः। अशकन्-अशकिष्न शक्लौ पुषादिः केचन वानरा न अढौकिषत समीपं न जग्मुः। ढौकृङ् गत्याम्। ये च तेन मुखे क्षिप्ताः ते नासाविवराभ्यां वक्त्रेण च प्राणशन् पलायिताः। णश लु नाशि पुषादिः, प्राग्वर्णेण इत्यादिना णत्वं, नशेरनेशवाङ इत्यस्याप्रवृत्तिपक्षे रूपम्॥ ४९

অনুবাদ। কতকগুলি বানরযুদ্ধে অশক্ত হইল। অপর কতকগুলি

কুম্ভকর্ণের নিকটেও গেল না। সে যে সকল বানর ভক্ষণ করিয়াছিল তাহার কতকগুলি নাসিকারন্ধ্র দিয়া আর কতকগুলি মুখরন্ধ্র দিয়া নির্গত হইল। ৪৯

**उदरे चाजरन्नन्ये तस्य पातालसन्निभे ।**
**आक्रन्दिषुः सखीनाह्वन् प्रपलायिषतास्विदन् ॥५०**

अन्वयः। अन्ये तस्य पातालसन्निभे उदरे अजरन् आक्रन्दिषुः, सखीन आह्वन्, प्रपलायिषत, अस्विदन् च ॥ ५०

मल्लिनाथः। उदर इति। अन्ये वानरास्तस्य रक्षसः पातालसन्निभे उदरेऽजरन् जीर्णाः। जॄ वयोहानौ। "जॄस्तम्भ—" इत्यादिना वा च्लेरङादेशः। 'ऋदृशोऽङि गुणः'। केचिदाक्रन्दिषुरक्रुशन्। क्रदि आक्रन्दने। "नेटि" इति वृद्धिप्रतिषेधः। सखीन् मित्राण्याह्वन्नाहूतवन्तः। 'लिपिसिचिह्वश्च' इति ह्वयतेरङ्। प्रपलायिषत प्रकर्षेण पलायिताः। अय गतौ। गतमन्यत्। अस्विदन् खिन्नाः। ञिष्विदा गात्रप्रक्षरणे। पुषादित्वादङ् ॥ ५०

भरतः। उदर इत्यादि। पातालतुल्ये तस्य उदरे केचित कपयो जीर्णाः। जॄ णिकि ज्यानौ शासल्लिदृदुदित्यादिना पचे ङः, ऋदृशोर्गुण्णिति गुणः। अपरे आक्रन्दितवन्तः। अन्ये सखीन् मित्राणि आहूतवन्तः। वक्ष्यस्येत्यादिना ङः। अन्ये प्रखिन्नाः लृमिदाञिङ च, चकारात् स्निहि स्नेहयुक्ता बभूवुः इत्यर्थः। ञिमिदा गात्रप्रक्षरणे इति पठन्त्यन्ये पुषादिः। अस्विदन्निति पाठे स एवार्थः ॥ ५०

অনুবাদ। অপর কতকগুলি তাহার পাতাল সদৃশ উদরেই জীর্ণ হইল। কেহ কাঁদিতে লাগিল, কেহবা বন্ধুবান্ধবদিগকে ডাকিতে লাগিল, আর কেহ পলায়ন করিল, কেহবা খিন্ন হইয়া পড়িল। ৫০

**रक्तमश्च्योतिषुः क्षुण्णाः क्षताश्च कपयोऽतृषन् ।**
**उपास्थायि नृपा भग्नैरसौ सुग्रीवमैजिहत् ॥ ५१**

अन्वयः। क्षुण्णाः कपयः रक्तम् अश्च्योतिषुः, क्षताः च अतृषन्, भग्नैः नृपः उपास्थायि, असौ ( रामः ) सुग्रीवम् ( योद्धुम् ) ऐजिहत् ॥ ५१

मल्लिनाथः। रक्तमिति। क्षुण्णाः सञ्चूर्णिताः कपयो रक्तमश्च्योतिषुरक्षरन्। श्चुतिर् क्षरणे। "इरितो वा" इत्यङभावपक्षे सिचीट। क्षताः प्रहृता अतृषन् तृषिताः। तृष पिपासायाम् ।

पुषादित्वादङ्। अथ भग्नैर्वानरैर्नृपो राम उपास्थायि उपस्थितः प्राप्त इत्यर्थः। उपपूर्वात्तिष्ठतेः प्राप्त्यर्थात् कर्मणि लुङि चिण्। असौ रामः सुग्रीवं योद्धुमित्युत्तरश्लोकस्थमिह योज्यम्। ऐजिहत् योद्धुमीहयति स्म। योद्धुमादिशदित्यर्थः। ईह चेष्टायाम्। णौ चङि णिलोपस्य 'द्विर्वचनेऽचि' इति स्थानिवद्भावात् 'अजादेर्द्वितीयस्य' इति हिशब्दस्य द्वित्वे 'कुहोश्चुः' ॥ ५१

भरतः। रक्तमित्यादि। अन्ये क्षपगः क्षुभ्धाः खण्डिताः सन्तो रक्तं वरन्ति स्म। ग्रतिर त्वरं पचे मिः। भताः सन्तोऽलपन्, इर्ग्ग तषद्दषि। लट् पिपासा, पुषादिः। भग्नैः कपगणैः पलायमानैर्वा नृपो राम उपास्थायि आराधितः, ररतनोर्ग्रणिष्यत्रिति कर्मणि इण्, थनञ्ञ्णिदिति यन। असौ रामः सुग्रीवम् ईहां कारितवान्। योद्धुमिति वक्ष्यमाणेन सम्बन्धः। ईहङ चेष्टे आत्मादङ्॥ ५१

অনুবাদ। ক্ষুণ্ণ কপিকুল রক্তবমন করিল, ক্ষতকাতর কপিগণ তৃষ্ণার্ত্ত হইল। রুগ্ন কপিগণ রামের আরাধনা করিতে লাগিল, তখন রামচন্দ্র যুদ্ধের জন্য সুগ্রীবকে আদেশ করিলেন। ৫১

**योद्धुं सोऽप्यकुपत्क्षोणेरैरिच्च महाद्रुमम्।**
**तं प्राप्तं प्रासहिष्टारिः शक्तिं चोग्रामुदग्रहीत्॥ ५२**

अन्वयः। सः अपि अकुपत्, योद्धुम् क्षोणेः महाद्रुमम् ऐरिरत् च अरिः (कुम्भकर्णः) प्राप्तं तं (द्रुमं) प्रासहिष्ट, उग्रां शक्तिं उदग्रहीत् च॥ ५२

मल्लिनाथः। योद्धुमिति। स सुग्रीवोऽप्यकुपत् अक्रुध्यत्। कुप कोपे। पुषादित्वादङ्। क्षोणेर्महाद्रुममैरिरत् ईरितवांश्च। ईर क्षेपे। चुरादेः स्वार्थण्यन्ताच्चङ्। अरिः कुम्भकर्णः प्राप्तं तं द्रुमं प्रासहिष्ट अभ्यभूत्। 'प्रसहनमभिभवः' इति काशिका। उग्रां शक्तिं शक्त्यायुधमुदग्रहीच्च उद्यम्य गृहीतवानित्यर्थः॥ ५२

भरतः। योद्धुमित्यादि। तत्प्रेरणया सुग्रीवो रुष्टः। कुप्यिर्ज्ञ क्रुधि पुषादिः। क्षोणेः क्षते समीपे वा महाद्रुमं प्रेरयामास। ईर्कि गतौ क्षुदि चुरादिः आत्मादङ्। अरिः कुम्भकर्णः प्राप्तं तं वृक्षं सोढवान्। उग्रां शक्तिम् अस्त्रं जग्राह। ह्रान्तत्वान्न वृद्धिः॥ ५२

অনুবাদ। সুগ্রীব তৎশ্রবণে ক্রুদ্ধ হইল, যুদ্ধ করিবার জন্য শক্রুর

উপর প্রকাণ্ড বৃক্ষ সকল ফেলিতেছিল। কুম্ভকর্ণ সমীপাগত বৃক্ষকে খণ্ড খণ্ড করিয়া উগ্রশক্তি অস্ত্র গ্রহণ করিল। ৫২

স তামবিভ্রমদ্ভীমাং বানরেন্দ্রস্য চামুচত্।
অ[প্রা]পপ্তন্মারুতিস্তত্র তাং চালাসীদ্বিয়দ্গতাম্॥৫৩

অন্বয়:। স ভীমাং তাং শক্তিম্ অবিভ্রমত্, বানরেন্দ্রস্য অমুচত্ চ তত্র মারুতি: অপপ্তত্, বিয়দ্গতাং তাম্ অলাসীত্ চ॥ ৫৩

মল্লিনাথ:। স ইতি। কুম্ভকর্ণো ভীমাং তাং শক্তিমবিভ্রমত্ ভ্রময়তি স্ম। ভ্রমির্ণৌ চঙ্। বানরেন্দ্রস্য সুগ্রীবস্যামুচচ্চ। মুচ্লৃ মোক্ষণে। লৃদিত্বাদঙ্। তত্র শক্তিমার্গে মারুতির্হনূমান-পপ্তত্ পতিত:। পত্লৃ গতৌ। লৃদিত্বাদঙ্। "পত: পুম্" ইতি পুমাগম:। বিয়দ্গতামাকাশগতামেব তাং শক্তিমলাসীত্ আত্তবাংশ্চ। লা আদানে। 'যমরমনম—' ইতি সগিটৌ॥ ৫৩

ভরত:। স তামিত্যাদি। স কুম্ভকর্ণ: তাং ভীমাং শক্তিং ভ্রময়ামাস। ভ্রমির্ণ্যন্তাদঙ্। সুগ্রীবস্য কৃতে ত্যক্তবান্। মুচ্লৃ শপঞ্চ মোক্ষে। লৃদিত্বাত্ ঙ:। তত্র তস্যাং মুক্তায়াং সত্যাং তদ্দেশং মারুতি: হনুমান্ উপস্থিত:। পতলৃঞ্চ গত্যাং, লৃদিত্বাত্ ঙ: বচস্যশিপতামিতি পমাদেশ:। তাং শক্তিঞ্চ বিয়দ্গতাং জগ্রাহ। যমরমেতি ইমসনী॥ ৫

অনুবাদ। কুম্ভকর্ণ সেই ভীষণ শক্তি ঘুরাইতে লাগিল এবং সুগ্রীবকে লক্ষ্য করিয়া নিক্ষেপ করিল, তখন পবননন্দন সেই শক্তির নিকট উপস্থিত হইল এবং শূন্যে উঠিবার সময়ে তাহা ধরিয়া ফেলিল। ৫৩

অশোভিষ্টাবখণ্ডচ্চ শক্তিং ধী[বী]রো ন চায়সত্।
লো[লৌ]হভারসহস্রেণ নির্মিতা নিরকারি মে॥৫৪
শক্তিরিত্যকুপদ্রক্ষো গিরিং চোদখনীদ্রুতম্।
অস্রাক্ষ্ট তং কপীন্দ্রস্য তেনামূর্চ্ছীদসৌ হ[চ]ত:॥৫৫

অন্বয়:। ধীর: (হনূমান্) অশোভিষ্ট, শক্তিং অবখণ্ডত্ চ ন অয়সত্ চ। "লৌহভারসহস্রেণ নির্ম্মিতা মে শক্তি: নিরকারি" ইতি রক্ষ: অকুপত্, গুরুং গিরিম্ চ উদখনী তং কপীন্দ্রস্য অস্রাক্ষ্ট, তেন হত: অসৌ সুগ্রীব: অমূর্চ্ছীত্॥ ৫৪—৫৫

মল্লিনাথ:। অশোভিষ্টেতি। ধীরো বীরো হনূমানশোভি

शक्तिहस्तः शुशुभे। शक्तिमचखण्डत् अखण्डयच्च। खडि भेदने इति चौरादिकाच्चौ चङ्। नायसत् नायस्तश्च। यसु प्रयत्ने। पुषादित्वादङ्। उत्तरार्द्धमुत्तरश्लोकेनैकवाक्यतया योज्यम् ॥ ५४

मल्लिनाथः। शक्तिरिति। लोहभाराणां सहस्रेण निर्मिता। 'भारः स्याद्विंशतिस्तुला'। मे शक्तिर्निरकारि निरर्थीकृतेति रक्षः कुम्भकर्णोऽकुपत् चुकोप। पुषादित्वादङ्। गुरुं महान्तं गिरिमुदखनीत् उत्खातवांश्च। 'अतो हलादेः—'इति वृद्धिविकल्पः। तं गिरिं कपीन्द्रस्य सुग्रीवस्य व्यसृष्ट विसृष्टवान्। सृजेर्दैवादिकाद्‌लिटो लुङि तङि सिचि झलवद्युत्वे। तेन गिरिणा हतोऽसौ सुग्रीवोऽमूर्च्छीत् मूर्च्छितः ॥ ५५

भरत.। अशोभिष्टेत्यादि। गृहीतशक्तिः मारुतिः वीरोऽशोभिष्ट। शुभ लुङ् दीप्तौ, मे ङाभावात् सिः। शक्तिञ्च खण्डयामास। खडिखडक् भेदे चुरादिः, अस्मात् ङङ्। तां खण्डयन् न चायासं प्राप। इयंसु यत्ने पुषादिः। लोहभारसहस्रेण निर्मिता मे मम शक्तिः अनेन निरकारि मया हति। रक्षः कुम्भकर्णोऽकुपदिति वक्ष्यमाणश्लोकेनान्वयः। कृञ न वध इण्। "तुलास्त्रियां पलशतं भारः स्याद्विंशतिस्तुला" इत्यमरः ॥ ५४

भरतः। शक्तिरित्यादि। अकुपत कुपितः। कुप्य इर कोपे पुषादिः। गुरुं महान्तं गिरिम् उत्खातवान्। खनञ् विदारे हसादेः सेम इति वृः पाक्षिकत्वादभावः। तं पर्वतं कपीन्द्रस्य कृते विसृष्टवान्। सृजोङ् विसर्गे झमम्वाजझसीति सलोपः, शब्दश्च ञिति घङ्। तेन गिरिणा घतोऽसौ कपीन्द्रो मूर्च्छां प्राप। मुर्च्छा सम्मोहे उक्षये च ॥ ५५

অনুবাদ। বীর হনূমান্ শক্তি হস্তে শোভা পাইতে লাগিল। শক্তিটাকে খণ্ড খণ্ড করিল। তাহাতে তাহার কিছু মাত্র কষ্ট হইল না। সহস্র ভার (৮০০০ তোলায় ভার) লৌহ নির্ম্মিত আমার শক্তি ভগ্ন হইল এই বলিয়া রাক্ষস ক্রুদ্ধ হইল এবং প্রকাণ্ড একটী পর্ব্বত তুলিয়া তাহার উপর নিক্ষেপ করিল, তাহাতে আহত হইয়া সুগ্রীব মূর্চ্ছিত হইল। ৫৪।৫৫

अलोठिष्ट च भूपृष्ठे शोणितं चाप्यसुस्रुवत्।
तमादाय पलायिष्ट व्यरोचिष्ट च राक्षसः ॥ ५६

अन्वयः। (सः) भूपृष्ठे अलोठिष्ट च, शोणितम् च अपि असुस्रुवत्, राक्षसः (कुम्भकर्णः) तम् (सुग्रीवम्) आदाय पलायिष्ट, व्यरोचिष्ट च ॥ ५६

मल्लिनाथः । अलोठिष्टेति । भूपृष्ठे भूतलेऽलोठिष्ट लुठितश्च । शोणितं चाप्यसुस्रुवत् स्रुतवान् । स्रु स्रवणे । "णिश्रि—" इति चङुवङादेशः । राक्षसः कुम्भकर्णस्तं मूर्च्छितं सुग्रीवमादाय पलायिष्ट रणाङ्गणान्निर्जगाम । व्यरोचिष्ट विजयेन व्यरुचच्च । "द्युद्भ्यो लुङि" इति विकल्पेन तङ् ॥ ५६

भरत: । अलोठिष्टेत्यादि । स कपीन्द्रो मूर्च्छितः सन् भूपृष्ठे अलोठिष्ट लुठति स्म । लुट लुठङ प्रतीघाते । अस्य शोणितमपि स्रवति स्म । जिघ्रीत्यङ् सुस्रौविसुव् । राक्षसः कुम्भकर्णः तं सुग्रीवम् आदाय गृहीत्वा पलायित गतर्भ च हर्षात् ॥ ५६

অনুবাদ। পর্ব্বতাঘাতে সুগ্রীব ভূতলে পতিত হইয়া লুণ্ঠিত হইতেছিল এবং তাহার মুখ ও নাসিকা হইতে রক্ত নির্গত হইল। কুম্ভকর্ণ রণস্থল হইতে তাহাকে লইয়া পলায়ন করিতে করিতে হর্ষবশে শোভা পাইতে লাগিল। ৫৬

अभैषुः कपयोऽन्वारत् कुम्भकर्णं मरुत्सुतः ।
शनैरबोधि सुग्रीवः सोऽलुञ्चीत् कर्णनासिकम् ॥ ५७
राक्षसस्य न चात्रासीत् प्रनंष्टुमयतिष्ट च ।
अक्रोधि कुम्भकर्णेन पेष्टुमारम्भि च क्षितौ ॥ ५८

अन्वयः । कपयः अभैषुः, मरुत्सुतः कुम्भकर्णम् अन्वारत्, सः सुग्रीवः शनैः अबोधि, राक्षसस्य कर्णनासिकम् अलुञ्चीत्, न च अत्रासीत्, प्रनष्टुम् अयतिष्ट च कुम्भकर्णेन अक्रोधि, क्षितौ पेष्टुं च आरम्भि ॥ ५७—५८

मल्लिनाथः । अभैषुरिति । कपयोऽभैषुः सुग्रीवग्रहणाद्बिभ्युः । मरुत्सुतो हनूमांस्तं कुम्भकर्णमन्वारदन्वगमत् । ऋ गतौ । 'सार्त्तिशास्त्यर्त्तिभ्यश्च' इत्यङ् । "ऋदृशोऽङि गुणः" । अडागमः । स सुग्रीवः शनैः क्रमात् अबोधि अबुद्ध लब्धसंज्ञोऽभूदित्यर्थः । बुध अवगमने । कर्त्तरि लुङि तङि "दीपजन—" इत्यादिना चिणादेशः । अथ राक्षसस्येत्युत्तरश्लोकादाकृष्टव्यम् । राक्षसस्य कर्णनासिकम् । प्राण्यङ्गत्वात् द्वन्द्वैकवद्भावः । अलुञ्चीदपनीतवान् छिन्नवानित्यर्थः । लुञ्च अपनयने ॥ ५७

मल्लिनाथः। राक्षसस्येति। नात्रासीत्राभैषीत् प्रनंष्टुमपसर्त्तुम्। नशेस्तुमुन्। "मस्जिनशोर्झलि" इति नुम्। अयतिष्ट। यती प्रयत्ने। प्रवृत्त इत्यर्थः। अथ कुम्भकर्णेनाक्रोधि क्रुद्धम्। भावे लुङ्। स सुग्रीवः क्षितौ पेष्टुं भूमौ निहत्य चूर्णयितुमारम्भि आरब्धश्च। रभेः कर्मणि लुङ्। "रभेरशब्लिटोः" इति नुमागमः॥ ५८

भरत.। अभैरित्यादि। अस्मिन् गृहीते कपयो भीताः। व्रजवदिति व्रिः। मरुत्सुतो हनुमान् कुम्भकर्णम् अनुजगाम। गम प्रापणे च, चकाराद्गत्यां, वक्ष्यत्यादिना षष्ठे ङ., इणोर्ण.। सुग्रीवः शनैः मनाक् प्रबुद्धः। बुध्यीङ् वेदने। पदसनीतिरित्यादिना पाक्षिक इण्। स प्रबुद्धः सन् तस्य कर्णौ नासिकाञ्च चिच्छेद राक्षसस्येति वक्ष्यमाणेनान्वयः। लुञ्च अपनयने॥ ५७

भरतः। राक्षसस्येत्यादि। सुग्रीवो न च तस्मात् त्रस्तः, त्रस भी भये। इसादेः सेम् इति व्रिः। पलायितुं यतते स्म, यतीङ् यत्ने, नशेर्नुण् रधोस्तुर्वामिति नुण्। अयमात्मनेपदी वा। आत्मावस्थां दृष्ट्वा कुम्भकर्णेन अक्रोधि। भावे इण्। क्षितौ पेष्टुं सुग्रीवं चूर्णयितुम् आरब्धं, रभीङ् राभस्य, पूर्ववन्नुण्॥ ५८

অনুবাদ। তখন বানরগণ ভয় পাইল। হনূমান্ কুম্ভকর্ণের পশ্চাৎ ধাবিত হইল। সুগ্রীব ক্রমশঃ চৈতন্যলাভ করিল ও নির্ভয়ে কুম্ভকর্ণের কর্ণ ও নাসিকা ছিন্ন করিয়া পলাইতে চেষ্টা করিল। কুম্ভকর্ণ ক্রুদ্ধ হইল এবং সুগ্রীবকে ভূতলে পাতিত করতঃ ঘর্ষণ করিতে লাগিল।৫৭-৫৮

**सुग्रीवोऽस्याभ्रशद्धस्तात् समगाहिष्ट चाम्बरम्।**
**तूर्णमन्वसृपद्राममानन्दच्च वानरान्॥ ५९**

अन्वयः। सुग्रीवः अस्य हस्तात् अभ्रशत्, अम्बरं च समगाहिष्ट, तूर्णम् रामं अन्वसृपत्, वानरान् च आनन्दत्॥ ५९

मल्लिनाथः। सुग्रीव इति। सुग्रीवोऽस्य रक्षसो हस्तादभ्रशत् भ्रष्टः। भ्रशु भ्रंशु अधःपतने। पुषादित्वादङ्। अम्बरमवगाहिष्ट आक्रान्तश्च। गाहू विलोडने। तूर्णं राममन्वसृपदनुसृतः। सृप्लृ गतौ। लृदित्वादङ्। वानरानानन्ददानन्दयच्च। नन्दि समृद्धौ। णौ चङ्। इदित्वान्नुम्॥ ५९

भरतः। सुग्रीव इत्यादि। अस्य कुम्भकर्णस्य हस्तात् सुग्रीवो भ्रष्टः। लृमनपुष्यस्य चकारादधःपाते पुषादिः, इसुकलोपोऽस्मी। अम्बरम् आकाशम् आक्रान्तवान्। क्लाप्त

पलितत्वादन्यरो: । चमाच्छिष्टे ति पाठे जगाह्न विलोड़े, उदित्वादेम् । ततः शीघ्रं रामम् अनुजगाम । लु स्वपी गत्यां ; लुदित्वात् ङः । वानरांश्च नन्दयामास । टुनदि संक्षिप्ति, आह्लादङ्क ॥ ५९

अनुवाद । সুগ্রীব কুম্ভকর্ণের হস্ত হইতে ত্রাণ পাইল, সে শূন্যে উত্থান পূর্ব্বক তৎক্ষণাৎ রামের সমীপবর্ত্তী হইয়া বানরদিগকে আনন্দিত করিল । ৫৯

**अतत्वरच्च तान् योद्धुमच[चि]चेष्टच्च राघवौ ।**
**कुम्भकर्णो न्यवर्त्तिष्ट रणेऽयुत्सत वानराः ॥ ६०**

अन्वयः । सः तान् वानरान् योद्धुम् अतत्वरत्, राघवौ च अचचेष्टत्, कुम्भकर्णः न्यवर्त्तिष्ट, वानराः रणे अयुत्सत ॥ ६०

मल्लिनाथः । अतत्वरदिति । स सुग्रीवस्तान् वानरान् योद्धुमतत्वरत् त्वरयति स्म । ञित्वरा सम्भ्रमे । णौ चङ् । "अत्स्मृदृत्वर—"इत्यभ्यासस्याकारः । राघवौ च अचचेष्टत् चेष्टयति स्म । योद्धुं प्रावर्त्तयदित्यर्थः । चेष्ट चेष्टायाम् । णौ चङ् । "विभाषा वेष्टिचेष्ट्योः" इत्यत्वमभ्यासस्य । कुम्भकर्णोऽपि न्यवर्त्तिष्ट मरणनिश्चयादिति भावः । सेटः सिचोऽकित्वाद्गुणः । वानरा रणेऽयुत्सत अयुध्यन्त । युध सम्प्रहारे । लुङि तङि सिच् । झस्यादादेशः ॥ ६०

भरतः । अतत्वरदित्यादि । सुग्रीवः तान् वानरान् योद्धुं त्वरयति स्म । ञित्वरसम्भ्रमे स्वदे आह्लादङ्क, स्मृदृत्वरप्रथेत्यादिना अरङ् । स राघवौ च योद्धुं चेष्टयामास । चेष्टङ्कीडे, आह्लादङ्, पूर्ववत् पचे: अरङ् । कुम्भकर्णो युद्धे निवृत्तः वृतङ्ल वर्त्तने, मे ङाभावात् सि । वानरा युध्यन्ते स्म । युध्यौङ युद्धे । इगुङ्र्भ्यौति से: कित्त्वान्न गुः ॥ ६०

अनुवाद । সুগ্রীব বানরদিগকে যুদ্ধ করিতে ত্বরান্বিত করিয়া রাম লক্ষ্মণকে যুদ্ধে প্রবর্ত্তিত করিল । কুম্ভকর্ণ ভয়ে নিবৃত্ত হইল, বানরগণ যুদ্ধে প্রবৃত্ত হইল । ৬০

**अविवेष्टन्नृपादेशादारुचंश्चाशु राक्षसम् ।**
**तानधावीत्समारूढांस्तेऽप्यसंसिषताकुलाः ॥ ६१**

अन्वयः । (वानराः) नृपादेशात् आशु राक्षसम् अविवेष्टन्, आरुचन् च (कुम्भकर्णं) समारूढान् तान् अधावीत्, ते अपि आकुलाः असंसिषत ॥ ६१

मल्लिनाथः । अविवेष्टन्निति । वानरा नृपादेशाद्रामाज्ञया आशु राक्षसमविवेष्टन् अवेष्टयन्नित्यर्थः । वेष्टतेर्णौ चङ् । "विभाषा वेष्टिचेष्ट्योः" इत्यत्वाभावपक्षेऽभ्यासस्य इत्त्व इकारः । अत्र णिजर्थस्यानन्वयादविवक्षेति द्रष्टव्यम् । आरुहन्नारूढाश्च । रुहेर्लुङि "शल इगुपधादनिटः क्सः" । समारूढांस्तान् वानरानधावीत् । धूञ् कम्पने । सिचि वृद्धिः । "स्वरतिसूति—" इत्यादिना विकल्पात् "इट ईटि" इति सलोपः । तेऽप्याकुला विह्वलाः सन्तोऽस्रंसिषत स्रस्ताः ॥ ६१

भरतः । अविवेष्टन्नित्यादि । वानराः राक्षसं वेष्टयामासुः, राम इत्यध्याहृत्य वानरान् वेष्टयामास इत्यर्थो वा । चुर्य्याञ्जिर्वेत्यस्य योगविभागात् क्वचिन्नरादेरन्यस्मादपि ञिरित्यन्ये," क्रमदीश्वर इत्यस्यापद्वतिपक्षे रूपम् । अववेष्टन्निति पाठे—वेष्टङ् वट वेष्टे । राक्षस वेष्टितवन्तः । पूर्ववत् खेरङ् वा । नृपादेशात् रामाज्ञया वानराः शीघ्रं राक्षसम् आरूढाः । क्रिञ रुही जन्यां हसशीऽनिमिजुङ् इति सक् । कुम्भकर्णः समारूढान् धूनवान् । धूञ य कम्पे । मूःस्तुधोः सेरिम् पे इति इम, अजन्तात्रजवर्द्धति ञिः । ते कपयो व्याकुलाः स्रस्ताः । स्रंसनस्तुङ् भ्रंशे मे ञिः ॥ ६१

অনুবাদ। বানরগণ রামের আজ্ঞায় তখনই কুম্ভকর্ণকে বেষ্টন করিল এবং তাহার শরীরের উপর আরোহণ করিল। সে গাত্রারূঢ় বানরদিগকে কাঁপাইতে লাগিল। তাহারাও তখন ভয়ব্যাকুলচিত্তে তাহার গাত্র হইতে পতিত হইতে লাগিল। ৬১

**अग्रसिष्ट न्य[व्य]धाविष्ट समाश्लिक्षच्च निर्दयम् ।**
**ते चाप्यघोरिषुर्घोरं रक्तं चावमिषुर्मुखैः ॥ ६२**

अन्वयः । ( कांश्चित् ) अग्रसिष्ट, न्यधाविष्ट, निर्दयं समाश्लिक्षत् च, ते ( वानराः ) घोरम् अपि घोरम् अघोरिषुः, मुखैः रक्तम् च अवमिषुः ॥ ६२

मल्लिनाथः । अग्रसिष्टेति । कांश्चिदग्रसिष्ट अघसत् । ग्रसु अदने । न्यधाविष्ट कांश्चिद्धस्तादेवाधो निपात्य धौतवान् । धावु गतिशुद्ध्योः । कांश्चिन्निर्दयं समाश्लिक्षत्, यथा म्रियेरन् तथालिङ्गदित्यर्थः । "श्लिष आलिङ्गने" इति क्सादेशः । ते तथा पीडिता वानरा महाघोरं भयङ्करमघोरिषुरक्रुशुः । घुर भीमार्थशब्दयोः । मुखै रक्तमवमिषुरवमन् । टुवम उद्गिरणे ॥ ६२

भरत:। अग्रसिष्टेत्यादि। कुम्भकर्णः कांश्चित् ग्रसने स्म। ग्रसुङ् भये कांश्चित् धावति। स्म। धावुज् जवे ग्रस्ति। व्यवाधिष्टेति पाठे कांश्चित् प्रवाधने स्म। वाधृङ् निहतो कांश्चित् निर्दयं समाश्लिष्य आलिङ्ग्य हतवान् इत्यर्थः, श्लिषो यत्नत्रि ग्ने षे। हृषसाऽनिनि जुङ इति आलिङ्गने ङापवादः सक्। ते वानराः तेन हताः सन्तः घोरं शब्दं चक्रुः। घर श ध्वनौ भौमाद्य। रक्तञ्च मुखैः अवमिषुः। टु वम उद्गिरं मान्तत्वान्न त्रि: ॥ ६२

अनुवाद। कुम्भकर्ण कतकगुलि वानर भक्षण ও কতকগুলির পশ্চাৎ ধাবন করিল কতকগুলিকে নির্দ্দয় আলিঙ্গনে আহত করিল। তাহারাও তখন বিকট রব করিয়া রক্তবমন করিতে লাগিল। ৬২

**स चापि रुधिरैर्मत्तः स्वेषामप्यदयिष्ट न।**
**अग्रहीच्चायुरन्येषामरुधच्च[द्ध च] पराक्रमम् ॥ ६३**

अन्वयः। स च अपि रुधिरैः मत्तः (सन्) स्वेषाम् अपि न अदयिष्ट: अन्येषाम् च आयुः अग्रहीत्, पराक्रमं च अरुधत् ॥ ६२

मल्लिनाथ:। स इति। स कुम्भकर्णो रुधिरैर्मत्तः सन् स्वेषां स्वकीयानामपि नादयिष्ट न दयते स्म। किमुत परेषामित्यर्थः। "अधीगर्थदयेशाम्" इति कर्मणि शेषे षष्ठी। दयतेर्लुङि तङि सिचीट्। अन्येषामायुर्जीवितमग्रहीत्। ग्रहेः "ह्मयन्त—" इति वृद्धिप्रतिषेधः। केषाञ्चित्पराक्रममरुधद्रुद्धवान्। रुधिर आवरणे। "इरितो वा" इति विकल्पादङ् ॥ ६३

भरत:। स चेत्यादि। सोऽपि कुम्भकर्णः शोणितैर्मत्तः सन् स्वेषां राक्षसानामपि न दयां चक्रे। किं पुनः परेषां? कर्मणि सम्बन्धविवक्षया वा षष्ठी। अिदयङ् रक्षणे गतौ भये दानेऽवने। अन्येषां वानराणाम् आयुः गृहीतवान्। ह्मान्तत्वान्न त्रि:। अदोहीदायुरिति पाठे तादृशं कुम्भकर्णं दृष्ट्वा अन्येषाम् आयुः स्वयमेव अदोहीव। दुह लञ्जौ दुहि; ढवत्दधोऽढे इति ढवदित्युक्तेः ढभावे ममिति मं, वेणजदुह इति इण्। अन्येषां पराक्रमञ्च रुद्धवान्। रुधिरौ जिज आहतौ, झसत्वात् झसीति सिचो लोपः ॥ ६२

अनुवाद। কুম্ভকর্ণ রক্তপানে মত্ত হইয়া আত্মীয় রাক্ষসদিগকেও দয়া করিল না। অন্য বানরের জীবন নষ্ট করিয়া অপর বানরগণের পরাক্রম রোধ করিল। ৬৩

**संत्रस्तानामपाहारि सत्वं च वनवासिनाम्।**
**अच्छेदि लक्ष्मणेनास्य किरीटं कवचं तथा ॥ ६४**

अन्वय:। सन्त्रस्तानां वनवासिनां सत्वं च अपाहारि, लक्ष्मणेन अस्य किरीटं तथा कवचम् अच्छेदि ॥ ६४

मल्लिनाथ:। समिति। सन्त्रस्तानां वनवासिनां वानराणां सत्वं बलं चापाहारि-अपहृतं रक्षसेति शेष:। हरते: कर्म्मणि लुङि चिण्। अथ लक्ष्मणेनास्य रक्षस: किरीटं तथा कवचं च अच्छेदि छिन्नम्। छिदे: पूर्ववत्प्रकार: ॥ ६४

भरत:। सन्त्रस्तानामित्यादि। सन्त्रस्तानां वानराणां सत्वं बलं तेन अपहृतम्। कृञ कर्म्मणीण्। लक्ष्मणेन अस्य किरीटं मुकुटं कवचञ्च छिन्नम् ॥ ६४

অনুবাদ। সে ভয়োদ্বিগ্ন বনবাসি বানরদিগের বল অপহরণ করিলে লক্ষ্মণ তাহার মুকুট ও কবচ ছেদন করিলেন। ৬৪

अभेदि च शरैर्देह: प्राशंसीत्तं निशाचर:।
अस्पर्द्धिष्ट च रामेण तेनास्याक्षिप्सतेषव: ॥ ६५

अन्वय:। शरै: देह: च अभेदि, तं निशाचर: प्राशंसीत्, रामेण च अस्पर्द्धिष्ट, तेन अस्य इषव: अक्षिप्सत ॥ ६५

मल्लिनाथ:। अभेदीति। शरैर्देहश्चाभेदि भिन्न:। पूर्ववत्प्रकार:। तं विक्रान्तं लक्ष्मणं निशाचर: कुम्भकर्ण: प्राशंसीत् तुष्टाव। रामेणास्पर्द्धिष्ट च बालत्वाल्लक्ष्मणमगणयित्वेति भाव:। तेन रामेणास्य रक्षस इषवोऽक्षिप्सत क्षिप्ता:। क्षिपे: कर्म्मणि लुङि सिच्। सिच: कित्त्वान्न लघूपधगुण: ॥ ६५

भरत:। अभेदीत्यादि। लक्ष्मणेन अस्य देह: शरै: भिन्न:। ततो निशाचर: कुम्भकर्ण: तं लक्ष्मणं प्रशशंस। शन्स हिंसास्तुत्यो:। रामेण सह योद्धुं स्पर्द्धते स्म। स्पर्द्ध संघर्षे। तेन रामेण अस्य राक्षसस्य कृते इषव: क्षिप्ता:। क्षिप्यौ तुदि, कर्म्मणि टी ॥ ६५

অনুবাদ। এবং বাণ দ্বারা তাহার শরীরও ছেদন করিল, কুম্ভকর্ণ তাঁহার প্রশংসা করিল এবং রামের সহিত যুদ্ধ করিবে বলিয়া স্পর্দ্ধা করিতে লাগিল তিনিও উহার উপর বাণক্ষেপ করিলেন। ৬৫

यैरघानि खरो काली मारीचो दूषणस्तथा।
अग्रासंस्त स तान् दर्पात् प्रोदयंसीच्च मुद्गरम् ॥६६

अन्वयः। यैः (इषुभिः) खरोऽघानि, तथा वाली मारीचः दूषणः (च अघानि) तान् सः (कुम्भकर्णः) दर्पात् अवामस्त, मुद्गरं च प्रोदयंसीत्॥ ६६

मल्लिनाथः। यैरिति। यैरिषुभिः खरोऽघानि तथा वाली मारीचो दूषणश्चाघानि। हन्तेः कर्म्मणि लुङि चिणि वृद्धिः। "हो हन्तेः—" इति कुत्वम्। तानिषून् स राक्षसो दर्पादवामंस्त अवमेने। मन ज्ञाने। कर्त्तरि लुङि सिच्। तस्याकित्त्वान्नानुनासिकलोपः। मुद्गरं च प्रोदयंसीत् उद्यतवान्। "यमरम—" इति सगिटौ। अत्र परस्मैपदं चिन्त्यम्। "समुदाङ्भ्यो यमोऽग्रन्थे" इत्यात्मनेपदविधानात्॥ ६६

भरतः। यैरित्यादि। यैः शरैः खरादिः हतः सः कुम्भकर्णः तान् चिह्नान् अवमन्यमे स्म। दर्पात् अहङ्कारात्। मन्य ङ च वोधे। मुद्गरम् उत्थापितवान्। यमौ उ विरतौ यम-रमिनमौमन्तनौ॥ ६६

অনুবাদ। যে সকল বাণে খর, দূষণ, বালী এবং মারীচ নিহত হইয়াছিল কুম্ভকর্ণ দর্পে তাহা গ্রাহ্য করিল না, বরঞ্চ মুদ্গর উদ্যত করিল। ৬৬

वायव्यास्त्रेण तं पाणिं रामोऽच्छैत्सीत् सहायुधम्।
अदीपि तरुहस्तोऽसावधावीच्चारिसंमुखम्॥ ६७

अन्वयः। रामः सहायुधं तं पाणिं वायव्यास्त्रेण अच्छैत्सीत्, असौ तरुहस्तः अदीपि, रिपुसम्मुखं च अधावीत्॥ ६७

मल्लिनाथः। वायव्येति। रामः सहायुधं समुद्गरं तमुद्यतपाणिं वायव्यास्त्रेणाच्छैत्सीत् चिच्छेद। छिदर् द्वैधीकरणे। "इरितो वा" इत्यङभावपक्षे सिचि हलन्तलक्षणा वृद्धिः। तरुहस्तस्तरुयुक्तहस्तो राक्षसोऽदीपि दिदीपे। कर्त्तरि लुङि तङि "दीपजन—" इत्यादिना च्लेश्चिणादेशः। अरेः संमुखमभिमुखमधावीदभिद्रुतश्च। धाव गतिशुद्धयोः। "इट ईटि" इति सलोपः॥ ६७

भरतः। वायव्यास्त्रेणेत्यादि। येन पाणिना मुद्गरम् उदयंसीत्, तं पाणिम् आयुधेन मुद्गरेण सहितं वायव्यास्त्रेण रामः छिन्नवान्। छिदिर् धौञ छेदे, अनिमत्वाद्वृद्धिः। वायुः देवता यस्य इति विकारसङ्घेत्यादिना ण्यः, न्वोर्गौपो तौतेऽच्चे इति ओकारः, ओदौतोऽवावदिति अव्यभावः, यलायवायाव इति अव्। असौ छिन्नहस्तो राक्षसः तरुहस्तः सन् दीप्यते स्म। पदसनोण् चे इत्यादिना कर्त्तरि ञ्ण। तरुः हस्ते यस्य तरुयुक्तौ हस्तौ यस्य

इति वा समासः"। अभिमुखं रामाभिमुखम् अधावीत् वेगेन गतः। धातुरूपे वृत्ति॥ ६७

अनुवाद। রামচন্দ্র মুদগর সহ সেই হস্তখানি বায়ব্যাস্ত্রে ছিন্ন করিলেন। সে একটী বৃক্ষ হস্তে লইয়া প্রফুল্লচিত্তে রামের দিকে ধাবিত হইল। ৬৭

**सवृक्षमच्छिदत्तस्य महा[शक्रा]स्त्रेण करं नृपः।**
**जङ्घे चाशीशतद्बाणैरप्रासीदिषुभिर्मुखम्॥ ६८**

अन्वयः। नृपः (रामः) तस्य सवृक्षं करं महास्त्रेण अच्छिदत्, बाणैः जङ्घे च अशीशतत् इषुभिः मुखम् अप्रासीत्॥ ६८

मल्लिनाथः। सवृक्षमिति। नृपो रामस्तस्य रक्षसः सवृक्षं करं महास्त्रेण महेषुणाच्छिदच्चिच्छेद। "इरितो वा"इति विकल्पादङ्। बाणैर्जङ्घे चाशीशतत् शातितवान् चिच्छेदेत्यर्थः। शद्लृ शातने। णौ चङ्। "शदेरगतौ तः" इति णौ टकारस्य तकारः। मन्वत्कार्यम्। इषुभिर्मुखं वक्त्रकुहरमप्रासीत् पूरयामास। प्रा पूरणे। सगिटौ॥ ६८

भरतः। सवृक्षमित्यादि। नृपो रामः तस्य कुम्भकर्णस्य वृक्षसहितं हस्तान्तरं महास्त्रेण छिन्नवान्। इरित्वात् पक्षे ङः। बाणैः प्रभेदकर्मभिः तस्य जङ्घे च अशीशतत् छेदितवान्। लुङ् णि च्लिः, चिः प्रेरणे, चङ्, द्वित्वं, द्विः, अभ्यासः, ह्रः, ये: सन्वत्, जयलोप इतीत्थ इति शिवकारस्य इकारः, तस्य दीर्घमादिर्घयेति दीर्घत्वम्। अशीशतदिति पाठे शदोऽगतौ तङ्। गत्यसमर्थे च जङ्घे कृतवान् इत्यर्थः। अस्य मुखं शरैः पूरितवान्। प्रा पूर्त्तौ। यम-रमेतिसुमनौ॥ ६८

अनुवाद। রাম মহাস্ত্র দ্বারা রাক্ষসের বৃক্ষসহ হস্তখানি এবং শরনিকরে জঙ্ঘাদ্বয় ছেদন করিয়া মুখবিবর পরিপূর্ণ করিলেন। ৬৮

**ऐन्द्रेण हृदयेऽव्यात्सीत् सोऽध्यवात्सीच्च गां हतः।**
**अपिद्धातां सहस्रे द्वे तद्देहेन वनौकसाम्॥ ६९**

अन्वयः। (रामः) ऐन्द्रेण हृदये अव्यात्सीत्, सः च हतः (सन्) गाम् अध्यवात्सीत् तद्देहेन वनौकसां द्वे सहस्रे अपिद्धाताम्॥ ६९

मल्लिनाथः। ऐन्द्रेणेति। ऐन्द्रेण ऐन्द्रास्त्रेण हृदयेऽव्यात्सीत्

[illegible]

राक्षसो हतः सन् गां भूमिमध्यवात्सीत् अध्युवास। भुवि पतित इत्यर्थः। "उपान्वध्याङ् वसः" इति कर्मत्वम्। वस निवासे। लुङि सिचि हलन्तलक्षणा वृद्धिः। "सः स्यार्धधातुके" इति तत्वम्। तस्य पतता देहेन वनौकसां कपीनां द्वे सहस्रे अपिष्टाताम् पिष्टे। पिष्लृ संचूर्णने। कर्मणि लुङ्यातां सिचि कत्वषत्वे। सिचः कित्त्वान्न गुणः॥ ६९

भरतः। ऐन्द्रेणेत्यादि। इन्द्रदेवतेन अस्त्रेण हृदये तं निहतवान्। व्यधौ ताडने अनिट्त्वात् न्निः, अव्यासीदिति पाठे —व्येञ् वृतौ। निरुद्धवान् इत्यर्थः। स कुम्भकर्णो हतः सन् गां भूमिम् अध्युषितवान्। वसँ औ निवासे, अनिट्त्वात् न्निः। सतस्यर्द्ध इति सस्य तः। पततः तस्य देहेन वानराणां द्वे सहस्रे अपिष्टाता चूर्णिते। औपिष्लृ चूर्णने कर्मणि द्विवचन, हलन्तोऽनिमि लुङ इति सक्, षढोः कः सि इत्योत्वः, तेन याधातोऽन्त इत्यस्याविषयः॥ ६९

অনুবাদ। তিনি ঐন্দ্রাস্ত্র দ্বারা তাহার হৃদয় বিদ্ধ করিলেন, সেও নিহত অবস্থায় ধরাশায়ী হইল। পতন সময়ে তাহার দেহে বনবাসী দ্বিসহস্র কপি পিষ্ট হইয়া গেল। ৬৯

अस्ताविषुः सुरा रामं दिशः प्रापन्निशाचराः।
भूरकम्पिष्ट साद्रीन्द्रा व्यचालीदम्भसां पतिः॥ ৭০

अन्वयः। सुराः रामम् अस्ताविषुः, निशाचराः दिशः प्रापन्, साद्रीन्द्रा भूः अकम्पिष्ट, अम्भसां पतिः व्यचालीत्॥ ৭০

मल्लिनाथः। अस्ताविषुरिति। सुरा देवा राममस्ताविषुस्तुष्टुवुः। ष्टुञ् स्तुतौ। लुङि सिचि "स्तुसुधूञ्भ्यः परस्मैपदेषु" इति इट्। "इट ईटि" इति सलोपः। निशाचरा दिशः प्रापन् प्राप्ताः। लृदित्वादङ्। साद्रीन्द्रा सकुलशैला भूरकम्पिष्ट। अम्भसां पतिरब्धिर्व्यचालीत् विचचाल क्षुभित इत्यर्थः। "अतो ल्रान्तस्य" इति वृद्धिः॥ ৭০

भरतः। अस्ताविषुरित्यादि तस्मिन् हते सुरा रामं स्तुवन्ति स्म। सु-स्तु-धोः सेरिम् पे अजन्तत्वात् न्निः। राक्षसा भयात् दिशः प्रापुः। आप्लृ औ व्याप्ती। लृदित्वा [illegible]। अद्रीन्द्रैः कुलपर्वतैः सहिता भूमिः कम्पिता। अपि चाम्भसां पतिः समुद्रः विचचाल वह्व्यपायात् [illegible]

অনুবাদ। কুম্ভকর্ণ হত হইলে দেবগণ রামের স্তব করিলেন। রাক্ষসেরা চারিদিকে পলায়ন করিল। অষ্টকুলাচল সহ পৃথিবী কাঁপিয়া উঠিল এবং সমুদ্র ক্ষুভিত হইল। ৭০

हतं रक्षांसि राजानं कुम्भकर्णमशिश्रवन्।
अरोदीद्रावणोऽशोचीन्मोहं चाशिश्रियत् परम् ॥৭১

अन्वयः। रक्षांसि राजानं ( रावणं ) हतं कुम्भकर्णम् अशिश्रवन्, रावणः अरोदीत्, अशोचीत्, परं मोहं च अशिश्रियत् ॥ ৭১

मल्लिनाथः। हतमिति। रक्षांसि हतशेषा राक्षसा राजानं रावणं हतं कुम्भकर्णमशिश्रवन् अश्रावयन्। शृणोतेर्बुद्ध्यर्थत्वात् "गतिबुद्धि—" इत्यादिना अणि कर्त्तुः कर्मत्वम्। "णौ चङ्युप-धाया ह्रस्वः" सन्वत्त्वायं च। "स्रवति शृणोति—" इत्यादिना अभ्यासस्य विकल्पादित्वम्। रावणोऽरोदीदश्रूणि मुमोच। रुदिर् अश्रुविमोचने। "इरितो वा" इत्यङभावपक्षे सिचीट्। "इट ईटि" इति सलोपः। "नेटि" इति हलन्तलक्षणवृद्धिप्रतिषेधाल्लघूपधगुणः। अशोचीत् शोचति स्म। शुच शोके। सर्वं पूर्ववत्। परं मोहं मूर्च्छां चाशिश्रियत् श्रितः। श्रयतेः "णिश्रि—" इति चङ्। इयङादेशः ॥ ৭১

भरतः। हतमित्यादि। हतं कुम्भकर्णं राक्षसा राजानं श्रावितवन्तः। श्रुनगतौ श्रुतौ आन्तत्वादङ् द्वित्वं त्रिः आङ्गुरङः स्वः खिः सन्वत, श्रुस्नुद्रु इति खेरकारस्य पाक्षिक इकारः, णीऽणौनेरिति प्रयोज्यस्य राज्ञः कर्मत्वम्। श्रुत्वा च रावणोऽरोदीत्। रुदिरश्रु रोदे। अशोचीत् शोचति स्म। शुच शोके। परम् उत्कृष्टञ्च मोहम् आश्रितः। श्रिञ सेवने। णिश्रीत्यङ्, श्रुश्वोरितीयः ॥ ৭১

অনুবাদ। রাক্ষসেরা কুম্ভকর্ণের মৃত্যু সংবাদ রাবণকে শুনাইল, তাহাতে রাবণ রোদন ও শোক করিতে করিতে বিষম মূর্চ্ছাপ্রাপ্ত হইল। ৭১

अपप्रथद्गुणान् भ्रातुरच[चि]कीर्त्तत विक्रमम्।
क्रुद्धेन कुम्भकर्णेन येऽदधिषत शत्रवः ॥ ৭২
कथं न्वजीविषुस्तेऽल्पाः [च] स चाम्रत महाबलः।
[illegible] ॥ ৭৩

अन्वयः। (रावणः) भ्रातुः गुणान् अपप्रथत्, विक्रमम् अचकीर्त्तत। क्रुद्धेन कुम्भकर्णेन ये शत्रवः अदर्शिषत, ते अक्ताः कथम् अजीविषुः? स च महाबलः अमृत? ततः (शोकानन्तरं) कुमाराः रावणम् आश्वस्य प्रायुयुत्सिषत ॥ ७२—७३

मल्लिनाथः। अपप्रथदिति। भ्रातुर्गुणानपप्रथत् प्रथयति स्म। वर्णितवानित्यर्थः। प्रथ प्रख्याने। घटादिः। तस्माण्णौ चङि "अत्स्मृदृत्वर—" इत्यभ्यासस्यात्वम्। विक्रमं चाचकीर्त्तत कीर्त्तितवान्। कॄत संशब्दने। चौरादिकः। णौ चङि "उर्ऋत्" इति ऋकाराभावपक्षे "उपधायाश्च" इति ऋकारस्येत्वे "वोरुप-धायाः—" इति दीर्घे "उरत्" इत्यभ्यासऋकारस्यात्त्वम्। क्रुद्धेन कुम्भकर्णेन ये शत्रवोऽदर्शिषत दृष्टाः। दृशेः कर्मणि लुङ् सिचि "स्यसिच्सीयुट्—" इत्यादिना चिण्वदिटि गुणः ॥ ७२

मल्लिनाथ। कथमिति। अक्तास्ते तद्दृष्टाः शत्रवः कथमजीविषुर्जीवितवन्तः कथं नु महाबलः कुम्भकर्णोऽमृत। "म्रियते-र्लुङ्लिङोश्च" इति तङ्। "ह्रस्वादङ्गात्" इति सलोपः। सिचः कित्त्वान्न गुणः। ततः शोकानन्तरं कुमारा रावणात्मजा रावण-माश्वास्य प्रायुयुत्सिषत प्रकर्षेण योद्धुमैच्छन्। युद्धोत्साहप्रकाशनेन रावणमुत्साहयामासुरित्यर्थः। युधेः सन्नन्ताल्लुङि "पूर्ववत् सनः" इति तङि सिचीट्। अभ्यस्य चादादेशः ॥ ७३

भरतः। अपप्रथदित्यादि। रावणो भ्रातुः कुम्भकर्णस्य गुणान् प्रथयति स्म। प्रथक-थ ख्याते, आन्तादङ्, स्मृदृत्वरप्रथेति खेरङ् इह्राधकः। तस्य विक्रमं कीर्त्तयति स्म। कृतक संशब्दे आन्तादङ्। विक्रमकीर्त्तनमेवाह,—कुम्भकर्णेन क्रुद्धेन सता ये शत्रवो दृष्टाः ते च कथं अजीविषुः जीवन्ति स्म इत्युत्तरश्लोकेनान्वयः। दृशेः कर्म्मणि बहुवचनं, हनग्रहदृश च इति पक्षे सिण् ॥ ७२

भरतः। कथमित्यादि। नुशब्दः प्रश्ने। स च महाबली मृतः। म्रियतेर्ङ् मृतो मङ्क्ष्टीष्टाम् इगुङुमंढीति से कित्ताद्गुणाभावः। ह्रस्वादिति सेर्लोपः। ततोऽनन्तरं कुमाराः रावणपुत्रा देवान्तकादयो रावणम् आश्वास्य अपनीतशोकं कृत्वा योद्धुमिष्टवन्तः युध्यौङ् युद्धे। सन्निकायां यानीनिमि सनि ॥ ७३

অনুবাদ। কুম্ভকর্ণ ক্রুদ্ধ হইয়া যে সকল তুচ্ছ শত্রুর প্রতি একবার দৃষ্টিপাত করে তাহারা কিরূপে জীবিত থাকে? কিরূপেই বা সেই মহাবল প্রাণত্যাগ করে? রাবণ এই প্রকারে ভ্রাতার গুণবিস্তার ও বিক্রম কীর্ত্তন করিতে লাগিল। তদনন্তর দেবান্তক প্রভৃতি রাবণপুত্রগণ রাবণকে আশ্বস্ত [illegible]

देवान्तकोऽतिकायश्च त्रिशिराश्च नरान्तकः।
ते चांहिषत संग्रामं बलिनो रावणात्मजाः ॥७४

अन्वयः। देवान्तकः अतिकायः च त्रिशिराः नरान्तकः च बलिनः ते च रावणात्मजाः संग्रामम् आंहिषत ॥ ७४

मल्लिनाथः। देवेति। देवान्तकादयो बलिनस्ते रावणात्मजा रावणाज्ञया संग्राममांहिषत अगमंश्च। अहि गतौ। इदित्त्वान्नुम्। सिचीट्। आड्वृद्धिः ॥ ७४

भरतः। देवान्तक इत्यादि। के ते कुमाराः? इत्यत उक्तं देवान्तक इत्यादि। ते च बलिनो रावणपुत्राः सङ्ग्रामम् आंहिषत गताः। अहिङ् गतौ ॥ ७४

অনুবাদ। দেবান্তক অতিকায়, ত্রিশিরা ও নরান্তক নামক সেই মহাবল রাবণতনয়গণ যুদ্ধে যাত্রা করিল। ৭৪

युद्धोन्मत्तं च मत्तं च राजा रक्षार्थमाञ्जिहत्।
सुतानां निरगातां तौ राक्षसौ रणपण्डितौ ॥ ७५

अन्वयः। राजा (रावणः) सुतानां रक्षार्थं युद्धोन्मत्तं च मत्तं च आञ्जिहत्, रणपण्डितौ तौ राक्षसौ निरगाताम् ॥ ७५

मल्लिनाथः। युद्धेति। राजा रावणः सुतानां रक्षार्थं युद्धोन्मत्तं च मत्तं च आञ्जिहत् अजीगमत् प्रस्थापयामासेत्यर्थः। अहि गतौ। णौ चङि द्वितीयैकाचो न्द्रिशब्दस्य द्विर्वचनम्। नुम्। आड्वृद्धिश्च। रणपण्डितौ तौ राक्षसौ मत्तोन्मत्तौ निरगातां निर्गतौ। "इणो गा लुङि" इति गादेशे तसस्तामादेशः ॥ ७५

भरतः। युद्धेत्यादि। राजा रावणः सुतानां तेषां रक्षार्थं युद्धोन्मत्तं मत्तञ्च राक्षसद्वयम् आञ्जिहत् प्रस्थापितवान्। अहिङ्गतौ, आन्लादङ्। तौ रणपण्डितौ राक्षसौ पुरात् निर्गतौ। इण गतौ। ग्वां भूस्थापिबन्द्रयीति सेर्लुक् ॥ ७५

অনুবাদ। রাবণরাজ পুত্রগণের রক্ষণার্থে যুদ্ধোন্মত্ত ও মত্তনামক দুইটী রাক্ষস পাঠাইল। রণনিপুণ সেই রাক্ষসদ্বয় নগর হইতে নির্গত হইল। ৭৫

तैरजेषत सैन्यानि द्विषोऽक्षारिषताकुलाः।
पर्वतानिव ते भूमावचैषुर्वानरोत्तमान् ॥ ७६

अन्वयः। तैः (कुमारैः) सैन्यानि अजेषत, द्विषः आकुलाः अकारिषत, ते वानरोत्तमान् पर्वतान् इव भूमौ अचैषुः॥ ७६

मल्लिनाथः। तैरिति। तैः कुमारैः सैन्यानि कपिबलानि अजेषत जितानि। जेः कर्मणि लुङि। चिण्वदिड्भावपक्षे सिचि गुणः। द्विषः शत्रव आकुला व्यग्रा अकारिषत कृताः। करोतेः कर्मणि लुङि चिण्वदिटि वृद्धिः। ते राक्षसा वानरोत्तमान् पर्वतानिवाचैषुः। चिचीषन्तो राशीचक्रुरित्यर्थः। चिनोतेः कर्त्तरि लुङि सिचि वृद्धिः॥ ७६

भरतः। तैरित्यादि। तैः देवान्तकादिभिः सैन्यानि जितानि। जि जये च कर्मणि बहुवचनं, शत्रवश्चाकुलाः कृताः, कर्मणि हनग्रहदृश च इति चिण्। ते राक्षसा वानरोत्तमान् पर्वततुल्यान् भूमौ वितन्वन्तः पुञ्जीचक्रुः। चिञ् चित्यां, प्रजवर्दति विः॥ ७६

অনুবাদ। তাহারা বানরসৈন্য দগকে জয় করিয়া শত্রুদিগকে ব্যাকুল করিল এবং প্রধান প্রধান কপি সৈন্য বধ করিয়া পর্ব্বতাকারে ভূতলে রাশীকৃত করিতে লাগিল। ৭৬

अङ्गदेन समं योद्धुमघटिष्ट नरान्तकः।
प्रैषिषद्राक्षसः प्रासं सोऽस्फोटीदङ्गदोरसि॥७७

अन्वयः। (तत्र) राक्षसः नरान्तकः अङ्गदेन समं योद्धुम् अघटिष्ट प्रासं प्रैषिषत्, सः (प्रासः) अङ्गदोरसि अस्फोटीत॥ ७७

मल्लिनाथः। अङ्गदेनेति। तत्र नरान्तको नाम राक्षसोऽङ्गदेन समं योद्धुमघटिष्ट घटितः प्रवृत्त इत्यर्थः। प्रासं कुन्तं प्रैषिषत् प्रजिघाय। इष गतौ। चङि आड्वृद्धिः। स प्रासोऽङ्गदोरस्यस्फोटीत् स्फुटितो भग्न इत्यर्थः। स्फुटिर् विशरणे। "नेटि"। "हट ईटि"। गुणः॥ ७७

भरतः। अङ्गदेनेत्यादि। नरान्तकः कुमारः अङ्गदेन सह योद्धुं चेष्टितवान्। घट वध्यङ् चेष्टे। स राक्षसः प्रासं कुन्तं प्रेषितवान्। इष्य सर्पणे। आत्मादङ्, ईषङ दानेच हिंसे चेत्यस्य रूपं वा। अयच चकारात् सर्व्वोऽपि, स प्रासः, अङ्गदस्य वक्षसि अस्फोटीत् विदीर्णः। स्फुटिर्विसरणे॥ ७७

অনুবাদ। তন্মধ্যে নরান্তক রাক্ষস-অঙ্গদের সহিত যুদ্ধে প্রবৃত্ত হইয়া প্রাস অস্ত্র নিক্ষেপ করিল। সে প্রাস অঙ্গদের বক্ষঃস্থলে পতিত হইয়া ভগ্ন হইল। ৭৭

**अश्वान् वालिसुतोऽहिंसीदततादृश्च मुष्टिना ।**
**रावणिश्चाव्यथो योद्धुमारब्ध च मही गत: ॥ ७८**

अन्वय: । वालिसुत अश्वान् अहिंसीत्, मुष्टिना च अततादृत्, मही गत: रावणि: च अव्यथ, योद्धुम् आरब्ध ॥ ७८

मल्लिनाथ: । अश्वानिति । वालिसुतोऽङ्गदोऽश्वानहिंसीद-वधीत् । हिंसि हिंसायाम् । "नेटि" इत्यादि । मुष्टिना अत-ताड़त् अताड़यच्च । ताड़स्ताड़नम् । भावे घञ् । तत: "तत्क-रोति—" इति णिच् । णाविष्ठवद्भावात् टिलोप: । "नाग्लो-ऽपि—" इत्युपधाह्रस्वनिषेध: । तड़ आघात इति चौरादिकात् णौ चङ्युपधाह्रस्वे सन्वत्कार्य्ये च अतीतड़दित्येव स्यात् । अथ मही गतो रथभङ्गात् पदाति: रावणिर्नरान्तक: । "अत इञ्" । निर्व्यथ एव योद्धुं प्रारब्ध प्रावर्त्तिष्ट । रभेर्लुङि "झलो झलि" इति सलोप: । "झषस्तथो—" इति धत्वम् । जश्त्वं च ॥ ७८

भरत: । अश्वानित्यादि । वालिसुतोऽङ्गदो नरान्तकस्य अश्वान् हिंसितवान् । हिंस धिकि हिंसे । मुष्टिना राक्षसं ताडितवांश्च । तड़क् इत्यस्मात् भावे घञ्, तं करोतीति ञ्यन्तादङ्, अग्लोपित्वात् उक्ता ह्रस्वाभाव: । स च रावणपुत्रो व्यथारहित: हताश्वत्वात् रथात् अवतीर्य्य मही गत: सन् योद्धुम् आरब्धवान् । रभोङ् स्यात् रभसे झसत्वात् झलीति सलोप: । रावणस्यापत्यमिति वाह्वादित्वात् इञि णि: ॥ ७८

অনুবাদ। অঙ্গদ রাবণপুত্রের অশ্ব বধ করিল এবং মুষ্টিপ্রহার করিতে লাগিল। রথভঙ্গে ভূতলে অবতীর্ণ নরান্তকও অক্লেশে যুদ্ধ আরম্ভ করিল। ৭৮

**तस्याहारिषत प्राणा मुष्टिना वालिसूनुना ।**
**प्रादुद्रुवंस्तत: क्रुद्धा: सर्वे रावणयोऽङ्गदम् ॥ ७९**

अन्वय: । वालिसूनुना मुष्टिना तस्य प्राणा अहारिषत, तत: क्रुद्धा: सर्वे रावणय: अङ्गदं प्रादुद्रुवन् ॥ ७९

मल्लिनाथ: । तस्येति । वालिसूनुनाङ्गदेन कर्त्रा मुष्टिना करणेन तस्य नरान्तकस्य प्राणा अहारिषत हृता: । हरते: कर्मणि लुङि चिण्वदिटि वृद्धि: । ततो नरान्तकवधात् क्रुद्धा: सर्वे

रावणयो रावणपुत्त्राः। "अत कृज्"। अङ्गदं प्रति प्रादुद्रुवन् प्रद्रुताः। द्रु गतौ। लुङि "णिश्रि—" इति चङुवङ्॥ ७९

भरत:। तस्येत्यादि। वालिसूनुना अङ्गदेन तस्य प्राणा मुष्टिना करणेन हृताः। हृञ: कर्म्मणि कृञ्चहृञ्च च इति मिण्। ततोऽनन्तरं सर्वे रावणपुत्रा: क्रुद्धाः सन्तः अङ्गदं प्रद्रुतवन्त: जग्मुः इत्यर्थः। णिश्रीत्यङ्॥ ७९

अनुवाद। বালিপুত্র মুষ্টিপ্রহারে সেই নরান্তকের প্রাণ হরণ করিল। সেইজন্য রাবণপুত্রগণ ক্রুদ্ধ হইয়া অঙ্গদের দিকে ধাবিত হইল। ৭৯

ततो नीलहनूमन्तौ रावणीनववेष्टताम्।
अकारिष्टां गिरींस्तुङ्गान्य[न]रौत्सीत् त्रिशिरा: शरै: ८०

अन्वयः। ततः नीलहनूमन्तौ रावणीन् अववेष्टतां, तुङ्गान् गिरीन् अकारिष्टां, तान् त्रिशिराः शरैः न्यरौत्सीत्॥ ८०

मल्लिनाथः। तत इति। रावणिप्रद्रवानन्तरं नीलहनूमन्तौ रावणीनववेष्टतामवेष्टिषाताम्। णिजर्थो न विवक्षितः। वेष्ट वेष्टने। णौ चङि "विभाषा वेष्टिचेष्ट्योः" इत्यभ्यासस्यात्वम्। गिरीनकारिष्टां निक्षिप्तवन्तौ। कॄ विक्षेपे। सिचि वृद्धिः। तान् गिरीन् त्रिशिराः शरैर्न्यरौत्सीत् निवारितवान्। रुधिर् आवरणे। "इरितो वा" इत्यङभावपक्षे सिचि वृद्धिः॥ ८०

भरत:। तत इत्यादि। अनन्तरम् अङ्गदं प्रति गच्छतो रावणपुत्रान् नीलहनूमन्तौ वेष्टितवन्तौ, गिरींश्च विक्षिप्तवन्तौ। कॄश विक्षेपे। अजन्तत्वात् सि:। तान् क्षिप्तान् गिरीन् त्रिशिराः शरैः निरुद्धवान्। रुधिर्णोदि आवृतौ अभावपक्षे सि:॥ ८०

अनुवाद। অনন্তর নীল ও হনূমান্ রাবণপুত্রদিগকে ঘিরিয়া ফেলিল এবং তাহাদের উপর বড় বড় পর্ব্বত নিক্ষেপ করিল। ত্রিশিরা রাক্ষস বাণ বর্ষণে তাহা নিবারণ করিল। ৮০

परिघेणावधिष्टाथ रणे देवान्तको बली।
मुष्टिनाददरत्तस्य मूर्धानं मारुतात्मजः॥ ८१

अन्वय:। अथ बली देवान्तकः रणे परिघेण अवधिष्ट, तस्य मूर्द्धानम् मारुतात्मजः मुष्टिना अददरत्॥ ८१

मल्लिनाथः। परिघेणेति। अथ बली देवान्तकः परिघेणा-वधिष्ट आजघ्ने। अविवक्षितकर्मत्वेनाकर्मकत्वात् "आङो यमहनः" इति तङ्। "आत्मनेपदेष्वन्यतरस्याम्" इति हनो वधादेशः। तस्य देवान्तकस्य मूर्धानं मारुतात्मजो मुष्टिनाददरत् दारितवान्। दॄ विदारणे। "णौ चङ्युपधाया ह्रस्वः"। "अत्स्मृदॄत्वर—" इत्य-भ्यासस्यात्वम्॥ ८१

भरतः। परिघेणेत्यादि। अथ बली देवान्तको रणे परिघेण आहतवान्। आत्मा-ङ्ङादाढ़्मेति मम्, अविवक्षितकर्मत्वादकर्मकत्वं, हनवधश्चेति पदे वधादेशः। तस्य मूर्धानं पवनात्मजो हनूमान् मुष्टिना दारयामास। दॄग्गिविदारे। ऋ-दॄ त्वरप्रथेति खरङ्॥ ८१

অনুবাদ। তাহার পর বলিষ্ঠ দেবান্তক সমরক্ষেত্রে পরিঘ (লৌহবদ্ধ লগুড়) দ্বারা আঘাত করিল? হনুমান্ মুষ্টিপ্রহারে তাহার মস্তক বিদীর্ণ করিল। ৮১

आदीदिपत्ततो वीर्य्यं नीलं चापीपिडच्छरैः।
युद्धोन्मत्तस्तु नीलेन गिरिणानायि संक्षयम्॥८२

अन्वयः। ततः युद्धोन्मतः वीर्य्यम् अदीदिपत्, शरैः नीलं अपीपिडत् च स तु नीलेन गिरिणा संक्षयम् आनायि॥ ८२

मल्लिनाथः। आदिदीपदिति। ततो देवान्तकवधानन्तरं युद्धो-न्मत्तो वीर्य्यं विक्रममदिदीपद्दीपितवान्। शरैर्नीलमपीपिडत् पीड़ितवांश्च। "भ्राजभास—" इत्यादिना विकल्पादुपधाह्रस्वः पूर्वत्र तदभावश्च। स युद्धोन्मत्तो नीलेन कर्त्रा गिरिणा करणेन संक्षयमानायि नीतः। नयतेर्द्विकर्मकत्वात् प्रधाने कर्मणि लुङ्। "प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्। अप्रधाने दुहा-दीनां ण्यन्ते कर्त्तुश्च कर्मणः॥" इति वचनात्॥ ८२

भरतः। अदीदिपदित्यादि। ततो देवान्तकवधानन्तरं युद्धोन्मत्तो नाम राक्षसः वीर्य्यं दीपयामास। भ्राजभासभाषमासेत्यादिना पाक्षिक उर्ङौ ह्रस्वः, खेः सन्वद्भावेति दीर्घः। शरैश्च नीलं पीड़यामास। पूर्ववदुर्ङौ ह्रस्वः। अपीपदिति पाठे—दृक पूर्णौ। स तु नीलेन गिरिणा संक्षयं नीतः। कर्म्मणि रतनीरितीन्॥ ८२

অনুবাদ। দেবান্তক বধের পর যুদ্ধোন্মত্ত বীর্য্য প্রকাশ করিল এবং শরক্ষেপণে নীলকে কাতর করিল, নীলও গিরিনিক্ষেপে তাহার জীবন সংহার করিল। ৮২

अवभ्राजत्ततः शक्तिं त्रिशिराः पवनात्मजे।
हनूमता हतास्तस्य रणेऽमृषत वाजिनः॥८३

अन्वयः। ततः त्रिशिराः पवनात्मजे शक्तिम् अवभ्राजत्, हनूमता रणे हताः तस्य वाजिनः अमृषत॥ ८३

मल्लिनाथः। अवभ्राजदिति। ततो युद्धोन्मत्तवधानन्तरं त्रिशिराः पवनात्मजे विषये शक्तिं सामर्थ्यमवभ्राजत् प्रकाशितवान्। भ्राजृ दीप्तौ। णौ चङि "भ्राजभास—" इत्यादिना विकल्पादुपधाह्रस्वाभावः। हनूमता रणे हताः प्रहतास्त्रिशिरसो वाजिनो रथाश्वा अमृषत मृताः। "म्रियतेर्लुङ्लिङोश्च" इति तङ्॥ ८३

भरतः। अवभ्राजदित्यादि। तदनन्तरं त्रिशिराः कुमारो हनूमद्विषये शक्तिं दीपयति स्म। भ्राजृ दीप्तौ च। चकारान्नास्ति उभौ ह्रस्वाभावपक्षे रूपमिदम्। तस्य वाजिनो रथाश्वाः हनूमता हताः ताड़िताः सन्तो मृताः। मङ्क्ष्यैश्चमम् इगुरुर्मर्दति किस्मात् गुणाभावः॥ ८३

অনুবাদ। যুদ্ধোন্মত্ত বধের পর ত্রিশিরা হনূমানের উপর শক্তি প্রকাশ করিল। হনূমান কর্তৃক সমরে প্রহৃত তাহার রথের অশ্বগুলি পঞ্চত্ব প্রাপ্ত হইল। ৮৩

अस्रसच्चाहतो मूर्ध्नि खड्गं चाजीहरद्द्विषा।
प्राणानोज्झीच्च खड्गेन छिन्नैस्तेनैव मूर्धभिः॥८४

अन्वयः। (त्रिशिराः) मूर्ध्नि आहतः अस्रसत् द्विषा (हनूमता) खड्गम् अजीहरत्, तेन एव खड्गेन छिन्नैः मूर्धभिः प्राणान् औज्झीत् च॥ ८४

मल्लिनाथः। अस्रसदिति। अथ हनूमता मूर्ध्न्याहतो मुष्टिहतस्त्रिशिरा अस्रसद्रथादभ्रश्यत्। स्रंसु अवस्रंसने। "द्युद्भ्यो लुङि" इति तिप्। द्युतादित्वादङ्। ङिति अनुनासिकलोपः। द्विषा हनूमता खड्गमजीहरच्च हारितवांश्च। हृञ् हरणे। णौ चङ्युपधाह्रस्वः। सन्वल्लघ्वीत्त्वं च। तेनैव खड्गेन छिन्नैर्मूर्धभिर्हेतुभिः प्राणानौज्झीदत्याक्षीच्च। उज्झ उत्सर्गे। "इट ईटि" इत्याद्यजर्वृद्धिः॥ ८४

भरत:। अवस्रदित्यादि। हनूमता मूर्ध्नि आहतश्च, त्रिशिरा रथात् अस्त:। स्रंसन् सुद्ध्वंसी, द्युतादित्वात् ङ:, तेनैव पं, हनुङ्नलोप:। ततः तस्य खड्गहस्तस्थितं खड्गं रिपुणा हनूमता हारितवान्, तदुपाकुलत्वेन हनूमता खड्गी हत इत्यर्थ:। हृञ हरणे, आत्मनेपदे, धोऽजीजेरित्यादिना प्रयोज्यस्य न कर्मत्वं, पाक्षिकत्वात्। तेनैव खड्गेन छिन्नै: मूर्द्धभि: हेतुभूतै: स त्रिशिरा: प्राणान् त्यक्तवान्। त्यज्‌कञ त्यागे ॥ ८४

অনুবাদ। মস্তকে আহত হইয়া ত্রিশিরা রথ হইতে পতিত হইল। তাহার শত্রু হনুমান্ তাহার হস্তস্থ খড়্গ বলপূর্ব্বক গ্রহণ করিল। সেই খড়্গ দ্বারা ছিন্ন মস্তক হইয়া সে প্রাণত্যাগ করিল। ৮৪

**मत्तेनामारि सम्प्राप्य शरभास्तां महागदाम्।**
**सहस्रहारिणाक्रीडीदतिकायस्ततो रणे ॥ ८५**

अन्वय:। मत्तेन शरभास्तां महागदां संप्राप्य अमारि, ततः अतिकाय: सहस्रहारिणा रणे अक्रीडीत् ॥ ८५

मल्लिनाथ:। मत्तेनेति। अथ मत्तेन कुमाररक्षार्थमागतेन राक्षसेन शरभेण शरभाख्येन वानरेणास्तां क्षिप्तां महागदां सम्प्राप्यामारि मृतम्। भावे लुङ्। ततो मत्तमरणानन्तरमतिकायो नाम रावणपुत्र: सहस्रहारिणा सहस्राश्वेन रथेन रणे अक्रीडीद्विजहार ॥ ८५

भरत। मत्तेनेत्यादि। शरभेण कपिना क्षिप्तां महागदां सम्प्राप्य मत्तेन रक्षसा मृतं, भावे टी। मत्तेन या गदा शरभाय क्षिप्ता तयैव शरभ: तं मारयामास इत्यर्थ:। तदनन्तरम् अतिकाय: कुमारो रणे क्रीडति स्म, क्रीड़ खेले। केन? सहस्रहारिणा सहस्राश्वयुक्तेन रथेन इत्याधमश्लोकेन सम्बन्ध: ॥ ८५

অনুবাদ। মত্ত রাক্ষস শরভবানর নিক্ষিপ্ত মহাগদার আঘাতে প্রাণত্যাগ করিল। অতঃপর অতিকায় রাক্ষস সহস্র অশ্বযুক্ত রথারোহণে সমরক্রীড়া করিতে লাগিল। ৮৫

**रथेनाविव्यधच्चारीन् व्यचारीच्च निरङ्कुशः।**
**विभीषणेन सोऽख्यायि राघवस्य महारथः ॥ ८६**

अन्वय:। (अतिकाय:) रथेन अरीन् अविव्यधत्, निरङ्कुश: व्यचारीत् च (अथ) महारथ: स विभीषणेन राघवस्य अख्यायि ॥ ८६

মল্লিনাথঃ। রথেনেতি। রথেন পূর্ব্বোক্তেন সহস্রাশ্বেন অরীন্ অবিব্যথৎ ব্যথয়ামাস চ। ব্যথিমনী ণৌ চঙি "দ্যুতিস্বাপ্যোঃ—" ইত্যাদিনা সম্প্রসারণম্। নিরঙ্কুশো নিরর্গলো ব্যচারীৎ বিচচার চ। অথ মহারথঃ সোঽতিকায়ো বিভীষণেন রাঘবস্যাখ্যায়ি কথিতঃ। খ্যা প্রকথনে। কর্ম্মণি লুঙ্ চিণি যুগাগমঃ॥ ৮৬

ভরত। রথেনেত্যাদি। চকারঃ সমুচ্চয়ে। অরীন্ শত্রূন্ অবিব্যথৎ পীড়য়ামাস। ব্যথধাতোস্তস্য দ্যুতিস্বাপ্যোঃ ইত্যাদিনা সম্প্র। নিরঙ্কুশশ্চ অব্যাহতগতিঃ সন্ ব্যচারীৎ বভ্রাম। রাঘবস্য সমক্ষং বিভীষণেন মহারথোঽখ্যায়ি, সোঽয়মাগত ইতি নির্দ্দিষ্ট ইত্যর্থঃ॥ ৮৬

অনুবাদ। অতিকায় পূর্ব্বোক্ত রথে আরোহণ করিয়া অরিগণকে ব্যথিত করিল এবং নির্ব্বিঘ্নে সমরে বিচরণ করিতে লাগিল। তাহার পর বিভীষণ রামের নিকট সেই রথিশ্রেষ্ঠের বৃত্তান্ত বর্ণন করিলেন। ৮৬

অতস্তম্ভদয়ং বজ্রং স্বয়ম্ভুবমতূতুষৎ।
অশিশ্রিষ্ট মহাস্ত্রাণি রণেঽরক্ষীচ্চ রাক্ষসান্॥ ৮৭

অন্বয়ঃ। অয়ং রণে বজ্রম্ অতস্তম্ভৎ, স্বয়ম্ভুবম্ অতূতুষৎ, মহাস্ত্রাণি অশিশ্রিষ্ট, (রণে) রাক্ষসান্ চ অরক্ষীৎ॥ ৮৭

মল্লিনাথঃ। অতস্তম্ভদিতি। অয়মতিকায়ো রণে বজ্রং বজ্রায়ুধমতস্তম্ভৎ স্তম্ভিতবান্। স্তম্ভু প্রতিবন্ধে। ণৌ চঙ্। স্বয়ম্ভুবং ব্রহ্মাণমতূতুষদুগ্রেণ তপসা প্রসাদিতবান্। তুষ্যতের্ণৌ চঙ্যুপধাহ্রস্বঃ। তপঃফলমাহ—মহাস্ত্রাণ্যশিশ্রিষ্টাভ্যস্তবান্। রণে রাক্ষসানরক্ষীৎ দেবেভ্যস্ত্রাতবানিত্যর্থঃ॥ ৮৭

ভরতঃ। অতস্তম্ভদিত্যাদি। অয় বজ্র স্তম্ভয়ামাস নিবারিতবান্। স্তম্ভিস্তম্ভিক্ষ্ম্ভে আন্তাদঙ্। স্বয়ম্ভুব ব্রহ্মাণং তোষিতবান্ তপসেত্যর্থাৎ, স্বয়ম্ আত্মনা ভুবং পালনেন তোষিতবান্ ইত্যন্যে। তুষ তুষ্টৌ। আন্তাদঙ্। ওঙৌ হ্রস্বত্বে স্বিঃ সন্বদিতি দীর্ঘঃ। মহাস্ত্রাণি অশিশ্রিষ্ট শিক্ষিতবান্। শিক্ষ ঙ্ শিক্ষণে। রাক্ষসান্ রক্ষিতবান্॥ ৮৭

অনুবাদ। এই অতিকায় রণে বজ্রস্তম্ভিত করিয়াছে, তপস্যায় ব্রহ্মাকে সন্তুষ্ট করিয়াছে, তাঁহার বরে মহাস্ত্র শিক্ষা করিয়াছে এবং অনেকবার রণে রাক্ষসদিগকে রক্ষা করিয়াছে। ৮৭

# अध्यगीष्टार्थशास्त्राणि यमस्याह्नोष्ट विक्रमम्।
# देवाहवेष्वदीपिष्ट नाजनिष्टास्य साध्वसम् ॥८८

अन्वयः। अर्थशास्त्राणि अध्यगीष्ट, यमस्य विक्रमम् अह्नोष्ट, देवाहवेषु अदीपिष्ट, अस्य साध्वसं न अजनिष्ट ॥ ८८

मल्लिनाथः। अर्थेति। अर्थशास्त्राण्यध्यगीष्ट अध्यैष्ट। इङ् अध्ययने। "विभाषा लुङ्लृङोः" इति गाङादेशः। यमस्य विक्रममह्नोष्ट अपह्नुतवान् निरस्तवानित्यर्थः। ह्नुङ् अपह्नवे। सिचोऽकित्त्वाद्गुणः। देवाहवेषु देवयुद्धेषु अदीपिष्ट अप्रतिहतो ऽदीपि। अस्य साध्वसं नाजनिष्ट। न कुतश्चिद्बिभेतीत्यर्थः। "दीपजन—" इत्यादिना चिण्भावपक्षे रूपम् ॥ ८८

भरतः। अध्यगीष्टेत्यादि। अर्थोपयुक्तानि शास्त्राणि असौ अधीतवान्। गोऽकुत्वीर्थो। यमस्य विक्रमम् अपह्नुतवान्। ह्नुङ् चौर्य्ये। देवाहवेषु असौ दीप्यते स्म। अस्य साध्वसं भयं कुत्रापि न जातं, परस्मैपदे चे इत्यादेरप्रतिपत्ति रिः ॥ ८८

অনুবাদ। এই বীর অর্থশাস্ত্র অধ্যয়ন করিয়াছে। যমের বিক্রম দূর করিয়াছে। দেবতার সহিত যুদ্ধে বিরাজ করিত, কোথায়ও ইহার ভয় জন্মে নাই। ৮৮

# এষ রাবণিরাপাদি বানরাণাং ভয়ং যতঃ[ভয়ঙ্করঃ]।
# আহ্বতাথ স কাকুৎস্থং ধনুশ্চাপি[পু]স্ফুরদ্গুরু॥ ৮৯

अन्वयः। एषः रावणिः आपादि, यतः वानराणां भयं (जातं), अथ स काकुत्स्थम् आह्वत, गुरु धनुः अपिस्फुरत च ॥ ८९

मल्लिनाथः। एष इति। एष रावणिरतिकाय आपादि आपन्नः प्राप्तः। "चिण् ते पदः" इति चिणि वृद्धिः। "चिणो लुक्"। यतो यस्माद्वानराणां भयम्। अथ सोऽतिकायः काकुत्स्थं राममाह्वत सस्पर्द्धमाहूतवान्। "स्पर्द्धायामाङः" इति तङ्। "आत्मनेपदेष्वन्यतरस्याम्" इति च्लेरङादेशः। गुरु महद्धनुरपिस्फुरत् स्फुरितवान्। "चिस्फुरोर्णौ" इत्यात्वपक्षे णौ चङ्युपधाह्रस्वः। सम्वत्कार्य्यम् ॥ ८९

भरतः। एष इत्यादि। य एवम्भूतः स एष रावणपुत्रोऽतिकाय आपादि आगतः।

शीपदङ् गतौ पदसमीरुषि । यतो यस्मात् वानराणां भयम् उत्पन्नमिति विभीषणेनाख्यायीति सम्बन्धः । भयङ्कर इति क्वचित् पाठः । सोऽतिकायो रामम् आह्वत । स्पर्द्धायामाङ् इति स, नह्वयतेति ङः । गुरु महत् धनुः स्फारितवान् । स्फुरधि स्फूर्त्तौ । आत्मादङ् । स्फीगौ इत्यादिना पाक्षिक उकारस्याकारः ॥ ८९

অনুবাদ। এই রাবণপুত্রকে দেখিয়া বানরেরা ভয় পাইয়াছিল। অনন্তর সে স্পর্দ্ধাসহকারে রামকে যুদ্ধার্থ আহ্বান করিল, এবং প্রকাণ্ড ধনুক ধারণ করিল। ৮৯

**सौमित्रिः सर्पवत् सिंहमार्दिदत्तं महाहवे ।**
**तौ प्रावोवृततां जेतुं शरजालान्यनेकशः ॥९०**

अन्वयः । सौमित्रिः सिंहं सर्पवत् महाहवे तम् आर्दिदत्, तौ जेतुम् अनेकशः शरजालानि प्रावोवृतताम् ॥ ९०

मल्लिनाथः । सौमित्रिरिति । अथ सौमित्रिर्लक्ष्मणः सिंहं सर्पवत् सर्पं इव । अत्र साटोपत्वात् सिंहसाम्यं शत्रोरवश्यकोपत्वेन सर्पसाम्यं सौमित्रेरित्यनुसन्धेयम् । महाहवे । तमतिकायमार्दिदद्-र्हिंसीत् अभियुक्तवानित्यर्थः । अर्द हिंसायाम् । चुरादिः । चङि णिलोपस्य स्थानिवद्भावात् रेफवर्जितस्य दियब्दस्य द्विवचनम् । तौ लक्ष्मणातिकायौ जेतुं परस्परजिगीषयेत्यर्थः । अनेकशः शरजालानि प्रावोवृततां प्रवर्त्तितवन्तौ । वृतु वर्त्तने । णौ चङ् । "उऋत्" । "उयत्" सन्वत्कार्य्यम् ॥ ९०

भरतः । सौमित्रिरित्यादि । लक्ष्मणः तं महाहवे आर्दिदत् पीडितवान्, सिंहं सर्पं इव एकगुहास्थतया तयोः विरोधात । अर्दक् च चकारात् वधे । चुरादिरात्मादङ् । अर्दं यातनायामित्याचन इत्यस्मात् चुर्य्योर्णिरित्यस्य योगविभागात् वा णिः । घजन्तात णिरिति कैचित् । तौ लक्ष्मणातिकायौ जेतुम् अनेकशो बहूनि शरजालानि प्रवर्त्तितवन्तौ । वृत स्वल वर्त्तने । आत्मादङ् । वर्द्धं ङीधुरिति पक्षे गुणाभावः ॥ ९०

অনুবাদ। সর্প যেমন এক গুহাশ্রয়ী সিংহকে প্রপীড়িত করে সেইরূপ সুমিত্রানন্দন সেই অতিকায়কে মহারণে প্রপীড়িত করিলেন। তাঁহারা দুইজনই পরস্পর জয়লাভের আশায় অনেক বাণ বর্ষণ করিতে লাগিলেন। ৯০

**अस्त्रैस्तौ च महात्मानौ चिरमश्रमतां न च ।**
**तथा तावास्थतश्चां बाणानतानिष्टां तयो यथा ॥९१**

अन्वयः। महात्मानौ ( तौ ) च चिरम् अच्छैत्तां, न अश्रमतां च तौ तथा बाणान् आस्थतां यथा तमः अतनिष्टाम् ॥ ९१

मल्लिनाथः। अच्छैत्तामिति। महात्मानौ महामनस्कौ तौ चिरमच्छैत्तामन्योन्यशरजालानि छिन्नवन्तौ। छिदिर् द्वैधीकरणे। "इरितो वा" इत्यङभावपक्षे सिचि वृद्धिः। "झलो झलि" इति सलोपः। नाश्रमतां न श्रान्तौ च। श्रमेः पुषादित्वादङ्। तौ तथा बाणानास्थतां चिप्तवन्तौ। असु क्षेपणे। "अस्यतिवक्तिख्यातिभ्योऽङ्" "अस्यतेस्थुक्"। यथा येन प्रकारेण तमोऽन्धकारमतनिष्टां विस्तारितवन्तौ। तनु विस्तारे। "अतो हलादेः" इति वृद्धिविकल्पः ॥ ९१

भरतः। अच्छैत्तामित्यादि। तौ च महात्मानौ महाशयौ परस्परं शरजालानि छिन्नवन्तौ। छिदिर् धौज स्फुटे। ङाभावपक्षे सिः, अनिम्त्वाद्वृद्धिः, झसल्लाज् झसीति सिल्लोप। "आत्मा यत्नो धृतिर्बुद्धिः" इत्यमरः। चिरं बहुनापि कालेन न श्रान्तौ, श्रमु तपः-खेदयोः। तथा तौ क्षणात् चिप्तवन्तौ, यथा तमोऽन्धकारं विस्तारितवन्तौ। असु इर क्षेपे। वक्त्यस्येति ङः, वच्यस्यश्विपतामित्यस्यादेशः, तन दुञ् विस्तृतौ, हमादेः सेम इति पक्षे व्रिः ॥ ९१

অনুবাদ। তাঁহারা মহাযত্নে অনেকক্ষণ পরস্পর পরস্পরের বাণ ছিন্ন করিলেন, কেহই পরিশ্রান্ত হইলেন না। তাঁহাদের এই প্রকারে বাণ বর্ষণে সমস্ত অন্ধকারময় হইয়া গেল। ৯১

**सौर्याग्नेये व्यकारिष्टामस्त्रे राक्षसलक्ष्मणौ।**

**ते चोपागमतां नाशं समासाद्य परस्परम् ॥ ९२**

अन्वयः। राक्षसलक्ष्मणौ सौर्याग्नेये अस्त्रे व्यकारिष्टां, ते च परस्परं समासाद्य नाशं उपागमताम् ॥ ९२

मल्लिनाथः। सौर्येति। राक्षसलक्ष्मणौ यथाक्रमं सौर्याग्नेये अस्त्रे व्यकारिष्टां प्रयुक्तवन्तावित्यर्थः। कॄ विक्षेपे। सिचि वृद्धिः। यथासंख्यालङ्कारः। ते च अस्त्रे परस्परं समासाद्य नाशमदर्शन-मुपागमतां प्राप्ते। गमेर्लुङ्। लृदित्वादङ् ॥ ९२

भरतः। सौर्येत्यादि। राक्षसलक्ष्मणौ सौर्याग्नेये अस्त्रे यथाक्रमं व्यकारिषाताम्। कॄ श विक्षेपे। सूर्य्यो देवताऽस्येति विकारस्येत्यादिना यः। सौर्य्येति क्वचित्पाठः। अग्निः देवताऽस्येति पूर्ववत् यः। ते च अस्त्रे परस्परं समासाद्य प्राप्य नाशम् उपागमताम्। लृदित्वात् ङः ॥ ९२

অনুবাদ। অতিকায় সৌরাস্ত্র ক্ষেপণ করিল, লক্ষ্মণ আগ্নেয়াস্ত্র প্রতিক্ষেপ করিলেন পরস্পরের অস্ত্র পরস্পর সংঘর্ষ প্রাপ্ত হইয়া বিনষ্ট হইল। ৯২

**अविभजत्ततः शस्त्रमैषीकं राक्षसो रणे ।**

**तदप्यध्वसदासाद्य माहेन्द्रं लक्ष्मणेरितम् ॥ ९३**

अन्वयः । ततः राक्षसः रणे ऐषिकम् अस्त्रम् अविभजत्, लक्ष्मणेरितं माहेन्द्रम् आसाद्य तत् अपि अध्वसत ॥ ९३

मल्लिनाथः । अविभजदिति । ततोऽस्त्रद्वयनाशानन्तरं राक्षसो रणे ऐषीकं नाम शस्त्रमस्त्रमविभजत् प्रकाशयामास प्रयुक्तवानित्यर्थः । भ्राजादिना विकल्पादुपधाह्रस्वत्वम् । तदैषीकमपि लक्ष्मणेरितं लक्ष्मणप्रयुक्तं माहेन्द्रं महेन्द्रदेवताकमस्त्रमासाद्याध्वसत् ध्वस्तम् । ध्वंसेर्द्युतादित्वादङ् । 'द्युद्भ्यो लुङि' इति वा परस्मैपदम् ॥ ९३

भरतः । अविभजदित्यादि । ततोऽनन्तरं रावणसुत ऐषीकम् अस्त्रं रणे भ्राजयामास । भ्राजभ्रासेति पाक्षिक उपधाह्रस्वः । लक्ष्मणेरितं क्षिप्तं माहेन्द्रम् अस्त्रम् आसाद्य तदपि ऐषीकम् अस्त्रं ध्वस्तम् ; महेन्द्रो देवतास्येति ण्यः ॥ ९३

অনুবাদ। উভয়াস্ত্র নাশের পর রাক্ষস যুদ্ধে ঐষীক অস্ত্র প্রয়োগ করিল, লক্ষ্মণ প্রতিক্ষিপ্ত মাহেন্দ্রাস্ত্রের আঘাতে তাহাও নষ্ট হইল। ৯৩

**ततः सौमित्रिरस्मार्षीददेविष्ट च दुर्जयम् ।**

**ब्रह्मास्त्रं तेन मूर्धानमदध्वंसन्नरद्विषः ॥ ९४**

अन्वयः । ततः सौमित्रिः दुर्जयं ब्रह्मास्त्रं अस्मार्षीत्, अदेविष्ट च, तेन नरद्विषः मूर्धानम् अदध्वंसत् ॥ ९४

मल्लिनाथः । तत इति । ततोऽस्त्रनाशानन्तरं सौमित्रिर्दुर्जयममोघं ब्रह्मास्त्रमस्मार्षीत् सस्मार । सिचि वृद्धिः । अदेविष्ट च तत्सान्निध्याद्भृशं दिद्युते । देवृ देवने । देवनमत्र द्योतनम् । तेनास्त्रेण करणेन नरद्विषो राक्षसस्य मूर्धानमदध्वंसत् ध्वंसयामास पातयामासेत्यर्थः । 'मतमध्वंसतेऽप्येति विलम्बादि विशीर्यते' इति [illegible] ॥ ९४

भरतः। तत इत्यादि। तदनन्तरं सौमित्रिः दुर्जयं ब्रह्मास्त्रं स्मृतवान्। स्मृ स्मृतौ। स्मरणात् उपस्थितं तत् सर्वविष्ट शोभते स्म; किं वा स्मरणात् उपस्थिते ब्रह्मास्त्रे सौमित्रिः इर्षात् शोभते स्म, जेतुमिच्छति यो त्याद्यर्थो वा। देवृङ् देवने। देवनशब्देन दिवधातोरर्था जिगीषाद्या उच्यन्ते। तेन ब्रह्मास्त्रेण प्रयोज्यकर्तृणा नरद्विषो राक्षसस्य मूर्द्धानं लक्ष्मणो ध्वंसयामास। ध्वन्सु स्रन्सु गतौ भ्रंशे आत्मनादृङ्॥ ९४

अनुवाद। ঐযোধ্যার নাশের পর সুমিত্রাতনয় দুর্জয় ব্রহ্মাস্ত্রের ধ্যান করিলেন। স্মরণমাত্রেই অস্ত্র প্রকাশ পাইল। সেই অস্ত্র দ্বারা মস্তক ছেদন করিলেন। ৯৪

ततोऽक्रन्दीद्दशग्रीवस्तमशिश्वसदिन्द्रजित्।
निरयासीच्च संक्रुद्धः प्रार्चिचच्च स्वयम्भुवम्॥ ९५

अन्वयः। ततः दशग्रीवः अक्रन्दीत्, इन्द्रजित् तम् आशिश्वसत् संक्रुद्ध निरयासीत्, च स्वयम्भुवं प्रार्चिचत् च॥ ९५

मल्लिनाथः। तत इति। ततः कुमारमरणानन्तरं दशग्रीवोऽक्रन्दीद्रोदीत्। इन्द्रजित्तं दशग्रीवमशिश्वसदाश्वासयामास। श्वसेः णौ चङ्युपधाह्रस्वः, सन्वल्लघुन्यभ्यासस्य। संक्रुद्धो निरयासीत् योद्धुं निर्यातश्च। यातेर्लुङि सगिटौ। स्वयम्भुवं ब्रह्माणमार्चिचदर्चयामास। अर्चश्चौरादिकाण्णौ चङ्। 'अजादेर्द्वितीयस्य'। अङ् लुङः॥ ९५

भरतः। तत इत्यादि। पुत्रवधानन्तरं दशग्रीवः क्रन्दति स्म। तं रुदन्तम् इन्द्रजित् आश्वासितवान्। मयि स्थिते का चिन्तेति। श्वस प्राणने आत्मनादङ्। स च संक्रुद्धः सन् निर्गतः। यमरमनमात इति यातेरिमसन्ते सौऽन्तः। स्वगृहात् निर्यातः सन् स्वयम्भुव ब्रह्माणम् अर्चितवान्। अर्चक् पूजे। चुरादिरात्मनादङ्॥ ९५

अनुवाद। অতিকায় বধের পর দশানন রোদন করিতে লাগিল। ইন্দ্রজিৎ তাহাকে আশ্বাস দিল এবং ক্রোধভরে পুরী হইতে নির্গত হইয়া ব্রহ্মার আরাধনা করিল। ৯৫

अह्नौषीत्कृष्णवर्त्मानमयष्टायुधमण्डलम्।
सोऽलब्ध ब्रह्मणः शस्त्रं स्यन्दनं च जयावहम्॥ ९६

अन्वयः। सः कृष्णवर्त्मानम् अह्नौषीत् आयुधमण्डलम् अयष्ट, ब्रह्मणः जयावहं शस्त्रं स्यन्दनं च अलब्ध॥ ९६

त्रि: पातिस्मायीरिति वङ्। प्रायकै: बाणै: शत्रून् अगूहीत् आच्छादितवान्। गुहङ् संवृती। उदित्त्वादिट्। गुहोऽवीट:। महारौद्रम् अघोषीत् शब्दं चक्रे। घुषिर् ध्वनौ भीमार्थे। लङ्कां गत्वा रावणं प्रीणाति स्म। प्रीञ तर्पणे। प्री ग ञ कान्तौ चेत्यस्य वा रूपम्; अयमपि चकारात् तर्पणे। किं वा रावणं प्रेरयामास जितशत्रून् द्रष्टुम् इत्यर्थात्। इष्ट तर्पणे॥ ९९

অনুবাদ। ইন্দ্রজিৎ স্বীয় সামর্থ্য বৃদ্ধি দেখাইল, শরজালে সমস্ত দিক্ আচ্ছন্ন করিল এবং অতি ভীষণ গর্জ্জন করিতে লাগিল, পরে গৃহে যাইয়া রাবণকে প্রীত করিয়া নিজ পুরুষকার দেখাইবার জন্য প্রেরণ করিল। ৯৯

**विभीषणस्ततोऽबोधि सस्फुरौ रामलक्ष्मणौ।**
**अवादी[पारी]त् स गृहीतोल्को हतशेषान् प्लवङ्गमान्॥**

अन्वय:। तत: विभीषण: रामलक्ष्मणौ सस्फुरौ अबोधि, स: गृहीतोल्क: (सन्) हतशेषान् प्लवङ्गमान् अवादीत्॥ १००

मल्लिनाथ:। विभीषण इति। ततस्तस्मिन् काले विभीषणो रामलक्ष्मणौ स्फुरणं स्फु:, सम्पदादित्वात् क्विप्, तत्सहितौ सस्फुरौ स्फुरन्तौ जीवन्तावित्यर्थ:, अबोधि बुद्धवान्। बुध अवगमने। कर्त्तरि लुङ्। "दीपजन—" इत्यादिना च्लेश्चिणादेश:। स विभीषणो गृहीतोल्को गृहीतोल्मुक: सन् हतशेषान् प्लवङ्गमान् अवादीदवोचत्॥ १००

भरत:। विभीषण इत्यादि। तदनन्तरं स विभीषणो रामलक्ष्मणौ सस्फुरौ स्फुरन्तौ अबोधि ज्ञातवान्। पदस्तनीषु चि इत्यादिना इण्। स्फुरणि स्फूर्त्तौ। पचादित्वादच्, कुटादित्वात् ञ्णितीति नियमात् गुणाभाव:। इगुपधत्वात् कृगृज्ञाप्रीकिरः क इति कप्रत्ययो वा। अन्ये तु भावेऽपि क: प्रत्यय: स्यादित्युक्ता सस्फुरावित्यत्र सहशब्देन समासं कुर्वन्ति। स विभीषणोऽन्धकारात् गृहीतोल्को हतशेषान् वानरान् अपारीत् अभयदानेन पालयामास। पृ लि पालने॥ १००

অনুবাদ। তখন বিভীষণ, রামলক্ষ্মণ জীবিত আছেন বুঝিতে পারিলেন। তিনি একটী উজ্জ্বল আলোক লইয়া হতাবশিষ্ট কপিদিগকে পরবর্ত্তী কথা বলিলেন। ১০০

**मा शोचिष्ट रघुव्याघ्रौ नाम्रुषातामिति ब्रुवन्।**
**अवावृधत् स नीलादीन् निहतान् कपियूथपान्॥१०१**

अन्वयः। मा शोचिष्ट, रघुव्याघ्रौ न अमृषाताम्, इति ब्रुवन् स निहतान् नीलादीन् कपियूथपान् अवाबुद्ध ॥ १०१

मल्लिनाथः। यदवादीत्तदेवाह—मेति। हे वानराः ! मा शोचिष्ट शोकं मा कुरुत। रघुव्याघ्रौ नामृषातां न मृतौ। मृङ् प्राणत्यागे। "म्रियतेर्लुङ्लिङोश्च" इति तङ्। सिचः कित्त्वान्न गुणः। इति ब्रुवन् नीलादीन् कपियूथपान् निहतानवाबुद्धावबुद्धवान्। "दीप-जन—" इत्यादिना चिणभावपक्षे "झलो झलि" इति सलोपः। धत्वजश्त्वे ॥ १०१

भरतः। मा शोचिष्टेत्यादि। यूयं मा शोकं कुरुत। शुच शोके। रघुश्रेष्ठौ रामलक्ष्मणौ नामृषातां न मृतौ इति ब्रुवन् अपारीदिति पूर्वश्लोकेन सम्बन्धः। अथ नीलादीन् कपियूथपान् निहतान् बुद्धवान्। पदसनीष् घे इत्यस्याप्रवृत्तिपक्षे सिः झलस्यादिति सिलोपः ॥ १०१

অনুবাদ। "তোমরা দুঃখ করিও না। রামলক্ষ্মণ জীবিত আছেন।" ইহা বলিতে বলিতে পরিভ্রমণ করিয়া তিনি বুঝিলেন যে বানরযূথপতি নীল প্রভৃতি নিহত হইয়াছে। ১০১

तत्रेषज्जाम्बवान् प्राणीदुदमीलीत्[दमीमिल]च्च लोचने।
पौलस्त्यं चागदीत् कश्चिदजीवीन्मारुतात्मजः ॥१०२

अन्वयः। तत्र जाम्बवान् ईषत् प्राणीत्, लोचने उदमीलीत् च, मारुतात्मज अजीवीत्, कश्चित् पौलस्त्यं च अगदीत् ॥ १०२

मल्लिनाथः। तत्रेति। तत्र जाम्बवानीषत् प्राणीदजनीत्। अन प्राणने। "इट ईटि" इति सलोपः। "अनितेः" इति णत्वम्। लोचने उदमीलीच्च उन्मिषितवांश्च। मील निमेषणे। अथ मारुतात्मजो हनुमानजीवीत् जीवितः सन् कश्चित् किमिति पौलस्त्यं विभीषणमगदीदगादीच्च। "अतो हलादेः" इति वृद्धि-विकल्पः ॥१०२

भरतः। तत्रेत्यादि। तेषु मध्ये जाम्बवान् ईषत् प्राणीत उच्छ्वसिति स्म। अनश् च प्राणने। प्राक्नमो च इत्यादिना पाक्षिक णत्वम्। लोचने अमीमिलत् मीलयामास। मील निमेषे। भ्राजभासेति पाक्षिक उङो ह्रस्वः। उदमीलीच्चेति पाठे—किं डीमनी। उदमीलच्चेति पाठोऽयुक्त एव, ऊविषयाभावात् न च अप् व्यधिकारात् न च मरः मिमेति व्या दलेऽपि कचिदप्रमादविषयेऽप्युत्सर्गोऽभिनिविशत इति अप्। बहू ...

कथञ्चित् कियच्चिदनुमत्वात् पुषादिपाठः लीकत्वंत्व इत्यर्थे। पौलस्त्यं विभीषणश्च अदित वान्। गद भाषे। इषादेः सेम इति पक्षे त्रिः। किम् अगदीदित्याह,—मारुतात्मजं हनूमान् जीवितवान्। कांक्षत् कामप्रवेदने। जीव प्राणे। आशंसायां टौ, अभिधाना मा टौवेत्यत्र योगविभागात् वा ॥ १०२

অনুবাদ। তাহার মধ্যে জাম্ববান্ একটু চেতনা পাইয়া নয়ন উন্মীলিত করিল এবং বিভীষণকে বলিল হনূমান্ বাঁচিয়া আছে কি? হনূমান্ চৈতন্য লাভ করিয়া বিভীষণকে বলিল "এ কি হইল!" ১০২

**तस्य चेमे महाराज नामृष्मह्यखिला वयम् ।**
**पौलस्त्योऽशु[श्रि]श्रवत्तं च जीवन्तं पवनात्मजम् १०३**

अन्वयः। महाराज! तस्य (हनूमतः) क्षेमे वयम् अखिलाः न अमृष्महि पौलस्त्यः जीवन्तं तं पवनात्मजं च अशुश्रवत् ॥ १०३

मल्लिनाथः। हनूमज्जीवनप्रश्नस्य प्रयोजनमाह—तस्येति। महाराज विभीषण! तस्य हनूमत एकस्य क्षेमे जीवने सति वयमखिला नामृष्महि मृषीमहीत्यर्थः। "आशंसायां भूतवच्च" इति लुङ्। पौलस्त्यो विभीषणः पवनात्मजं जीवन्तं तस्याशुश्रवत्तमश्रावयादित्यर्थः। सम्बन्धसामान्ये षष्ठी। शृणोतेः णौ चङ्युपधाह्रस्वः। "स्रवतिशृणोति-" इत्यादिनाभ्यासस्येत्वाभावपक्षे प्राक्तमुत्वम् ॥१०३

भरतः। तस्येत्यादि। हे महाराज, विभीषण। हनूमतः क्षेमे कुशले सति सर्वं एव वय न मृताः। मङ्क्षीर्ष्यं मम इगुङ्मंद्वीति किस्वादगुणाभावः। अत्रापि आशंसायां टौत्यन्य। एवमुक्तः पौलस्त्यो विभीषणो जीवन्तं पवनात्मजं तं जाम्बवन्तं श्रावयामास। श्रोऽन्नादत्। शुब्रुद्रु इत्यादिना खिकतः पाक्षिकमित्त्वं. णौऽणौ ओरिति प्रयोज्यस्य कर्मत्वम ॥ १०३

অনুবাদ। জাম্বুমান বলিল মহারাজ! এক হনূমানের মঙ্গলে (জীবন থাকিলে) আমরা সকলেই জীবনধারণ করিব। বিভীষণ তাহাকে শুনাইলেন যে হনূমান্ জীবিত আছে। ১০৩

**आयि[हि]ष्ट मारुतिस्तत्र ताव[तौ चा]प्यहृषतां ततः।**
**प्राहैष्टां हिमवत्पृष्ठे सर्वौषधिगिरिं ततः ॥ १०४**
**तौ हनूमन्तमानेतुमोषधिं मृतजीविनीम् ।**
**सन्धानकरणीं चान्यां विशल्यकरणीं तथा ॥ १०५**

अन्वयः। मारुतिः तत्र आयिष्ट, ततः तौ अपि अहृषतां, तौ मृतजीविनीं सन्धानकरणीं तथा विशल्यकरणीं अन्याम् च ओषधिम् आनेतुं हनूमन्तं हिमवत्पृष्ठे सर्वौषधिगिरिं प्राहैष्टाम् ॥ १०४।१०५

मल्लिनाथः। आयिष्टेति। मारुतिस्तत्रायिष्ट। सोऽप्यान्विष्य आगतः। अय गतौ। आङ्पूर्वाल्लुङि तङ्। ततो हनूमदागमनात् जाम्बवद्विभीषणावहृषतां हृष्टौ। हृष तोषे, पुषादित्वादङ्। उत्तरार्धमुत्तरश्लोकशेषः ॥ १०४

मल्लिनाथः। मावितेति तौ जाम्बवद्विभीषणौ मृतजीविनीं मृतसञ्जीवनीं सन्धानकरणीं भग्नाङ्गानां पुनः सन्धात्रीं तथा विशल्यकरणीमन्तर्निलीनशल्याङ्गानां निःशल्यत्वसम्पादिनीं चौषधिमानेतुं हनूमन्तं हिमवत्पृष्ठे स्थितं सर्वौषधीनां गिरिं प्रति प्राहैष्टां प्रहितवन्तौ। हिनोतेः प्रपूर्वात् लुङि सिचि वृद्धिः ॥ १०५

भरतः। आहिष्टेत्यादि। तत्र देशे पौलस्त्येन आहतौ मारुतिः आहिष्ट आगतः। अहिङ् गतौ। आयिष्टेति पाठे—अयङ् गतौ। ततोऽनन्तरं तौ च जाम्बवद्विभीषणौ हर्षं प्रापतुः। हृष्यति तुष्टौ पुषादिः। ततः तौ हिमालयस्य पृष्ठभागे सर्वा ओषधयो यत्र तं गिरिं प्राहैष्टां प्रस्थापितवन्तौ। हनूमन्तमित्युत्तरश्लोकेनान्वयः। हिन वर्द्धने गतौ ॥ १०४

भरतः। मावित्यादि। या मृतं जीवयति, या च क्षतस्य सन्धानं करोति, या च विशल्यं करोति; ता ओषधीः आनेतुं हनूमन्तं तौ प्राहैष्टामिति पूर्वेणान्वयः। कर्मार्थऽसौ इति कर्त्तरि अनट् नन्द्यादित्वं ॥ १०५

অনুবাদ। হনূমান্ তথায় আসিলে জাম্বুমান ও বিভীষণ তুষ্ট হইলেন, তাঁহারা মৃতসঞ্জীবনী, সন্ধানকরণী, বিশল্যকরণী এবং অপরাপর ঔষধী আনিবার জন্য হনূমান্‌কে হিমালয়ের পশ্চাদবস্থিত সর্ব্বৌষধির পর্ব্বতে প্রেরণ করিলেন। ১০৪-৫

**प्रोदपाति नभस्तेन स च प्रापि महागिरिः।**
**यस्मिन्नज्वलिषू रात्रौ महौषध्यः सहस्रशः ॥ १०६**

अन्वयः। तेन नभः प्रोदपाति, यस्मिन् रात्रौ सहस्रशः महौषध्यः अज्वलिषुः, स महागिरिः च प्रापि ॥ १०६

मल्लिनाथः। प्रेति। तेन हनूमता नभः प्रोदपाति, खं प्रत्युत्पतितं स महागिरिश्च प्रापि प्राप्तः। "चिण् भावकर्मणोः"। यस्मिन्

गिरौ रात्रौ महौषध्यः सहस्रशोऽज्वलिषुः प्रज्वलिताः। क्रान्तस्त्वा-
कृषिः ॥ १०६

भरतः। प्रोदपातीत्यादि। तेन हनूमता नभ आकाशम् उत्पतितं, स च महागिरिः प्राप्तः, उभयत्र कर्मणि क्त। यस्मिन् महागिरौ सहस्रशो महौषध्यो रात्रौ ज्वलन्ति स्म, ज्वलयतीति त्रिः ॥ १०६

অনুবাদ। হনূমান্ শূন্যে উত্থিত হইয়া যে পর্ব্বতে রাত্রিকালে সহস্র সহস্র মহৌষধী প্রজ্জ্বলিত হয়, সেই মহাপর্ব্বতে উপস্থিত হইল। ১০৬

निरचायि यदा भेदो नौषधीनां हनूमता।

कृत्स्न[सर्वं] एव समाहारि तदा शैलः सहौषधिः ॥

अन्वयः। यदा हनूमता ओषधीनां भेदः न निरचायि, तदा सहौषधिः शैलः कृत्स्न एव समाहारि ॥ १०७

मल्लिनाथः। निरिति। यदा हनूमता ओषधीनां भेदः ओषध्यन्तराद्विशेषो न निरचायि न निश्चितस्तदा सहौषधिरोषधिसहितः कृत्स्न एव शैलः समाहारि समाहृतः आनीत इत्यर्थः ॥ १०७

भरतः। निरचायीत्यादि। यदा हनूमता ओषधीनां प्रागुक्तानां भेदो न निश्चितः, तदा ओषधिसहितः समस्त एव शैलः समाहारि समानीतः, उभयत्र कर्मणीण्। 'सह: सो वे'ति पक्षे सादेशाभावः ॥ १०७

অনুবাদ। যখন হনূমান্ ওষধির ভেদ নিশ্চয় করিতে অসমর্থ হইল, তখন ওষধির সহিত সমস্ত পর্ব্বতটি তুলিয়া আনিল। ১০৭

सुप्राणिषुस्ततः केचित् * केचित्तु प्रोदमीलिषुः।

तमोऽन्येऽहासिषुर्योधा व्यजृम्भिषत चापरे ॥ १०८

अन्वयः। ततः केचित सुप्राणिषुः, केचित् तु प्रोदमीलिषुः, अन्ये योधाः तमः अहासिषुः, अपरे च व्यजृम्भिषत ॥ १०८

मल्लिनाथः। सुप्रेति। ततस्तदोषधिसन्निधानादेव केचित् सुष्ठु प्राणिषुरजीविषुः। अन प्राणने, । सिच इट्, "अनितेः" । केचित् प्रोदमीलिषुर्नेत्रे उन्मीलितवन्तः। मीलतेः सिजादि पूर्ववत्। अन्ये योधास्तमो मोहमहासिषुरत्याक्षुः। ओहाक् त्यागे, सिगटौ। अपरे व्यजृम्भिषत गात्रविनामं चक्रुः। जृभि गात्रविनामे। लुङि सिच इट् ॥ १०८

* "प्राणिषुर्निहताः केचित्" इति पाठान्तरम्।

भरतः । प्राणिषुरित्यादि । प्रभावात् निश्चलाः केचिद्योधा प्राणिषुः उच्छ्वसिताः, केचिन्च उन्मीलितनेत्रा अभूवन्, अन्ये तमौषधम् अघ्रासिषुः व्यजृम्भन्त । भीता मि व्यामि, यमरमेति इमृमनौ, ततोऽन्येऽहसिषुरिति पाठे—अनन्तरम् आत्मानं हृष्टा हसितवन्त इत्यर्थः । हस हासे । अपरे जृम्भां कृतवन्तः । जृम्भिङ् च गात्रविनामे जृम्भे ॥ १०८

অনুবাদ। সেই ওষধির নিকটে আসাতেই কেহ কেহ সম্পূর্ণ জীবন পাইল, কেহ চক্ষু উন্মিলিত করিল, অপর যোদ্ধারা চৈতন্য পাইল এবং অন্য কতকগুলি যোদ্ধা বারংবার জৃম্ভণ করিতে লাগিল। ১০৮

अजिघ्रपंस्तथैवान्यानोषधीरालिपंस्तथा ।
एवं तेऽचेतिषुः सर्वे वीर्यं चाधिषताधिकम् ॥ १०९

अन्वयः । तथा एव अन्यान् योधान् ओषधीं अजिघ्रपन् अलिपन्, एवं ते सर्वे अचेतिषुः, अधिकं वीर्यं च अधिषत ॥ १०९

मल्लिनाथः । अजिघ्रपन्निति । तथैवान्यान्योधानोषधीरजिघ्रपन्नाघ्रापयन् घ्राणेन तद्गन्धमग्राहयन्नित्यर्थः । अत एव बुद्ध्यर्थत्वात्, "गतिबुद्धि—" इत्यादिना अणि कर्त्तुः कर्मत्वम्, घ्रा गन्धोपादाने, "अर्त्तिह्री—" इत्यादिना पुगागमः, णौ चङि "जिघ्रतेर्वा" इति विकल्पादुपधाया इकारः । तथा ओषधीरलिपन् । लिप उपदेहे, "लिपिसिचिह्वश्च" इत्यङ् । एव ते सर्वे योधा अचेतिषुः संज्ञां लेभिर इत्यर्थः । चिती संज्ञाने । अधिकं वीर्यं बलं चाधिषत दधिरे । दधातेर्लुङि तङि "स्थाघ्वोरिच्च" इतीत्वे "ह्रस्वादङ्गात्" इति सलोपः । सिचः कित्त्वान्न गुणः ॥ १०९

भरतः । अजिघ्रपन्नित्यादि । अन्ये लब्धसंज्ञाः सन्तः अन्यान् ओषधीः घ्रापितवन्तः । घ्रा गन्धग्रहणे, तस्य नासिकया भोजनं ज्ञानविशेषो इति णोऽणौ अरित्यादिना प्रयोज्यस्य कर्मत्व, घोरिति पाक्षिकमुक्त इत्वम् । अन्ये आलिपन् लिप्तवन्तः, शरीराण् ओषधीभिरित्यर्थात् । लस्यस्येति ङः । एवम् अनेन प्रकारेण ते सर्वे चेतिषुः संज्ञां प्रापुः । चिती संज्ञाने । अधिकञ्च वीर्यं शक्तिं दधन्ति स्म । स्थाद्धोरिङि इत्वे न णः ॥ १०९

অনুবাদ। সেই প্রকারে অন্য যোদ্ধৃবর্গকে ওষধি আঘ্রাণ করাইল এবং তাহারও অঙ্গে ঔষধ লেপন করিল। এইরূপে তাহারা সকলেই চৈতন্য লাভ করিয়া অধিক শক্তি ধারণ করিল। ১০৯

**अजिह्लदत् स काकुत्स्थौ शेषांश्चाजीजिवत् कपीन् ।**
**हनूमानथ ते लङ्कामग्निनादीदिपन् द्रुतम् ॥ ११०**

अन्वयः । सः हनूमान् काकुत्स्थौ अजिह्लदत्, शेषान् कपीन् च अजीजिवत्, अथ ते द्रुतं लङ्काम् अग्निना अदीदिपन् ॥ ११०

मल्लिनाथः । अजिह्लददिति । हनूमान् काकुत्स्थौ चाजिह्लददाह्लादयति स्म । ह्लादी सुखे च । णौ चङ्युपधाह्रस्वः अभ्यासकार्य्यं च । शेषान् कपींश्चाजीजिवत् जीवयति स्म । अथ जीवितास्ते कपयो द्रुतं लङ्कां वह्निनादीदिपन्नाजिज्वलन् । उभयत्र णौ चङि "भ्राज—" इति विकल्पादुपधाह्रस्वः ॥ ११०

भरतः । अजिह्लददित्यादि । स हनूमान् रामलक्ष्मणौ ह्लादयामास । ह्लादीङ् मोदने । आह्लादङ् । शेषाश्च कपीन् जीवयति स्म । भ्राजभासेत्यादिना पक्षे चङि ह्रस्वः । अथ जीविताः सन्तः ते द्रुतं लङ्कां वह्निना दीपयन्ति स्म, पूर्ववदुक्तो ह्रस्वः ॥ ११०

অনুবাদ । হনূমান্ এইরূপে রামলক্ষ্মণকে সন্তুষ্ট করিয়া অবশিষ্ট কপিগুলিকে পুনর্জীবিত করিল । অনন্তর তাহারা তৎক্ষণাৎ অগ্নিপ্রদানে লঙ্কা দগ্ধ করিল । ১১০

**समनाह्यीत्ततः सैन्यममार्जीद्भल्लतोमरम् ।**
**अमार्चीच्चासिपत्र्यादीनवभासत् परश्वधान् ॥ १११**

अन्वयः । ततः सैन्यं समनाह्यीत्, भल्लतोमरं च अमार्जीत्, असिपत्र्यादीन् च अमार्चीत्, परश्वधान् अवभासत् ॥ १११

मल्लिनाथः । समिति । ततो लङ्कादाहानन्तरं सैन्यं कर्त्तृ, समनाह्यीत् सन्नह्यति स्म । णह बन्धने । "नहो धः" । चर्त्त्वम् । हलन्तलक्षणा वृद्धिः । भल्लतोमरं कर्म, अमार्जीदमार्जीत्तेजयामास । मृजूष् शुद्धौ । ऊदित्वादिट्पक्षे "इट ईटि" इति सलोपः । असिपत्र्यादींश्च । 'स्याच्छस्त्री चासिपत्री च क्षुरिका चासिधेनुका' इत्यमरः । अमार्चीत् । इड्भावपक्षे "व्रश—" इत्यादिना षत्वम् । कत्वादि । उभयत्रापि "मृजेर्वृद्धिः" । परश्वधान् परशूंश्चावभासयामास । भ्राजादिविकल्पादुपधाह्रस्वः ॥ १११

भरतः। समनाह्यीदित्यादि। ततोऽनन्तरं रावणस्य सैन्यं समनाह्यीत् सन्नद्धम्। णह बन्धे, अनिट्त्वात् द्विः, नशो षङ्भौ। भल्लं तोमरञ्च असिम् अमार्जीत् शोधितवत्। मृजलृष शुद्धौ। ऊदित्वादिट्, मृजोऽकङितीति द्विः। असिपत्र्यादीन् खड्गादींश्च अमार्जीत्। इणोऽभावपक्षे रूपं, मृक्षाजिति षङ्, षढोः कः। परश्वधान् अवभासत्। भासृङ् दीप्तौ। णयन्तादङ्। धाजभासेति ह्रस्वाभावपक्षे रूपम्। अभासीश्चेति पाठे—भातेरन्तर्भूतणार्थत्वम्॥ १११

অনুবাদ। অনন্তর রাক্ষসসৈন্যদল যুদ্ধের জন্য একত্র দলবদ্ধ হইল। ভল্ল, তোমার ও অসিপত্রী (ছুরিকা) প্রভৃতি অস্ত্রশস্ত্র মাজ্জিত করিতে লাগিল। কুঠার গুলি শিলায় ঘষিতে লাগিল। ১১১

**कुम्भकर्णसुतौ तत्र समनद्धां महाबलौ।**

**निकुम्भश्चैव कुम्भश्च प्रापतां तौ प्लवङ्गमान्॥ ११२**

अन्वयः। तत्र महाबलौ कुम्भकर्णसुतौ समनद्धां, तौ कुम्भः निकुम्भः एव प्लवङ्गमान् प्रापताम् च॥ ११२

मल्लिनाथः। कुम्भेति। तत्र सैन्ये महाबलौ कुम्भकर्णसुतौ कुम्भश्चैव निकुम्भश्च समनद्धां संनद्धौ। पूर्ववद्धत्वं ढत्वञ्च। "झष-स्तथोर्धोऽधः"। तौ कुम्भनिकुम्भौ प्लवङ्गमान् प्रापतां प्राप्तौ। लृदित्वादङ्॥ ११२

भरतः। कुम्भकर्णेत्यादि। निकुम्भकुम्भौ कुम्भकर्णसुतौ महाबलौ सन्नद्धौ। णहेः पूर्ववत् षङ्। तौ वानरान् प्राप्तौ। आप् लृ व्यौकि व्यापने। लृदित्वात् ङः॥ ११२

অনুবাদ। সেই সৈন্য মধ্যে মহাবল কুম্ভকর্ণের পুত্রদ্বয় কুম্ভ ও নিকুম্ভ যুদ্ধার্থ মিলিত হইয়া কপিসৈন্যের নিকটে উপস্থিত হইল। ১১২

**अगोपिष्टां पुरीं लङ्कामगो[गो]प्तां रक्षसां बलम्।**

**अत्याक्तामायुधानीकमनैष्टां च क्षयं द्विषः॥ ११३**

अन्वयः। (तौ) लङ्कां पुरीम् अगोपिष्टां, रक्षसां बलम् अगोप्तां, आयुधानीकम् अत्याक्तां, द्विषः क्षयम् अनैष्टाम् च॥ ११३

मल्लिनाथः। अगोपिष्टामिति। तौ लङ्कां पुरीमगोपिष्टां गुप्तवन्तौ। गुपू रक्षणे। ऊदित्वाद्विकल्पादिट्। "नेटि" इति वृद्धि-प्रतिषेधः। रक्षसां बलमगोप्ताम्। इड़भावपक्षे "झलो झलि" इति

सलोपः। आयुधमनीकमायुधसमूहमत्याक्षां त्यक्तवन्तौ च। त्यज विसर्गे। हलन्तलक्षणा वृद्धिः। "झलो झलि" इति सलोपः। द्विषः शत्रून् क्षयमनैष्टां नीतवन्तौ च। णीञ् प्रापणे। सिचि वृद्धिः॥११३

भरतः। अगोपिष्टामित्यादि। तौ लङ्कां पुरीम् अगोपिष्टां रक्षितवन्तौ। रक्षसां सैन्यञ्च अगोप्तां, गुपू रक्षे, वाऽऽये इति आयाभावपक्षे ऊदित्त्वादिट्। अनिट्पक्षे मृजवद्वृद्धिः। झलो झलीति सिलोपः। आयुधानीकम् अस्त्रसमूहं त्यक्तवन्तौ, कपीनामुपरीत्यर्थात्। त्यजो हानौ। द्विषः शत्रून् क्षयं नीतवन्तौ। णीञध्ना सौ वृद्धिः॥ ११३

অনুবাদ। তাহারা লঙ্কা নগরী ও রাক্ষস সৈন্য রক্ষা করিতেছিল, এক্ষণে অস্ত্রনিকর নিক্ষেপ করিয়া শত্রুদিগকে ক্ষয় করিতে লাগিল। ১১৩

**अकोकूयिष्ट तत्सैन्यं प्रपलायिष्ट चाकुलम्।**
**अच्युतच्च क्षतं रक्तं हतं चाध्यशयिष्ट गाम्॥ ११४**

अन्वयः। तत् सैन्यम् अकोकूयिष्ट, आकुलं च प्रपलायिष्ट, क्षतं (सत्) रक्तं च अच्युतत्, हतं च (सत्) गाम् अध्यशयिष्ट॥ ११४

मल्लिनाथः। अकोकूयिष्टेति। तत्सैन्यं कपिबलमकोकूयिष्ट भृशं चुक्रोश। कुङ् शब्दे। "धातोरेकाचः—" इति भृशार्थे यङ्। "सन्यङोः" इति द्विर्वचनम्। "गुणो यङ्लुकोः" इत्यभ्यासस्य गुणः। "न कवतेर्यङि" इति चुत्वप्रतिषेधः। "अकृत्सार्वधातुकयोर्दीर्घः।" यङन्तात्लुङि तङि सिच् इट्। "उपसर्गस्यायतौ" इति लत्वम्। क्षतं प्रहृतं सत् रक्तमच्युतत् क्षरितं च। श्चुतिर् क्षरणे। "इरितो वा" इति विकल्पादङ्। हतं सत् गां भुवमध्यशयिष्ट भुवि शयितमित्यर्थः। "अधिशीङ्—" इति कर्मत्वम्॥ ११४

भरतः। अकोकूयिष्टेत्यादि। तत् सैन्यं भयात् अकोकूयिष्ट भृशं शब्दं चकार। कुङ् शब्दे। भृशाभीक्ष्ण्येत्यादिना यङ्, कोश्चुर्वेति सेः पाक्षिकं चुत्वम्, अत्र तदभावः। दीर्घः अकोऽकृत्सार्वधातुकयोरिति। आकुलं तत् सैन्यं प्रपलायितञ्च, क्षतं खण्डितं तत् सैन्यं रक्तम् अच्युतत् क्षरति स्म, इरित्त्वात् ङः। हतं सत् गाम् अध्यशयिष्ट भूमौ पतितम्। कर्मक्रियेति अधिशीङ आधारस्य कर्मत्वम्॥ ११४

অনুবাদ। সেই কপিসৈন্য অতিশয় রব করিল এবং আকুল হইয়া পলায়ন করিতে লাগিল। তাহারা প্রহৃত হইয়া রক্ত বমন করিল এবং নিহত হইয়া ভূতলে শয়ন করিল। ১১৪

**अङ्गदेनाहसातां तौ युध्यकम्पनकम्पनौ।**
**अभ्य[त्या]र्दीद्वालिन: पुत्रं प्रजङ्घोऽपि समत्सर: ११५**

अन्वय:। तौ अकम्पनप्रकम्पनौ युधि अङ्गदेन अहसातां, समत्सर: प्रजङ्घ: अपि वालिन: पुत्रम् अभ्यर्दीत्॥ ११५

मल्लिनाथ:। अङ्गदेनेति। तौ प्रसिद्धावकम्पनकम्पनौ युध्यङ्गदेनाहसातां हतौ। हन्ते: कर्मणि लुङि सिच: कित्त्वादनुनासिकलोप:। विकल्पादघादेशाभाव:। अथ समत्सर: सवैर: प्रजङ्घो वालिन: पुत्रमङ्गदमभ्यर्दीत् प्रजहार। अर्द हिंसायाम्॥ ११५

भरत:। अङ्गदेनेत्यादि। तौ अकम्पनकम्पनौ युधि संग्रामे अङ्गदेन हतौ, हन्ते: कर्मणि द्विवचनं, हनवधस्तौति मे पक्षे वधादेशाभाव:, अनतनाद्यनिमामिति नस्य लोप:। अनन्तरं प्रजङ्घो राक्षसो मात्सर्यान्वित: सन् वालिन: पुत्रम् अत्यार्दीत् जघान। अर्दश्च वधं। आभिमुख्येन जगाम इति वा। अर्द यातनागतियाचने। "अथ मत्सर:, अन्यशुभद्वेषे तद्वति मात्सर्य कृपणे क्रुधि" इति विश्व:॥ ११५

অনুবাদ। অঙ্গদ যুদ্ধকালে প্রসিদ্ধ অকম্পন ও কম্পনকে বধ করিল, অনন্তর প্রজঙ্ঘ রাক্ষস ও মৎসর সহকারে অঙ্গদকে অত্যন্ত পীড়িত করিল। ১১৫

**तस्याप्यत्रेभिदिष्टासौ मूर्धानं मुष्टिनाङ्गद:।**
**अहार्षीच्च शिर: क्षिप्रं यूपाक्षस्य निराकुल:॥ ११६**

अन्वय:। तस्य अपि मूर्द्धानम् असौ अङ्गद: मुष्टिना अभेभिदिष्ट, (तथा) निराकुल: (सन्) क्षिप्रं यूपाक्षस्य शिर: च अहार्षीत्॥ ११६

मल्लिनाथ:। तस्येति। तस्य प्रजङ्घस्यापि मूर्धानमसावङ्गदो मुष्टिनाबेभिदिष्टात्यर्थं भिन्नवान्। भिदेर्यङन्ताल्लुङि तङि सिचि इट्। अल्लोपयलोपौ। तथा निराकुल: सन् क्षिप्रं यूपाक्षस्य शिरश्चाहार्षीत् जहार। हरतेर्लुङि सिचि वृद्धि:॥ ११६

भरत:। तस्येत्यादि। असौ अङ्गद: तस्यापि प्रजङ्घस्यापि मूर्द्धानं मुष्टिना अत्यर्थं भिनत्ति स्म। भिदेर्यङ्लुकि सि:। निराकुलो नाम वानरो धूम्राक्षस्य शिर: क्षिप्रं शीघ्रं हृतवान्। निराकुल इति अङ्गदस्य विशेषणं केचित् आहु:॥ ११६

অনুবাদ। অঙ্গদ মুষ্টিপ্রহারে সেই প্রজঙ্ঘের মস্তক চূর্ণ-চূর্ণ এবং নিরুদ্বিগ্নচিত্তে তৎক্ষণাৎ যূপাক্ষের মস্তকও ছিন্ন করিল। ১১৬

शरीरं लोहिताक्षस्य न्यभाङ्क्षीद्दिविदः क्षितौ [स्तदा]
क्रुद्धः कुम्भस्ततोऽभैत्सीन्मैन्दं सद्दिविदं शरैः ॥ ११७

अन्वयः। द्विविदः लोहिताक्षस्य शरीरं क्षितौ न्यभाङ्क्षीत्, ततः क्रुद्धः कुम्भः सद्विविदं मैन्दं शरैः अभैत्सीत् ॥ ११७

मल्लिनाथः। शरीरमिति। द्विविदो नाम वानरो लोहिताक्षस्य नाम राक्षसस्य शरीरं क्षितौ न्यभाङ्क्षीत् क्षितौ निपात्य बभञ्जेत्यर्थः। ततोऽनन्तरं कुम्भः क्रुद्धः सन् सद्दिविदं मैन्दं मैन्दद्विविदौ वानरौ भ्रातरौ शरैरभैत्सीद्बिभेद। अङ्गभावप्रत्ते हलन्तलक्षणा वृद्धिः ॥ ११७

भरतः। शरीरमित्यादि। द्विविदो नाम वानरो लोहिताक्षस्य शरीरम् अभाङ्क्षीत्। भनञ्जो धौ मोटने। ततोऽनन्तरं कुम्भो राक्षसः कुपितः सन् द्विविदेन सह मैन्दं कपिं शरैर्बभेद। भौ भिदिर्भिदि ॥ ११७

অনুবাদ। দ্বিবিদ নামক কপি লোহিতাক্ষ রাক্ষসকে ভূতলে পাতিত করিয়া তাহার দেহ ভগ্ন করিল। তদনন্তর কুম্ভরাক্ষস ক্রুদ্ধ হইয়া দ্বিবিদের সহিত তাহার ভ্রাতা মৈন্দ কপিকেও শরজালে বিদ্ধ করিল। ১১৭

अ[ा]घूर्णिष्टां क्षतौ क्ष्मां च तावाशिश्रियतामुभौ।
मातुलौ विह्वलौ दृष्ट्वा कुम्भं यालिसुतो नगैः ॥ ११८
प्रौर्णावीच्छरवर्षेण तानपीप्तोन्निशाचरः।
वानरानैजिहद्रामस्तूर्णं रक्षितुमङ्गदम् ॥ ११९

अन्वयः। तौ उभौ क्षतौ अघूर्णिष्टां, क्ष्मां च अशिश्रियतां वालिसुतः विह्वलौ मातुलौ दृष्ट्वा कुम्भं नगैः प्रौर्णावीत्। निशाचरः शरवर्षेण तान् अपीप्तोत्, अथ रामः अङ्गदं रक्षितुं तूर्णं वानरान् ऐजिहत् ॥ ११८॥ ११९

मल्लिनाथः। अघूर्णिष्टामिति। तावुभौ मैन्दद्विविदौ क्षतौ शरक्षतौ सन्तौ अघूर्णिष्टां भ्रान्तवन्तौ, क्ष्मामशिश्रियतां श्रितौ। श्रयतेः "णिश्रि—" इत्यादिना चङि इयङादेशः। अथ वालिसुतोऽङ्गदो विह्वलौ मूढौ मातुलौ मातृभ्रातरौ। 'मातुर्भ्राता तु मातुलः' इत्यमरः। "पितृव्यमातुल—" इत्यादिना निपातः। दृष्ट्वा

कुम्भं नगैर्वृक्षैः प्रोर्णावीत् इत्युत्तरश्लोकादाकृष्य योज्यम्। आच्छादयामासेत्यर्थः। ऊर्णुञ् आच्छादने। "विभाषोर्णोः" इति ङित्वाभावपक्षे "ऊर्णोतेर्विभाषा" इति पाक्षिकवृद्धिः॥ ११८

मल्लिनाथः। प्रोर्णावीदिति। निशाचरः शरवर्षेण तान् नगानपौहीदपोहितवान् निरस्तवानित्यर्थः। 'उपसर्गादस्यत्यूह्योर्वा वचनम्' इति वा वचनात् परस्मैपदम्। अथ रामोऽङ्गदं रक्षितुं तूर्णं वानरानैजिहत्। ईहेर्णौ चङ्। गतमेतत्॥ ११९

भरतः। आघूर्णिष्टामित्यादि। तौ उभौ वानरौ क्षतौ खण्डितौ सन्तौ घूर्णितौ। घूर्ण भ्रमणे। क्ष्मां भूमिम् आश्रितवन्तौ च। श्रिञ सेवने। शिश्रीयत्। तौ मातुलौ आकुलौ दृष्ट्वा वालिसुतोऽङ्गदः नगैः कुम्भं प्रोर्णावीदित्यग्रिमश्लोकेनान्वयः। ऊर्णु ञ आच्छादने। नुवविष्यामिति वि। न गच्छतीति नगः, इनजनादिति ड, नगोऽनौ वाऽजन्तसीरिति पक्षे आर्द्रत्वाभाव। "शैलवृक्षौ नगावगौ" इत्यमरः। मातुर्भ्राता मातुलो निपातनाम॥ ११८

भरतः। प्रोर्णावीदित्यादि। निशाचरः कुम्भः तान् बाणवृष्ट्या अपौहीत् निरस्तवान्। ऊहङ् तर्के। अपपूर्वं निवारणेऽपि, गेर्वाऽस्योऽर्होढे चेति मस्य पाक्षिकत्वात् पम्। रामश्च अङ्गदं रक्षितुं तूर्णं वानरान् प्रेरयामास। ईहङ चेष्टे। अन्यादङ्॥ ११९

অনুবাদ। মৈন্দ ও দ্বিবিদ বাণে ক্ষত হইয়া ঘুরিতে ঘুরিতে ভূতলে পতিত হইল। অঙ্গদ মাতুলদ্বয়কে বিহ্বল দেখিয়া বৃক্ষনিকরে কুম্ভকে আচ্ছন্ন করিল। নিশাচর শরবৃষ্টিতে নিক্ষিপ্ত বৃক্ষগুলি অপসারিত করিল। তাহার পর রাম অঙ্গদের রক্ষার জন্য ত্বরায় বানরগণকে প্রেরণ করিলেন। ১১৮-১৯

**द्रुतमत्रास्त सुग्रीवो भ्रातृव्यं शत्रुसङ्कटात्।**
**मुष्टिना कौम्भकर्णिं च क्रुद्धः प्राणैरतित्यजत्॥ १२०**

अन्वयः। (सुग्रीवः) भ्रातृव्यं शत्रुसङ्कटात् द्रुतम् अत्रास्त। (सः) क्रुद्धः (सन्) कौम्भकर्णिं मुष्टिना प्राणैः अतित्यजत् च॥ १२०

मल्लिनाथः। द्रुतमिति। भ्रातुरपत्यं पुमान् भ्रातृव्यस्तमङ्गदम्। "भ्रातुर्व्यच्च" इति व्यत्प्रत्ययः। शत्रुसङ्कटात् शत्रुसम्बाधात् द्रुतमत्रास्त अरक्षीत्। त्रैङ् पालने। "आदेचः—" इत्यात्वम्। सिच्। किञ्च क्रुद्धः सन् कौम्भकर्णिं कुम्भं मुष्टिना करणेन प्राणैः प्रयोज्यैरतित्यजत् त्याजयामास। मुष्टिघातेन जघानेत्यर्थः। त्यज विसर्गे। णौ चङ्युपधाह्रस्वः॥ १२०

भरत: । द्रुतमित्यादि । सुग्रीव: तस्मात् शत्रुसङ्कटात् भ्रातृव्यम् अङ्गदं द्रुतमत्राक्षीदरक्षित-वान् । त्रैङ् पालने । भ्रातुरपत्यं भ्रातृव्यो निपातनात् । क्रुद्ध: सन् कुम्भकर्णापत्यं कुम्भं मुष्टिना प्राणान् त्याजयामास । त्यजो हानौ, आत्मादङ् । अत्र त्यजिस्त्यागपूर्विकायां गतौ वर्त्तते, तेन धीऽसौ ओरित्यादिना प्रयोज्यानां प्राणानां कर्म्मत्वम् । आपिप्रलीयमनी शब्दार्थादिभ्योऽन्यस्य योगे प्रयोज्यस्य पचे कर्म्मत्वमिष्यते । प्राणैरिति क्वचित्पाठ: ॥ १२०

अनुवाद । सुग्रीव भ्रातुष्पুত্র অঙ্গদকে শক্র সঙ্কট হইতে সত্বর রক্ষা করিল এবং ক্রুদ্ধ হইয়া মুষ্টিপ্রহারে কুম্ভকর্ণপুত্রের প্রাণ সংহার করিল। ১২০

**निकुम्भो वानरेन्द्रस्य प्राहैषीत् परिघं तत: ।**
**हनूमांश्चापतन्तं तमभाङ्क्षीद्भोगिभीषणम् ॥ १२१**

अन्वय: । तत: निकुम्भ: वानरेन्द्रस्य परिघं प्राहैषीत्, हनूमान् च आपतन्तं भोगिभीषणम् तं ( परिघं ) अभाङ्क्षीत् ॥ १२१

मल्लिनाथ: । निकुम्भ इति । तत: कुम्भमरणानन्तरं निकुम्भो वानरेन्द्रस्य परिघं प्राहैषीत् प्रजघाय । हि गतौ । सिचि वृद्धि: । हनूमानापतन्तं भोगिभीषणं तं परिघमभाङ्क्षीदभनक् । भञ्जो आमर्दने । सिचि हलन्तलक्षणा वृद्धि: । कुत्वषत्वे ॥ १२१

भरत: । निकुम्भ इत्यादि । ततो भ्रातृवधात् निकुम्भ: सुग्रीवस्य कृते परिघं प्रहित-वान् । हि वर्द्धने गतौ, तम् आपतन्तं भोगिभीषणं सर्पवद्भयङ्करं परिघं हनूमान् बभञ्ज । भनक्तेरनिट्त्वात् त्रि: ॥ १२१

অনুবাদ । তাহার পর নিকুম্ভ বানরেন্দ্র সুগ্রীবের উপর পরিঘ অস্ত্র নিক্ষেপ করিল, হনূমান্ও সর্পবৎ আগত অতি ভয়ঙ্কর সেই পরিঘাস্ত্র ভগ্ন করিল। ১২১

**प्रौर्णा[र्णु]वीत्तेजसारातिरर[रा]सीच्च भयङ्करम् ।**
**ग्रीवां चास्य तथाक्राक्षीदजिजीवद्यथा न स:[तम्] ॥**

अन्वय: । तेजसा अरातिं ( निकुम्भं ) प्रौर्णवीत्, भयङ्करं अरसीत् च अस्य ग्रीवां तथा अक्राक्षीत् च यथा न स अजिजीवत् ॥ १२२

मल्लिनाथ: । प्रौर्णवीदिति । तेजसा प्रतापेनारातिमरिं निकुम्भं प्रौर्णवीत् प्राच्छादीच्च । ऊर्णोतेर्लुङि इटो ङित्वाभावपक्षे वृद्धिविकल्पात्पक्षे गुण: । अत्रायं विवेक:—"ङित्त्वे गुणवृद्धी

स श्रौर्णावीदौर्णवीदिति। ङित्वे तु तदभावे स्यात् ऊर्णवीत् ऊर्णुवीदिति। इति वैरूप्यमूर्णोतिवर्ण्यते शाब्दिकैरिति॥'' भयङ्करं यथा भवति तथा अरसीदनादीच्च। अस्य निकुम्भस्य ग्रीवां तथा तेन प्रकारेणाक्राक्षीदाकृष्टवांश्च। कृष विलेखने। "अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्'' इति पक्षे अमागमः। हलन्तलक्षणा वृद्धिः। स राक्षसो यथा येन प्रकारेण नाजिजीवत् नाजीवदित्यर्थः। ग्रीवां भङ्क्त्वा हतवानित्यर्थः। णिजर्थोऽत्र न विवक्षितः। जीवेर्णौ चङि भ्राजादिना विकल्पान्नोपधाह्रस्वः॥ १२२

भरतः। प्रौर्णुवीदित्यादि। हनुमान् तेजसा अरिं निकुम्भं प्रौर्णुवीत् अभिभूतवान्। ऊर्णुञ् आच्छादने। ऊर्णोतेर्विभाषेति वृद्धिविकल्पः। अनुनिष्यामिति सुत्र। कृचिद् गुणवान् इति पाठः। भयङ्करं यथा स्यात् तथा शब्दं कृतवान्। रस शब्दे। अस्य निकुम्भस्य ग्रीवां तथा आकृष्टवान्, यथा तं न जीवयामास, ग्रीवाम् आकृष्य जघान इत्यर्थः। कृषो आकृषि: कृषमृशस्पृशेति पाक्षिकः सिः, वर्द्धोऽकिदिति च्छदः, अनिमत्वादवृद्धिः, जीव स्य प्राणे, अन्तादङ्, भ्राजभासभासेति पक्षे ह्रस्वः॥ १२२

অনুবাদ। হনুমান্ স্বীয় তেজে অরাতি নিকুম্ভকে আচ্ছন্ন করিয়া ভয়ঙ্কর গর্জ্জন করিতেছিল এবং যাহাতে সে জীবিত না থাকে সেই প্রকারে তাহার গ্রীবা আকর্ষণ করিল। ১২২

समगत हरि[कपि] सैन्यं संमदेनातिमात्रं
विटपि[प]हरिणनाथः सिद्धिमीहिष्ट नित्याम्।
नृपतिमतिररंस्त प्राप्तकामेव हर्षा-
द्रजनिचरपतीनां संततोऽतायि शोकः॥ १२३

इति भट्टिकाव्ये तिङ्काण्डे लुङ्विलसितो नाम
पञ्चदशः सर्गः॥ १५

अन्वयः। हरिसैन्यम् अतिमात्रं सम्मदेन समगत, विटपिहरिणनाथः सिद्धिम् नित्यां ईहिष्ट ; नृपतिमतिः प्राप्तकामा इव हर्षात् अरंस्त, रजनिचरपतीनां शोकः सन्ततः (सन्) अतायि॥ १२३

मल्लिनाथः। समगतेति। हरिसैन्यं कपिसेना अतिमात्रं सम्मदेन कुम्भोत्पीडा सह समगत दुर्जयविजयादिति भावः। "समो गम्यृच्छि—'' इत्यादिना सम्पूर्वादकर्मकाल्लुङि "वा गमः'' इति

পক্ষে সিচঃ কিত্ত্বাদনুনাসিকলোপঃ। "হ্রস্বাদঙ্গাৎ" ইতি সিচো লুক্। বিটপিহরিগণনাথঃ শাখামৃগপতিঃ সুগ্রীবঃ সিদ্ধিং কার্য্যসিদ্ধিং নিত্যামবশ্যম্ভাবিনীমৌহিষ্ট বিতর্কিতবান্। 'বিতর্কয়ত্যূহয়তি' ইতি ভট্টমল্লঃ। ঊহ বিতর্কে। লুঙি তঙি সিচ ইট্। আড়্বৃদ্ধিঃ। নৃপতির্মতিঃ রামচিত্তবৃত্তিঃ প্রাপ্তকামেব সম্পন্নমনোরথেব হর্ষাদুল্লা-হাদরংস্ত সমতোষীৎ। রমেঃ সিচঃ কিত্ত্বান্নানুনাসিকলোপঃ। রজনিচরপতীনাং রাবণাদীনাং শোকঃ সন্ততোঽবিচ্ছিন্নঃ সমতায়ি বৃদ্ধে। তায়ৃ সন্তানপালনয়োঃ। সন্তানোঽত্র বৃদ্ধিঃ। অন্যথা সন্ততশব্দেন পৌনরুক্ত্যাৎ। "দীপজন—" ইত্যাদিনা কর্ত্তরি লুঙি তঙি চ্লেশ্চিণাদেশঃ॥ ১২৩

ইতি শ্রীপদবাক্যপ্রমাণপারাবারপারীণশ্রীমহামহোপাধ্যায়কোলা-
চলমল্লিনাথসূরিবিরচিতে ভট্টিকাব্যব্যাখ্যানে সর্ব-
পথীনাখ্যানে লুঙ্‌বিলাসো নাম
পঞ্চদশঃ সর্গঃ॥ ১৫

ভরতঃ। সমগতেত্যাদি। কপিসৈন্যং সম্মোদেন হর্ষেণ অতিমাত্রম্ অত্যর্থং সঙ্গতং বৈরি-নাশাৎ। সমো গম্যৃচ্ছীতি সম্, ইগঙ্‌মন্ঠীতি পক্ষে সঃ কিত্ত্বে, বনতনাদীনামিতি মলোপে হ্রস্বাদিতি সিলোপঃ। বিটপিহরিগণানাং বানরাণাং নাথঃ সুগ্রীবঃ নিত্যাম্ অবশ্যম্ভাবিনীং কার্য্যসিদ্ধিং জ্ঞাতবান্। ঊহ ঙ্ তর্কে। নৃপতেঃ রামস্য মতিঃ প্রাপ্তকামেব শত্রুবধে সীতাঞ্চ প্রাপ্তবতীতি হর্ষাৎ রমতে স্ম। রমু ঙ্ ঞৌ ক্রীড়ে। রজনিচরপতীনাং রাবণেন্দ্রজিদাদীনাং সন্ততোঽবিচ্ছিন্নঃ শোকো বর্দ্ধতে স্ম। তায়ৃ ঙ্ পালনসন্তত্যোঃ, পদস্তনীণ্ ঘে ইত্যাদিনা পাক্ষিক ইণ্। অপ্যায়ীতি পাঠে তু—ও প্যায়ী ঙ্ বৃদ্ধৌ॥ ১২৩

ইতি হরিহরখানবংশসম্ভবগৌরাঙ্গমল্লিকাত্মজশ্রীভরতসেনকৃতায়াং
মুগ্ধবোধিন্যাং ভট্টিটীকায়াং কুম্ভকর্ণাদিবধো নাম
- পঞ্চদশঃ সর্গঃ॥ ১৫

অনুবাদ। কপিসৈন্য অতিশয় আনন্দে একত্র 'মিলিত হইল, কপিপতি সুগ্রীব নিশ্চয় কার্য্যসিদ্ধি হইবে বলিয়া মনে মনে বিচার করিয়া স্থির করিল। রামচন্দ্রের চিত্তবৃত্তি সকল মনোরথপূর্ণ প্রায় বুঝিয়া যেন আনন্দে পূর্ণ হইল। নিশাচরপতি রাবণ প্রভৃতির শোক অবিচ্ছিন্নভাবে বৃদ্ধি পাইল। ১২৩

পঞ্চাদশ সর্গ সমাপ্ত হইল।

---

## षोड़शः सर्गः ।

ततः प्ररुदितो राजा रक्षसां हतबान्धवः ।
किं करिष्यामि राज्येन सीतया किं करिष्यते ॥ १

अन्वयः । ततः हतबान्धवः रक्षसां राजा प्ररुदितः, (अहं) राज्येन किं करिष्यामि सीतया किं करिष्यते ॥ १

मल्लिनाथः । अथ लृड्विलासमधिकृत्याह—तत इत्यादि । ततो निकुम्भवधानन्तरं हतबान्धवो रक्षसां राजा रावणः प्ररुदितः प्रकर्षेण रोदितुं प्रारब्धवानित्यर्थः । आदिकर्मणि क्तः । "कर्त्तरि च" इति कर्त्तरि क्तः । प्रागिन्द्रजिद्विजयाद्रोदनप्रकारमेवाह—अथ राज्येन किं करिष्यामि सीतया वा किं करिष्यते । करोतेः कर्मणि लृट् । उभयत्र न किञ्चिदित्यभिप्रायः । सामान्येन सर्वत्र "लृट् शेषे च" इति लृट् । क्वचिदन्यत्रापि वक्ष्यते । सर्वत्र "स्यतासी लृलुटोः" इति स्यप्रत्ययः ॥ १

भरतः । अथ तौ प्रदर्श्यते, तस्याः पाणिनिमते लृट्संज्ञा । तत इत्यादि । तदनन्तरं हतबान्धवो रक्षसां राजा रावणः प्ररुदितः क्रन्दितुमारब्धवान् । आदिढ़े क्तः । रोदनमेवाह—अहं राज्येन किं करिष्यामि ? अहं सीतया च किं करिष्ये ? बान्धवनाशात् सर्वं निष्फलमेव । क्वक उभयपदित्वं ञित्वात् । स्यस्ईन इति इम । सीतया किं करिष्यते इति पाठे—मयेति शेषः, सीतया कार्यं वा ॥ १

অনুবাদ। নিকুম্ভ বধের পর হতবান্ধব পরবর্ত্তী কথায় বিলাপ করিতে লাগিল, রাক্ষসপতি রাবণ 'হায়! এখন রাজ্য বা সীতা দ্বারা আর কি করিব। ১

অতিকায়ে হতে বীরে প্রোৎসহিষ্যে ন জীবিতুম্ ।
ক্ষেপয়িষ্যতি কঃ শত্রূন্ কেন জায়িষ্যতে যমঃ ॥২

অন্বয়ঃ। বীরে অতিকায়ে হতে জীবিতুং ন প্রোৎসহিষ্যে, কঃ শত্রূন্ ক্ষেপয়িষ্যতি, কেন যমঃ জায়িষ্যতে ॥ ২

মল্লিনাথঃ। অতীতি। বীরেঽতিকায়ে হতে সতি জীবিতুং ন

मोत्सहिष्ये न शक्ष्यामि। "शकधृष—" इत्यादिना तुमुन्। तथा हि कः शक्रं ह्रेपयिष्यति व्रीड़यिष्यति। ह्री लज्जायाम्। "अर्त्तिह्री—" इत्यादिना पुगागमः। पुगन्तगुणः। अद्य केन यमोऽन्तको जायिष्यते जेष्यते। जि जये। कर्म्मणि लृट्। "स्यसिच्सीयुट्—" इत्यादिना चिण्वदिटि वृद्धिः॥ २

भरतः। अतिकाय इत्यादि। अतिकाये इते सति जीवितुम् अहम् उत्साहं न करिष्यामि। तेन विना कः शक्रं लज्जयिष्यति? ह्री निलज्जे। ह्रीवीति पण्। केन यमो जेतव्यः जि जये च, इनग्रहदृशश्च इति पाक्षिकौ णिण्॥ २

अनुवाद। वीর অতিকায় নিহত হওয়ায় আর আমার জীবন ধারণে উৎসাহ নাই। এখন ইন্দ্রকে কে লজ্জা দিবে? যমকেই বা কে জয় করিবে? ২

**अतिकायादृते पाशं को वा छेत्स्यति वारुणम्।**
**रावणं मंस्यते को वा स्वयम्भूः कस्य तोक्ष्यति॥३**

अन्वयः। अतिकायात् विना वारुणं पाशं को वा छेत्स्यति, को वा रावणं मंस्यते, स्वयम्भूः कस्य तोक्ष्यति॥ ३

मल्लिनाथः। अतीति। अतिकायादृते तं विनेत्यर्थः। "पृथग्विना—" इत्यादिना पक्षे पञ्चमी। वरुणस्येमं वारुणं पाशं पाशायुधं को वा छेत्स्यति त्रोटयिष्यति। को वा रावणं मंस्यते ज्ञास्यते गणयिष्यतीत्यर्थः। मन ज्ञाने। स्वयम्भूर्ब्रह्मा कस्य तोक्ष्यति प्रसत्स्यति। स्वयंभूसन्तोषणसमर्थः क इत्यर्थः। तुष तुष्टौ। लृटि स्म। "षढोः कः सि" इति कत्वम्। "इण्कोः" इति षत्वम्॥ ३

भरतः। अतिकायादित्यादि। अतिकायेन विना को वा वरुणपाशं छेत्स्यति छिदिर् धौ अ छेदे। अन्यारादितरर्तेत्यादिना विनार्थेऽपि पञ्चमी। को वा रावणं पूजयिष्यति? मन्धौ ज्ञ च, चकाराद् वधे, अनेकार्थत्वात् पूजायामपि। स्वयम्भूः कस्य प्रीतिं जनयिष्यति? तुष धौ जि च, चकारात् तुष्टौ, षढोः कः॥ ३

অনুবাদ। "হায়! অতিকায় বিনা কে বরুণের পাশ ছেদন করিবে! এখন আর কেই বা আমাকে রাবণ বলিয়া সম্মান করিবে? ব্রহ্মাকেই বা কে (তপস্যায়) সন্তুষ্ট করিবে?। ৩

श्लाघिष्ये केन, को बन्धूँनेष्यत्युन्नतिमुन्नतः ।
कः प्रेष्यति पितॄन् काले कृत्वा कत्थिष्यते न कः ॥

अन्वयः । केन श्लाघिष्ये, उन्नतः कः बन्धून् उन्नतिं नेष्यति, काले कः पितॄन् प्रेष्यति, कृत्वा न कः कत्थिष्यते ॥ ४

मल्लिनाथः । श्लाघिष्य इति । अथाहं केन श्लाघिष्ये केन मया श्लाघ्यो भविष्यामि । उन्नतो गुणोन्नतः, को बन्धूनुन्नतिं नेष्यति । कुलकीर्त्तिकरः क इत्यर्थः । काले परोक्षकाले कः पितॄन् प्रेष्यति तर्पयिष्यति । प्रीञ् तर्पणे । लृटि स्यप्रत्यये गुणः । कृत्वा को न कत्थिष्यते कत्थनं न करिष्यति । महत्कर्म्म कृत्वापि अविकत्थन इत्यर्थः ॥ ४

भरतः । श्लाघिष्य इत्यादि । केन पुत्रेणाहं श्लाघ्यो भविष्यामि ? कर्म्मणि रूपम् । केन आत्मानं श्लाघ्य कथयिष्यामि ? इत्यर्थे कर्त्तरि रूपम् इत्यन्ये । क उन्नतः सन् बन्धून् उन्नतिं प्रापयिष्यति ? कः काले पितॄन् तर्पयिष्यति ? प्रीञ तर्पणे । महदपि कार्य्यं कृत्वा आत्मनः श्लाघां न करिष्यति ? अतिकायादिनेति सर्व्वत्र योज्यम् । कत्थ ङ श्लाघे ॥ ४

অনুবাদ। অতিকায় বিনা কোন পুত্র আমাকে শ্লাঘ্য করিবে? গুণান্নত আর কে আছে, বন্ধুবান্ধবকে উন্নীত করিবে? ইহার পর কে পিতৃতর্পণ করিবে। কেই বা মহৎকার্য্য করিয়া শ্লাঘা না করিবে। ৪

उद्यंस्यते[ति] हरिर्वज्रं विचरिष्यति निर्भयः ।
भोक्ष्यते यज्ञभागांश्च शूरमानं च वक्ष्यति ॥ ५

अन्वयः । हरिः वज्रं उद्यंस्यते, निर्भयः विचरिष्यति, यज्ञभागान् च भोक्ष्यते, शूर-मान च वक्ष्यति ॥ ५

मल्लिनाथः । उदिति । हरिरिन्द्रो वज्रमुद्यंस्यते उन्नमयिष्यति । "समुदाङ्भ्यो यमोऽग्रन्थे" इति तङ् । क्वचित्पुस्तकेषु परस्मैपद-पाठः प्रामादिकः । अद्य निर्भयो विचरिष्यति । यज्ञभागांश्च भोक्ष्यते अभ्यवहरिष्यति । "भुजोऽनवने" इति तङ् । शूरमानं शूराभिमानं च वक्ष्यति वोढा ॥ ५

भरतः । उद्यंस्यतीत्यादि । हरिः इन्द्रो मां प्रति वज्रम् उत्थापयिष्यति । अतिकायस्य

स्वतन्त्रो गमिष्यति, आसीयान् यज्ञभागाय भविष्यति। भुजीऽमने धृति मम्। शूरमानं यशोऽहमिति अहङ्कारं धारयिष्यति। वहे आं प्रापणे ' ष्टी ढः, षष्ठी: कः। पूर्वं सर्वमिदम् अतिकायेन निराकृतमिति भावः॥ ५

অনুবাদ। ইন্দ্র এখন আমাকে প্রহার করিতে বজ্র উদ্যত করিবে। নির্ভয়চিত্তে ইতস্ততো বিচরণ করিয়া স্বকীয় যজ্ঞভাগ গ্রহণ করিবে এবং বীরত্বাভিমান প্রকাশ করিবে। ৫

रविस्तप्स्यति निःशङ्कः[ङ्कं]वास्यत्यनियतं मरुत्।
न[नि]व[र्वं]र्त्स्यंत्यृतुसंघातः स्वेच्छयेन्दुरुदेष्यति॥६

अन्वयः। रविः निःशङ्कः तप्स्यति, मरुत् अनियतं वास्यति, ऋतुसङ्घातः न वर्त्स्यति, इन्दुः स्वेच्छया उदेष्यति॥ ६

मल्लिनाथः। रविरिति। रविर्निःशङ्कस्तप्स्यति तीव्रं द्योतिष्यते न तु पूर्ववन्मन्दमित्यर्थः। तप संतापे। मरुत् वायुरप्यनियतं स्वच्छन्दं वास्यति संचरिष्यति न तु पूर्ववन्मन्दमेवेत्यर्थः। ऋतूनां संघातः सदा संभूयवृत्तिर्न वर्त्स्यति न वर्त्तिष्यते। क्रमवृत्तिर्भविष्यतीत्यर्थः। "वृद्भ्यः स्यसनोः" इति वा परस्मैपदम्। "न वृद्भ्यश्चतुर्भ्यः" इतीट्प्रतिषेधः। इन्दुश्च स्वेच्छयोदेष्यति न तु सदा सम्पूर्ण इत्यर्थः॥ ६

भरतः। रविरित्यादि। रविः सूर्य्यो निःशङ्कं यथा स्यात् तथा तप्स्यति द्योतिष्यते। वायुः सततं गमनं करिष्यति। वा न गमनहिंसयोः। ऋतुसङ्घातः षण्णाम् ऋतूनां मिलनं ममोद्याने निवृत्तो भविष्यति। वृत भ्वी वर्त्तने। वृद्भ्यो नेमपे इति इण्निषेधः, अत एव पम्। चन्द्र उदय करिष्यति स्वेच्छया, न तु मम इच्छया। इण् गतौ॥ ६

অনুবাদ। এখন সূর্য্য নির্ভয়চিত্তে কিরণজাল বিস্তার করিবে; সর্ব্বদাই বায়ু প্রবাহিত হইবে। বসন্তাদি ঋতু সকল পর্য্যায়ক্রমে কার্য্য করিবে এবং চন্দ্র ইচ্ছানুসারে উদিত হইবে। ৬

तीव्रं स्यन्दिष्यते मेघैरुग्रं वर्त्तिष्यते यमः।
अतिकायस्य मरणे किं भविष्यति नान्यथा॥ ७

मल्लिनाथः । 'तीव्रमिति । मेघैस्तीव्रं स्यन्दिष्यते वर्षिष्यते न तु रजःशमनमात्रमित्यर्थः । स्यन्दू प्रस्रवणे । भावे लृट् । यमोऽन्तकश्चोग्रं वर्त्तिष्यते सर्वान्मारयिष्यतीत्यर्थः । तथाहि—अतिकायस्य मरणे सर्वसाकल्ये सतीति भावः । किं नामान्यथा न भविष्यति सर्वं भविष्यत्येव नियन्तुरभावादित्यर्थः ॥ ७

भरतः । तीव्रमित्यादि । मेघै तीव्रम् अतिशयं स्यन्दिष्यते वर्षिष्यते, पूर्वं हि धूलिप्रशमनं यावदेव मत्पुरे वृष्टिरसीदिति भावः । स्यन्दू ङ् स्रुतौ । भावे रूपम् । यम उग्रं वर्त्तिष्यते । अतिकायस्य मरणे सर्वमिदं विपरीतं किं न भविष्यति ? किं करिष्यन्तीति पाठे इन्द्रादयः इति शेषः ॥ ७

অনুবাদ । এখন মেঘ সকল অতি তীব্র বর্ষণ করিবে ; কৃতান্ত কঠোর হইয়া প্রাণিবিনাশ করিবে ; অধিক কি অতিকায়ের মৃত্যুতে কিসেরই বা বিপরীত না ঘটিবে ? ৭

**उन्मीलिष्यति चक्षुर्मे वृथा यद्विनयागतम् ।**
**आज्ञालाभोन्मुखं नम्रं न द्रक्ष्यति नरान्तकम् ॥ ८**

अन्वयः । वृथा मे चक्षुः उन्मीलिष्यति, यत्—विनयागतम् आज्ञालाभोन्मुखं नम्रं नरान्तकं न द्रक्ष्यति ॥ ८

मल्लिनाथः । उदिति । किं च वृथा मे चक्षुरुन्मीलिष्यति यद्यस्माद्विनयेनागतमाज्ञालाभोन्मुखं कैङ्कर्योत्सुकमित्यर्थः । नम्रं प्रणतं नरान्तकं न द्रक्ष्यति । अतो निष्फलं चक्षुरुन्मेषणमिति भावः ॥ ८

भरतः । उन्मीलिष्यतीत्यादि । मम नेत्रं वृथा उन्मीलिष्यति । मील निमिषे । यत् यस्मात् विनयेन आगतम् आज्ञालाभाय उन्मुखं नम्रं नरान्तकं न द्रक्ष्यति । दृशिरो प्रेक्षे । वर्तोऽकिदिति स्रद्रः, शक्तागिति षङ् । षढोः कः ॥ ८

অনুবাদ । এখন আমার চক্ষুঃ বৃথা উন্মীলিত হইবে, কেন না সবিনয়ে উপস্থিত, আজ্ঞালাভের জন্য উৎসুক এবং বিনীত নরান্তক পুত্রকেও আর দেখিতে পাইবে না । ৮

**धिङ् मां त्रिशिरसा नाहं संदर्शिषेऽद्य यत्पुनः ।**
**[illegible]**

अन्वयः। मां धिक्, यत—पुनः अद्य त्रिशिरसा अहं न सन्दर्क्ष्ये, तस्मिन् पञ्चत्वम् आगते केन द्विषः घानिष्यन्ते ? ॥ ९

**मल्लिनाथः।** धिगिति। मामभाग्यं धिक् योऽहमद्य त्रिशिरसा पुनर्न सन्दर्शिष्ये न संद्रक्ष्ये। दृशेः कर्म्मणि लृटि चिण्वदिटि टेरेत्वम्। तस्मिन् त्रिशिरसि पञ्चत्वमागते मृते सति केन द्विषो घानिष्यन्ते हनिष्यन्ते। अत्रापि चिण्वदिट्॥ ९

भरतः। धिङ्मामित्यादि। मां धिक्, यस्मात् अद्य पुनः अहं त्रिशिरसा दृष्टो न भविष्यामि। हनगहदृशश्च इति कर्म्मणि मिण्। तस्मिन् त्रिशिरसि पञ्चत्वमागते मृते सति द्विषः केन हन्तव्याः ? पूर्ववत् मिण्। पञ्चानां पृथक्त्वं पञ्चत्वम् ॥ ९

অনুবাদ। আমাকে ধিক,যেহেতু ত্রিশিরা পুত্র ত আমাকে দর্শন করিতেছে না, সে মরিয়াছে এখন কে শত্রুবধ করিবে। ৯

**शत्रुभिर्निहते मत्ते द्रक्ष्योऽहं संयुगे सुखम्।**
**युद्धोन्मत्ताद्विना शत्रून् समास्कन्त्स्यति को रणे॥ १०**

अन्वयः। मत्ते निहते अहं शत्रुभिः संयुगे सुखं द्रक्ष्ये, युद्धोन्मत्तात् विना रणे कः शत्रून् समास्कन्त्स्यति॥ १०

**मल्लिनाथः।** शत्रुभिरिति। मत्ते मत्ताख्ये राक्षसे निहते सति अहं संयुगे शत्रुभिः सुखं निःशङ्कं द्रक्ष्ये ईक्षिष्ये। दृशेः कर्म्मणि लृटि चिण्वदिड़भावपक्षे रूपम्। युद्धोन्मत्ताद्विना रणे कः शत्रून् समास्कन्त्स्यति अभियोक्ष्यत इत्यर्थः। स्कन्दिर् गतिशोषणयोः। दकारस्य चर्त्वम्॥ १०

भरतः। शत्रुभिरित्यादि। मत्तनाम्नि राक्षसे शत्रुभिर्निहते सति तैरेव शत्रुभिः संग्रामे सुखं यथा स्यात् तथा अहं द्रष्टव्यः। पूर्वं तस्मान्निध्यात् अहं दुर्दर्श इति भावः। युद्धोन्मत्तं राक्षसञ्च विना रणे कः शत्रून् समास्कन्त्स्यति शोषयिष्यति ? अभिभविष्यति इत्यर्थः। स्कन्दिरो शोषणगत्योः॥ १०

অনুবাদ। মত্তও নিহত হইল, এখন শত্রুরা যুদ্ধস্থলে নিঃশঙ্কচিত্তে আমাকে দেখিবে। যুদ্ধোন্মত্তের অভাবে কে যুদ্ধে শত্রুনাশ করিবে। ১০

**आह्वास्यते विशङ्को मां योत्स्यमानः शतक्रतुः।**

अन्वयः। दुर्हणे निकुम्भे हते शतक्रतुः योत्स्यमानः विशङ्कः ( सन् ) माम् आह्वास्यते, तस्य च अर्थः प्रकल्प्स्यति ॥ ११

मल्लिनाथः। आह्वास्यत इति। दुःखेन हन्यत इति दुर्हणो दुर्निबर्हणः। "ईषद्—" इत्यादिना खल्प्रत्ययः। 'हन्तेः" इति णत्वम्। तस्मिन् निकुम्भे हते शतक्रतुरिन्द्रो योत्स्यमानो युद्धं करिष्यमाणो विशङ्को मामाह्वास्यते। "स्पर्द्धायामाङः" इति तङ्। तस्येन्द्रस्यार्थः प्रयोजनं प्रकल्प्स्यति सेत्स्यतीत्यर्थः। "लुटि च क्लृपः" इति वा तिप्। "तासि च क्लृपः" इतीट्प्रतिषेधः॥ ११

भरतः। आह्वास्यत इत्यादि। शतक्रतुः इन्द्रो युद्धं करिष्यन् निःशङ्कं यथा स्यात् तथा मां युद्धार्थम् आह्वास्यते। स्पर्द्धायामाङ इति तं, युधेर्लोपमवतुस्सवस्यमानाविति स्यमानः। दुर्हने निकुम्भे हते सति तस्य शतक्रतोरर्थो निष्कण्टकराज्यलाभः प्रकल्प्स्यति समाप्स्यति। क्लृप् ङ् ल्लृ च कल्पने। वृतादित्वात् पे इमोऽभावः। क्लपक्लृपोऽक्लृपाद्यौ। दुःखेन हन्यते इति ईषद्दुःसीषुरिति खल्। प्राग्वमो ण इत्यादौ दुर्वर्जनान्न णत्वम्। केचित्तु णत्वमाहुस्तन्न साधु, परेषामपि दुर इति णत्वप्रतिषेधकसूत्रदर्शनात॥ ११

অনুবাদ। দুর্দ্ধর্ষ নিকুম্ভ হত হইয়াছে, এখন দেবেন্দ্র যুদ্ধে প্রবৃত্ত হইয়া নিঃসঙ্কোচে আমাকে রণে আহ্বান করিবে। তাহার প্রয়োজন এখন সংক্ষে সম্পন্ন হইবে। ১১

कल्पिष्यते हरेः प्रीतिर्लङ्का चोपहनिष्यते।
सुरैरागंस्यते चेह श्रुत्वा कुम्भं निपातितम् * ॥१२

अन्वयः। कुम्भं निपातितं श्रुत्वा हरेः प्रीतिः कल्पिष्यते, लङ्का च उपहनिष्यते, इह सुरैः आगंस्यते च॥ १२

मल्लिनाथः। कल्पिष्यत इति। किञ्च कुम्भं निपातितं श्रुत्वा हरेरिन्द्रस्य प्रीतिः कल्पिष्यते। तिपो विकल्पात्तङ्। अत एव नेड्भावः। लङ्का चोपहनिष्यते उपप्लोष्यते। हन्तेः कर्म्मणि लृटि "ऋद्धनोः स्ये" इतीट्। इह सुरैरागंस्यते आयास्यते च। गमेर्भावे लृट्। "गमेरिट् परस्मैपदेषु" इति नियमान्न तङ्॥ १२

भरतः। कल्पिष्यते इत्यादि। शत्रुभिः निपातितं कुम्भं श्रुत्वा हरेः इन्द्रस्य प्रीतिः कल्पिष्यते भविष्यति। वृतादित्वात् से नेमनिषेधः। शत्रुभिः लङ्का च उपहनिष्यते। मिर्णाऽभावपक्षे स्यस्येडन इति इम्। कर्म्मणि रूपम्। इह लङ्कायां देवैरपि आगन्तव्यम्। समरमनमातः प्रे स इत्यस परविषयलाङ्गेम, भावे रूपम्॥ १२

---

* "ईशानस्य तथा त्वत्तो रिपोर्यास्यामि वश्यताम्।" इति पाठान्तरम्।

অনুবাদ। কুম্ভনিধন বার্ত্তা শ্রবণে ইন্দ্রের আনন্দ হইবে। শত্রুগণ লঙ্কাপুরী নষ্ট করিবে এবং দেবতারাও এখানে নিশ্চিন্তে আসিয়া উপস্থিত হইবে। ১২

मरिष्यामि विजेष्ये वा हतास्वेत्तनया मम।
हनिष्यामि रिपूंस्तूर्णं न जीविष्यामि दुःखितः॥

अन्वयः। मम तनयाः हताः चेत् (अहम्) अपि) मरिष्यामि, विजेष्ये वा रिपून् तूर्णं हनिष्यामि, (किन्तु) दुःखितः न जीविष्यामि॥ १३

मल्लिनाथः। मरिष्यामीति। मम तनया हता मृताश्चेदह-मपि मरिष्यामि। "म्रियतेर्लुङ्लिङोश्च" इति नियमान्न तङ्। विजेष्ये वा। "विपराभ्यां जेः" इति तङ्। तूर्णं रिपून् हनिष्यामि दुःखितो न जीविष्यामि॥ १३

भरतः। मरिष्यामीत्यादि। यदि तनयाः हताः ततः अहं मरिष्यामि। म्रियतेर्लुङ्लिङोरेव-मिति नियमात्, अन्यत्र परस्मैपद, स्यसेटै इति इम्। अथवा वा जेष्यामि। विपराजीति तङ्। तूर्णं रिपुं हनिष्यामि, अथवा बन्धुनाशात् दुःखितोऽहं न जीविष्यामि॥ १३

অনুবাদ। আমার পুত্রগণই যদি মরিল তাহা হইলে হয় আমিও মরিব, নয় যুদ্ধে জয়লাভ করিব এবং সত্বর রিপুগণ বিনষ্ট করিব। দুঃখিত জীবন-ধারণে প্রয়োজন নাই। ১৩

स्मेष्यन्ते मुनयो देवाः कथयिष्यन्ति चानिशम्।
दशग्रीवस्य दुर्नीतैर्विनष्टं रक्षसां कुलम्॥ १४

अन्वयः। दशग्रीवस्य दुर्नीतैः रक्षसां कुलं विनष्टम् इति मुनयः देवाः च स्मेष्यन्ते, अनिशं कथयिष्यन्ति च॥ १४

मल्लिनाथः। स्मेष्यन्त इति। दशग्रीवस्य दुर्नीतैर्दुर्नयैः रक्षसां कुलं विनष्टमिति मुनयो महर्षयो देवाश्च स्मेष्यन्ते हसिष्यन्ति। स्मिङ् ईषद्धसने। ङित्वात्तङ्। अनिशं कथयिष्यन्ति च कथात्वेन वर्णयिष्यन्ति चेत्यर्थः॥ १४

भरतः। स्मेष्यन्त इत्यादि। मुनयो हर्षात् स्मेष्यन्ते। स्मि ङ हसने। देवाः सततं कथयिष्यन्ति। किमित्याह—दशग्रीवस्य दुर्नयैः रक्षसां कुलं नष्टमिति। प्रायशो च इत्यादौ दुर्व्वर्णनाय चलम्॥ १४

অনুবাদ। মুনি ও দেবগণ এই বলিয়া হাসিবে যে, দশাননের দুর্নীতি-ফলেই রাক্ষসবংশ ধ্বংস হইল। ১৪

**केन सम्भावितं तात कुम्भकर्णस्य राघवः।**
**रणे कर्त्स्यति गात्राणि मर्माणि च विच[त]र्त्स्यति॥**

अन्वयः। (हे) तात! राघवः कुम्भकर्णस्य गात्राणि रणे कर्त्स्यति मर्माणि च विचर्त्स्यति—(इति) केन सम्भावितम्?॥ १५

मल्लिनाथः। केनेति। हे तात कुम्भकर्ण! राघवः कुम्भकर्णस्य गात्राणि रणे कर्त्स्यति कर्त्तिष्यति। कृती छेदने। मर्माणि च विचर्त्स्यति विचर्त्तिष्यति। चृती छेदने। वितर्त्स्यतीति पाठे तृद् हिंसायां सर्वत्र "सेऽसिचि कृत—" इत्यादिविकल्पादिड़भावः। इतीदं केन सम्भावितं वितर्कितम्। केनापि योग्यताबुद्धिं नारोपितमित्यर्थः॥ १५

भरतः। केनेत्यादि। तात। इति बुद्धिस्थं पितरं शोकात् सम्मुखीकरोति, लौकोक्तिरियं, केनेदं सम्भावितं—यत् कुम्भकर्णस्य गात्राणि रणे राघवः कर्त्स्यति। कृती गण छिदि, गनकृदिति पचेऽनिम्। मर्माणि च तर्त्स्यति। तृदृच् धिनादरे च। चकारात् हिंसे। पूर्ववत् पचे अनिम्॥ १५

অনুবাদ। হা তাত! রামচন্দ্র রণে কুম্ভকর্ণের শরীর ও মর্ম্মচ্ছেদন করিবে, ইহা কে মনে ভাবিয়াছিল। ১৫

**पतिष्यति क्षितौ भानुः पृथिवी तोलयिष्यते।**
**नभस्वान् भङ्क्ष्यते व्योम मुष्टिभिस्ताड़यिष्यते॥१६**
**इन्दोः स्यन्दिष्यते वह्निः समुत्क्षोत्स्यति सागरः।**
**जलं धक्ष्यति तिग्मांशोः स्यन्त्स्यन्ति तमसां चयाः॥**
**कुम्भकर्णो रणे पुंसा क्रुद्धः परिभविष्यते।**
**सम्भावितानि नैतानि कदाचित् केनचिज्जने॥१८**

अन्वयः। भानुः क्षितौ पतिष्यति, पृथिवी तोलयिष्यते, नभस्वान् भङ्क्ष्यते, व्योम मुष्टिभिः ताड़यिष्यते। इन्दोः वह्निः स्यन्दिष्यते, सागरः समुत्क्षोत्स्यति, जलं धक्ष्यति, तिग्मांशोः तमसां चयाः स्यन्त्स्यन्ति। रणे क्रुद्धः कुम्भकर्णः (केनचित्) पुंसा परिभविष्यते—जने कदाचित् केनचित् न एतानि सम्भावितानि॥ १६—१८

मल्लिनाथः। असम्भावितत्वमेव श्लोकत्रयेण सनिदर्शनमाह—पतिष्यतीत्यादि। भानुः क्षितौ पतिष्यति अधो गमिष्यतीत्यर्थः। पृथिवी तोलयिष्यते उन्मास्यते हस्ताभ्यामुत्क्षेप्स्यते इत्यर्थः। तुल उन्माने। चुरादिः। कर्म्मणि लृट्। नभस्वान् वायुः भङ्क्ष्यते स्वयं प्रभञ्जनोऽन्यैर्भंक्ष्यते चेदित्यर्थः। भञ्जो आमर्दने। कर्म्मणि लृट्। कुत्वषत्वे। व्योम मुष्टिभिस्ताड़यिष्यते। कर्मण्येव लृट् ॥ १६

मल्लिनाथः। इन्दोरिति। इन्दोर्वह्निः स्यन्दिष्यते स्रविष्यति। स्यन्दू प्रस्रवणे। "वृद्भ्यः स्यसनोः" इति विकल्पात्तङ्। सागरः समुच्छोक्ष्यति शोषं गमिष्यति। शुष शोषणे। अनिट्। स्यप्रत्यये लघूपधगुणः "षढोः—" इति कत्वे षत्वम्। जलं धक्ष्यति भस्मीकरिष्यति। दह भस्मीकरणे। लृटि स्यप्रत्यये घत्वकत्वषत्वभष्भावाः। तिग्मांशो सूर्य्यात् तमसां चयाः स्यन्त्स्यन्ति स्यन्दिष्यन्ते। "वृद्भ्यः स्यसनोः" इति स्यन्देर्वा तिप्। "न वृद्भ्यश्चतुर्भ्यः" इतीट् प्रतिषेधः। चत्वम् ॥ १७

मल्लिनाथः। कुम्भेति। रणे क्रुद्धः कुम्भकर्णः पुंसा केनचित् पुरुषेण परिभविष्यते। कर्म्मणि लृट्। एतानि भानुपतनादीनि कुम्भकर्णपरिभवान्तानि जने लोके कदाचित् केनचिदपि जनेन न सम्भावितानि न वितर्कितानि न प्रमितानीति किमु वक्तव्यमित्यर्थः। अत्र भानुपतनादिकल्पः कुम्भकर्णपरिभव इति सादृश्याक्षेपान्निदर्शनालङ्कारः ॥ १८

भरतः। पतिष्यतीत्यादि। भानुः सूर्य्यः क्षितौ पतिष्यति। पृथिवी तोलयिष्यते। तुल कुम्मितौ कर्म्मणि रूपम्। नभस्वान् वायुः काष्ठवत् भङ्क्ष्यते। भञ्जो धौ मोटने, कर्म्मणि रूपम्। मुष्टिभिः व्योम आकाशं ताड़यिष्यतेऽन्येन। तच्च किं त्वयि सम्भावितानि नैतानि इत्यग्रिमवाक्येन सम्बन्धः। यथैतत् असम्भाव्यं तथा कुम्भकर्णस्य रामेण हननमिति भावः ॥ १६

भरतः। इन्दोरित्यादि। चन्द्रात् अग्निः स्यन्दिष्यते। स्यन्द् ङ्वल् स्रुतौ। विस्वाद्युतादिः। शोषं गमिष्यति। शुष्यो लु शोषे समुत्पूर्वः। जलं कर्तृ, धक्ष्यति दाहं करिष्यति। दहो दाहे। दाहिवः आभावसेति धः। तिग्मांशोः सूर्य्यात् अन्धकारचयाः स्यन्त्स्यन्ति चरिष्यन्ति। द्युतादित्वात् पे नेम्। सम्भावितानि नैतानि इत्यन्वयः॥ १७

भरतः। कुम्भकर्णं इत्यादि। रणे क्रुद्धः कुम्भकर्णः अन्येन पुंसा परिभविष्यते जेतव्यः। एतानि भानुपतनादीनि लोके कदाचिदपि केनचित् न सम्भावितानि ॥ १८

অনুবাদ। সূর্য্য ভূমিতে পতিত হইবে, পৃথিবী হস্তোত্তোলিত হইবে, বায়ু স্বয়ং ভগ্ন হইবে, মুষ্টি প্রহারে শৃঙ্গ তাড়িত হইবে, শশাঙ্ক হইতে অনল নির্গত হইবে, সমুদ্র শুষ্ক হইবে, জল প্রজ্বলিত হইবে, সূর্য্য হইতে অন্ধকার রাশি নির্গত হইবে, আর রণে ক্রুদ্ধ কুম্ভকর্ণকে সামান্য কোন মানুষে পরাজিত করিবে, ইহা জগতে কদাপি কেহ মনেও স্থান দিতে পারে নাই। ১৭-১৮

कुम्भकर्णे हते लङ्कामारोक्ष्यन्ति प्लवङ्गमा:।

दङ्क्ष्यन्ति राक्षसान् हृष्टा भङ्क्ष्यन्ति च समाश्रयान् *॥

अन्वय:। कुम्भकर्णे हते हृष्टा: प्लवङ्गमा: लङ्काम् आरोक्ष्यन्ति, राक्षसान् दङ्क्ष्यन्ति, समाश्रयान् भङ्क्ष्यन्ति च ॥ १९

मल्लिनाथ:। कुम्भकर्ण इति। कुम्भकर्णे हते सति हृष्टा: प्लवङ्गमा लङ्कामारोक्ष्यन्ति आक्रमिष्यन्तीत्यर्थ:। रुह बीजजन्मनि। ढलंकत्वादि। राक्षसान् दङ्क्ष्यन्ति दन्तैर्दारयिष्यन्ति। दंश दशने। मखादित्वे कत्वषत्वे। समाश्रयान् गृहान् भङ्क्ष्यन्ति च। भञ्जो आमर्दने। कत्वषत्वे ॥ १९

भरत:। कुम्भकर्ण इत्यादि। कुम्भकर्णे हते नष्टे सति प्लवङ्गमा: कपयो लङ्काम् आरोक्ष्यन्ति लङ्काकर्त्रा भविष्यन्ति। आङ्पूर्वस्य रुह् जन्मनि प्रादुर्भावे इत्यस्य रूपम्। हो ढ: क्षपद्भसोरित्यादिना ढस्य क:। ते हृष्टा: सन्तो राक्षसान् दङ्क्ष्यन्ति। दन्श दंशने। समाश्रमांश्च भङ्क्ष्यन्ति। भन्ज भङ्गे ॥ १९

অনুবাদ। কুম্ভকর্ণ নিহত হইয়াছে, এখন বানরগণ গর্ব্বসহকারে লঙ্কা আক্রমণ করিবে, রাক্ষসদিগকে দংশন করিবে এবং আমার গৃহাদি ভগ্ন করিবে। ১৯

त[च]र्द्स्यन्ति बालवृद्धांश्च नर्त्स्यन्ति च मुदा युता:।

तेन राक्षसमुख्येन विना तान् को वि[नि]रोत्स्यति ॥

अन्वय:। (ते) बालवृद्धान् च तर्त्स्यन्ति, मुदा युता: च नर्त्स्यन्ति, राक्षसमुख्येन (कुम्भकर्णेन) विना तान् क: विरोत्स्यति ॥ २०

मल्लिनाथ:। तर्त्स्यन्तीति। बालवृद्धांस्तर्त्स्यन्ति हिंसिष्यन्तीत्यर्थ:। तृद हिंसायाम्। मुदा युता: सन्तो नर्त्स्यन्ति नटिष्यन्ति। नृती गात्रविक्षेपे। लघूपधगुण:। राक्षसमुख्येन तेन कुम्भकर्णेन विना तान् वानरान् को विरोत्स्यति निवारयिष्यति। रुधिर् आवरणे गुणश्चर्त्वे ॥ २०

* 'समाश्रमान्' इति पाठान्तरम्।

भरत:। वत्सान्नीत्यादि। दुवक्रना बालान् हस्तांच मृत्युं नि। मृत म मिहि। मृन्नम्ब्रहि पचे नेम्। मल्यान्तीति पाठे—वृद्धमानी वपम्। मुदा हर्षेण युता: सन्तो मृत्यं करिष्यन्ति। मृत्य मर्दने। पूर्ववत् नेम्। तेन राक्षसश्रेष्ठेन कुम्भकर्णेन विना क: तान् वानरान् निवारयिष्यति? वधिर्धौ ज जि पाहतौ॥ २०

অনুবাদ। তাহারা বালক বৃদ্ধ সকলকে বিনষ্ট করিবে এবং আনন্দে নৃত্য করিবে। রক্ষঃপ্রধান কুম্ভকর্ণ বিনা কে তাহাদিগকে নিবারিত করিবে। ২০

**अमर्षो मे पर: सीतां राघव: कामयिष्यते।**
**च्युतराज्यात् सुखं तस्मात् किङ्किलासाववाप्स्यति॥**

अन्वय:। राघव: सीतां कामयिष्यते, (तत्र) मे पर: अमर्ष: (भवति), च्युतराज्यात् तस्मात् (रामात्) किं किल असौ सुखम् अवाप्स्यति॥ २१

मल्लिनाथ:। अमर्ष इति। राघव: सीतां कामयिष्यते सन्तोष्यते। कमेर्णिङन्ताल्लृट्। तत्र मे परो महानमर्ष: क्रोध:। "अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि" इत्यमर्षे लृट्। च्युतं राज्यं यस्मात्तस्माच्च्युतराज्यात् राज्यभ्रष्टात्तस्माद्रामादसौ सीता किं किल सुखमवाप्स्यति। न किञ्चित् सम्भावितमित्यर्थ:। "किङ्किलास्त्यर्थे लृट्" इत्यनवक्लृप्तौ किंकिलशब्द उपपदे लृट्। अनवक्लृप्ति-रसम्भावना॥ २१

भरत:। अमर्ष इत्यादि। मम परम् अपरोऽमर्ष: कोप: राघवोऽपि सीतां कामयिष्यते। कमुकाङ् स्पृहि। कम ऋत इति णिङ। अन्येष्वाशङ्कामर्षे इति लौ। च्युतराज्यात् तस्मात् रामात् असौ सीता: किं सुखम् अवाप्स्यति न सम्भावयामि। किङ्किलास्त्यर्थयो्र्लौ॥ २१

অনুবাদ। রাম সীতাকে তুষ্ট করিবে, তাহা ভাবিয়া আমার দারুণ ক্রোধ জন্মিতেছে, কেন না সে রাজ্যভ্রষ্ট, তাহার নিকটে সীতা সুখ পাইবে?। ২১

**मारयिष्यामि वैदेहीं खादयिष्यामि राक्षसै:।**
**भूमौ वा निखनिष्यामि विध्वंसस्यास्य कारणम्॥**

अन्वय:। अस्य विध्वंसस्य कारणं वैदेहीं मारयिष्यामि, राक्षसै: खादयिष्यामि, भूमौ वा निखनिष्यामि॥ २२

मल्लिनाथः। मारयिष्यामीति। यद्वा अस्य विध्वंसस्य नाशस्य कारणं वैदेहीं मारयिष्यामि, यद्वा राक्षसैः खादयिष्यामि आदयिष्यामि। "आदिखाद्योः प्रतिषेधो वक्तव्यः" इति प्रतिषेधात् "गतिबुद्धि—" इत्यादिना अपि कर्त्तुर्न कर्मत्वम्। वा यद्वा भूमौ निखनिष्यामि गर्त्तं कृत्वा निवेशयिष्यामीत्यर्थः॥ २२

भरतः। मारयिष्यामीत्यादि। अथवा अस्य विध्वंसस्य वस्तुनाशस्य कारणं सीतामेव मारयिष्यामि राक्षसैः वा तां खादयिष्यामि। चेतनौ जरियादी भक्षादनीयु क्षीनं प्रयोज्यस्य कर्मत्वम्। भूमौ वा निखनिष्यामि गर्त्ते वा स्थापयिष्यामि॥ २२

অনুবাদ। এই সর্ব্বনাশের কারণ, সীতাকেই বিনষ্ট করিব অথবা রাক্ষস দ্বারা ভক্ষণ করাইব কিংবা ভূতলে প্রোথিত করিব। ২২

**नानुरोत्स्ये जगल्लक्ष्मीं घटिष्ये जीवितुं न[वा]च।**
**न रंस्ये विषयैः शून्ये भवने बान्धवैरहम्॥ २३**

अन्वयः। जगल्लक्ष्मीं न अनुरोत्स्ये, जीवितुं च न घटिष्ये, बान्धवैः शून्ये भवने अहं विषयैः न रंस्ये॥ २३

मल्लिनाथः। नेति। सीता तावदास्तां जगल्लक्ष्मीं जगदैश्वर्य्यं च नानुरोत्स्ये नानुवर्त्तिष्ये नेच्छामीत्यर्थः। क्वचित् आवरणे। स्वरितेत्त्वात्तङ्। जीवितुं च न घटिष्ये न चेष्टिष्ये नोत्सहिष्य इत्यर्थः। घट चेष्टायाम्। "शकधृष—" इत्यादिना तुमुन्। बान्धवैः शून्ये भवनेऽहं विषयैः शब्दादिभिर्न रंस्ये न क्रीड़िष्यामि। रमु क्रीड़ायाम्॥ २३

भरतः। नानुरोत्स्य इत्यादि। जगल्लक्ष्मीं न अहम् अनुरोत्स्ये न वाञ्छिष्यामि। अनुरोध कामे। न च जीवितुं घटिष्ये, बान्धवैः शून्यं रहिते भवने अहं विषयैः रूपरसादिभिः अहं न रंस्ये न क्रीड़िष्यामि। रमु क्रीड़े॥ २३

অনুবাদ। সীতার কথা দূরে থাকুক, আমি বিশ্বের ঐশ্বর্য্যও ইচ্ছা করি না; এমন কি, জীবনধারণেও আমার উৎসাহ নাই, আমি বান্ধববিহীন ভবনে রূপরসাদি বিষয়সমূহেও রত হইব না। ২৩

**मोदिष्ये कस्य सौख्येऽहं को मे मोदिष्यते सुखे।**
**आदेयाः किंकृते भोगाः कुम्भकर्ण त्वया विना॥२४**

अन्वयः। (हे) कुम्भकर्ण ! त्वया विना अहं कस्य सौख्ये मोदिष्ये, मे सुखे कः मोदिष्यते, किंकृते भोगाः आदेयाः (भविष्यन्ति) ॥ २४

मल्लिनाथः। मोदिष्य इति। हे कुम्भकर्ण ! त्वया विना कस्येष्टजनस्य सौख्ये सति मोदिषीय सन्तोक्ष्यामि। मे मम सुखे सति को मोदिष्यते अन्योन्यसुखसाचिव्यादावयोर्रति भावः। किंकृते कस्य कृते भुज्यन्त इति भोगा विषया आदेया उपादेयाः। भोक्तुरभावादिति भावः ॥ २४

भरतः। मोदिष्य इत्यादि। हे कुम्भकर्ण ! त्वया विना कस्य सौख्ये अहं हर्षं करिष्यामि ? मे मम वा सुखे को हृष्टो भविष्यति ? किं कृते कस्य निमित्तं परसम्बन्धिनी भोगा मया आदेया ग्राह्याः ? ॥ २४ ॥

অনুবাদ। হায় ! কুম্ভকর্ণ ! তোমার বিরহে আমি কাহার সুখে সুখী হইব এবং আমার সুখেই বা কে সুখী হইবে ? কি নিমিত্তই বা বিষয় সংগ্রহ করিব। ২৪

## या सुहृत्सु विपन्नेषु समुदे[मामुपै]ष्यन्ति सम्पदः।
## ताः किं मन्युक्षताभोगा न विपत्सु विपत्तयः ॥२५

अन्वयः। सुहृत्सु विपन्नेषु याः सम्पदः समुदेष्यन्ति, मन्युक्षताभोगा, ताः (सम्पदः) विपत्सु विपत्तयः न किं (भवन्ति) ? ॥ २५

मल्लिनाथः। तद्वैयर्थ्यमेवाह—या इति। सुहृत्सु बन्धुषु विपन्नेषु सत्सु याः सम्पदः समुदेष्यन्ति उद्भविष्यन्ति मन्युक्षताः शोकोपहत आभोग उपभोगो यासां तास्तादृश्यास्ताः सम्पदो विपत्सु विपत्तयो विपदनुबन्धा विपदो न किम् ? ताः सम्पदः सम्पदो न किन्तु कष्टतमा विपद एवेत्यर्थः ॥ २५

भरतः। या इत्यादि। सुहृत्सु विपन्नेषु मृतेषु याः सम्पदो माम् उपैष्यन्ति उपागमिष्यन्ति, ताः सम्पदः किं विपत्सु मध्ये विपत्तितुल्या न भवन्ति ? अपि तु भवन्त्येव। मन्युना शोकेन क्षताः खण्डिता आभोगा विस्तारा यासाम् ॥ २५

অনুবাদ। বন্ধুজন বিপন্ন হইলে যে সম্পদাগম হয়, শোকোপহত হেতু সেই সম্পদ্ বিপদকালে বিপদে পরিণত হয় না কি। ২৫

विनङ्क्ष्यति पुरी क्षिप्रं तूर्णमेष्यन्ति वानरा:।
असन्धित्सोऽस्त्वित्येतद् यद्विभीषणभाषितम् * ॥२६

अन्वय:। असन्धित्सो: तव पुरी क्षिप्र विनङ्क्ष्यति, वानरा: तूर्णम् एष्यन्ति—इत्येतत् यद् विभीषणभाषितम् ( तत् संवृत्तम् ) ॥ २६

मल्लिनाथ:। विनङ्क्ष्यतीति। असन्धित्सो रामेण सन्धातुमनिच्छत:। दधाते: सन्नन्तादुप्रत्यय:। "सनि मीमा—" इत्यादिना इसादेशेऽभ्यासलोपश्च। तवेयं पुरी लङ्का विनङ्क्ष्यति लोप्स्यति। "व्रश्च—" आदिना षत्वादि। वानराश्च तूर्णमेष्यन्ति। भविष्यन्मात्रे लृट्। केचित् क्षिप्रवचने लृडिति व्याचक्षते। आशंसानुक्तेस्तु का गतिश्चिन्त्या। इति यद्विभीषणभाषितं तदेतदापन्नमित्यर्थ: ॥ २६

भरत:। विनङ्क्ष्यतीत्यादि। असन्धित्सो रामेण सह सन्धिं कर्तुमनिच्छो: तव पुरी लङ्का क्षिप्रं विनङ्क्ष्यति। नश्। रधादिभ्यो नशेरिति नुम्। विनङ्क्ष्यन्ति पुरीमिति पाठे—अन्तर्भूतण्यर्थात् वानरा विनाशयिष्यन्तीत्यर्थ:। वानरास्तां तूर्णं गमिष्यन्ति इत्येतत् विभीषणस्य वचनं शोभनमेव, मन्त्रनिर्णये तेन उक्तं—सन्धानमेवास्तु परैरित्यादि ॥ २६

অনুবাদ। "রামের সহিত সন্ধি করিতে ইচ্ছুক না হওয়ায় শীঘ্রই তোমার পুরী নষ্ট হইবে, অচিরেই বানরগণ আসিয়া উপস্থিত হইবে" এই বিভীষণ বাক্য আজ সত্য হইতে চলিল। ২৬

अर्थेन संभृता राजन्[न्ना]न भाषिष्यामहे परं[वयम्]
संयोत्स्यामह इत्येतत् प्रहस्तेन च भाषितम् ॥ २७

अन्वय:। ( हे ) राजन्! अर्थेन सम्भृता: ( वयं ) परं न भाषिष्यामहे, संयोत्स्यामहे इत्येतत् च प्रहस्तेन भाषितम् ( तदपि तेन क्रतम् ) ॥ २७

मल्लिनाथ:। अर्थेनेति। हे राजन्! अर्थेन धनेन सम्भृता: प्राणदानायैव सुष्ठु पुष्टा वयं परं मन्त्रकृत्यं परं न भाषिष्यामहे तत्रानधिकारात्। किन्तु संयोत्स्यामहे सम्यक् प्रहरिष्याम इति यत्तदेतत् प्रहस्तेनापि भाषितं क्रतं चेत्यर्थ: ॥ २७

---

* "असन्धित्सोस्तवेत्येतद्विभीषणसुभाषितम्" इति पाठान्तरम्।

भरत:। अर्थेनेत्यादि। अर्थेन धनेन संभृता: पोषिता: वयं न वक्ष्याम: किन्तु किं परं किल युद्धं करिष्याम इत्येतत् प्रहस्तेनापि उक्तं युद्धाय राज्ञा सुभृतैर्भवद्भिरिति विभीषणवचनस्य प्रागुपदर्शितत्वात्। प्रहस्तेनापि विभीषणवचनमङ्गीकृतमिति भाव:। परमिति किन्त्वर्थेऽव्ययम् ॥ २७

অনুবাদ। প্রহস্তও বলিয়াছিল যে "মহারাজ! আমরা মন্ত্রণাদানে অনধিকারী। আমরা আপনার অর্থ পরিপুষ্ট এই জন্য সম্যক্ প্রকারে যুদ্ধই করিব। "সে তাহাই করিয়াছে"। ২৭

**मानुषो नाम पत्काषी राजानं पुरुषाशिनाम्।**
**योधयिष्यति संग्रामे दिव्यास्त्ररथदुर्मद[र्जय]म् ॥२८**

अन्वय:। पत्काषी मानुष: दिव्यास्त्ररथदुर्मदं पुरुषाशिनां राजानं संग्रामे योधयिष्यति नाम ॥ २८

मल्लिनाथ:। मानुष इति। पादाभ्यां गच्छतीति पत्काषी पादचारी। ताच्छील्ये णिनि:। "हिमकाषिहतिषु च" इति पादशब्दस्य पदादेश:। मानुषो दिव्यै रथैर्दुर्मदमुद्धतं दुर्धर्षमित्यर्थ:। पुरुषाशिनां राजानं राक्षसेश्वरं संग्रामे योधयिष्यति नाम योधयिष्यति किल। दुर्घटमेतदिति भाव:। योध्यव्यापारस्येतरेतरप्रेरकत्वात् णिजन्तप्रयोग: ॥ २८

भरत:। मानुष इत्यादि। पत्काषी पदाति: सन् मानुषो राम: संग्रामे दिव्यास्त्रेण रथेन च दुर्जयं दुर्गमं राक्षसानां राजानं योधयिष्यतीति नाम कुत्सितमित्यर्थ:। नामेति प्रकाशसम्भावनाक्रोधाभ्युपगमकुत्सनेष्वव्ययम्। पादाभ्यां कषितुं गन्तुं शीलमस्येति णिन्, पादस्य पदादेश इति पर:, स्वमते पच्छब्दात् कषेर्णादित्वाण्णिन्। युधिर्जन्यात् अन्यायार्थेऽञ्ज्यादिना रूपम् ॥ २८

অনুবাদ। রাম সামান্য মানুষ; তাহাতে আবার যানবাহনহীন পাদচারী হইয়া দিব্যাস্ত্রধারী ও দিব্য রথারূঢ় দুর্জ্জয় নরভক্ষক রাক্ষস রাজার সহিত যুদ্ধ করিবে ইহা বড়ই ঘৃণার কথা। ২৮

**सन्नत्स्याम्यथवा योद्धुं न कोष्ये सत्त्वहीनवत्।**
**अद्य तप्स्यन्ति मांसादा भू: पास्यत्यरिशोणितम् ॥२९**

अन्वय:। अथवा योद्धुं सन्नत्स्यामि, सत्त्वहीनवत् न कोष्ये, अद्य मांसादा: तप्स्यन्ति, भू: अरिशोणितं पास्यति ॥ २९

मल्लिनाथः। सन्नेमिति। अथवा योद्धुं सन्नत्स्यामि सन्नद्धो भविष्यामि। नहेरमर्षे लृटि स्ये धत्वचर्त्वे। सत्वहीनवत् दुर्बलवत् न क्रोशिष्ये न रोदिष्यामि। क्रुश् शब्दे। पूर्ववल्लृटि गुणः षत्वं च। अद्य मांसमदन्तीति मांसादा गृध्रादयः। "अदोऽनन्ने" इति विट्प्रत्यये प्राप्ते वासरूपविधिना तद्बाधेन अण्प्रत्ययः। तर्पयन्ति दृप्ता भविष्यन्ति। दृप प्रीणने। "रधादिभ्यश्च" इतीडभावपक्षे 'अनुदात्तस्य चर्दुपधस्य—' इत्यमभावे च गुणः। भूशत्रुशोणितं पास्यति। पा पाने॥ २९

भरतः। संनत्स्यामीत्यादि। अथवा योद्धुम् अहं सन्नाहं करिष्यामि। नहो धकू। हीनसत्त्ववत् न क्रोश्ये। क्रुश् शब्दे। नेमिकात्मिति नेम्। अद्य मांसादा गृध्रादयः तृप्ता भविष्यन्ति। त्रिन्तृ तृप्य च। चकारात् प्रीणने। रधादित्वात् वेम्। भूश्च शत्रोः रक्तं पास्यति॥ २९

অনুবাদ। অথবা আমি যুদ্ধই করিব; দুর্ব্বলের ন্যায় রোদন করিব না, অদ্য মাংসাশী গৃধ্র শৃগালাদি তৃপ্ত হইবে এবং পৃথিবী শত্রুরুধির পান করিবে। ২৯

आक्र[क]ंस्या[र्या]मि यशः
शत्रून[पने]वचेष्यामि कर्मणा।
अनुभाविष्यते शोको
मैथिल्याद्य पतिक्षयात्॥ ३०

अन्वयः। (शत्रोः) यशः आक्रंस्यामि, कर्मणा शत्रून् अवचेष्यामि, अद्य मैथिल्या पतिक्षयात् शोकः अनुभाविष्यते॥ ३०

मल्लिनाथः। आक्रंस्यामीति। यशः शत्रुकीर्त्तिमाक्रंस्यामि आहरिष्यामि। क्रमेरनात्मने कलषत्वे। कर्मणा रणकर्मणा शत्रूनवचेष्यामि अपाययिष्यामि। अद्य मैथिल्या पतिक्षयाद्भर्त्तृनाशात् शोकोऽनुभाविष्यतेऽनुभविष्यते। चिण्वदिटि वृद्धिः॥ ३०

भरतः। आकर्त्स्यामीत्यादि। शत्रूणां यश आकर्त्स्यामि हरिष्यामि। कृषी त्वाकृषि, कृदृदिति दिति रस्य पारिकलम्। कर्मणा युद्धेन शत्रून् अपनेष्यामि दूरीकरिष्यामि। अपचेष्यामीति पाठे—न्यूनीकरिष्यामीत्यर्थः। अद्य पतिनाशात् सीतया शोकोऽनुभवितव्यः। इनवद्भवश्च इति णिच्॥ ३०

অনুবাদ। শত্রুর যশ লোপ করিব। যুদ্ধ করিয়া শত্রুনাশ করিব। আজি মৈথিলী পতিবিয়োগশোক অনুভব করিবে। ৩০

मन्तूयिष्यति यचेन्द्रो वल्गूयिष्यति नो यमः ।
म्लास्यन्त्यपतिपुत्राश्च वने वानरयोषितः ॥ ३१

अन्वयः । यचेन्द्रः मन्तूयिष्यति, यमः नो वल्गूयिष्यति, अपतिपुत्राः वानरयोषितः च वने म्लास्यन्ति ॥ ३१

मल्लिनाथः । मन्तूयिष्यतीति । अद्य रामे हते यचेन्द्रः कुबेरो मन्तूयिष्यति कोपिष्यति । कण्ड्वादियक् । "अकृत्सार्वधातुकयोः" इति दीर्घः । यगन्ताल्लृट् । यमोऽपि नो वल्गूयिष्यति न पूजयिष्यति । वल्गु पूजामाधुर्य्ययोः । कण्ड्वादियगन्ताल्लृट् । अपतिपुत्रा वानरयोषितश्च वने म्लास्यन्ति चीणहर्षा भविष्यन्ति । म्लै हर्षक्षये । "आदेच—" इत्यात्वम् ॥ ३१

भरत । मन्तूयिष्यतीत्यादि । यचेन्द्रः कुबेरो मन्तूयिष्यति । मन्तु अ रोषणवैमनस्ययो अपराधे चेति चन्द्रादयः, तं करोतीति कण्ड्वादित्वात् यः, कण्ड्वादीनां लिङ्गत्वं धातुत्वञ्चेति टीकाकृद्भिः उक्तं, धातुपदं स्वार्थे य इति च । यमो वल्गूयिष्यति शोभनो न भविष्यति दौर्मनस्यात् । वल्गु पूजामाधुर्य्ययोः कण्ड्वादि. । वानराणां योषितश्च पतिपुत्ररहिताः सत्यः वने म्लास्यन्ति । म्लै क्षमे ॥ ३१

অনুবাদ । অদ্য রাম নিহত হইলে, যক্ষরাজ ক্রুদ্ধ হইবে, যমরাজ আর পূজা পাইবে না । বানরীকুল পতিপুত্রবিহীন হইয়া বনে বনে রোদন করিবে । ৩১

सुखं स्वप्स्यन्ति रचांसि
भ्रमिष्यन्ति च निर्भयम् ।
न विक्रोच्यन्ति राचस्यो
न [रांश्चा] रानत्स्यन्ति हर्षिताः ॥ ३२

अन्वयः । रचांसि सुखं स्वप्स्यन्ति, निर्भयं भ्रमिष्यन्ति च, राचस्यः न विक्रोच्यन्ति, हर्षिताः नरान् अत्स्यन्ति च ॥ ३२

मल्लिनाथः । सुखमिति । अद्य रचांसि सुखं स्वप्स्यन्ति निर्भयं निःशङ्कं भ्रमिष्यन्ति सञ्चरिष्यन्ति । राचस्यो न विक्रोच्यन्ति न रोदिष्यन्ति । क्रुश आह्वाने रोदने च । लुटि से गुणः । "षढो—" आदिना षत्वे कत्वषत्वे । हर्षिताः

मन्तोषिताः सत्यः। हृषेर्णिन्तात् कर्मणि क्तः। नरांश्चानुमान-स्यन्ति खादिष्यन्ति। अद भक्षणे। दकारस्य चर्त्वम् ॥ ३२

भरतः। सुखमित्यादि। ततो रक्षांसि सुखं शयिष्यन्ते। ञिष्वप् शये। निर्भयश्च भ्रमिष्यन्ति। भ्रम्यु अ ण चाले। क्रमिष्यन्तीति क्वचित्पाठः। राक्षस्यो न क्रन्दिष्यन्ति। क्रुश जो रोदने हृतौ। हृष्टाः सत्यो नरांश्च भक्षयिष्यन्ति। अद लौ भक्षे। हृषु हृष्य ञि दर हृष्टौ क्तः, वा रुषामत्वरेति पाक्षिक इम् पृषोदृषेत्यादौ सेमोर्णारित्यस्य योगविभागात हर्षार्थे गुणः ; किंवा हर्षो जात आसामिति इतोऽस्य जाते इनि इतः। अन्ये तु क्षामवल्लोहृषधर्मात्व विस्मये प्रतिघाते च रोमहर्षार्थे गुणश्चेत्याहुः। हर्षिता मत्वाक्रमेण विस्मिता इत्यर्थः इति विद्यासागरस्तन्न साधु, तत्र गुणाभावात् ॥ ३२

অনুবাদ। অদ্য রাক্ষসেরা সুখে নিদ্রা যাইবে, এবং নির্ভয়ে সঞ্চরণ করিবে। রাক্ষসীরা আর কাঁদিবে না, বরং হৃষ্টচিত্তে মনুষ্যভক্ষণ করিবে। ৩২

प्राङ्मुहूर्त्तात् प्रभातेऽहं भविष्यामि ध्रुवं सुखी।
आगामिनि ततः काले यो द्वितीयः परक्षणः *॥ ३३
तत्र जेतुं गमिष्यामि त्रिदशेन्द्रं सहामरम्।
ततः परेण भूयोऽपि लङ्कामेष्याम्यमत्सरः॥ ३४

अन्वयः। अहम् आगामिनि प्रभाते मुहूर्त्तात् प्राक् ध्रुवं सुखी भविष्यामि, ततः काले यो द्वितीयः परक्षणः, तत्र सहामरं त्रिदशेन्द्रं जेतुं गमिष्यामि, ततः परेण अमत्सरः लङ्काम् एष्यामि ॥ ३३—३४

. मल्लिनाथः। अथ युग्मेनाह—प्रागित्यादि। अहमस्मिन्नागामिनि प्रभाते मुहूर्त्तद्वयात्मके प्रभातकाले मुहूर्त्ताद्द्वितीयमुहूर्त्तात् प्राक् प्रथममुहूर्त्ते ध्रुवमवश्यं सुखी शत्रुवधसुखवधूर्भविष्यामि। “कालविभागे चानहोरात्राणाम्” इति अनद्यतनवत्प्रत्ययस्य लुटः प्रतिषेधाल्लृट्। ततः शत्रुवधसुखलाभानन्तरमागामिनि काले प्रभाते द्वितीयाद्यो: द्वितीयादपरः द्वितीयक्षणादन्यः प्रथमक्षणस्तत्रेत्युत्तरश्लोकेन सम्बन्धः। अत्र क्षणशब्दो मुहूर्त्तवचनः। यः क्षणादपरो द्रुतमिति पाठे द्वितीयक्षणादपरः प्रथम इत्येवार्थः ॥ ३३

---

* “यो द्वितीयः क्षणोऽपरः”—इति पाठान्तरम्।

मल्लिनाथः। तत्रेति। तत्र पूर्वोक्तप्रथमक्षणे सहामरं सदेवं त्रिदशेन्द्रं देवेन्द्रं जेतुं गमिष्यामि। ततः इन्द्रविजयानन्तरं निर्मत्सरो निर्वैरः सन् परेण क्षणेन भूयोऽपि लङ्कामेष्यामि। "परस्मिन् विभाषा" इति विभाषानद्यतनवत्प्रत्ययनिषेधात् विभाषालुट्। अस्मिन्नागामिनि मुहूर्त्तद्वयमित्यत्र प्रभात एव पूर्वमुहूर्त्ते राममनन्तरमुहूर्त्तार्द्धेन देवेन्द्रं जित्वा अनन्तरार्द्धेन पुनर्लङ्कामधिष्ठास्यामीति श्लोकद्वयस्यार्थः। प्रभातपूर्वापरकालविभागविषयत्वेन सूत्रद्वयमुदाहृतं वेदितव्यम्॥ ३४

भरतः। प्राङ्मुहूर्त्तादित्यादि। भाविप्रातःकाले मुहूर्त्तत्रयात्मके तृतीयमुहूर्त्तात् प्राक् प्रथममुहूर्त्तद्वये अहम् अवश्यं सुखी भविष्यामि, तदानीमेव शत्रुहननात्। ततः प्रभातस्य आगामिनि काले क्षणद्वयात्मकद्वितीयक्षणात् परः पूर्वक्षणः तत्र जेतुं गमिष्यामीति वक्ष्यमाणेन सम्बन्धः॥ ३३

भरतः। तत्रेत्यादि। तस्मिन् क्षणे सहामरं देवैः सहितं त्रिदशेन्द्रं शक्रं जेतुः गमिष्यामि। नैर्धौरव्येषिम इति इणवर्जनात् चादिगैचोरिति त्रिः॥ ३४

অনুবাদ। আমি আগামি প্রাতঃকালে প্রথম মুহূর্ত্তে শত্রুবধ করিয়া নিশ্চয় সুখী হইব। তদনন্তর মুহূর্ত্তের প্রথমক্ষণে দেবগণ সহ দেবেন্দ্রকে জয় করিতে যাইব, তাহার পরক্ষণে শত্রুশূন্য হইয়া পুনর্ব্বার লঙ্কায় ফিরিয়া আসিব। ৩৩-৩৪

**तमेवंवादिनं मूढमिन्द्रजित् समुपागतः।**
**युयुत्सिष्येऽहमित्येवं वदन् रिपुभयङ्करः॥ ३५**

अन्वयः। मूढं एवंवादिनं तं रिपुभयङ्करः इन्द्रजित् अहं युयुत्सिष्ये इत्येवं वदन् समुपागतः॥ ३५

मल्लिनाथः। तमिति। मूढमप्रमत एवैवंवादिनमित्यं प्रलापिनं तं रावणं रिपुभयङ्कर इन्द्रजिदहं युयुत्सिषेऽ योद्धुमिच्छामीच्छापूर्वकं योत्स्ये। युधेः सन्नन्तात्लृट्। इत्येवं वदन् समुपागतः॥ ३५

भरतः। तमित्यादि। एवंवादिनम् शोकात मूढं रावणं रिपूणां भयङ्कर इन्द्रजित् समुपागतः। किं कुर्वन्?—इत्येवं वदन्। किं वदन्नित्याह—अहं योद्धुमिच्छां करिष्यामि। युधः सन्॥३५

অনুবাদ। শত্রুভয়োৎপাদক ইন্দ্রজিৎ "আমি যুদ্ধ করিব" এইরূপ

বলিতে বলিতে পূর্ব্বোক্তরূপ আলাপকারী মূঢ় রাবণের সম্মুখে আগমন করিল। ৩৫

नाभिज्ञा ते महाराज जेष्याव: शक्रपालितम्।
हृप्तदेवगणाकीर्णमावां सह सुरालयम्॥ ३६

अन्वय:। (हे) महाराज! आवां शक्रपालितं हृप्तदेवगणाकीर्णं सुरालयं सह (सम्भूय) जेष्याव:, (इति) ते अभिज्ञा न॥ ३६

मल्लिनाथ:। नेति। हे महाराज! त्वं च अहं च आवाम्। "त्यदादीनि सर्वैर्नित्यम्"। 'त्यदादीनां मिथ: सहोक्तौ यत्परं तच्छिष्यते' इति वचनादस्मदेव शेष:। शक्रपालित हृप्तदेवगणाकीर्णं सुरालयं स्वर्गं सह जेष्याव:। ते तवाभिज्ञा स्मृति:। "आतश्चोपसर्गे" इति जानाते: स्त्रियामङ्प्रत्यये टाप्। नेति काकु:। अजैष्व किं न स्मरसीत्यर्थ:। "अभिज्ञावचने लृट्" इति भूतानद्यतने लृट्॥ ३६

भरत। नाभिज्ञा त इत्यादि। हे महाराज! तव अभिज्ञा स्मृति: नास्ति, आवां त्वञ्च अहञ्च सम्भूय इन्द्रेण पालितं हृप्तेन देवगणेन व्याप्तं सुरालयं स्वर्गं जितवन्तौ। स्मर्यते यदि त्वतीत इति तौ॥ ३६

অনুবাদ। মহারাজ! আমরা দুইজনে একত্রে ইন্দ্রপালিত, গর্ব্বিত দেবগণাকীর্ণ স্বর্গ জয় করিয়াছিলাম, তাহা কি আপনার স্মরণ নাই। ৩৮

नाभिज्ञा ते सयक्षेन्द्रं भङ्क्ष्यावो यद्यमं बलात्।
रत्नानि चाहरिष्याव: प्राप्स्यावश्च पुरीमिमाम्॥ ३७

अन्वय:। यत् सयक्षेन्द्रं यमं बलात् भङ्क्ष्याव:, रत्नानि आहरिष्याव:, च इमां पुरीं प्राप्स्याव: च (इति) ते न अभिज्ञा?॥ ३७

मल्लिनाथ:। नेति। हे राजन्! सयक्षेन्द्रं कुबेरसहितं यमं बलाद्भङ्क्ष्यावोऽभाङ्क्ष्वेत्यर्थ:। भञ्जो आमर्दने। कुत्वषत्वे। रत्नानि आहरिष्याव अहार्ष्वेत्यर्थ:। इमां पुरीं प्राप्स्यावश्च प्राप्तौ च। यमकुबेरभञ्जनेन रत्नाहरणं कृतमित्यर्थ:। तत्र ते तवाभिज्ञा स्मृति: नेति काकु:। "विभाषा साकाङ्क्षे" इति विभाषा भूता-

नद्यतने लृट् । रत्नाहरणकुबेरमर्द्दनयोर्ल[illegible]पर्य्यायौ प्रयोगः । साध्यसाधनसम्बन्धविवक्षा साकाङ्क्षा ॥ ३७

भरतः । नाभिज्ञा न इत्यादि । तव नाभिज्ञा स्मृतिः नास्ति । यत् सयमेन्द्र कुबेरर्जितं यमं बलात् आवां मर्द्दयन्तौ । मन्‌जौ धौ मोटने । तत्सम्बन्धीनि रत्नानि च हृतवन्तौ । इमां लङ्कापुरीं प्रापयन्तौ च । वानेकमार्थ्ये इति भूते तौ ॥ ३७

অনুবাদ। মহারাজ! কুবের সহ যমকে আমরা বলপূর্ব্বক মর্দ্দিত করিয়াছিলাম এবং বিবিধ রত্ন আনয়ন পূর্ব্বক এই লঙ্কাপুরী অধিকার করিয়াছিলাম এ সকল স্মরণ নাই কি ?। ৩৭

एष पेक्ष्याम्यरीन् भूयो न शोचिष्यसि रावण ।
जगद्द्रक्ष्यसि नीराममवगाहिष्यसे दिशः ॥ ३८

अन्वयः । (हे) रावण ! एष अहं भूयः अरीन् पेक्ष्यामि, न शोचिष्यसि, नीरामं च जगद् द्रक्ष्यसि, दिशः अवगाहिष्यसि ॥ ३८

मल्लिनाथः । एष इति । हे रावण ! एषोऽहं भूयोऽप्यरीन् पेक्ष्यामि चूर्णयिष्यामि हनिष्यामीत्यर्थः । कर्त्तृत्वे । "जासिनि-प्रहण—" इत्यत्र शेषाधिकारात्तदविवक्षायां कर्म्मणि द्वितीयैव । न शोचिष्यसि विशोकश्च भविष्यसीत्यर्थः । नीराममरामं च जगद्द्रक्ष्यसि तं च हनिष्यामीत्यर्थः । दिशोऽवगाहिष्यसि आक्रमिष्यसि । सर्व्वत्र वर्त्तमानसामीप्ये वर्त्तमानवत् प्रत्ययविकल्पात् पक्षे लृट् ॥ ३८

भरतः । एष इत्यादि । एषोऽहं तव अरीन् चूर्णयिष्यामि । धौ पिष्ॢ ल चूर्णने, वर्त्तमानसामीप्यविवक्षयात्र तौ । हे रावण ! भूयः त्वं न शोकं करिष्यसि । पुनः शीघ्रं जगत् रामशून्यं द्रक्ष्यसि । निर्भयः सन् दिशोऽवगाहिष्यसे ॥ ३८

অনুবাদ। আমি পুনর্ব্বার অরিদল পেষণ করিব, আর আপনার শোক করিতে হইবে না, জগৎ রাম শূন্য দৃষ্ট হইবে এবং আপনি সকলদিকই আক্রমণ করিতে পারিবেন। ৩৮

सहभृत्यः सुरावासे भयं भूयो विधास्यसि ।
प्रशंस्यत्यद्य देवेन्द्रस्त्वां वक्ष्यति स सन्नतिम् ॥ ३९

अन्वयः । सहभृत्यः भूयः सुरावासे भयं विधास्यसि, अद्य देवेन्द्रः त्वां प्रशंसति, स सन्नतिं वक्ष्यति ॥ ३९

मल्लिनाथः । सहेति । भृत्यैः सह सपरिवारः सन्नित्यर्थः । भूयः सुरावासे स्वर्गे भयं विधास्यसि । अद्य देवेन्द्रस्त्वां प्रणंस्यति प्रणतो भविष्यति । सन्नतिं सनामं च वक्ष्यति तवाहमिति वदिष्यतीत्यर्थः ॥ ३९

भरतः । सहभृत्य इत्यादि । भृत्यैः सहितः त्वं सुराणाम् आवासे स्वर्गे भूयः पुनरपि भय जनयिष्यसि । शक्रोऽपि त्वां भूयो नमस्करिष्यति भवद्भयात् सन्नतिं निरहङ्कारतां वक्ष्यति । वहे णौ प्रापणे । धारयेऽपि दृश्यते इति श्रीपतिः । नतिं नमस्कार वक्ष्यति वदिष्यति । वचो वर्पमिति केचित् ॥ ३९

অনুবাদ। আপনি পুনরায় স্বজন সহ স্বর্গে ভয়োৎপাদন করিবেন, দেবেন্দ্র আপনাকে প্রণাম করিবে এবং "আমি আপনারই" এই কথা বলিবে। ৩৯

**भेष्यन्ते मुनिभिस्त्वत्तस्त्वमधिष्ठास्यसि द्विषः ।**
**ज्ञास्येऽहमद्य संग्रामे समस्तैः शूरमानिभिः ॥ ४०**

अन्वयः । मुनिभिः त्वतः भेष्यते, त्व द्विषः अधिष्ठास्यसि, अद्य अहं संग्रामे समस्तैः शूरमानिभिः ज्ञास्ये ॥ ४०

मल्लिनाथः । भेष्यत इति । मुनिभिस्त्वत्तो भेष्यते त्रसिष्यते । ञिभी भये । भावे लृट् । गुणः । त्वं द्विषः शत्रूनधिष्ठास्यसि आक्रमिष्यसीत्यर्थः । अद्याहं संग्रामे समस्तैः शूरान् मन्यन्त इति शूरमानिनः । "मनः" इति णिनिः तैर्ज्ञास्ये । मद्य मद्बलं द्रक्ष्यन्तीत्यर्थः । कर्मणि लृट् ॥ ४०

भरतः । भेष्यत इत्यादि । त्वत्तो मुनिभिः भय प्राप्स्यते । ञि भी ञि भीत्यां, भावे ...पम् । त्वं द्विषः शत्रून् अधिष्ठास्यसि तेषु प्रभुः भविष्यसि इत्यर्थः । कर्मक्रियेत्यादिना ... त्वं, गीक इति बलम् । अद्य संग्रामे समस्तैः शूरम्मन्यैः अहं ज्ञातो भविष्यामि । कर्मणि ...ो । आत्मानं शूरं मन्यत इति णिन्निति परमते, स्वमते तु—ग्रहादित्वात् णिन्, ...नार्थोऽभिधानात्, किं वा शूरसम्बन्धी मानी विद्यते येषामिति नैकाजादितीन् ॥ ४०

অনুবাদ। মুনিগণ আপনাকে ভয় করিবে, আপনি শত্রুগণকে আক্রমণ করিবেন এখন যুদ্ধে সমস্ত বীরাভিমানীগণ আমাকে জানিতে পারিবে।৪০

**ज्ञायिष्यन्ते मया चान्ये वीरम्मन्या द्विषाङ्गणाः ।**
**गूहिष्यामि क्षितिं कृत्तैरेव गात्रैर्वनौकसाम् ॥ ४१**

अन्वयः । वीरंमन्याः अन्ये द्विषां गणाः च मया ज्ञायिष्यन्ते, अद्य क्षतैः वनौकसां गात्रैः क्षितिं गूहिष्यामि ॥ ४१

मल्लिनाथः । ज्ञायिष्यन्त इति । अन्ये वीरमात्मानं मन्यन्त इति वीरंमन्याः शूराभिमानिनः । "आत्ममाने खश् च" इति खशि मुमागमः । द्विषां गणा मया ज्ञायिष्यन्ते ज्ञास्यन्ते । तानप्यहं द्रक्ष्यामीत्यर्थः । जानातेः कर्मणि चिण्वदिटि युगागमः । अद्य क्षतैश्छिन्नैर्वनौकसां वानराणां गात्रैः क्षितिं गूहिष्यामि संवरिष्यामि । छादयिष्यामीत्यर्थः । गुह संवरणे ॥ ४१

भरतः । ज्ञायिष्यन्त इत्यादि । मयापि वीरम् आत्मानं मन्यमाना द्विषद्वर्गा ज्ञातव्याः, स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च इति चिण्, यन्नुगिति यन् । मन्यात् स्वार्थे इति मन् । क्षतैः छिन्नैः कपीनां गात्रैः अद्य भूमिञ्च आच्छादयिष्यामि । गुह ञ संवृतौ । गहो थी ह: ॥ ४१

অনুবাদ । শূরাভিমানী অপর শত্রুদিগকে দেখিয়া লইব, সম্প্রতি বনবাসী বানরের ছিন্ন শরীরে ভূতল আচ্ছন্ন করিব । ৪১

आरोक्ष्यामि युगान्तवारिद-
घटासङ्घट्टघोरध्वनिं
निर्यास्यन् रथमूर्ज्जि [मूर्क्कि]तध्वज-
धनुःखड्गप्रभाभासुरम् ।
श्रोष्यस्यद्य विकीर्णरुक्मकण-
विमुखव्यापन्नशत्रौ रणे
दृ[हृ]प्तान्क्षोणितशोणभीषण-
मुखान् क्रव्याशिनः क्रोशतः ॥ २४

इति भट्टिकाव्ये तिङन्तकाण्डे लुङ्विलसितो नाम
षोड़शः सर्गः ॥ १६

अन्वयः । निर्यास्यन् युगान्तवारिदघटासङ्घट्टघोरध्वनिम् ऊर्ज्जितध्वजधनुःखड्गप्रभाभासुरं रथम् आरोक्ष्यामि, अद्य विकीर्णरुक्मकणविमुखव्यापन्नशत्रौ रणे दृप्तान् शोणितशोणभीषणमुखान् क्रोशतः क्रव्याशिनः श्रोष्यसि ॥ ४२

मल्लिनाथः । आरोक्ष्यामीति । निर्यास्यन् रणाय निर्गमिष्यन्

युगान्तवारिदानां घटाः समूहास्तासां सङ्घः सङ्घर्षस्तस्येव धीरो गम्भीरो ध्वनिर्यस्य तम्। ऊर्जितानां महतां ध्वजधनुःखड्गानां प्रभाभिर्भासुरं दीप्तं रथमारोक्ष्यामि। "लृट् शेषे च" इति चकारात् क्रियार्थक्रियायां लृट्। अथ विकीर्णाः सर्वतो विकीर्णा रुक्णाश्छिन्ना विमुखत्वमापन्नाः पराङ्मुखमृताः शत्रवो यत्र तस्मिन् रणे हृष्टान् शवभोजनोद्धतान् शोणितेन शोणानि रक्तवर्णानि अत एव भीषणानि मुखानि तुण्डानि येषां तान् क्रोशतो वाश्यमानान् क्रव्याशिनो मांसादिनः शृगालादीन् श्रोष्यसि तत्क्रोशनानि श्रोष्यसीत्यर्थः। शब्दः श्रूयते इतिवत् तद्वति तद्धर्मोपचारः। शार्दूलविक्रीड़ितं वृत्तम्। "सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीड़ितम्" इति लक्षणात्॥ ४२

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमन्महामहोपाध्यायकोला-
चलमल्लिनाथसूरिविरचिते भट्टिकाव्यव्याख्याने
सर्वपथीनाख्याने लृङ्विलासो नाम
षोड़शः सर्गः।

भरतः। आरोक्ष्यामीत्यादि। इतो निर्यास्यन् निर्गमिष्यन् अहं रथम् आरोक्ष्यामि रथो अन्याम्। कीदृशं रथं?—युगान्ते प्रलये या वारिदघटा मेघपङ्क्तयः तासां सङ्घः परस्परसम्बन्धः तस्येव घोरो गम्भीरो ध्वनिः यस्य। ऊर्जितानां ध्वजादीनां प्रभाभिर्भासुर-शीलम्। त्वमपि तत्र क्रोशतः शब्दं कुर्वाणान् क्रव्याशिनः शृगालादीन् श्रोष्यसि। कीदृ-शान्? रणे हृष्टान्, शोणितेन शोणानि रक्तानि अत एव भीषणानि भयङ्कराणि मुखानि येषाम्। रणं कीदृशे? विकीर्णा विक्षिप्ताः रुक्णाः छिन्नाः विमुखाः पराङ्मुखाः व्यापन्ना मृताश्च शत्रवो यत्र। इत्येवं वद्भिरिति सम्बन्धः॥ ४२

इति महैद्यहरिहरखानवंशसम्भवगौरचन्द्रमल्लीकात्मजश्रीभरतसेनकृतायां मुग्धबोधिन्यां
भट्टिटीकायां रावणविलापो नाम षोड़शः सर्गः॥ १६

অনুবাদ। আমি এখান হইতে নির্গত হইয়া প্রলয়কালীন মেঘমালার গম্ভীর গর্জ্জনের ন্যায় শব্দায়মান, মহৎ ধ্বজা, ধনুক ও খড়্গপ্রভায় উজ্জ্বল রথে আরোহণ করিব। অদ্যকার রণে শত্রুগণ চারিদিকে বিকীর্ণ ছিন্ন ও বিমুখ হইয়া পঞ্চত্ব প্রাপ্ত হইবে এবং শব ভোজনে উদ্ধত, রক্তাক্ত রক্তবর্ণ ভীষণাকার করালাস্যমাংসাশী শৃগালাদির চীৎকার ধ্বনি শুনিতে পাইবেন। ৪২

ষোড়শসর্গ সমাপ্ত।

## सप्तदशः सर्गः ।

आशासत ततः शान्तिमस्नुरग्नीनहावयन् ।
विप्रानवाचयन् योधाः प्राकुर्वन् मङ्गलानि च ॥ १

अन्वयः। ततः योधाः शान्तिम् आशासत, अस्नुः, अग्नीन् अहावयन्, विप्रान् अवाचयन्, मङ्गलानि च प्राकुर्वन् ॥ १ ॥

मल्लिनाथः। अथ लङ्विलासमधिकृत्याह—आशासत इति। तत इन्द्रजिद्वाक्यानन्तरं योधा ऐन्द्रजिता योद्धारः शान्तिम् विघ्नप्रतिबन्धमाशासत ऐच्छन्। शासु अनुशिष्टौ। भूतानद्यतने लङि "आङः शासु इच्छायाम्" इति तङ्। अदादित्वाच्छपो लुक्। "आत्मनेपदेष्वनतः" इति झस्य अत्। "लुङ्लङ्—" इत्यादिना अडागमः। आङटोः सवर्णदीर्घः। शान्तिकमेवाह—अस्नुः स्नाताः। ष्णा शौचे "आतः"। "लङः शाकटायनस्यैव" इति झेर्जुसादेशः। "उस्यपदान्तात्" इति पररूपत्वम्। अग्नीनहावयन्। ऋत्विग्भिरग्निकार्य्यमकारयन्नित्यर्थः। जुहोतेर्ण्यन्ताल्लङ्। विप्रानवाचयन् स्वस्तिवाचनमिति शेषः। वचेर्ण्यन्ताल्लङ्। "गतिबुद्धि—" इत्यादिना अणिकर्त्तुः कर्मत्वम्। मङ्गलानि चान्यान्यपि मङ्गलकृत्यानि प्राकुर्वन्। "अनद्यतने लङ्" इति सामान्यतः सर्वत्र भूतानद्यतने लङ्। अर्थान्तरेऽपि तत्र तत्र वक्ष्यति। प्रायेणात्र क्रियासमुच्चयः शब्दालङ्कारो द्रष्टव्यः ॥ १

भरतः। अथ लोमधिकृत्याच्यते। पाणिनिना अस्य लङिति संज्ञितो लङ् भूतानद्यतन इत्युक्ता अन्यत्रापि प्रयोगत इति तद्व्यभिचारमाहुः अन्ये, स्वमते अवद्भूतभव्ये इत्यत्र इति भूतसामान्ये घ्यादय उक्ताः, किञ्च अ ऐंस्त्ययदित्वतीते इत्यत्र अपवादोऽयमित्युक्तवतां परेषां भूतानद्यतनपरोक्षवादौ लङादिविधानमप्युद्भूतम्—आशासतेत्यादि। तत इन्द्रजित प्रतिज्ञानन्तरं योधाः कुशलार्थं शान्तिम् अभीष्टवन्त.। "आङ्पूर्वास्तु शासिङ् आशुङ् आशुःमङ्क्वाशिषि स्मृता." शासु लङ् अनेकार्थत्वात् इच्छायामपि लुगदोऽपः आत्मोऽन्तः। शान्तिं दर्शयति—अस्नुः स्नानं चक्रुः। ष्णा स शौचने, विभाषेदातोऽजुस् वा, उस्येपोत्यालोपः। अग्नीन् अहावयन होमं कारितवन्तः। हु शि होमेऽदनं णिः। विप्रान् अवाचयन्

सन्निवाचनं कारितवन्तः । मङ्गलानि वध्यस्नानानि प्राकुर्वन् प्रस्तुतानि चक्रुः । तत्तद्यत्र गुणः क्रमोऽश्वर्मीरं ॥ १

অনুবাদ। ইন্দ্রজিতের যোদ্ধারা শান্তিকামনায় স্নান করিল, ঋত্বিক্ দ্বারা অগ্নিতে আহুতি দান ব্রাহ্মণ দ্বারা স্বস্তিবাচন এবং অপরাপর মঙ্গলকার্য্য সম্পন্ন করিল। ১

अपूजयन् कुलज्येष्ठानुपागूहन्त बालकान् ।
स्त्रीः समावर्ज[र्ध]यन् सास्राः कार्य्याणि प्रादिशंस्तथा॥२

अन्वयः। कुलज्येष्ठान् अपूजयन्, बालकान् उपागूहन्त, सास्राः स्त्रीः समावर्ज्जयन्, तथा कार्य्याणि प्रादिशन् ॥ २

मल्लिनाथः। अपूजयन्निति। कुलश्रेष्ठान् कुलवृद्धानपूजयन् ॥ अथ तत्कालप्राप्तचेष्टितान्याह—बालकानुपागूहन्त आलिङ्गन् ॥ सास्रा वियोगदुःखाद्रुदतीः स्त्रीः स्त्रियः। "वामशसोः" इति विकल्पादियङभावपक्षे शसि पूर्वसवर्णदीर्घः। समावर्जयन्नाश्वासयन्नित्यर्थः। समावर्धयन्निति पाठेऽप्ययमेवार्थः। "तत्करोति—" इति ण्यन्तात्लङ्। तथा कार्य्याणि गृहकृत्यानि प्रादिशन्नुपदिष्टवन्तः॥ २

भरतः। अपूजयन्नित्यादि। योधा. कुलश्रेष्ठान् वृद्धान् पूजितवन्तः। पूज क पूजने। बालकान् आश्लिष्टवन्तः। पतिनाशशङ्कया सास्राः रोदनान्विताः स्त्रियः समवर्द्धयन् आश्वासितवन्तः। इदं कर्त्तव्यमिति कार्य्याणि उपदिष्टवन्तः। दिशोऽस्तुदादित्वात् दिशमुतुदेति शः अपित्त्वस्य ङित्त्वान्न गुणाभावः॥ २

অনুবাদ। যোদ্ধারা বংশের বয়োবৃদ্ধগণের চরণে প্রণাম, বালক-বালিকাদিগকে আলিঙ্গন, পতিনাশশঙ্কাবিধুর রমণীদিগকে সান্ত্বনাদান এবং গৃহকার্য্যে উপদেশদান করিতে লাগিল। ২

आच्छादयन् व्यलिम्पंश्च प्राश्नन्नथ सुरामिषम्।
अ[प्रा]पिबन्मधु मार्द्वी[ध्वी]कं भक्ष्यांश्चादन् यथेप्सितान्

अन्वयः। आच्छादयन् व्यलिम्पन् च, अथ सुरामिषं प्राश्नन्, मार्द्वीकं मधु अपिबन्, यथेप्सितान् भक्ष्यान् अदन् च ॥ ३

मल्लिनाथः। आच्छादयन्निति। आच्छादयन् वस्त्राण्यवसत ॥

छद संवरणे। चुरादिः। व्यलिम्पन् चन्दनादिकं लिप्तवन्तः। लिप उपदेहे। मुचादित्वात् नुम्। अथ सुरामिषं सुरामिषे मद्यमांसे। "विभाषा वृक्षमृगतृण—" इत्यादिना वैभाषिको व्यञ्जनद्वन्द्वैकवद्भावः। प्राश्नन् प्राशितवन्तः। अश भोजने "श्नाभ्यस्तयोरातः" इत्याल्लोपः। मृद्वीकाया द्राक्षाया विकारो मार्द्वीकम्। 'मृद्वीका गोस्तनी द्राक्षा' इत्यमरः। मधु मद्यमपिबन् पीतवन्तः। पा पाने। "पाघ्रा—" इत्यादिना पिबादेशः। यथेप्सितं यथेष्टं भक्ष्यान् खाद्यांश्च खण्डमोदकादीनदन् अभक्षयन्। "अदः सर्वेषाम्" इत्यडागमः॥ ३

भरतः। आच्छादयन्नित्यादि। योधा आच्छादयन् वस्त्राणि परिहितवन्तः छद किञ् संवृतौ। व्यलिम्पन् चन्दरागं चक्रुः। लिप लिपौ श प ञ् लेपे। मुचादित्वान्नुम्। अमत्रं सुराणाम् आमिषञ्च भक्षितवन्तः। अश ग् भोजने, क्र्यादित्वात श्नाद्योरालोप्योऽश्नौ। मधु माध्वीकं मद्यविशेषं पीतवन्तः। पा पाने। घे ञमे, स्वादानेति पिबा, लोपोऽतीऽदेषोः। यथेप्सितान् भक्ष्यान् खण्डादीन् भक्षितवन्तः। अद लौ भक्षे॥ ३

অনুবাদ। তাহারা বস্ত্র পরিধান, চন্দনাদিলেপন, মাংস ভোজন, মদ্য পান এবং ইচ্ছানুরূপ যথেষ্ট ভোজ্য ভোজন করিল। ৩

**व्यश्यन् शस्त्राण्यभीष्टानि समनह्यंश्च वर्मभिः।**
**अध्यासत सुयानानि द्विषद्भ्यश्चाशपंस्तथा॥ ४**

अन्वयः। अभीष्टानि शस्त्राणि व्यश्यन्, वर्मभिः च समनह्यन्, सुयानानि अध्यासत, तथा द्विषद्भ्यः अशपन् च॥ ४

मल्लिनाथः। व्यश्यन्निति। अभीष्टान्यपेक्षितानि शस्त्राणि व्यश्यन् निशितीचक्रुः। शो तनूकरणे। "ओतः श्यनि" इत्याकारलोपः। वर्मभिः समनह्यंश्च। गात्राण्यबध्नन् वर्माण्यामुञ्चन्नित्यर्थः। सुयानानि शोभनवाहनान्यध्यासत आरोहन्नित्यर्थः। आसेर्लङि शपो लुकि झस्यादादेशः। तथा द्विषद्भ्योऽशपंश्च पापिष्ठाः क्व यास्यथ मृताः स्थेत्याक्रोशन्नित्यर्थः। शप आक्रोशे। "श्लाघह्नुङ्—" इत्यादिना सम्प्रदानत्वाच्चतुर्थी॥ ४

भरतः। व्यश्यन्नित्यादि। योधा अभीष्टानि शस्त्राणि व्यश्यन् शितानि चक्रुः। शो तनूकरणे। दिवादित्वात् श्यन्, ओतः श्यनीति ओकारलोपः। वर्मभिः कवचैः सन्नहनं

शरीरोपलक्षणं धनुः। मस जौ बन्धे दिकादिः। शोभनानि यानानि अध्यासत। आसे-
रित्यादिना तस्य ढत्वम्। विपद्ग्रिरत्रपन्। त्रप ञ् लज्जायां। यत्नौ दिवोति सम्प्रदानत्वम् ॥ ४

अनुवाद। তাহারা নিজ নিজ অভীষ্ট অস্ত্রে শাণ দিতে লাগিল এবং
বর্ম্ম দ্বারা গাত্র আবৃত করিয়া উত্তম রথে আরোহণ পূর্ব্বক শত্রুদিগকে
অভিসম্পাত করিতে লাগিল। ৪

अपूजयंश्चतुर्वक्त्रं विप्रानार्चंस्तथास्तुवन्।
समाल[लि]भ[प]त शक्रारिर्यानं चाभ्यलषद्वरम् ॥ ५

अन्वयः। (ते) चतुर्वक्त्रम् अपूजयन्, विप्रान् च आर्चन्, तथा अस्तुवन्; शक्रारिः
समालभत, वरं यानं च अभ्यलषत् ॥ ५

मल्लिनाथः। अपूजयन्निति। सेनान्यः चतुर्वक्त्रं चतुर्मुखं
ब्रह्माणमपूजयन् तथा विप्रांश्चार्चन्नर्चयामासुः। अर्चेर्भौवादिकाल्लङि
आड्वृद्धिः। तथा अस्तुवन् ब्रह्माणं विप्रांश्चेत्यर्थः। अथ शक्रारि-
रिन्द्रजिदपि समालभत चन्दनादिकमलिपत् वरं श्रेष्ठं यानं वाहनं
चाभ्यलषदभिलषितवान् ॥ ५

भरतः। अपूजयन्नित्यादि। योधाः चतुर्वक्त्रं ब्रह्माणं पूजितवन्तः विप्रान् अर्चितवन्तः।
अर्च च चकारात् पूजे। तथा स्तुतवन्तः। ष्टु ञ ल स्तुतौ। सुध्वादिष्वुङ्। शक्रारिः
इन्द्रजित् अङ्गानि लिप्तवान्, वरम् उत्कृष्टं यानम् इष्टवान् च। लष अ लस न स्पृहि।
कमेक्रमेत्यादिना श्यनो विभाषितत्वात् पक्षे शप् ॥ ५

অনুবাদ। সেনানীগণ ব্রহ্মার পূজা করিয়া এবং ব্রাহ্মণদিগের অর্চনা
ও স্তব করিতে লাগিল। ইন্দ্রজিৎও চন্দনাদি লেপন ও উত্তম যানারোহণে
অভিলাষী হইল। ৫

आमुञ्चद्वर्म रत्नाढ्यमबध्नात् खड्गमुज्ज्वलम्।
अध्यास्त स्यन्दनं घोरं प्रावर्त्तत ततः पुरः ॥ ६

अन्वयः। रत्नाढ्यं वर्म्म आमुञ्चत, उज्ज्वलं खड्गम् अबध्नात्, घोरं स्यन्दनम् अध्यास्त,
ततः पुरः प्रावर्त्तत ॥ ६

मल्लिनाथः। आमुञ्चदिति। रत्नाढ्यं रत्नचणं वर्म कवच-
मामुञ्चदामुक्तवान्। उज्ज्वलं दीप्रं खड्गमबध्नात् कटिदेशे बबन्ध।
घोरं भीमं स्यन्दनमध्यास्त। ततो रथारोहणानन्तरं पुरः पुरात्
प्रावर्त्तत निरगादित्यर्थः ॥ ६

भरत:। आमुञ्चदित्यादि। इन्द्रजित् रत्नाढ्यं वर्म्म कवचम् आमुञ्चत् पिनद्धवान्। मुच् लृ ष म च औ मोचने, आङ्पूर्व: परिधाने वर्त्तते। तुच् राधौ सुचामिति तुच्। उत्तमं खड्गं पार्श्वे बद्धवान्। बन्धौ श बन्धव् बन्धे। क्र्यादित्वात् श्ना, अपिद्वस्य 'ङित्वात् श्ना, अपिद्वस्य ङित्वात् इत्युक्तलोप:। घोरं भीषणं रथम् अध्यास्त आरूढ:। ततोऽनन्तरं अन्यां पुरत: प्रवृत्त: ॥ ६

অনুবাদ। ইন্দ্রজিৎ বিবিধ রত্ন ভূষিত বর্ম্ম পরিধান করিল, কটিদেশে উজ্জ্বল খড়্গ বাঁধিল, ভীষণ রথে উঠিল, তৎপরে নগর হইতে নির্গত হইল। ৬

आघ्नन् भेरीर्महास्वाना:
कम्बू[म्ब]न[स्वा]प्यधमन् शुभान्।
अताड़यन्मृदङ्गांश्च
पेरांश्चापूरयन् कला: ॥ ७

अन्वय:। महास्वाना: भेरी: आघ्नन्, शुभान् कम्बून् अपि अधमन्, मृदङ्गान् च अताड़यन्, कला: पेरा: च अपूरयन् ॥ ७

मल्लिनाथ:। आघ्नन्निति। महास्वाना महाघोषा:। "स्वन-हसोर्वा" इति घञप्रत्यय:। भेरीराघ्नन्नताड़यन्। "गमहन—" इत्यादिनोपधालोप:। सकर्म्मकत्वात् "आङो यमहन:" इति न तङ्। शुभान् मङ्गलान् कम्बूंश्चाधमन्नध्वनयन्नित्यर्थ:। ध्मा शब्दाग्निसंयोगयो:। "पाघ्रा—" इत्यादिना धमादेश:। मृदङ्गां-श्चाताड़यन्नघ्नन्। तड़ आघाते। चुरादि:। कला मधुरस्वना: पेरा: काहलांश्चापूरयन् मुखमारुतपूरणेनानादयन् ॥ ७

भरत:। आघ्नन्नित्यादि। तस्मिन् प्रवृत्ते वाद्यकारा महानादा भेरी: अ हतवन्त:। हन् लौ वधे गतौ, आङ्पूर्व्वत्वात् आघाते। शोभनान् शङ्खान् अधमन् वादितवन्त:। ध्मा अग्नियुतौ ध्वनौ। स्यादानपेति धमादेश:। मृदङ्गांस्ताड़िततन्त:। तड़ क दिपि। आहता: कला अव्यक्तमधुरस्वरा: पेरा वाद्यविशेषा पूरितवन्त:। पूर क च, चकारात् पूर्णौ ॥ ७

অনুবাদ। ইন্দ্রজিৎ বাহির হইলে বাদ্যকরেরা গম্ভীর ধ্বনি ভেরী ও মৃদঙ্গ বাদন এবং মঙ্গল শঙ্খধ্বনিত করিল। মুখ বায়ুদ্বারা মধুর ধ্বনি কাহলা যন্ত্রও বাজাইল। ৭

अस्तुवन् बन्दिन: शब्दानन्योन्यं चोदभावयन्।
अनदन् सिंहनादांश्च प्राद्रेक[क्रेष]न्त हयद्विषम् ॥८

अन्वयः। बन्दिनः अस्तुवन्, अन्योन्यं शब्दान् च उदभावयन्, सिंहनादान् च अनदन्, हयद्विपम् प्राद्रेकत॥ ८

मल्लिनाथः। अस्तुवन्निति। बन्दिनः स्तुतिपाठका अस्तुवन्। ष्टुञ् स्तुतौ। शपो लुक्। उवङादेशः। अन्योन्यस्य सम्बन्धिनः शब्दान् विरुदावलिप्रमुखान् प्रबन्धानन्योन्यश्रवणानन्तरं बन्दिमुखेनोच्चैरपाठयन्नित्यर्थः। सिंहनादांश्चानदन्नकुर्वन्नित्यर्थः। हयाश्च द्विपाश्च हयद्विपम्। सेनाङ्गत्वाद् द्वन्द्वैकवद्भावः। प्राद्रेकत प्रकर्षेण शब्दायन्ते स्म। हया जिहेषिरे द्विपाश्च बृंहिरे इत्यर्थः ट्रेकृ भ्रेकृ शब्दोत्साहयोः। लङि लङ्॥ ८

भरतः। अस्तुवन्नित्यादि। बन्दिनः स्तुतिपाठका इन्द्रजितम् अस्तुवन् जयशब्दं चक्रुः। अन्योऽन्यं नामानि उद्घोषितवन्तः अमुकस्त्वमोहमित्युक्तवन्तः इत्यर्थः। सिंहनादं चक्रुः, सैनिका इत्यर्थात्। हयद्विपं गतिं चक्रे। हयाश्च द्विपाश्च इति समाहारः। द्रेष ङ् सर्पणे पाणिनीयात्, द्रेषधातुरनेकार्थत्वात् अव्यक्तशब्देऽपि, तेन प्राद्रेषत अव्यक्तं शब्दं चकार इत्याह; प्राद्रेकतेति पाठे—ट्रेकृ भ्रेकृ ङ शब्दोत्साहे औज्ज्वल्यमिति क्षीरस्वामी। उत्साहो दार्ढ्यमिति चन्द्रः॥ ८

অনুবাদ। স্তুতিপাঠকেরা ইন্দ্রজিতের "জয় হউক" বলিয়া স্তব পাঠ করিল এবং উভয় পক্ষের বীরগণের নাম করিতে লাগিল। সৈন্যগণ সিংহনাদ করিল, অশ্ব সকল হ্রেষা এবং হস্তীগুলি বৃংহণ করিয়া উঠিল। ৮

**अनिमित्तान्यथापश्यन्नस्फुटद्रविमण्डलम्।**
**औक्षन् शोणितमम्भोदा वायवोऽवान् सुदुःसहाः॥ ९**

अन्वयः। अथ अनिमित्तानि अपश्यन्, रविमण्डलम् अस्फुटत, अम्भोदाः शोणितम् औक्षन्, वायवः सुदुःसहाः अवान्॥ ९

मल्लिनाथः। अनिमित्तानीति। अथानिमित्तानि निमित्तविरुद्धानि दुर्निमित्तान्यपश्यन्। "पाघ्रा—" इत्यादिना पश्यादेशः। तान्येवाह—रविमण्डलमस्फुटत् स्फाटितं दीर्णमित्यर्थः। अम्भोदाः शोणितमौक्षन्नासिञ्चन्नवर्षन्नित्यर्थः। उक्ष सेचने। आङ्वृद्धिः। वायवः सुदुःसहा अतितीव्राः सन्तोऽवान् ववुः। वा गतिगन्धनयोः। शपो लुक्। "लङः शाकटायनस्यैव" इति विकल्पाज्जुसभावपक्षे "झोऽन्तः" "अतो गुणे" इति पररूपम्। "इतश्च" इति लोपसंयोगान्तलोपौ। ९

भरतः। अनिमित्तानीत्यादि। अथ अनन्तरम् इन्द्रजित्प्रभृतयो निन्दितानि निमित्तानि अपश्यन्। स्थानानपेति इति पश्यः। कुत्सायामत्र नञ्। यदुक्तं—"तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः॥" इति। अनिमित्तानि दर्शयति—रविमण्डलं स्फुटितं विदीर्णम्। स्फुटश्च विकाशे। मेघा रक्तं वर्षन्ति स्म। ववृषिरे। दुःसहा वायवो वान्ति स्म, वा च गमनगन्धनयोः, विषविदातीऽनुष् वैश्यस्याप्रतिपद्ये रूपम्॥ ९

অনুবাদ। তাহার পর তাহারা পরবর্ত্তী অশুভচিহ্ন সকল দেখিতে পাইল, সূর্য্যমণ্ডল বিদীর্ণ হইতে লাগিল, মেঘমালা রক্তবর্ণ করিতেছিল এবং বায়ু প্রচণ্ডবেগে বহিতে লাগিল। ৯

**आर्च्छन् वामं मृगाः कृष्णाः शस्त्राणां व्यस्मरन् भटाः**
**रक्तं न्यष्ठीवदक्लाम्यदखिद्यद्वाजिकुञ्जरम्॥ १०**

अन्वयः। कृष्णाः मृगाः वामम् आर्च्छन्, भटाः शस्त्राणां व्यस्मरन्, वाजिकुञ्जरम् अखिद्यत् रक्तं न्यष्ठीवत् अक्लाम्यत्॥ १०

मल्लिनाथः। आर्च्छन्निति। कृष्णा मृगाः कृष्णसारा वामं सव्यमार्च्छन्नागच्छन्। ऋच्छ गतौ। ऋर्त्तेर्वा "पाघ्रा—" इत्यादिना ऋच्छादेशः। भटाः शस्त्राणां व्यस्मरन् शस्त्राणि व्यस्मरन्नित्यर्थः। "अधीगर्थ—" इत्यादिना कर्म्मणि शेषे षष्ठी। वाजिकुञ्जरम्। सेनाङ्गत्वादेकवद्भावः। अखिद्यदरोगमपि रक्तं न्यष्ठीवत् ष्ठीवति स्म। ष्ठिवु निरसने। भौवादिकः। अक्लाम्यत् क्लान्तम्। क्लमेः श्यनि "ष्ठिवुक्लमुचमां शिति" इति दीर्घः॥ १०

भरतः। आर्च्छन्नित्यादि। कृष्णा मृगा वामं पार्श्वं गताः। ऋच्छ प्रापणे च, अच्छागन् मत्वा, व्यादानप्राप्तेति ऋच्छादेशः, ऋच्छ मूर्त्तौ गमनमोहयोरित्यस्य वा रूपम्। भटा योधाः शस्त्राणां विस्मृतवन्तः। कर्मणि षष्ठी। वाजिनश्च कुञ्जराश्च वाजिकुञ्जरं रक्तं न्यष्ठीवत् प्रच्छादिसवत्। ष्ठिवु-ष्ठिव्य-ष्ठीव निरासे। भ्वादादिगण इत्यादौ ष्ठिववर्जनान्न षत्वं, ष्ठिवुक्लमाचम इति दीर्घः। अक्लाम्यत्, क्लान्तश्च अभवत्। क्लमु ग्लानौ, शमादित्वात् दीर्घः। अखिद्यत् खिन्नश्च अभवत् खिद अ थ्यौ दैन्ये। अखिद्यदपि अग्लानमपि रक्तं न्यष्ठीवदक्लाम्यच्चेति वा योज्यम्॥ १०

অনুবাদ। তাহাদের বামপার্শ্বে কৃষ্ণসার মৃগ আসিল, যোদ্ধারা অস্ত্র লইতে বিস্মৃত হইল, হস্তী ও অশ্বগুলি নীরোগ হইলেও রক্তবমন করিতে লাগিল সুতরাং তাহারা ক্লান্ত ও খিন্ন হইয়া পড়িল। ১০

न तानगणयन् सर्वानास्कन्दंश्च रिपून् द्विषः।
अच्छिन्दन्नसिभिस्तीक्ष्णैरभिन्दंस्तोमरैस्तथा ॥ ११

अन्वयः। द्विषः (राक्षसाः) तान् सर्व्वान् न अगणयन्, रिपून् (वानरान्) आस्कन्दन् च, तीक्ष्णैः असिभिः अच्छिन्दन्, तथा तोमरैः अभिन्दन् ॥ ११

मल्लिनाथः। नेति। द्विषो राक्षसास्तानि सर्वाण्यपि दुर्निमित्तानि नागणयन् नाद्रियन्त। रिपून् वानरानास्कन्दनभ्यगच्छंश्च। तीक्ष्णैरसिभिराच्छिन्दन्। तथा तोमरैरभिन्दन् व्यदारयंश्च ॥ ११

भरतः। न तानित्यादि। द्विषो राक्षसाः तान् सर्वान् पूर्वोक्तान् रविमण्डलविदारणादीन् अशुभान् नागणयन् अवज्ञातवन्तः। किमेभिः कार्यमिति भावः। शत्रून् अभिगतवन्तश्च। पुनः असिभिः छिन्नवन्तः रिपून् इत्यर्थात्। छिदि रुधादित्वात् श्नम्। नशो नुँ ङ्कापिति आकाररहितत्वम्। तथा तोमरैः विदारितवन्तः, भिदिः पूर्ववत् श्नम् ॥ ११

অনুবাদ। রাক্ষসগণ সে সকল গ্রাহ্য করিল না। তাহারা শত্রুর সম্মুখে উপস্থিত হইল। তীক্ষ্ণধার অসিদ্বারা শত্রুদিগকে ছেদন এবং তোমর দ্বারা বিদীর্ণ করিল। ১১

न्यक्रन्तंश्चक्रधाराभिरतुदन् शक्तिभिर्दृढम्।
भल्लैरविध्यन्नुग्राग्रैरतृंहंस्तोमरैरलम् ॥ १२

अन्वयः। चक्रधाराभिः न्यकृन्तन्, शक्तिभिः दृढम् अतुदन्, उग्राग्रैः भल्लैः अविध्यन्, तोमरैः अलम् अतृंहन् ॥ १२

मल्लिनाथः। न्यक्र इति। चक्राणां धाराभिरश्रिभिर्न्यकृन्तन् चिच्छिदुः। कृती छेदने। तौदादिकः। "शे मुचादीनाम्" इति नुम्। शक्तिभिः कासूभिः 'कासूसामर्थ्ययोः शक्तिः' इत्यमरः। दृढमतुदन्नव्यथयन्। उग्राग्रैस्तीक्ष्णमुखैर्भल्लैर्बाणविशेषैः। 'स्याद्भल्लो भल्लः' इति यादवः। अविध्यन्नताडयन्। व्यध ताडने। लङि श्यनाङित्वात् "ग्रहिज्यावयि—" इत्यादिना सम्प्रसारणम्। तोमरैरलमतृंहन्नहिंसन्। तृह हिंसायाम्। "रुधादिभ्यः श्नम्"। "श्नसोरल्लोपः"। "नश्च—" इत्यनुस्वारः ॥ १२

भरतः। न्यकृन्तन्नित्यादि। राक्षसाः चक्रधाराभिः न्यकृन्तन्। कृती वेष्टने छिदि मुचादित्वात् नुम्। शक्तिभिः दृढं व्यथयामासुः। तुद व्यथने। उग्राग्रैः तीक्ष्णाग्रैः

भट्टैः अविध्यन् व्यधौ ताड़ने, दिवादित्वात् श्यन्, अपिद्रस्य ङित्त्वात् ग्रहज्यादिना सम्प्रसारणम् । अलम् अत्यर्थं तोमरैः हिंसितवन्तः । तृह च हनभू व हिंसे, रुधादित्वात् नम् नलोपः । अर्दयन् स्थूलपट्टिशैरिति क्वचित् पाठः । "पट्टिशो लौहदण्डो यस्तीक्ष्णधारः क्षुरोपमः" इति वैजयन्ती ॥ १२

अनुवाद। চক্রাস্ত্রের ধার দিয়া কতক গুলিকে ছেদন করিয়া শক্তি অস্ত্রের আঘাতে অত্যন্ত ব্যথিত করিল। তীক্ষ্ণধার ভল্ল দ্বারা তাড়না করিল এবং তোমর দ্বারা নিরতিশয় হিংসা করিতে লাগিল। ১২

**आस्यन् प्लवङ्गमा वृक्षानधूर्व[न्व]न् भूधरै[र्भृ]शम्[स्तथा]**
**अहिंसन् मुष्टिभिः क्रोधाददशन् दशनैर[पि]लम् ॥**

अन्वयः। प्लवङ्गमाः वृक्षान् आस्यन्, तथा भूधरैः अधूर्व्वन्, क्रोधात् मुष्टिभिः अहिंसन्, दशनैः अलम् अदशन् ॥ १३

मल्लिनाथः। आस्यन्निति। प्लवङ्गमाः कपयोऽपि वृक्षानास्यन्-क्षिपन्। असु क्षेपणे। लङि श्यन्। आडागमः। तथा भूधरैश्चाधूर्वन्नहिंसन्। धुर्वी हिंसायाम्। भ्वादिः। "उपधायाश्च" इति दीर्घः। क्रोधान्मुष्टिभिरहिंसन्नघ्नन्। हिसि हिंसायाम्। "श्नसो-रल्लोपः।" "श्नान्नलोपः"। दशनैर्दन्तैरलमदशन् दष्टवन्तः। दंश दशने। "दंशसञ्जस्वञ्जां शपि" इत्यनुनासिकलोपः॥ १३

भरतः। आस्यन्नित्यादि। वानरा वृक्षान् आस्यन् क्षिप्तवन्तः। असु क्षेपे। पर्वतैः हिंसितवन्तः। धुर्व हिंसे। व्यञ्जनचतुर्थीति दीर्घः। क्रोधात् मुष्टिभिः अहिंसन्। हिस धि कि हिंसे, रुधादित्वात् श्नम्। नशो नलोप इति इदनुबन्धज्ञापनकारस्य लोपः, ततो नश्नोर्न्नुको। दन्तैः खादितवन्तः। दन्शौ दंशने। सन्नदन्शस्तन्लोऽपि न लोपः ॥ १३

अनुवाद। বানরগণও বৃক্ষ নিক্ষেপ এবং পর্ব্বত দ্বারা আঘাত করিল। ক্রোধভরে মুষ্টি প্রহার ও দন্ত দ্বারা দংশন করিল। ১৩

**प्रादुन्वन् जानुभिस्तूर्णमतुदंस्तलकूप[र्प]रैः ।**
**प्राक्षिपन्नरिमुक्तानि शस्त्राणि विविधानि च ॥ १४**

अन्वयः। तूर्णं जानुभिः प्रादुन्वन्, तलकूर्परैः अतुदन्, अरिमुक्तानि विविधानि शस्त्राणि च प्राक्षिपन् ॥ १४

मल्लिनाथः। प्रेति। तूर्णं जानुभिरष्ठीवद्भिः प्रादुन्वन्नतापयन्। दुञ् परितापे। स्वादिः। तलैः करतलैः कूर्परैः कफोणिभिश्चातुद-

न्यघ्नन्। किं चारिमुक्तानि राक्षसप्रयुक्तानि विविधानि शस्त्राणि प्राहिण्वन् प्रायुञ्जत। तैरेव तान् प्रजघ्नुरित्यर्थः। हि गतौ। "स्वादिभ्यः श्नुः"। श्नाऽभ्यासादेशे यणादेशः॥ १४

भरत। प्रादुन्वन्नित्यादि। जानुभि. प्रादुन्वन् पीडितवन्तः। टु दु न टु दु उपतापे, स्वादित्वात् श्नुर्ध्वोरिति वत्वम्। तलैः चपेटैः कूर्परैः कफोणिभिश्च अतुदन्। तुद श औ व्यथे। अनुदन्निति पाठे—नुद श औ प्रेरणे। "तलश्चाथ. स्फुरपि च खड्गमुष्टिचपेटयोः" इति विश्वः। "स्यात् कफोणिस्तु कूर्परः" इत्यमरः। अरिभिः निशाचरैः यानि शस्त्राणि मुक्तानि, तानि पुनस्तेभ्य एव प्राहिन्वन्तः। हि न वर्द्धने गतौ। प्राग्वन्नो ण इति णत्वम्॥ १४

অনুবাদ। কপিগণ জানু দ্বারা রাক্ষসদিগকে পাতিত করিয়া কফোণি (কনুই) দ্বারা ব্যথিত করিল এবং অরিনির্ক্ষিপ্ত বিবিধ শস্ত্র দ্বারা তাহাদিগকেই প্রহার করিতে লাগিল। ১৪

**अतृणेट् शक्रजिच्छत्रूनभ्राम्यच्च समन्ततः।**
**अध्वनच्च महाघोरं न च कञ्चन नादुनोत्॥ १५**

अन्वयः। शक्रजित् शत्रून् अतृणेट्, समन्ततः अभ्राम्यत्, महाघोरं अध्वनत् च, कञ्चन न च अदुनोत्॥ १५

मल्लिनाथः। अतृणेडिति। अथेन्द्रजित् शत्रूनतृणेट् हिंसितवान्। तृह हिंसायाम्। श्नमि "तृणह इम्"। "हल्ङ्याब्—" इत्यादिना तिलोपः। "हो ढः"। ढत्वचर्त्वे। समन्ततो रणे सर्वत्राभ्राम्यत् समचरत्। महाघोरमतिभयङ्करमध्वनत् ननाद च। कञ्चन कमपि न नादुनोत् किं तु सर्वं चादुनोत् दुनोति स्म। टुदु परितापे। "स्वादिभ्यः श्नुः"॥ १५

भरत.। अतृणडित्यादि। इन्द्रजित् अरीन् हिंसितवान्। तृह धु इनभ् श हिंसे रुधादित्वान्नम्, तृह इम् पिड्ढले इति इम्, हल्ङ्याभ्यां दिसीरिति दिलोपः, हो ढः। समन्तात् सर्वतो भ्राम्यति स्म, शमः श्मादित्वात् दीर्घः। महाघोरं ध्वनिञ्च नादितवान्, न नादुनोत् इति न, किन्तु पीड़ितवान्॥ १५

অনুবাদ। ইন্দ্রজিৎ শত্রুদিগকে প্রহার করিল এবং যুদ্ধস্থলের চারিদিকে ঘুরিতে ঘুরিতে অতি বিকট ধ্বনি করিল। অধিক কি সকলকেই সন্তপ্ত করিয়া তুলিল। ১৫

नाजानन् सन्दधानं तं धनुर्नैक्षन्त विभ्रतम् ।
नेषूनचेतन्नस्यन्तं हतास्तेनाविदुर्द्विषः ॥ १६

अन्वयः। तेन हताः द्विषः तं सन्दधानं नाजानन्। धनुर्विभ्रतं नैक्षन्त, इषून् अस्यन्तं नाचेतन्, न विदुः ॥ १६

मल्लिनाथः। नेति। तेनेन्द्रजिता हताः प्रहृता द्विषः कपयस्तमिन्द्रजितं सन्दधानं धनुषि शरं योजयन्तं नाजानन्। धनुर्विभ्रतं च नैक्षन्त नापश्यन्। इषूनस्यन्तं क्षिपन्तं च नाचेतन्नाजानन्। चिती संज्ञाने। नाविदुः किं बहुना स्वप्रहरणं विना न किञ्चिदजानन्नित्यर्थः। विद ज्ञाने। शपो लुक्। "सिजभ्यस्तविदिभ्यश्च" इति झेर्जुसादेशः ॥ १६

भरतः। नाजानन्नित्यादि। धनुषि शरं सन्दधानम् आरोपयन्तं तम् इन्द्रजितं योधा न ज्ञातवन्तः। ज्ञा न बोधने। ज्यादानपाप्रेति जादेशः। धनुर्विभ्रतं धारयन्तं तं न दृष्टवः। इषून् बाणान् अस्यन्तं क्षिपन्तम् अज्ञातवन्तः। चिती ज्ञाने। सर्वत्र हस्तलाघवात् केवलं तेन हताः सन्तो द्विषः कपयः पूर्वोक्तं ज्ञातवन्तः। विद ल गतौ, द्विषविदात इति अन उस् ॥ १६

অনুবাদ। ইন্দ্রজিৎ কর্তৃক প্রহৃত শত্রু বানরগণ জানিতে পারিল না যে, ধনুকে শরসন্ধান করিতেছে। তাহারা তাহার ধনুর্দ্ধারণ ও বাণ নিক্ষেপণ কিছুই বুঝিতে পারিল না, অধিক কি তাহারা প্রহার যন্ত্রণাই বাণবর্ষণ মাত্র অনুভব করিল। ১৬

अशृण्वन्नन्यतः शब्दं प्रपलायन्त चान्यतः ।
आक्रन्दमन्यतोऽकुर्वंस्तेनाहन्यन्त चान्यतः ॥ १७

अन्वयः। (वानराः) अन्यतः शब्दम् अशृण्वन्, अन्यतः प्रपलायन्त च, अन्यतः आक्रन्दम् अकुर्वन्, तेन च अन्यतः अहन्यन्त ॥ १७

मल्लिनाथः। अशृण्वन्निति। अन्यतोऽन्यत्र शब्दं सिंहनादमशृण्वन्। अन्यतः शब्ददेशादन्यत्र प्रपलायन्त प्रपलायिताः। एकत्र शब्दं श्रुत्वान्यत्र प्रहारादन्ये शब्दं शृण्वन्ति अन्ये पलायन्त इत्यर्थः। प्रपरापूर्वादयतेर्लङ्। "उपसर्गस्यायतौ" इति लत्वम्। अजादित्वादाट्। अन्यतोऽन्यत्राक्रन्दमाक्रोशमकुर्वन्नन्यत्राक्रन्द-

टेशादन्यत्र तेनेन्द्रजिता अहन्यन्त हताः। एकत्र कलकलमुत्पाद्यान्यत्र प्रहृता इत्यर्थः॥ १७

भरतः। अशृण्वन्नित्यादि। केचित् द्विषोऽन्यतोऽन्यस्मिन् देशे तस्य शब्दं शुश्रुवन्तः। श्रोश्रुवेर इति श्रुजिंश्च श्रीविति सामान्योक्तत्वात् शु गताविति भौवादिकस्य श्रुव गतौ श्रुताविति स्वादिपठितस्य च ग्रहणं, श्रवणार्थकोऽपि पाणिनिप्रभृतिभिर्भ्वादौ पठ्यते, भ्वादिपाठवचनात् भवतीत्यपि स्यादिति टीकाकृतः। अन्यत्र च पलायिताः। अन्यत्र स्थिता वादनशक्तुः तेन इन्द्रजिता चान्यत्र हताः। तस् कोरिति सप्तम्यां तस्॥ १७

অনুবাদ। বানরেরা একদিকে সিংহনাদ শুনিয়া অপর দিকে যেমন পলায়নপূর্ব্বক কোলাহল করিতে লাগিল, অমনি ইন্দ্রজিৎও সেই দিকে গিয়া তাহাদিগকে প্রহার করিতে লাগিল। ১৭

प्रालोठन्त व्यभिद्यन्त परितो रक्तमस्रवन्।
पर्य्यश्राम्यन्नतृष्यंश्च क्षतास्तेनाम्रियन्त च॥ १८

अन्वयः। तेन (इन्द्रजिता) क्षताः (वानराः) प्रालोठन्त, व्यभिद्यन्त, परितः रक्तं च अस्रवन्, पर्य्यश्राम्यन् अतृष्यन् च अम्रियन्त च॥ १८

मल्लिनाथः। प्रेति। तेनेन्द्रजिता क्षताः प्रहृताः प्रालोठन्त भुवि विलुठिताः। व्यभिद्यन्त विदारिताः। भिदेः कर्मणि लङ्। परितो रक्तं चास्रवन्नक्षरन्। पर्य्यश्राम्यन् परिश्रान्ताः। अतृष्यंश्च तृषिताश्च। तृष पिपासायाम्। अम्रियन्त मृताश्च॥ १८

भरतः। प्रालोठन्तेत्यादि। तेन इन्द्रजिता क्षताः केचित् भूमौ प्रालोठन्त। लुठ लुठ इ प्रतिघाते। व्यभिद्यन्त भिदेः कर्मणि रूपम्। परितः समन्तात् रक्तञ्च मुक्तवन्तः। पर्य्यश्राम्यन् परिश्रान्ताः। श्रमु म्य शि इर् तपःखेदयोः। शमादित्वात् दीर्घः। अतृष्यन् पिपासिताः, अम्रियन्तः हताः। मङ्गष्टौर्य्ये मम्॥ १८

অনুবাদ। ইন্দ্রজিৎ কর্ত্তৃক প্রহৃত হইয়া তাহারা কেহ ভূতলে লুণ্ঠিত হইল, কেহ বা বিদারিত হইল, অন্যান্য চারিদিকে রক্তস্রাব করিল, কেহ বা পরিশ্রান্ত ও তৃষ্ণাকাতর হইল, কেহ কেহ বা মরিয়াও গেল। ১৮

सौमित्रिराकुलस्तस्मिन् ब्रह्मास्त्रं सर्वरक्षसाम्।
निधनायाजुहूषत्तं व्यष्टम्भाद्रघुनन्दनः॥ १९

अन्वयः। सौमित्रिः आकुलः (सन्) सर्व्वरक्षसां निधनाय तस्मिन् (इन्द्रजिति) ब्रह्मास्त्रम् आजुहूषत्, तं रघुनन्दनः व्यष्टम्भात्॥ १९

मल्लिनाथः । सौमित्रिरिति । अथ सौमित्रिर्लक्ष्मण आकुलः क्षुभितः सन् सर्वरक्षसां निधनाय तस्मिन्निन्द्रजिति ब्रह्मास्त्रमाजुहूषदाह्वातुमैच्छत् । ह्वयतेः सन्नन्तादाङ्पूर्वाल्लङ् । यजादित्वात्सम्प्रसारणम् । ततो द्विर्वचनम् । दीर्घः । तं सौमित्रिं रघुनन्दनो व्यष्टभ्नात् प्रत्यबध्नात् । विभीषणत्राणार्थेति भावः । "स्तन्भुस्तुन्भु—" इत्यादिना श्नाप्रत्ययः ॥ १९

भरतः । सौमित्रिरित्यादि । तस्मिन् इन्द्रजिति अर्थात् तथाभूते सति, सौमित्रिः लक्ष्मणः आकुलः सन् सर्वेषां रक्षसां निधनाय ब्रह्मास्त्रम् आह्वातुम् ऐच्छत् । ह्वेञ् इत्यस्य सनि, घीऽङ्कुर्भ्यानिरुनाम् । तं सौमित्रिं रामो निवारितवान्, विभीषणनाशभयात् । सनुभुः सौचः स्वादिः गोक इत्यादिना षत्वम् ॥ १९

অনুবাদ। অনন্তর সুমিত্রানন্দন ব্যাকুল হইয়া সমস্ত রাক্ষস-নিধনার্থ ইন্দ্রজিতের প্রতি নিক্ষেপ করিবার জন্য ব্রহ্মাস্ত্রের আহ্বান করিতে অভিলাষী হইলেন কিন্তু সেই সঙ্গে বিভীষণও নষ্ট হন, এই ভয়ে রামচন্দ্র তাঁহাকে নিবারণ করিলেন। ১৯

ततो मायामयीं सीतां घ्नन् खड्गेन वियद्गतः ।
अदृश्यतेन्द्रजिद्वाक्यमवदत्तं मरुत्सुतः ॥ २०

अन्वयः । ततः इन्द्रजित् वियद्गतः मायामयीं सीतां खड्गेन घ्नन् अदृश्यत, तं मरुत्सुतः वाक्यम् अवदत् ॥ २०

मल्लिनाथः । तत इति । ततः सेनाविजयानन्तरमिन्द्रजिद्वियद्गतो मायामयीं सीतां खड्गेन घ्नन् प्रहरन्नदृश्यत । तमिन्द्रजितं मरुत्सुतो हनूमान् वाक्यमवदत् ॥ २०

भरतः । तत इत्यादि । तदनन्तरम् आकाशगतो मायानिर्मितां सीतां खड्गेन मारयन् इन्द्रजिद्दृष्टो हनूमता इत्यर्थात् । कर्म्मणि रूपम् । तं तथाभूतं मरुत्सुतो हनूमान् वाक्यम् अवदत् ॥ २०

অনুবাদ। বানরসেনা বিজয়ের পর ইন্দ্রজিৎ শূন্যে থাকিয়া মায়াসীতাকে খড়্গ দ্বারা প্রহার করিতেছে দেখিয়া হনূমান্ তাহাকে পরবর্ত্তী বাক্যগুলি বলিতে লাগিল। ২০

**ना[मा]पराध्नोदियं किञ्चिदभ्रश्यत्पत्युरन्तिकात्।**
**सीतां राक्षस मास्मैनां निगृह्णाः पाप दुःखिताम्॥**

अन्वयः। इयं सीता किञ्चित् (अपि) न अपराध्नोत, पत्युः अन्तिकात् अभ्रश्यत्, (हे) दुःखिताम् एनां सीताम् पाप राक्षस! मा स्म निगृह्णाः॥ २१

मल्लिनाथः। नेति। इयं सीता किञ्चिदपि नापराध्नोन्नापराद्धा। राधेः सौवादिकाल्लङ्। पत्युरन्तिकादभ्रश्यद् भ्रष्टा परिवियुक्तेत्यर्थः। अत एव दुःखितामेनामनपराधिनीं सीतां हे पाप क्रूर राक्षस! मास्म निगृह्णा मा वधीरित्यर्थः। "स्मोत्तरे लङ् च"॥ २१

भरतः। मापराध्नोदित्यादि। हे पाप राक्षस! इयं सीता पत्युरन्तिकात् अभ्रश्यत् अपगता न किञ्चित् अपराधं चकार। राधौ श्र सिद्धौ। भ्रंशिय्यु अधःपाते। तस्मात् एनां दुःखितां मास्म निगृह्णाः मा वधीः। मास्मे न चौर्थ्यौ॥ २१

অনুবাদ। রে পাপিষ্ঠ রাক্ষস! এই সীতা পতিবিরহিতা, সুতরাং দুঃখিনী, ইনি কোন অপরাধ করেন নাই, ইঁহাকে হত্যা করিস না। ২১

**पीड़ाकरममित्राणां कर्त्तव्यमिति शक्रजित्।**
**अब्रवीत् खड्गमाकृष्य[कृष्टश्च] तस्या मूर्द्धानमच्छिनत्॥**

अन्वयः। शक्रजित् अमित्राणां पीडाकरं कर्त्तव्यम् इति अब्रवीत्, खड्गम् आकृष्य तस्या मूर्द्धानम् अच्छिनत्॥ २२

मल्लिनाथः। पीड़ेति। अथ शक्रजिदमित्राणां शत्रूणां पीड़ाकरं दुःखकरं कर्म कर्त्तव्यमित्यब्रवीत। अथ खड्गमाकृष्य तस्याः सीताया मूर्द्धानमच्छिनच्चिच्छेद॥ २२

भरतः। पीडाकरमित्यादि। अमित्राणां पीड़ाकरं कर्म्म अवश्य कर्त्तव्यमिति अनपराधाया अप्यस्या वधी युक्त इत्यर्थः। इति इन्द्रजित् अब्रवीत्। ब्रू ल उक्तौ। छिदृस्लैम् धुव इतीम्। सुकृष्टः खड्गो येन तादृशः सन् तस्या मूर्द्धानं छिन्नवान्। प्रहरणस्त्रीभयर्थीति परनिपातः, स्वमतेऽभिधानं नियामकम्॥ २२

অনুবাদ। শক্রদিগের যাহাতে কষ্ট হয়, আমি তাহাই করিব, ইন্দ্রজিৎ এইরূপ বলিল এবং খড়্গ বাহির করিয়া সেই মায়াসীতার মস্তক ছেদন করিল। ২২

**यत्कृतेऽरीन् न्य[व्य]गृह्णीम समुद्रमतराम च ।**
**सा हतेति वदन् राममुपातिष्ठन्मरुत्सुतः ॥ २३**

अन्वयः । यत्कृते अरीन् न्यगृह्णीम, समुद्रं अतराम च, सा सीता हता इति वदन् मरुत्सुतः रामम् उपातिष्ठत् ॥ २३

मल्लिनाथः । यदिति । यत्कृते यदर्थमरीन् राक्षसान् न्यगृह्णीम न्यरुन्धम । "ई हल्यघोः" इतीत्वम् । समुद्रमतराम च । "दीर्घो अतो यञि" । सा सीता हतेति वदन् मरुत्सुतो हनूमान् राममुपातिष्ठत्प्राप्तः । अत्र रामहनूमतोर्गङ्गामुपतिष्ठते यमुनेतिवत् परस्परोपश्लेषाभावान्न "उपाद्देवपूजासङ्गतिकरण—" इति तङ् ॥ २३

भरतः । यत्कृत इत्यादि । यस्याः सीतायाः कृते निमित्ते वयं शत्रून् निगृहीतवन्तः समुद्रम् उत्तीर्णवन्तश्च, सा सीता हता इति वदन् मरुत्सुतो रामम् उपस्थितवान् । नैवाध्वसङ्गरादौ इत्यत्र सङ्गम उपश्लेषः स नास्तीति न तङ् ॥ २३

অনুবাদ । হায় হায়! যাঁহার জন্য শত্রুগণকে নিগৃহীত করিয়াছি এবং সমুদ্র পার হইয়াছি, সেই সীতা নিহত হইলেন এইরূপ বলিতে বলিতে পবনাত্মজ রামের নিকট উপস্থিত হইল। ২৩

**ततः प्रामुह्यतां वीरौ राघवावरुतां तथा ।**
**उष्णं च प्राणितां दीर्घमुच्चैर्व्याक्रोशतां तथा ॥ २४**

अन्वयः । ततः वीरौ राघवौ प्रामुह्यताम्, तथा अरुताम्, दीर्घं उष्णं च प्राणितां, तथा उच्चैः व्याक्रोशताम् ॥ २४

मल्लिनाथः । तत इति । ततो हनूमद्वाक्यश्रवणानन्तरं वीरौ राघवौ प्रामुह्यतां मोहं गतौ । मुह वैचित्त्ये । तथारुतामाक्रन्दताम् । रु शब्दे । लङि तसस्तामादेशः । अपित्त्वान्न "उतो वृद्धिर्लुकि हलि" इति वृद्धिः । दीर्घमुष्णं च प्राणितां न्यश्वसितां च । अन प्राणने । लङि तसस्तामादेशः । "रुदादिभ्यः सार्वधातुके" इतीडागमः । तथोच्चैस्तारं व्याक्रोशतामरुदितामाक्रन्दताम् । क्रुश आह्वाने रोदने च ॥ २४

भरतः । तत इत्यादि । हनूमतो वचनानन्तर वीरौ रामलक्ष्मणौ मोहं अभ्यगुः । मुह ष्ठ जि वैचित्त्ये । अथ अरुतां क्रन्दितवन्तौ । रु शब्दे । दीर्घम् उष्णञ्च प्राणितां

निश्वसितवन्तौ। चल घ् लु प्रापणे। कश्चौ योऽब्ददसेम्, म्राक्बश्नौ च:। उच्चैर्व्या-
क्रोशतां हा सीता इत्याहृतवन्तौ। क्रुश जी वाहे ह्वतौ ॥ २४

অনুবাদ। হনূমানের কথা শুনিবার পর বীর রাম ও লক্ষ্মণ মূর্চ্ছা
প্রাপ্ত হইলেন এবং হা সীতা! হা সীতা! রবে দীর্ঘ ও উষ্ণ নিশ্বাস ফেলিয়া
উচ্চৈঃস্বরে কাঁদিতে লাগিলেন। ২৪

**तावभाषत पौलस्त्यो मास्म प्ररुदितं युवाम्।**
**ध्रुवं स मोहयित्वास्मान् पापोऽगच्छन्निकुम्भिलाम्॥**

अन्वयः। पौलस्त्य तौ अभाषत,—युवां मा स्म प्ररुदितं, सः पापः अस्मान् मोहयित्वा
निकुम्भिलाम् अगच्छत् ध्रुवम् ॥ ॥ २५

मल्लिनाथः। तावितिं। पौलस्त्यो विभीषणस्तौ राघवावब-
भाषत। किमिति? युवां मास्म प्ररुदितं रोदनं मा कुरुतम्।
रुदिर् अश्रुविमोचने। "स्मोत्तरे लङ् च"। "तस्थस्थ—" इति
थसस्तमादेशः। "न माङ्योगे"। स पापोऽस्मान् मोहयित्वा
भ्रामयित्वा निकुम्भिलां नाम स्थानमगच्छद्ध्रुवम् ॥ २५

भरत:। तावित्यादि। पौलस्त्यो विभीषणः तौ राघवौ उक्तवान्। युवां रोदनं न
कुरुतम्। स पाप इन्द्रजित् निश्चितम् अस्मान् मोहयित्वा निकुम्भिला यज्ञस्थानविशेषं
गतवान्। मुहेरकर्म्मकत्वात् प्रयोजस्य कर्म्मत्वम् ॥ २५

অনুবাদ। পুলস্তিনন্দন বিভীষণ তাঁহাদিগকে বলিলেন, আপনারা
রোদন করিবেন না, নিশ্চয় সেই পাপিষ্ঠ আমাদের মোহ উৎপাদন করিয়া
নিকুম্ভিলা নামক যজ্ঞস্থানে গিয়াছে। ২৫

**मास्म तिष्ठत तत्रस्थो वध्योऽसावहुतानलः।**
**अस्त्रे ब्रह्मशिरस्युग्रे स्यन्दने चानुपार्जिते॥ २६**

अन्वयः। मास्म तिष्ठत, तत्रस्थः असौ अहुतानलः ब्रह्मशिरसि उग्रे अस्त्रे स्यन्दने च
अनुपार्जिते वध्य.॥ २६

मल्लिनाथः। ततः किमत आह—मास्मेति। मास्म तिष्ठत
किं त्वतिशीघ्रं गच्छतेति। "स्मोत्तरे लङ् च"। "न माङ्योगे"।
तथाहि—तत्रस्थो निकुम्भिलास्थोऽसाविन्द्रजिदहुतानलोऽनर्चिता-
ग्निरसमाप्तकर्मैवेत्यर्थः। ब्रह्मशिरसि ब्रह्मशिरोनामके उग्रे दारुणे-

ऽस्त्रे स्यन्दने चानुपार्जितेऽग्नेः सकाशादलब्धे सत्येव वध्यो हन्तुं शक्यः। अन्यथा न शक्य इत्यर्थः। "शकि लिङ् च" इति चकारात् कृत्यप्रत्यये "हनो वधश्च" इत्युपसंख्यानाद्वधादेशः तस्यादन्तत्वात् "अचो यत्" "अतो लोपः"॥ २६

भरतः। मास्मेत्यादि। यूयं मास्म तिष्ठत न विलम्बध्वं, यतः तवस्थोऽसौ इन्द्रजित् अहुतानलोऽसमाप्तहोम एव वध्य.। कथमित्याह—ब्रह्मशिरोनाम्नि उग्रे दुःसहे अस्त्रे स्यन्दने रथे च अनुपार्जिते अप्राप्ते सति। तदभयप्राप्ते त्ववध्यः स्यादिति भावः॥ २६

অনুবাদ। আপনারা আর বিলম্ব করিবেন না, শীঘ্র চলুন। কেন না সে সেখানে যে পর্য্যন্ত অগ্নিতে আহুতি দিয়া যজ্ঞ শেষ করিতে না পারে, তাহার মধ্যেই বধ্য, নতুবা অগ্নির নিকট হইতে সে ব্রহ্মশির নামক দারুণ অস্ত্র ও রথ লাভ করিলে কাহারও বধ্য হইবে না। ২৬

**ब्रह्मादधाद्वधं तस्य तस्यां [तस्मिन्] कर्मण्यसंस्थिते।**
**प्रायच्छदाज्ञां सौमित्रेर्यूथपानां च राघवः॥ २७**

अन्वयः। (यतः) ब्रह्मा कर्मणि असंस्थिते तस्य तस्यां वधम् अदधात्। (अथ) राघवः सौमित्रेः यूथपानाञ्च आज्ञां प्रायच्छत्॥ २७

मल्लिनाथः। कुत एतदिति वदन्तं प्रत्याह—ब्रह्मेति। ब्रह्मा कर्मणि होमकर्मण्यसंस्थितेऽसमाप्ते मध्ये विच्छिन्ने सतीत्यर्थः। तस्येन्द्रजितस्तस्यां निकुम्भिलायामेव वधं मरणमदधाद्दधौ च धृतवान्कृतवानित्यर्थः। दधातेर्लङि "श्लौ" इति द्विर्भावः। अथ राघवः सौमित्रेर्यूथपानां चाज्ञां प्रायच्छददात्। द्रुतं गच्छतेत्याज्ञापयदित्यर्थः। "पाघ्रा—" इत्यादिना दाणो यच्छादेशः॥२७

भरतः। ब्रह्मेत्यादि। तस्मात् निकुम्भिलायां तस्मिन् होमकर्मणि असस्थिते अप्राप्ते इति तस्य मेघनादस्य वधं ब्रह्मा आहृतवान् उक्तवान् इत्यर्थः। डु धाञ् धारणे पुष्टौ। ह्वादौ द्वे च। इति विभीषणवचः श्रुत्वा इन्द्रजिद्वधार्थं रामो लक्ष्मणस्य कपियूथपानाञ्च सुग्रीवादीनाञ्च आज्ञां दत्तवान्। सम्बन्धे षष्ठी। दाण दाने। स्थादानपेति यच्छादेशः। दाणो जुहोत्यादिनिरासार्थं नानुबन्धस्य पूर्वाचार्य्यकृतत्वात् सूत्रे तथा गृहीतम्॥ २७

অনুবাদ। হোমকার্য্য অসম্পূর্ণ হইলে (অর্থাৎ পূর্ণাহুতির বিঘ্ন উৎপাদন করিতে পারিলে) ইন্দ্রজিতের নিকুম্ভিলাতেই মৃত্যু হইবে" এই কথা ব্রহ্মা

বলিয়াছিলেন। রামচন্দ্র ( বিভীষণের মুখে ইহা শুনিয়া ) লক্ষ্মণ ও যূথপতি সুগ্রীব প্রভৃতিকে সেখানে শীঘ্র গমন কর বলিয়া অনুমতি দান করিলেন।২৭

**तां प्रत्यैच्छन् सुसंप्रीतास्ततस्ते सविभीषणाः।**
**निकुम्भिलां समभ्यायन्नरुध्यन्त च राक्षसैः॥ २८**
**दिक्पालैः कदनं तत्र सैने प्राकुरुतां महत्।**
**ऐतां रक्षांसि निर्जित्य द्रुतं [दूरं] पौलस्त्यलक्ष्मणौ॥**

अन्वयः। तां सुसंप्रीताः (सन्तः) प्रत्यैच्छन्, ततः ते सविभीषणाः (सन्तः) निकुम्भिलां समभ्यायन्, दिक्पालैः राक्षसैः च अरुध्यन्त। तत्र सैने महत् कदनं प्राकुरुतां, पौलस्त्यलक्ष्मणौ रक्षांसि निर्जित्य द्रुतम् ऐताम्॥ २८—२९

मल्लिनाथः। तामिति। तामाज्ञां सुसम्प्रीताः सुसन्तुष्टाः सन्तः प्रत्यैच्छन् प्रत्यगृह्णन्। इषेर्लङि "इषुगमियमां छः" इति छादेशः। आड्वृद्धिः। तत आज्ञानन्तरं ते लक्ष्मणप्रमुखाः सविभीषणाः सन्तो निकुम्भिलां समभ्यायन् सम्प्राप्ताः। इणो लङि झोऽन्तादिकार्य्यम्। असिद्धवदत्राभात्" इति यणादेशस्यासिद्धत्वादाडागमः। दिक्पालैरित्युत्तरश्लोकस्थमिह राक्षसविशेषणत्वेन योज्यम्। निकुम्भिलास्थानपालैरित्यर्थः। तैं राक्षसैन्यरुध्यन्त। रुधेः कर्म्मणि लङ्॥ २८

मल्लिनाथः। दिगिति। दिक्पालैरिति गतम्। तत्र निकुम्भिलाद्वारे सैने कपिराक्षससैन्ये महत्कदनं युद्धं प्राकुरुताम्। पौलस्त्यलक्ष्मणौ रक्षांसि निर्जित्य द्रुतं शीघ्रमैतां प्रविष्टावित्यर्थः। एतेर्लङि तसस्तामादेशः। आड्वृद्धिः॥ २९

भरत.। तामित्यादि। ततोऽनन्तरं विभीषणसहिताः ते लक्ष्मणादयः सुसम्प्रीताः सन्तः ताम् आज्ञां प्रत्यैच्छन् जगृहुः। ईषु श वाञ्छे। स्यादानपेति इच्छादेशः। ततस्ते निकुम्भिलां समाजग्मुः। ते च राक्षसाः दिक्पालैश्च निरुद्धाः निकुम्भिलाप्रवेशे निवारिताः। कर्म्मणि रूपम्॥ २८

भरतः। दिक्पालैरित्यादि। दिक्पालैरिति पूर्वश्लोकेनान्वय। ततः निकुम्भिलायां द्वे सैन्ये महत् कदनं चक्रतुः। "कदनं युद्धमाहवे" इति कोषः। तानि रक्षांसि निर्जित्य विभीषणलक्ष्मणौ द्रुतम् ऐतां जग्मतुः। इणो रूपम्॥ २९

অনুবাদ। তাঁহারা সাতিশয় আনন্দে সেই আজ্ঞা গ্রহণ করিলেন। তদনন্তর বিভীষণের সহিত মিলিত হইয়া নিকুম্ভিলায় উপস্থিত হইলেন, তখন দিক্‌পাল ও রাক্ষসেরা নিকুম্ভিলাপ্রবেশ পথ রুদ্ধ করিয়া অবস্থান করিতেছিল। সেই নিকুম্ভিলায় দুই পক্ষের সৈন্যে ঘোরতর যুদ্ধ চলিল। বিভীষণ ও লক্ষ্মণ রাক্ষসদিগকে পরাজয় করিয়া দ্রুতবেগে যজ্ঞস্থলে প্রবিষ্ট হইলেন। ২৮-২৯

**तत्रेन्द्रजितमैक्षेतां कृतधिष्ण्यं समाहितम् ।**
**सोऽजुहोत् कृष्णवर्त्मानमामनन्मन्त्रमुत्तमम् ॥ ३०**

अन्वयः। तत्र कृतधिष्ण्यं समाहितम् इन्द्रजितम् ऐक्षेतां,—स उत्तमं मन्त्रम् आमनन् कृष्णवर्त्मानम् अजुहोत् ॥ ३०

मल्लिनाथः। तत्रेति। तत्र निकुम्भिलायां कृतधिष्ण्यं कृतायतनं समाहितमेकाग्रचित्तमिन्द्रजितमैक्षेतामपश्यताम्। स इन्द्रजिदुत्तमं मन्त्रमामनन्नावर्त्तयन्। म्ना अभ्यासे। "पाघ्रा—" इत्यादिना मनादेशे लटः शत्रादेशः। कृष्णवर्त्मानमग्निमजुहोत् ३०

भरतः। तत्रेत्यादि। निकुम्भिलायां कृतधिष्ण्यं कृताग्निगृहं कृतासनं वा समाहितम् एकाग्रचित्तम् इन्द्रजितं तौ ऐक्षेतां दृष्टवन्तौ। ईक्ष दर्शने। स इन्द्रजित् कृष्णवर्त्मानम् अग्निं हुतवान्। उत्तमं मन्त्रं जपन्। म्ना अभ्यासे। म्नादानेति मनादेशः। "धिष्ण्यं स्थाने गृहे भेऽग्नौ" इत्यमरः॥ ३०

অনুবাদ। তাঁহারা দেখিলেন, ইন্দ্রজিৎ নিকুম্ভিলায় যজ্ঞালয় নির্ম্মাণ করিয়া একাগ্রচিত্তে উপবিষ্ট এবং সে উত্তমরূপে মন্ত্র আবৃত্তি করিতে করিতে হুতাশনে আহুতি দান করিতেছে। ৩০

**अध्यायच्छक्रजिद्ब्रह्म समाधेरचलन्न च ।**
**तमाह्वयत सौमित्रिरगर्जच्च भयङ्करम् ॥ ३१**

अन्वयः। शक्रजित् ब्रह्म अध्यायत्, समाधेः न अचलत् च, तम् सौमित्रिः आह्वयत, भयङ्करं अगर्ज्जत् च ॥ ३१

मल्लिनाथः। अध्यायदिति। शक्रजिदिन्द्रजिद् ब्रह्म परमात्मानमध्यायदचिन्तयत्। ध्यै चिन्तायाम्। अध्यायादेशः। समाधेर्ध्यानाच्चचाल च। तमिन्द्रजितं सौमित्रिराह्वत स्पर्द्धयाह्वतवान्। "स्पर्द्धायामाङः" इति ह्वयतेस्तङ्। भयङ्करमगर्जच्च॥ ३१

भरतः । अध्यायदित्यादि । इन्द्रजित ब्रह्म वेदमात्मानं वा अध्यायत् । ध्यैङ् चिन्तने । समाधेः चित्तनिरोधात् चलितः । तं तथाभूतम् इन्द्रजितं लक्ष्मणो युद्धाय आहूतवान् । भयङ्करं गर्जनं कृतवांश्च ॥ ३१

অনুবাদ। ইন্দ্রজিৎ তখন অবিচলিতচিত্তে পরমাত্মার ধ্যান করিতেছিল, লক্ষ্মণ তাহাকে সগর্ব্বে যুদ্ধে আহ্বান করিলেন এবং ভয়ঙ্কর গর্জ্জন করিতে লাগিলেন। ৩১

**अकुप्यदिन्द्रजित्तत्र पितृव्यं चागदद्वचः ।**
**त्वमत्राजायथा देहमिहापुषः * सुरामिषैः ॥ ३२**

अन्वयः । तत्र इन्द्रजित् अकुप्यत्, पितृव्यं वचः अगदत् च, त्वम् अत्र वंशे अजायथाः इह सुरामिषैः देहम् अपुष्यः ॥ ३२

मल्लिनाथः । अकुप्यदिति । तत्र तस्मिन् विषये इन्द्रजिदकुप्यत् । पितृव्यं पितृभ्रातरं विभीषणम् । 'पितृभ्राता पितृव्यः स्यात्' इत्यमरः । "पितृव्यमातुल—" इति निपातः । वचोऽगदच्च । तदेवाह—त्वमत्रास्मिन् वंशेऽजायथा, जातोऽसि । जनी प्रादुर्भावे । दिवादित्वात् श्यन् । "ज्ञाजनोर्जा" इति जादेशः । इहैव सुराभिषैर्मद्यमांसैर्देहमपुषः पुष्टवान् । पुष पुष्टौ । दिवादिः ॥ ३२

भरतः । अकुप्यदित्यादि । तत्र निकुम्भिलायां लक्ष्मणे गर्जिते सति इन्द्रजित् अकुप्यत् । कुप्य क्रोधे । पितृभ्रातरं विभीषणं अवदं च । पितृभ्राता पितृव्यो निपातनात् । अत्र राक्षसकुले त्वं जातः । जनी ध्यङ् जनने । ज्ञाजनोर्जा इति जादेशः । इह त्वं सुराभिरामिषैश्च सुराणाम् आमिषैर्वा देहं वर्द्धितवानसि । लृ पुष्यौ वृद्धौ, षकारात् पुष्टौ, सकर्म्मकोऽयं पुष्यति स्म भिक्षामित्यादि प्रयोगात् जयमङ्गलायामकर्म्मकत्व भ्रान्त्योक्तम् ॥ ३२

অনুবাদ। লক্ষ্মণ গর্জ্জন করিলে ইন্দ্রজিৎ ক্রুদ্ধ হইল এবং পিতৃব্য বিভীষণকে এই কথা বলিল যে, তুমি এই রাক্ষস বংশে জন্মিয়াছ এবং এই লঙ্কাতেই মদ্যমাংসে দেহপুষ্ট করিয়াছ। ৩২

**इहाजीव इहैव त्वं क्रूरमारभथाः कथम् ।**
**नापश्यः पाणिमार्द्रं च [त्वं]बन्धुत्व नाप्यवे[पे]क्षथाः ॥**

अन्वयः । त्वम् इह आजीवः, इह एव कथ क्रूरं कर्म आरभथाः, आर्द्रं च पाणिं न अपश्यः, बन्धुत्वं न अपि अवैक्षथाः ॥ ३३

---

* "देह इहापुष्यः" इति पाठान्तरम् ।

मल्लिनाथः। इहेति। त्वमिहाजीवो जीवितोऽसि। इहैवास्मिन्नेव विषये कथं क्रूरं हिंस्रं कर्मारभथाः प्राक्रमथाः। आर्द्रं भोजनार्द्रमद्याप्यशुष्कं च पाणिं नापश्यो नाद्राक्षीः। शुनकादपि कष्टोऽसीति भावः। बन्धुत्वमपि नावैक्षथा न व्यचारयः। ईक्ष दर्शने। भौवादिकाल्लङि थास्याड्वृद्धिः॥ ३३

भरतः। इहाजीव इत्यादि। अस्मिन् वंशे त्वं जीवितोऽसि जीवस्व। जीव प्राणे। तत् कथम् इहैव त्वं क्रूरं कर्म्म आरब्धवानसि? रभोङ् स्यात् राभस्ये। कथम् आर्द्रं पाणिं न दृष्टवानसि? भोजनानन्तरं यावत् न शुष्कः तावदेव कृतवानसि इति लोकोक्ति-व्यापनाय इदमुक्तम्। तव स्नेहात् मन आर्द्रं हिंसाशून्यं पाणिं कुतो न दृष्टवान् इत्यन्ये। आस्तां तावत् अन्यत्, बन्धुत्वम् एकगोत्रत्वमपि कुतो नापेक्षितवानसि?॥ ३३

অনুবাদ। তুমি এই বংশেই ভোজ্য পেয়াদি সেবনে জীবিকা নির্ব্বাহ করিয়াছ, তবে এই বংশের প্রতি কোন্ প্রাণে দারুণ কর্ম্ম করিতে উদ্যত হইলে? এখনও তোমার হস্ত এই বংশের ভোগ্য বস্তুতে আর্দ্র রহিয়াছে, তাহা কি দেখিতে পাও না? সে কথা থাকুক তুমি জ্ঞাতিত্বসম্বন্ধও অপেক্ষা করিলে না? (স্ববংশের প্রতি একবার দৃষ্টিপাতও করিলে না?) ৩৩

**अधर्मान्नात्रसः पाप लोकवादान्न चाबिभेः।**
**धर्मदूषण नूनं त्वं नाजाना नाशृणोरिदम्॥ ३४**

अन्वयः। पाप! अधर्मात् न अत्रस, लोकवादात् च न अबिभेः, (हे) धर्मदूषण! नूनं त्वम् इदं न अजानाः, न अशृणोः? ॥३४

मल्लिनाथः। अधर्मादिति। हे पाप पापाचार! अधर्मात्पापान्नात्रसो न त्रस्तोऽसि। लोकवादाल्लोकापवादाच्च नाबिभेर्न भीतोऽसि। ञिभी भये। लङि सिपि "श्लौ" इति द्विर्भावः। गुणः। उभयत्र "भीत्रार्थानाम्—" इत्यपादानत्वात् पञ्चमी। हे धर्मदूषण धर्मविकारक! दुष वैकृत्ये। ततो ण्यन्तात्कर्त्तरि ल्युट्। न तु नन्द्यादिल्युर्दूषयतेः, तस्य संज्ञाविषयत्वादिति। "दोषो णौ" इत्यूकारः। नूनं त्वमिदं वक्ष्यमाणं नाजानाः स्वतो नाज्ञासीः। जानातेः क्रैयादिकाल्लङि सिप्। "ज्ञाजनोर्जा" इति जादेशः। नाशृणोर्नाश्रौषीः परतोऽपि नाबुद्ध इत्यर्थः। श्रु श्रवणे। "स्वादिभ्यः श्नुः" "श्रुवः शृ च"॥ ३४

भरत:। अधर्म्मादित्यादि। हे पाप! अधर्म्मादपि न बिभेषि। नच बली च भयी। अमलतमधर्ममित्यादिना सह पाचिकलात् शप्। लोकापवादादपि न भीतोऽसि। जि भी लिङ्भीत्याम्। हे धर्मदूषण! धर्म्मोच्छेदक! कुलोच्छेदकलात्। नूनं निश्चितं त्वम् इदं वक्ष्यमाणं न ज्ञातवान् न श्रुतवानसि ॥ ३४

अनुवाद। পাপিষ্ঠ! তুমি অধর্ম্মে বা লোকাপবাদে ভয় কর না? ধর্ম্মনাশক! তুমি নিশ্চয়ই ইহা জান না, অথবা তুমি কি কাহারও নিকট ইহা শুন নাই?। ৩৪

**निराकृत्य यथा बन्धून् लघुत्वं यात्यसंशयम्।**

**पितृव्येण ततो वाक्यमभ्यधीयत शक्रजित् ॥ ३५**

अन्वयः। यथा (यत्) असंशयं बन्धून् निराकृत्य लघुत्वं याति, (इतीदं न अजाना:?) ततः शक्रजित् पितृव्येण (इदं) वाक्यम् अभ्यधीयत ॥ ३५

मल्लिनाथः। इदं यदुक्तं तदाह—निराकृत्येति। यथा यदसंशयं निःशङ्कं बन्धून् निराकृत्य परित्यज्य लघुत्वं याति इतीदं नाजानाः पाप! इति नाज्ञासीरित्यर्थः। ततोऽनन्तरं शक्रजिदिन्द्रजित् पितृव्येण विभीषणेन वाक्यमभ्यधीयताभिहितः। 'अप्रधाने दुहादीनाम्' इति वचनादप्रधाने कर्म्मणि लङ्। "घुमास्था—" इतीत्वम् ॥ ३५

भरत:। निराकृत्येत्यादि। यथा बन्धून् निराकृत्य परित्यज्य असंशयं निश्चितं लघुत्व नीचो याति गच्छति, इदं नाजाना इति पूर्वेणान्वयः। यौप्रकरणे यातीति कौमवेगी प्रौभियोऽपि भूतसामान्ये क्वचित् क्वी स्यादिति सूचनाय, वस्तुतस्तु प्रतिज्ञानस्वैकस्य सिद्धार्थम् असार्थस्य न दोषावहम्। ततस्तद्वचनानन्तरं पितृव्येण विभीषणेन शक्रजित् वक्ष्यमाणवाक्यम् उक्तम्। अभिपूर्वधाञः कर्म्मणि यक्। दामागैत्यागिति ईत्वं ॥ ३५

अनुवाद। (পূর্ব্ব শ্লোকের সহিত অন্বয় ইহা কি জান না) স্বজনকে ত্যাগ করিয়া লোক নিশ্চয়ই লঘুতাপ্রাপ্ত হয়। তদনন্তর পিতৃব্য বিভীষণ ইন্দ্রজিৎকে ভবিষ্যৎ কথাগুলি বলিলেন। ৩৫

**मिथ्या मास्म व्यतिक्रामो न शीलं मास्म*बुध्यथाः।**

**सत्यं सम्भवं वंशे पापानां रक्षसामहम् ॥ ३६**

---

* "मच्छीलं मा न" इति पाठान्तरम्।

अन्वयः । मिथ्या माऽस्म व्यतिक्रामः, शीलं न माऽस्म बुध्यथाः, सत्यम् अहं पापानां रक्षसां वंशे समभवम् ॥ २६

मल्लिनाथः । मिथ्येति । मिथ्या वृथैव मा स्म व्यतिक्रामो व्यतिक्रमं मा कुरु । मा प्रलपेत्यर्थः । "स्मोत्तरे लङ् च" इति लङ् । "न माङ्योगे" । "क्रमः परस्मैपदेषु" इति शिति दीर्घः । शीलं न मा स्म बुध्यथाः । किं तु बुध्यस्वेत्यर्थः । बुधेर्दैवादिकात् पूर्ववल्लङड़भावश्च । सत्यमहं पापानां पापात्मनां रक्षसां वंशे समभवं सम्भूतोऽस्मि । अस्त्येतदित्यर्थः ॥ २६

भरतः । मिथ्येत्यादि । मिथ्या व्यतिक्रमं न कुरु । क्रमः पेऽपि घः । मम शीलं स्वभावं न बुद्धवानसि न किञ्चित् ज्ञातवानसि एव । बुध्यो वेदने । पापानां रक्षसां वंशे सत्यम् अहं सम्भूतोऽस्मि, किन्तु तादृक् न शीलमिति वक्ष्यमाणेनान्वयः ॥ २६

অনুবাদ । বৃথা প্রলাপবাক্য বলিস না ? আমার স্বভাব কি জানিস না, আমি পাপাশয় রাক্ষসবংশে জন্মগ্রহণ করিয়াছি বটে । ৩৬

न त्वजायत मे शीलं तादृग्यादृक् पितुस्तव ।
अयावहेषु दोषेषु वार्यमाणो मयारमत् ॥ ३७

अन्वयः । (किं) तु मे शीलं तव पितुः यादृग् तादृग् न अजायत, (तथाहि) (सः) मया वार्यमाणः अपि अयावहेषु दोषेषु आरमत् ॥ ३७

मल्लिनाथः । नेति । किं तु मे शीलं तव पितुर्यादृक् तादृग् नाजायत जातम् । तथाहि—दशग्रीवो मया वार्यमाणोऽपि अया-वहेषु विनाशहेतुषु । आङ्पूर्वाद्वहेः पचाद्यचि षष्ठीसमासः । दोषेषु निकृष्टकर्मसु आरमदारतो निरतः । "व्याङ्परिभ्यो रमः" इति परस्मैपदम् ॥ ३७

भरतः । न त्वजायतेत्यादि । यादृशं तव पितुः शीलं जातं न मम तादृशं शीलं जातम् स्यादानेति जनी जा । स हि अयावहेषु दोषेषु परस्त्रीहरणादिषु मया वार्यमाणोऽपि रतिं कृतवान् । रमञ्ज क्रीडे । आङ्पूर्वः । वे पं परेत्यादिना पम् । अयं नाशम् आवहन्ति कुर्वन्तीति पचादित्वादन् ॥ ३७

অনুবাদ । কিন্তু তোর পিতার স্বভাবের ন্যায় আমার স্বভাব নহে, আমি বারংবার নিবারণ করিলেও তোর পিতা সর্ব্বনাশের হেতুভূত পরস্ত্রী হরণাদি কুকার্য্যেই রত ছিল । ৩৭

**दशग्रीवमहं तस्मादत्यजं * न तु विद्विषन् ।**
**परस्वान्यार्जयन्नारीरन्यदीयाः परामृशत् ॥ ३८**

अन्वयः । अहं तस्मात् दशग्रीवम् अत्यजं, विद्विषन् तु न (सः) परस्वानि आर्जयत्, अन्यदीया नारीः परामृशत् ॥ ३८

मल्लिनाथः । दशेति । अहं तस्मात्कारणात् दशग्रीवमत्यजम् । विद्विषंस्तु न । संसर्गात् स्वानर्हत्वादत्यजं न तु द्वेषादित्यर्थः । "द्विषोऽमित्रे" इति शतृप्रत्ययः । परस्वान्यार्जयदाहरदन्यदीया नारीः पराङ्गनाः परामृशदगमदित्यर्थः ॥ ३८

भरतः । दशग्रीव इत्यादि । एतस्मात् कारणात् अहं दशग्रीवं त्यक्तवान् न तु शत्रुर्भवन् । परमते द्विषः शत्रौ शतृः, स्वमते न विभीषणेन विद्वेषं वैरं कुर्वन् इत्यर्थः ; शत्रुवाचित्वे रूढिः । तान् दोषान् आह—परधनानि आर्जयत आनीय संस्कृतवान् हृतवान् इत्यर्थः । अर्जक् संस्कारे, किंवा अर्ज अर्जने, णिः प्रेरणे । अन्यदीया नारीः परामृशत् अपहृतवान् । मृश शो स्पर्शि । अन्येषामिमा इति विकारसद्दे त्यादिना ईयः, दकारागमो निपातनात् ; किंवा अन्येषां पतिश्वशुरादीनां दा शुद्धिर्याभ्यस्ता अन्यदाः साध्वीरित्यर्थः । दैप शोधने क्विप्, ततः स्वार्थे ईयः ॥ ३८

অনুবাদ । পরধন অপহরণ ও পরস্ত্রী গমন করিত বলিয়াই আমি দশাননকে ত্যাগ করিয়াছি, শত্রুতা করিয়া নহে । ৩৮

**व्यजिघृक्षत्सुरान्नित्यं प्रामाद्यद्गुणिनां म[ह्नि]ते ।**
**आशङ्कत सुहृद्बन्धूनवृद्धान् बह्वमन्यत ॥ ३९**

अन्वयः । नित्यं सुरान् व्यजिघृक्षत्, गुणिनां मते प्रामाद्यत्, सुहृद्बन्धून् आशङ्कत, अवृद्धान् बहु अमन्यत ॥ ३९

मल्लिनाथः । वीति । नित्यं सुरान् देवान् व्यजिघृक्षद्विग्रहीतुमैच्छत् । ग्रहेः सन्नन्ताल्लङ् । "रुदविद—" इत्यादिना सनः कित्त्वात् "ग्रहिज्या—" इत्यादिना सम्प्रसारणम् । गुणिनां गुणवृद्धानां मते पक्षे विषये प्रामाद्यत् प्रमत्तः । सुहृदो मित्राणि बन्धून् मातामहादींश्चाशङ्कत शङ्कितवान् । न व्यश्वसीदित्यर्थः । अवृद्धान् अर्वाचीनान् प्रहस्तादीन् बह्वमन्यत आद्रियत ॥ ३९

* "दशग्रीवोऽहमेतस्मादत्यजं तं न विद्विषन्" इति यन्मते पाठः, तन्मते "दशग्रीवः" शब्दः पूर्वान्वयी ।

भरतः । व्यगिहदित्यादि । नित्यं देवान् विग्रहीतुं योधयितुम् इष्टवान् । ग्रहेः सन् यङ्लुकपग्रच्छां ञिः, नेतुगुहपदः, चर्नोनिमि, ह्रो ढः, भभान्तस्येति घः, षढोः कः । गुणिनां मातामहादीनां सम्बन्धे हिते सलोकानां हिते वा प्रमादात् अनवहितोऽभवत् । "प्रमादोऽनवधानता" इति कोषः । मदो भिर्यञि हर्षे । शमादित्वात् दीर्घः । सुहृदो बन्धून् शातीष शङ्कितवान् । शकि ङ् शासग्रङ्कयोः । अवृद्धान् अपण्डितान् प्रहस्तादीन् बहु अमन्यत अत्र श्लाघितवान् ॥ ३९

অনুবাদ। সে সর্বদাই দেবগণের সহিত যুদ্ধ ইচ্ছা করিত, গুণবান লোকের মত গ্রাহ্য করিত না। সুহৃদ্ ও বন্ধুগণকে ( শত্রুবোধে শঙ্কা করিত) বিশ্বাস করিত না। অর্ব্বাচীন প্রহস্ত প্রভৃতিকে বড়ই ভাল বাসিত। ৩৯

दोषैररमतैभिस्ते पितात्यज्यत यैर्मया ।
ततोऽरुष्यदगर्ज्जन्[नर्द]च्च द्विविंशतिभिरेव च ॥ ४०
शरैरताड़यद्बन्धुं पञ्चविंशतिभिर्नृपम् ।
रावणिस्तस्य सौमित्रिरमथ्नाच्चतुरो हयान् ॥४१

अन्वयः । एभिः दोषैः ते पिता अरमत,—यैः मया अत्यज्यत, ततः रावणिः ( इन्द्रजित् ) अरुष्यत्, अगर्जत् च । द्विविंशतिभिः एव शरैः बन्धुम् अताड़यत् च, ( पुनः ) पञ्चविंशतिभिः नृपम् ( लक्ष्मणं ) ( अताड़यत्, ) सौमित्रिः ( तु ) तस्य रावणेः चतुरः हयान् अमथ्नात् ॥ ४०—४१

मल्लिनाथः । दोषैरिति । एभिर्दोषैस्ते पितारमतारंस्तेत्यर्थः । यैर्दोषैर्मयात्यज्यत त्यक्तः । ततो विभीषणवाक्याद्रावणिरिन्द्रजिदरुष्यदकुप्यदगर्जच्च । शेषमुत्तरश्लोके योज्यम् ॥ ४०

मल्लिनाथः । शरैरिति । द्वे विंशती संख्या येषामिति बहुव्रीहिः । द्वौ च विंशतिश्चेति द्वन्द्वसमासे 'द्व्यष्टनः संख्यायाम्' इत्यात्वं द्वाविंशतीत्येकत्वं च स्यात् । तत्पुरुषद्विगुकार्य्ये पुनर्बहुवचनानुपपत्तिरिति । तैर्द्विविंशतिभिश्चत्वारिंशता शरैर्बन्धुं पितृव्यमताड़यत् प्राहरत् । पञ्च विंशतयो येषु तैः पञ्चविंशतिभिः शतेन शरैः । आत्ववर्जं सर्वं पूर्ववत् । नृपं लक्ष्मणमताड़यत् । सौमित्रिस्तु तस्य रावणेश्चतुरो हयान् रथाश्वान् बाणैरमथ्नान्मारयामास । मन्थ विलोड़ने । क्र्यादिः ॥ ४१

भरत: । दोषैरित्यादि । एभि: दोषै: तव पिता रावणो रमते स्म । यै: दोषै: । अ न्यक्त: । कर्म्मणि रूपम् । तत: पितृदोषश्रवणात् रावणिरिति वक्ष्यमाणेन सम्बन्ध: । अथ अम् । कर्थ्यक्ति क्रुधि । अनर्दत् शब्दं चकार । द्विविंशतिभिरिति उत्तरश्लोकेनान्वय: ॥ ४०

भरत: । शरैरित्यादि । वभ्रु विभीषणं द्विविंशतिभि: शरै: रावणि: अताडयत् । नृपं लक्ष्मणं पञ्चविंशतिभि: शरै: अताडयत । द्वे विंशती संख्ये येषु इति बहुव्रीहि । सौमित्रि: तस्य इन्द्रजितोऽश्वान् बाणै: छिन्नवान । मन्यग गाहे ॥ ४१

অনুবাদ। এই সকল দোষে তোর পিতা রত থাকিত, এই জন্যই আমি তাহাকে ত্যাগ করিয়াছি। বিভীষণের কথার পর রাবণপুত্র ক্রুদ্ধ হইল ও গর্জ্জন করিতে লাগিল এবং চল্লিশটী শরনিক্ষেপে পিতৃব্যকে আহত ও নৃপ লক্ষ্মণকে শত শরাঘাতে জর্জ্জরিত করিল। লক্ষ্মণও তাহার রথের চারিটী অশ্ব বিনষ্ট করিলেন। ৪০–৪১

**सारथिं चालुनाद्बाणैरभनक् स्यन्दनं त[था]त: ।**
**सौमित्रिमकिरद्बाणै: परितो रावणिस्तत: ॥ ४२**

अन्वय: । सारथिं च बाणै: अलुनात्, तत: स्यन्दनम् अभनक्, तत: रावणि: सौमित्रिं परित: बाणै: अकिरत् ॥ ४२

मल्लिनाथ: । सारथिमिति । सारथिं च बाणैरलुनाच्छिच्छेद । क्र्यादि: । "ष्वादीनां ह्रस्व:" । तत: स्यन्दनं रथं चाभनक् बभञ्ज । भञ्जो आमर्दने । रुधादि: । "हल्ङ्याब—" इत्यादिना तिलोप: । कुत्वचर्त्वे । ततो रावणि: सौमित्रिं परितो बाणैर-किरदक्षिपत् । कॄ विक्षेपे । तौदादिकाल्लङ् । "ऋत इद्धातो:" इति रपर इकार ॥ ४२

भरत: । सारथिञ्चेत्यादि । लक्ष्मणो रावणे: सारथिञ्च बाणै: छिन्नवान् । लूञ् छिदि । प्वादे: ह्रो ने इति ह्रस्व: । तथा स्यन्दनं रथं भग्नवान् । भन्जो धौ मोटने । नशो न लोप्य:, हल्ङ्याभ्यां दिस्पेरिति दिलोप:, चुकिति कुङ् । ततोऽनन्तरं रावणि: सौमित्रिं परित: समन्तात् बाणै: आच्छादितवान् । कॄ श विक्षेपे । ऋदित्वादिति इर् ॥ ४२

অনুবাদ। লক্ষ্মণ বহু বাণবর্ষণে তাহার সারথিকে ছেদন করিলেন ও রথখানি ভাঙ্গিয়া দিলেন। তৎপরে ইন্দ্রজিৎ লক্ষ্মণের চারিদিকে বাণ নিক্ষেপ করিল। ৪২

**तावस्फावयतां शक्तौ [क्षिं]बाणांस्ताकिरतां मुहु: ।**
**वारुणं लक्ष्मणोऽक्षिप्यदक्षिपद्रौद्रमिन्द्रजित् ॥ ४३**

अन्वयः। तौ (इन्द्रजिल्लक्ष्मणौ) शक्ती अस्फावयतां, मुहुः बाणान् अकिरतां च; लक्ष्मणः वारुणम् अक्षिप्यत्, इन्द्रजित् रौद्रम् अक्षिपत् ॥ ४२

मल्लिनाथः। ताविति। ताविन्द्रजिल्लक्ष्मणौ शक्ती परस्परः सामर्थ्येऽस्फावयतामवर्द्धयताम्। स्फायी वृद्धौ। ण्यन्ताल्लङ्। "स्फायो व." इति यकारस्य वकारः। मुहुर्बाणानकिरतां परस्परस्योपर्यक्षिपताम्। लक्ष्मणो वारुणमस्त्रमक्षिप्यत्। क्षिपेर्दैवादिकाल्लङ्। इन्द्रजिद्रौद्रमक्षिपत्। क्षिप प्रेरणे। तौदादिकः ॥ ४२

भरतः। तावस्फावयतामित्यादि। तौ इन्द्रजिल्लक्ष्मणौ शक्तिं स्वसामर्थ्यं वर्द्धितवन्तौ। "शक्ती"रिति पाठे—अस्त्रविशेषान् इत्यर्थः। स्फायीङ् वृद्धौ जिः। पातिस्फायोरिति वक्। मुहुः वारंवारं बाणान् अकिरतां क्षिप्तवन्तौ। लक्ष्मणो वरुणदेवताकम् अस्त्रं प्रेरितवान्। इन्द्रजित् रुद्रदैवतम् अस्त्रं प्रेरितवान्। क्षिप्‌शक्तौ क्षिपी शुदि ॥ ४२

অনুবাদ। তাঁহারা দুইজনই স্ব স্ব শক্তি বৃদ্ধি করিতে লাগিলেন এবং পুনঃ পুনঃ বাণ নিক্ষেপ করিলেন। লক্ষ্মণ বারুণাস্ত্র ও ইন্দ্রজিৎ পাশুপতাস্ত্র নিক্ষেপ করিল। ৪৩

ते परस्परमासाद्य शस्त्रे नाशमगच्छताम्।
आसुरं राक्षसः शस्त्रं ततो घोरं व्यसर्जयत् ॥ ४४

अन्वयः। ते शस्त्रे परस्परम् आसाद्य नाशम् अगच्छताम्, ततः राक्षसः घोरम् आसुरं शस्त्रं व्यसर्जयत् ॥ ४४

मल्लिनाथः। त इति। ते रौद्रवारुणे शस्त्रे परस्परमासाद्य प्राप्य नाशमदर्शनमगच्छताम्। ततो राक्षस इन्द्रजिद् घोरं भीषणमासुरं शस्त्रं व्यसर्जयत् व्यसृजत्। सृजिरयं तौदादिकः ॥ ४४

भरतः। ते परस्परमित्यादि। ते इन्द्रजिल्लक्ष्मणसम्बन्धिनी शस्त्रे परस्परं प्राप्य नाशं जग्मतुः। तदनन्तरं राक्षस इन्द्रजित् घोरम् असुरसम्बन्धि शस्त्रं विसर्जितवान् ॥ ४४

অনুবাদ। সেই পরস্পরের শস্ত্র পরস্পর মিলিত হইয়া নষ্ট হইয়া গেল, তদনন্তর ইন্দ্রজিৎ ভয়ঙ্কর আসুরাস্ত্র নিক্ষেপ করিল। ৪৪

तस्मान्निरपतद्भूरि शिलाशूले[ल] ष्टि[र्ष्टि]मुद्गरम्।
माहेश्वरेण सौमित्रिरस्त्रमस्यत्सुदुर्जयम् ॥ ४५

अन्वयः। तस्मात् भूरि शिलाशूलेष्टिमुद्गरं निरपतत्, सौमित्रिः सुदुर्जयं तत् ( आसुरं अस्त्रं ) माहेश्वरेण अस्तभ्नात्॥ ४५

मल्लिनाथः। तस्मादिति। तस्मादासुरास्त्राद् भूरि भूयिष्ठं शिलाः प्रसिद्धाः शूलादयः प्रहरणविशेषास्ते। द्वन्द्वे कवद्भावः। निरपतन्निष्पतितम्। सौमित्रिः सुदुर्जयं तदासुरमस्त्रं माहेश्वरेणास्त्रेणास्तभ्नात् तस्तम्भ। "क्र्यादिभ्यः श्ना"। अस्तम्नोदिति पाठे "स्तम्भुस्तुम्भु—" इत्यादिना श्नुः।

भरतः। तस्मादित्यादि। तस्मात् आसुरास्त्रात् भूरि प्रचुरं शिलादिकं निरपतत् निर्गतम्। "ऋष्टिः खड्गः प्रासोऽसिर्घर्मपालः प्रभाकरः" इति वैजयन्ती। सौमित्रिः तत् सुदुर्जयम् आसुरास्त्रं महेश्वरदेवतेन अस्त्रेण स्तम्भितवान्। स्तम्भु स्तुम्भु स्कम्भु स्कुम्भु स्तु रोधने॥ ४५

অনুবাদ। রাক্ষস-নিক্ষিপ্ত সেই আসুরাস্ত্র হইতে শিলা শূল ঋষ্টি মুদগরাদি অস্ত্র নির্গত হইল, লক্ষ্মণ মাহেশ্বরাস্ত্র দ্বারা সেই দুর্জয় আসুরাস্ত্র স্তম্ভিত করিয়া দিলেন। ৪৫

ततो रौद्रसमायुक्तं माहेन्द्रं लक्ष्मणोऽस्मरत्।
तेनागम्यत घोरेण शिरश्चाक्रियत द्विषः॥ ४६

अन्वयः। ततः लक्ष्मणः रौद्रसमायुक्तं माहेन्द्रम् अस्मरत्, तेन घोरेण अगम्यत, द्विषः शिरः आक्रियत च॥ ४६

मल्लिनाथः। तत इति। ततो लक्ष्मणो रौद्रसमायुक्तं रौद्रास्त्रसहितं माहेन्द्रमस्त्रमस्मरत्। तेन स्मृतेन घोरेणास्त्रेणागम्यतागतम्। गमिराङ्पूर्वाद्भावे लङ्। द्विषः शत्रोः शिर आक्रियत हृतं च। कर्मणि लङ्॥ ४६

भरतः। तत इत्यादि। तदनन्तरं रुद्रदैवतेन अस्त्रेण संयुक्तं महेन्द्रदैवतम् अस्त्रं लक्ष्मणः सस्मार। तेन अस्त्रेण अरण्यात् आगतं, भावे यक्। घोरेण द्विष इन्द्रजितः शिरो हृतं छिन्नम् इत्यर्थः। कर्मणि यक्॥ ४६

অনুবাদ। তাহার পর লক্ষ্মণ পাশুপত অস্ত্রের সহিত ঐন্দ্রাস্ত্র স্মরণ করিলেন, সেই অস্ত্র স্মরণ মাত্র আসিল এবং ঘোরতর বেগে ইন্দ্রজিতের মস্তকচ্ছেদন করিল। ৪৬

अतुष्यन्नमराः सर्वे प्राहृष्यन् हरि[कपि]यूथपाः ।
पर्य्यष्वजत सौमित्रिं मूर्ध्न्यजिघ्रच्च राघवः ॥ ४७

अन्वयः । सर्वे अमराः अतुष्यन्, हरियूथपाः प्राहृष्यन्, राघवः सौमित्रिं पर्य्यष्वजत, मूर्ध्नि अजिघ्रत् च ॥ ४७

मल्लिनाथः । अतुष्यन्निति । सर्वे अमरा अतुष्यन् तुष्टाः । हरियूथपाः कपिसेनापतयः प्राहृष्यन् प्रहृष्टाः । राघवो रामः सौमित्रिं लक्ष्मणं पर्य्यष्वजतालिङ्गितवान् । ष्वञ्ज परिष्वङ्गे । "दंशसञ्जस्वञ्जां शपि" इत्यनुनासिकलोपः । "सिवादीनां वाड्-व्यवायेऽपि" इति वैकल्पिकं षत्वम् । मूर्ध्न्यजिघ्रच्च । प्रवासादेत्य मूर्द्धन्यवघ्राणमिति स्मरणादिति भावः । घ्रा गन्धोपादाने । "पाघ्रा—" इत्यादिना जिघ्रादेशः ॥ ४७

भरतः । अतुष्यन्नित्यादि । तस्मिन् हते सर्व्वे देवाः तुष्टाः । तुष् ल यो ङि च, अकारात् तुष्टो । कपियूथपाः सुग्रीवादयः सर्वे हृष्टाः । हृष ञि तुष्टौ । रामः सौमित्रिम् आलिङ्गितवान् । ष्वनृजो सङ्गे । सनृजदनृश स्वनृजोऽपि नलोपः । गीक इत्यादिना षत्वम् । मूर्ध्नि तम् आघ्रातवांश्च । घ्रा गन्धग्रहणे । स्था दानेत्यादिना जिघ्रः ॥ ४७

অনুবাদ। ইন্দ্রজিৎ হত হইলে দেবতারা হৃষ্ট হইলেন, বানর যূথপতি সুগ্রীবপ্রভৃতি সন্তুষ্ট হইল। রামচন্দ্র লক্ষ্মণকে আলিঙ্গন ও তাঁহার মস্তক আঘ্রাণ করিলেন। ৪৭

अरोदीद्राक्षसानीकमरोदन्नृभुजां पतिः ।
मैथिल्यै चाशपद्धन्तुं तां प्राक्रमत चातुरः ॥ ४८

अन्वयः । राक्षसानीकम् अरोदीत्, नृभुजां पतिः अरोदत्, मैथिल्यै अशपत् च, आतुरः तां हन्तुं प्राक्रमत च ॥ ४८

मल्लिनाथः । अरोदीदिति । राक्षसानीकमरोदीत् । "रुदश्च पञ्चभ्यः" इतीट् । नृभुजां पतिः रावणश्चारोदत् । "अड् गार्ग्य-गालवयोः" इति पक्षे अड़ागमः । मैथिल्यै सीतायै अशपच्च । सर्वानर्थमूलामेनां धिगिति शप्तवान् । "श्लाघह्नुङ्—" इत्यादिना सम्प्रदानत्वाच्चतुर्थी । आतुरः शोकातुरः सन् तां हन्तुं प्राक्रमत प्रावर्त्तत । "प्रोपाभ्यां समर्थाभ्याम्" इति तङित्याक ॥ ४८

भरतः । अरोदीदित्यादि । राक्षससैन्यम् अरोदीत् । लपिर व्यक्त रोदे । वदाबाक्ति सेरिति दिपन्न इम् । रक्षसां पतिः रावणश्च अरोदत् । दिसीदम् वति दिप. पर्यङ्म् । सीतायै चाशपत् आक्रुष्टवान् । शपोऽज् क्रोगे । यस्मै दित्सेत्यादिना सम्प्रदानत्वम् । क्रोधेन आतुरः सन् तां हन्तुं प्रारब्धवान् । प्रोपादारम्भ इति मम् ॥ ४८

অনুবাদ। রাক্ষসসৈনিক ও রাক্ষসপতি রাবণ কাঁদিতে লাগিল এবং রাবণ সীতার উদ্দেশে সীতাকে ধিক্ বলিয়া অভিসম্পাত করিল এবং শোকে কাতর হইয়া তাঁহাকে হত্যা করিবার জন্য উদ্যত হইল। ৪৮

अयुक्तमेतदि[मिदमि]त्यन्ये तमाप्ताः पर्य्य[प्रत्य]वारयन्
न्यरुन्धंश्च शनैरस्य * बन्धुता शुचमारुणात् ॥ ४९

अन्वयः । एतत् अयुक्तम् इति अन्ये आप्ताः तं पर्यवारयन् अरुन्धन् च, बन्धुता अस्य शुचं शनैः आरुणत् ॥ ४९

मल्लिनाथः । अयुक्तमिति । एतत् स्त्रीहननमयुक्तमित्यन्ये आप्ता हितास्तं रावणं पर्यवारयन् परिवृत्य स्थिताः । वृञ् वरणे चुरादिः । अरुन्धंश्च कथञ्चिन्न्यवारयंश्च । अथ बन्धुता बन्धुसमूहः । "ग्रामजन—" इत्यादिना समूहार्थे तल्प्रत्ययः । अस्य रावणस्य शुचं शनैरारुणदशमयच्च । "रुधादिभ्यः श्नम्" । "हल्ङ्याब्—" इत्यादिना तिलोपः । चत्वम् ॥ ४९

भरतः । अयुक्तमित्यादि । अन्ये आप्ता हृष्टा रावणस्य अयुक्तम् एतत् स्त्रीहननम् इत्युक्त्वा तं निवारितवन्तः । शनैः पादादिग्रहणैः तं रुद्धवन्तः । बन्धुता बन्धुसमूहश्च अस्य शोकम् आरुणत् अपनीतवान् ॥ ४९

অনুবাদ। এই স্ত্রীবধ অতিশয় অন্যায় জানিয়া তাহার হিতৈষী আত্মীয়গণ তাহাকে বেষ্টন করিয়া বসিল এবং অতিকষ্টে নিবারণও করিল, অনন্তর বন্ধুগণ রাবণের শোক ক্রমশঃ উপশমিত করিল। ৪৯

आस्फायतास्य वीरत्वममर्षश्चाप्यतायत ।
रावणस्तु[स्य] ततः सैन्यं समस्तमयुयुत्सयत् ॥ ५०

अन्वयः । अस्य वीरत्वम् आस्फायत, अमर्षः च अपि अतायत, ततः रावणः तु समस्तं सैन्यम् अयुयुत्सयत् ॥ ५०

मल्लिनाथः । आस्फायतेति । अथैवम् अस्य निवृत्तशोकस्य रावणस्य वीरत्वमुत्साह आस्फायतावर्धत । अमर्षः कोपश्चाप्यतायता·

* "न्यरुन्धंश्चास्य पार्श्वस्थाः" इति पाठान्तरम् ।

वर्द्धत। स्फायी ओप्यायी वृद्धौ भौवादिकौ। ततः स रावणः समस्त सैन्यमयुयुत्सयद् योद्धमैषयद् योद्धुमुत्साहयामासेत्यर्थः। युधेः सनन्तार्ण्णिचि लङ्॥ ५०

भरत:। आप्यायतेत्यादि। अथ शोकापनयनानन्तरं रावणस्य वीरत्वं शौर्य्यं वर्द्धत च। स्फायीङ संवृद्धौ। अमर्षः क्रोधश्च विस्तीर्णः। तायृङ् पालनसन्तत्योः। तदनन्तरं स रावणः समस्तं सैन्यं योद्धुमिच्छां कारयति स्म। युधेः सनन्तात् णिः॥ ५०

অনুবাদ। শোকোপশমের পর রাবণের বীরত্ব ও ক্রোধ বর্দ্ধিত হইল। তখন রাবণ সমস্ত সৈন্যকেই যুদ্ধের জন্য উৎসাহিত করিতে লাগিল। ৫০

अग्नीनवरिवस्यंश्च तेऽनमस्यंश्च शङ्करम्।
द्विजानप्रीणयन् शान्त्यै यातुधाना भयद्रियः॥ ५१

अन्वयः। भयद्रियः यातुधानाः अग्नीन् अवरिवस्यन्, शङ्करम् अनमस्यन्, शान्त्यै द्विजान् अप्रीणयन् च॥ ५१

मल्लिनाथः। अग्नीनिति। भयद्रियो जायमानभीतयोऽस्ये यातुधाना राक्षसा अग्नीनवरिवस्यन् होमैः पर्य्यचरन्। शङ्करमीश्वरमनमस्यन्नपूजयंश्च। "नमोवरिवश्चित्रङः क्यच्"। तदन्ताल्लङ्। वरिवसः परिचर्य्यायां नमसः पूजायामित्यर्थनियमः। द्विजानप्रीणयंश्च। 'धूञ्प्रीञोर्नुग्वक्तव्यः॥ ५१

भरत:। अग्नीनित्यादि। भवन्ती उत्पद्यमाना: भीः भयं येषां ते राक्षसा अग्नीन् सेवितवन्तः। नमस्यतीव रव इति क्यः। शङ्करं प्रभुं पूर्ववत् क्यः। शान्त्यै कल्याणाय द्विजान् प्रीणितवन्तः। प्री धूञोर्नुक्॥ ५१

অনুবাদ। রাক্ষসেরা ভীত হইয়া হোমদ্বারা অগ্নির পরিচর্য্যা ও শঙ্করের পূজা এবং শান্তি-কামনায় দানমানাদি দ্বারা দ্বিজগণকে প্রীত করিতে লাগিল। ৫১

परितः पर्य्यवाद्वायुराज्यगन्धो[न्धि]म[र्म]नोरमः।
अश्रूयत सपुण्याहः स्वस्तिघोषः समुच्चरन्॥ ५२

अन्वयः। आज्यगन्धः मनोरमः वायुः परितः पर्य्यवात्, समुच्चरन् सपुण्याहः स्वस्तिघोषः अश्रूयत॥ ५२

मल्लिनाथः। परित इति। आज्यगन्धोऽस्यास्तीत्याज्यगन्धस्तस्मात्। "अर्श आदिभ्योऽच्"। अत एव मनोरमो वायुः परितः

समन्तात् पर्य्यवात् वाति स्म । समुच्चरन् समन्तादुच्चिरन्तः सपुण्याहः पुण्याहघोषसहितः स्वस्तिघोषः स्वस्तिवादनादोऽश्रूयत । श्रुवः कर्म्मणि लङ् ॥ ५२

भरतः । परित इत्यादि । परितः सर्वतः आज्यस्य घृतस्य गन्धो यस्मिन् स मनोज्ञो वायुः प्रकर्षं वाति स्म । गन्धस्येत्वात् स्वार्थे णिः । आगन्धीर्वेति समासान्त इति । परः गन्ध इति क्वचित् पाठः । पुण्याहसहितः स्वस्तिघोषः समुच्चरन् जनैः श्रूयते स्म ॥ ५२

অনুবাদ। ঘৃতগন্ধসমন্বিত মনোরম বায়ু চারিদিকে প্রবাহিত হইল, সম্যক্ উচ্চারিত পুণ্যাহ শব্দ সহিত স্বস্তিবাচন ধ্বনি শ্রুত হইতে লাগিল ।৫২

योद्धारोऽबिभरुः शान्त्यै साक्षतं वारि मूर्धभिः ।
रत्नानि चाददुर्गाश्च समवाञ्छन्नथाशि[षः]षम् ॥५३

अन्वयः । योद्धार शान्त्यै साक्षतं वारि मूर्द्धभि अबिभरुः, रत्नानि गाः च आददुः, अथ आशिषं समवाञ्छन् ॥ ५३

मल्लिनाथः । योद्धार इति । योद्धारो योधाः शान्त्यै अरिष्टनिवृत्त्यै साक्षतं सतण्डुलम् । 'अक्षतं तण्डुले धान्ये नानालाजेष्वनामये' इति यादवः । वारि पूर्णपात्रोदकं मूर्द्धभिः शिरोभिरबिभरुरधारयंश्च । भृञ् भरणे । लङि "श्लौ" इति द्विवचनम् । "सिजभ्यस्तविदिभ्यश्च" इति झेर्जुस् । 'जुसि च' इति धातोर्गुणो रपरः । "भृञामित्" इत्यभ्यासस्येत्वम् । रत्नानि च गा धेनूश्चाददुर्ब्राह्मणेभ्यो दत्तवन्तः । पूर्ववदभ्यस्तज्झेर्जुस् । "उस्यपदान्तात्" इति पररूपत्वम् ! अथाशिषं ब्राह्मणाशीर्वादं समवाञ्छन्नाकाङ्क्षन् । प्रार्थनापूर्वमाशिषः स्वीचक्रुरित्यर्थः । वाछि इच्छायाम् । इदित्वान्नुम् ॥ ५३

भरतः । योद्धार इत्यादि । योद्धारः शान्त्यर्थं मूर्द्धभिः लचितं तण्डुलादिसहितं वारि दधति स्म । टु भृञ् धारणपोषणयोः । आदिरे हिः, प्र भार्दहिः खेरे, अनुस्विरे । चवस्थाम् । रत्नानि गाश्च द्विजेभ्योऽददुः । उसेचौत्यालोपः । अथ आशीर्वादाय तेभ्यो वाञ्छितवन्तः । वञ्जोऽकञ्जिति विरिति पचे शिः ॥ ५३

অনুবাদ। যোদ্ধারা শান্তিকামনায় আতপতণ্ডুলসহ শান্তিকুম্ভের জল মস্তকে ধারণ, ব্রাহ্মণদিগকে অনেক রত্ন ও গোদান এবং তাঁহাদের নিকট কল্যাণাশীর্বাদ প্রার্থনা করিল। ৫৩

**आ[अ]दिहंश्चन्दनैः शुभ्रैर्विचित्रं समवस्त्रयन्।**
**अधारयन् स्रजः कान्ता वर्माण्यदधत द्रुतम्॥* ५४**

अन्वयः। शुभ्रैः चन्दनैः आदिहन्, विचित्रं समवस्त्रयन्, कान्ताः स्रजः अधारयन्, वर्माणि द्रुतम् अदधत च॥ ५४

मल्लिनाथः। आदिहन्निति। शुभ्रैश्चन्दनैरादिहन् गात्राण्यलिम्पन्। दिह उपचये। शपो लुक्। झोऽन्तादिकार्य्यम्। विचित्रं चित्रवस्तुजातं समवस्त्रयन्नाच्छादयन्। "मुण्डमिश्र—" इत्यादिना 'वस्त्रात् समाच्छादने' इति णिच्। कान्ता मनोहराः स्रजो माल्यान्यधारयन्। द्रुतं वर्माण्यदधत दधुः। दधातेर्लङि तङि "अदभ्यस्तात्" इत्यदादेशः॥ ५४

भरतः। आदिहन्नित्यादि। शुक्लैः चन्दनैः गात्राणि लिप्तवन्तः।, दिह लेपे। विचित्रं वस्त्रं परिहितवन्तः, विचित्रं शोभनं समाच्छादयन्ति स्म इत्यर्थो वा। वस्त्रात् समाच्छादने परिधाने वा, ञि सत्यादेरिति ञिः। कान्ताः शोभनाः स्रजो धारितवन्तः। धृञ् च। चकारात् धृञाम्। अन्ये कवचं धृतवन्तः॥ ५४

অনুবাদ। তাহারা শুভ্রচন্দনে গাত্রলেপন, বিচিত্র বস্ত্রাদি বস্ত্র দ্বারা দেহাচ্ছাদন, মনোহর মাল্যধারণ এবং দ্রুত বর্ম্মধারণ করিল। ৫৪

**समक्ष्णुवत शस्त्राणि प्रामृजन् खड्गसंहतीः।**
**गजादीनि समारोहन् प्रातिष्ठन्त च सत्वराः॥ ५५**

अन्वयः। शस्त्राणि समक्ष्णुवत, खड्गसंहतीः प्रामृजन्, गजादीनि समारोहन् सत्वराः प्रातिष्ठन्त च॥ ५५

मल्लिनाथः। समिति। शस्त्राणि समक्ष्णुवत समतेजयन्। क्ष्णु तेजने। लङि "समः क्ष्णुवः" इति तङ्। शपो लुक्। झस्यादादेशे उवङादेशः। खड्गसंहतीः प्रामृजन्नशोधयन्। मृजूष् शुद्धौ। मृजोऽजादौ वृद्ध्यभावे झोन्तादिकार्य्यम्। गजादीनि समारोहन्नारूढाः। गजादिष्विति पाठे—आधारत्वविवक्षायां सप्तमी। सत्वराः प्रातिष्ठन्त प्रस्थिताश्च। 'समवप्रविभ्यः स्थः' इति तङ्॥ ५५

भरतः। समक्ष्णुवतेत्यादि। योधाः शस्त्राणि निशितानि चक्रुः। क्ष्णु तेजने। संक्ष्णोरिति तम्। खड्गसमूहान् शोधितवन्तः। मृजोऽकङिति ञिरिति पक्षे ञिः। गजादीनि समारूढाः, अथ त्वरान्विताः प्रस्थिताः॥ ५५

* "वर्म चान्ये दधुर्द्रुतम्" इति पाठान्तरम्।

অনুবাদ। সৈন্যগণ শস্ত্রগুলি শাণিত ও খড়্গ সকল মার্জিত করিল এবং গজ অশ্বাদি যানে আরোহণ করিয়া ত্বরায় প্রস্থান করিল। ৫৫

अपूरयन्नभः शब्दो बलसंवर्त्तसम्भवः।
अपूर्य्यन्त च दिग्भागास्तुमुलैस्तूर्य्यनिस्वनैः॥ ५६

अन्वयः। बलसंवर्त्तसम्भवः शब्दः नभः अपूरयत्, तुमुलैः तूर्य्यनिस्वनैः दिग्भागाः अपूर्य्यन्त च॥ ५६

मल्लिनाथः। अपूरयदिति। बलसंवर्त्तसम्भवः सेनासम्मर्द-सम्भूतः। पचाद्यच्। शब्दः कलकलो नभः खमपूरयत्। तुमुलैः सङ्कुलैस्तूर्य्यनिस्वनैर्वाद्यनिर्घोषैर्दिग्भागा अपूर्य्यन्तपूरिताश्च॥ ५६

भरतः। अपूरयदित्यादि। शब्दो नभः पूरितवान्। पूरक् च, चकारात् पूर्णाः। कीदृशः? — बलानां संवर्त्त एकीभावः, तस्मात् सम्भवो यस्य सम्भवति यस्मादिति व्युत्पत्त्या, स एव सम्भवो यस्येति वा। तूर्य्याणां तुमुलैः सङ्कुलैः शब्दैः दिग्भागाः पूरिताः। कर्म्मणि रूपम्॥ ५६

অনুবাদ। সেই সম্মিলিত সেনাগণের কলকল শব্দে গগন এবং তুমুল তূর্য্যধ্বনিতে সমস্ত দিক্ পূর্ণ হইল। ৫৬

आसीद्द्वारेषु सं[घट्टो] मर्द्दो रथाश्वद्विपरच्चसाम्।
सुमहाननिमित्तैश्च * समभूयत भीषणैः॥ ५७

अन्वयः। द्वारेषु सुमहान् रथाश्वद्विपरच्चसां सम्मर्द्दः आसीत्, भीषणैः अनिमित्तैः च समभूयत॥ ५७

मल्लिनाथः। आसीदिति। द्वारेषु नगरद्वारेषु सुमहानति-प्रभूतो रथाश्वद्विपरच्चसां संमर्दः सम्बाध आसीत्। "अस्तिसिचो-ऽपृक्ते" इतीट्। अथ भीषणैर्भयङ्करैरनिमित्तैर्दुर्निमित्तैश्च समभूयत सम्भूतम्। भावे लङ्॥ ५७

भरतः। आसीद्द्वारेष्वित्यादि। लङ्काद्वारेषु रथादीनां निर्गच्छतां सुमहान् सङ्घट्ट आसीत्। कदाचनो ... । भीषणैः भयानकैः अनिमित्तैः अनाकुलैः सम्भूतम्। भावे लङ्॥ ५७

* "संह ... निमित्तैश्च" इति पाठान्तरम्।

অনুবাদ। রাবণসৈন্য নির্গমনকালে নগর দ্বারে রথ, অশ্ব, হস্তী ও রাক্ষসগণের পরস্পর অতি সংঘর্ষ উপস্থিত হইল এবং অতি ভয়ঙ্কর দুর্নিমিত্ত সকল দেখা দিল। ৫৭

कपयोऽबिभयुस्तस्मिन्नभञ्जंश्च महाद्रुमान्।
प्रोदखायन् गिरींस्तूर्णमगृह्णंश्च महाशिलाः॥५८

अन्वयः। कपयः तस्मिन् (रावणे आगते सति) अबिभयुः, तूर्णं महाद्रुमान् अभञ्जन् च गिरीन् प्रोदखायन्, महाशिलाः च अगृह्णन्॥ ५८

मल्लिनाथः। कपय इति। कपयः तस्मिन् रावणे आगते सतीति शेषः। अबिभयुर्भीताः। "सिजभ्यस्त—" इति भेर्जुसि 'जुसि च' इति गुणे अयादेशः। अथ तूर्णं महाद्रुमानभञ्जन् बभञ्जुश्च। गिरीन् प्रोदखायन् प्रोत्खातवन्तः। खै खनने। लङि अपि णित्वात्वाभावे आयादेशः। महाशिलाश्चागृह्णन्॥५८

भरतः। कपय इत्यादि। तस्मिन् रावणे निर्गते सति वानराः भीताः। ञि भी भि भीत्याम्। अनुञिरे: गृहस्थ्याम्। महाद्रुमान् शीघ्रं भग्नवन्तः। तुङ्गान् पर्वतान् उत-खातवन्तः। खेतुर्थे खननहिंसयोः। महाशिलाः गृहीतवन्तः॥ ५८

অনুবাদ। অনন্তর রাবণ উপস্থিত হইলে, বানরেরা ভীত হইয়া ত্বরায় মহা বৃক্ষ সকল ভাঙ্গিতে লাগিল, পর্ব্বত উত্তোলন করিল এবং প্রকাণ্ড প্রস্তরখণ্ড সকল গ্রহণ করিল। ৫৮

ततः समभवद्युद्धं प्राहरन् कपिराक्षसाः।
अन्योऽन्येनाभ्यभूयन्त विमर्दमसहन्त च॥ ५९

अन्वयः। ततः युद्धं समभवत्, कपिराक्षसाः प्राहरन्, अन्योन्येन अभ्यभूयन्त, विमर्दं असहन्त च॥ ५९

मल्लिनाथः। तत इति। तदाह्वानन्तरं युद्धं समभवत्। कपिराक्षसाः प्राहरन् मिथः प्रजह्रुः। अन्योन्येनाभ्यभूयन्त इतरेतरमभिभूताश्च। कर्मणि तङ्। विमर्दं प्रहारमसहन्त च नाश्राम्यन्नित्यर्थः॥ ५९

भरतः। तत इत्यादि। तदनन्तरं युद्धं विस्तृतं कपयो राक्षसाय प्रहारं चक्रुः। अन्यो-न्यम् अभ्यभूयन्त। कपयो राक्षसैः ते च कपिभिः अभिभूताः। कर्मणि यक्। ते विमर्दं सोढवन्तः॥ ५९

অনুবাদ। তাহার পর যুদ্ধ হইল, পরস্পরে প্রহার আরম্ভ হইল, এক পক্ষ অপর-পক্ষকে পরাভব করিতে লাগিল, তথাপি প্রহার সহ্য করিয়াও ক্লান্ত হইল না। ৫৯।

प्रावर्धत रजो भौमं तद्व्याश्नुत दिशो दश ।
परात्मीयविभागं[विवेकं]च प्रामुष्णात्कपिरक्षसाम् ॥

अन्वयः । भौमं रजः प्रावर्द्धत, तत् दश दिशः व्याश्नुत, कपिरक्षसां परात्मीयविभागं च प्रामुष्णात् ॥ ६०

मल्लिनाथः । प्रेति । भूमेरिदं भौमं रजः प्रावर्द्धत रथाश्वादिक्षोभादुत्थितमित्यर्थः । तद्रजो दश दिशो व्याश्नुत व्याप्नोत् । अशू व्याप्तौ । कपिरक्षसां परात्मीयविभागं स्वपरविवेकं प्रामुष्णात् प्रमुमोष । मुष स्तेये । क्र्यादिकः ॥ ६०

भरतः । प्रावर्द्धत इत्यादि । भूमिसम्बन्धि रजः प्रवृद्धं, सैन्यक्षोभात् ; तत् रजो दश दिशो व्याप्नुवत् । अशूङ् व्याप्तिसंहत्योः । अयं परः अयम् आत्मीय इति यः कपिरक्षसां विवेकः तच्च प्रामुष्णात् अपनिनाय मुषण मुषन् लठने ॥ ६०

অনুবাদ। রথাশ্বাদির সঞ্চালনে মৃত্তিকার ধূলি বর্দ্ধিত হইল, সেই ধূলি দশদিক আচ্ছন্ন করিল, কপি ও রাক্ষসগণ কে আপন পর ইহা বুঝিবার ক্ষমতা লুপ্ত হইল। ৬০

ततोऽद्विषुर्निरालोके स्वेभ्योऽन्येभ्यश्च राक्षसाः ।
अद्विषन् वानराश्चैव वानरेभ्योऽपि निर्भ[र्द]याः ॥६१

अन्वयः । ततः निरालोके राक्षसाः स्वेभ्यः अन्येभ्यः च अद्विषुः, ( तथैव वानराः निर्भयाः ( सन्तः ) वानरेभ्यः च अपि अद्विषन् ॥ ६१

मल्लिनाथः । तत इति । ततो रजोव्यापनान्निरालोके निष्प्रकाशे रणे राक्षसाः स्वेभ्यो राक्षसेभ्योऽन्येभ्यो वानरेभ्यश्चाद्विषुरक्रुध्यन् । 'क्रुधद्रुहेर्ष्या—" इत्यादिना सम्प्रदानत्वाच्चतुर्थी । द्विष अप्रीतौ । लङि शपो लुक् । शाकटायनमताज्झेर्जुस् । तथैव वानरा निर्भयाः सन्तो वानरेभ्यः, अपिशब्दाद्राक्षसेभ्यश्च अद्विषन् । इतरमते झोऽन्तादिकार्य्यम् । प्रागेव क्रोधान्धा अथ रजोऽन्धाश्चेति युक्तमेतदिति भावः ॥ ६१

अन्वयः। तत इत्यादि। रजोबाहुल्यात् निरालोके रणे राक्षसाः स्वेभ्यो राक्षसेभ्य अन्येभ्यो वानरेभ्यश्च द्वेषं चक्रुः। वानरा वानरेभ्योऽपिशब्दात् राक्षसेभ्यश्च द्वेषं चक्रुः अद्विषो अ वैरे। द्विष विद्वातोऽनुम् वा। यस्मै दिस्तेत्यादिना चतुर्थी॥ ६१

অনুবাদ। সেই ধূলিতে রণস্থল অন্ধকারময় হইলে, রাক্ষসেরা স্বপক্ষ ও বিপক্ষ উভয়ের উপরই ক্রোধ প্রকাশ করিতে লাগিল, বানরেরাও নির্ভয়-চিত্তে ঐরূপ স্বজন ও পরগণের প্রতি ক্রুদ্ধ হইয়া উঠিল। ৭১

**अघुरंस्ते महाघोरमश्चोतद[न्न]थ शोणितम्।**
**समपा[प]द्यत रक्तेन समन्तात्तेन कर्दमः॥ ६२**

अन्वयः। ते महाघोरम् अघुरन्, अथ शोणितम् अश्चोतत, तेन रक्तेन समन्तात् कर्दमः समपाद्यत॥ ६२

**मल्लिनाथः। अघुरन्निति। ते हता महाघोरमघुरन्नशब्दा-यन्त। घुर भीमार्थशब्दयोः। अथ शोणितमश्चोतदक्षरत्। श्चुतिर् क्षरणे। तेन रक्तेन कर्त्रा समन्तात् कर्दमः पङ्कः सम-पाद्यत सम्पादितः। पद्यतेर्ण्यन्तात् कर्म्मणि लङ्। अण्यन्तपाठे कर्त्तरि लङ्। समपद्यत सम्पन्न इत्यर्थः। रक्तेनेति हेतौ तृतीया॥ ६२**

भरतः। अघुरन्नित्यादि। ते हताः कपिराक्षसः महाघोरं शब्दं चक्रुः। घुर ध्वनौ भीमार्थे। अनन्तरं शोणितम् अश्चोतन् क्षरति स्म। तेन रक्तेन समन्तात् कर्दमः सम्पन्नः। यो पदङ्गतौ॥ ६२

অনুবাদ। সেই রাক্ষস ও বানরগণ অতি ঘোর চীৎকার করিতে লাগিল, তাহাদের শরীর হইতে রক্ত নির্গত হইতে লাগিল এবং সেই রক্ত চারিদিক্ কর্দ্দমময় হইয়া উঠিল। ৭২॥

**गम्भीराः प्रावहन्नद्यः समजायन्त च ह्रदाः।**
**वृद्धं च तद्रजोऽशाम्यत् समवेद्यन्त च द्विषः॥ ६३**

अन्वयः। गम्भीराः नद्यः प्रावहन्, ह्रदाः च समजायन्त, वृद्धं तत् रजः च अशाम्यत्, द्विषः च समवेद्यन्त॥ ६३

**मल्लिनाथः। गम्भीरा इति। गम्भीरा अगाधा नद्यो रक्तनद्यः प्रावहन् प्रवहन्ति स्म। ह्रदा रक्तह्रदाश्च समजायन्त संजाताः। वृद्धं पूर्ववृद्धं तद्रजो धूलिरशाम्यत् शान्तम्। द्विषश्च समवेद्यन्त**

प्रसृता इत्यर्थः। स्वपरविवेकलाभादिति भावः। विद चेतनाख्यान-निवासेष्विति धातोश्चौरादिकात्कर्मणि लङ्॥ ६३

भरतः। गम्भीरा इत्यादि। तत्र रक्तेन गम्भीरा नद्यः प्रवहन्ति स्म। गम्भीरा ह्रदाश्च सञ्जाताः। ततः प्रवृद्धं तत्र रजः शान्तम् अभवत्। ततश्च द्विषः शत्रवो ज्ञाताः। विद ज्ञ चेतनाख्यानिवासे। कर्म्मणि यक्॥ ६३

অনুবাদ। ক্রমে সেই রক্ত হইতে বহু অগাধ নদী বহিল, এবং বহু রক্তহ্রদের সৃষ্টি হইল এবং তখন আর সেই প্রবল রক্তস্রোতে প্রবল ধূলিরাশি রহিল না, সকলেই পরস্পর শত্রু মিত্র চিনিতে পারিয়া পরস্পরের শত্রু বেগে প্রহার করিতে লাগিল। ৬৩॥

**ततोऽचिचीयतास्त्रौघैर्धनुश्चाधूनयन्महत्।**
**रामः समीहितं तस्य नाचेतन् स्वे न चापरे॥६४**

अन्वयः। ततः रामः अस्त्रौघैः अचिचीयत, महत् धनुः च अधूनयत्, तस्य समीहितं स्वे परे च न अचेतन्॥ ६४

मल्लिनाथः। तत इति। ततस्तुमुलयुद्धप्रवृत्त्यनन्तरं रामोऽस्त्रौघैर्बाणसमूहैरचिचीयत चित्रमाश्चर्यमकरोत्। 'नमोवरिव-श्चित्रङः क्यच्'। चित्रङ आश्चर्ये इत्याश्चर्यार्थे क्यङ्। ङित्क-रणात्तङ्। "क्यचि च" इतीकारः। महद्धनुश्चाधूनयदधुनोत्। 'धूञ्प्रीञोर्नुग्वक्तव्यः' इति नुक्। तस्य रामस्य समीहितं शरसन्धान-ज्याकर्षणादिचेष्टितं स्वे स्वकीया नाचेतन्नाजानन्। परे शत्रवो नाचेतन्। तस्य तादृग्हस्तलाघवादिति भावः॥ ६४॥

भरतः। तत इत्यादि। तदनन्तरम् अस्त्रसमूहैः आश्चर्यरूपैः जातम्। चित्रङ् आश्चर्ये कण्ड्वादिः। रामश्च महत् धनुः आधूनितवान्। धु न णि धू अ च चकारात् कम्पे। प्री-धूञोर्नुक् वा। तस्य रामस्य समीहितम् अभिप्रेतं स्वे वानरा अपरे राक्षसाश्च न ज्ञातवन्तः शीघ्रकारित्वात्। चिती ज्ञाने॥ ६४

অনুবাদ। এইরূপে তুমুল যুদ্ধের পর রাম অস্ত্রজালে লোকচিত্তে বিস্ময় উৎপাদন করিলেন, তিনি বৃহৎ ধনুক কম্পিত করিলেন। তাঁহার অভিপ্রায় কি, তাহা স্বকীয় বা পরকীয় সৈন্য সকলের মধ্যে কেহই বুঝিতে পারিল না। ৬৪

**छिन्नानैक्षन्त भिन्नांश्च समन्ताद्रामसायकैः।**
**हा हेति चाप्यरुवन्न च रामं न्यरूपयन्॥**

अन्वय:। रामसायकैः छिन्नान् भिन्नान् च समन्तात् ऐक्षन्त, हा हा इति क्रुष्टं च अशृण्वन्, न च रामं व्यरूपयन् ॥ ६५

मल्लिनाथः। छिन्नानिति। रामसायकैः समन्ताच्छिन्नान् द्विधाकृतान् भिन्नान् विदारितांश्चैक्षन्तापश्यन्। हा हेति क्रुष्टं क्रोशनञ्च। भावे क्तः। अशृण्वन्। रामं तु न व्यरूपयन्। अयमेव चेष्टत इति न निरधारयन्नित्यर्थः। रूप व्याक्रियायामिति चौरादिकः॥ ६५

भरत:। छिन्नानित्यादि। संग्रामस्थाः काश्चित् रामस्य सायकैः बाणैः छिन्नान् खण्डितान् कांश्चित् भिन्नान् विदारितवान् ईक्षन्त स्म। समन्तात् सर्वतः हाहेति क्रुष्टं शब्दं शुश्रुवन्तः। अत्र रामोऽस्ति न वेति नैव निश्चितवन्तः, शीघ्रभ्रमणात्। रूपत्कनत् क्रतौ ॥ ६५

অনুবাদ। তথা স্থিত লোকেরা দেখিল, রামের বাণে ছিন্ন ও বিদীর্ণ লোক সকল চারিদিকে পড়িয়া রহিয়াছে। আর শুনিল "হায় হায়" এইরূপ শব্দ হইতেছে। দ্রুত ভ্রমণ বশতঃ সেখানে রাম আছেন কি না তাহা নির্ণয় করিতে পারিল না। ৬৫

अभिनच्छत्रुसङ्घातानक्षुणद्वाजिकुञ्जरम्।
अपिनट् च रथानीकं न चाज्ञायत सञ्चरन् ॥ ६६

अन्वय:। (सः) शत्रुसङ्घातान् अभिनत्, वाजिकुञ्जरम् अक्षुणत्, रथानीकं च अपिनट्, सञ्चरन् न च अज्ञायत ॥ ६६

मल्लिनाथः। अभिनदिति। स रामः शत्रुसङ्घातानभिनद् व्यदारयत्। वाजिकुञ्जरमक्षुणदचूर्णयत्। क्षुदिर् सम्पेषणे। रथानीकं रथसमूहं चापिनट् समचूर्णयत्। पिष्लृ सञ्चूर्णने। सर्वे रौधादिकाः। सञ्चरन् सम्यक्चारीकुर्वन् स रामस्तु नाज्ञायत न ज्ञातः। तादृक् तस्य सञ्चारलाघवमित्यर्थः॥ ६६

भरत:। अभिनदित्यादि। रामः शत्रुसमूहान् बिभेद। अथो भिदिर् भिदि। वाजिनः कुञ्जरांश्च चूर्णितवान्। अथो क्षुदिर् क्षुदि। रथस्य अनीकं समूहञ्च पिष्टवान्। धौ पिष्लृ चूर्णने। सञ्चरन् रामः परैः न ज्ञातः॥ ६६

অনুবাদ। রাম শত্রুসমূহ বিদারিত গজ ও অশ্ব সকল চূর্ণ বিচূর্ণ এবং রথগুলি পেষণ করিলেন, কিন্তু তিনি যে সেখানে বিচরণ করিতেছেন, ইহা কেহ জানিতে পারিল না। ৬৬

दशदन्तिसहस्राणि रथिनां च महात्मनाम्।
चतुर्दशसहस्राणि सारोहाणां च वाजिनाम्॥ ६७
लक्षे द्वे च पदातीनां राघवेण धनुर्भृता।
अनीयन्ताष्टभागेन दिवसस्य परिक्षयम्॥ ६८

अन्वयः। धनुर्भृता राघवेण दिवसस्य अष्टभागेन दशदन्तिसहस्राणि, महात्मनां रथिनां च सारोहाणां वाजिनां चतुर्दशसहस्राणि पदातीनां द्वे लक्षे च परिक्षयम् अनीयन्त॥ ६७—६८

मल्लिनाथः। तद्धस्तलाघवमेव श्लोकद्वयेनाह—दशेत्यादि। धनुर्भृता राघवेण दिवसस्याष्टभागेनाष्टमांशेनार्द्धप्रहरेणेत्यर्थः। संख्याशब्दस्य वृत्तिविषये पूरणार्थत्वं त्रिभागादिवत्। अष्टमे भागे इति क्वचित् पाठः। दशदन्तिसहस्राणि महात्मनां महामनसां रथिनां चतुर्दशसहस्राणि तथा सारोहाणां ससादिनां वाजिनां चतुर्दशसहस्राणि॥ ६७

मल्लिनाथः। लक्षे इति। तथा पदातीनां द्वे लक्षे च परिक्षयं नाशमनीयन्त। नयतेर्द्विकर्मकात् प्रधानकर्मणि लङ्॥ ६८

भरतः। दशेत्यादि। अग्रिमश्लोकेनान्वयः। धनुर्भृता रामेण दिवसस्य अष्टमे भागे प्रहरार्द्धमध्ये दन्तिनां दशसहस्राणि, महात्मनां रथिनाञ्च चतुर्दशसहस्राणि, सारोहाणां वाजिनाञ्च चतुर्दशसहस्राणि, पदातीनां लक्षद्वयञ्च परिक्षयं विनाशं नीतानि। अनीयन्तेति पाठे—सर्वम् एतत्तु परिक्षयं नीतम्। भावे वा प्रत्ययः, कर्म्मोपादानेऽपि भावे इति परिवचनात्; स्वमतेऽपि कर्म्मोपादाने भावप्रत्ययस्य न निषेधः॥ ६७—६८

অনুবাদ। ধনুকধারী রাম অর্দ্ধপ্রহর মধ্যে দশ হাজার হস্তী চতুর্দ্দশ সহস্র শ্রেষ্ঠ রথী, আরোহী সৈন্যসহ চতুর্দ্দশসহস্র অশ্ব এবং দুই লক্ষ পদাতি সৈন্য ক্ষয় করিলেন। ৬৭-৬৮॥

यमलोकमिवाग्रथ्नाद्रुद्राक्रीड़मिवाकरोत्।
शैलैरिवाचिनोद्भूमिं बृहद्भी राक्षसैर्हतैः॥ ६९

अन्वयः। (सः) बृहद्भिः हतैः राक्षसैः भूमिं यमलोकम् इव अग्रथ्नात्, रुद्राक्रीड़म् इव अकरोत्, शैलैः इव अचिनोत्॥ ६९

मल्लिनाथः। यमेति। स रामो बृहद्भिर्हतै राक्षसैर्भूमिं यमलोकमिवाग्रथ्नात् सन्दर्भितवान्। यमलोकमिवाकरोदित्यर्थः।

ग्रन्थसन्दर्भे । क्रैयादिः । रुद्रस्याक्रीड़ं क्रीड़ास्थानं श्मशानमिवाकरोत् । शैलैः पर्वतैरिवाचिनोत् चिनोति स्म । चिञ् चयने ॥ ६९

भरतः । यमलोकमित्यादि । बृहद्भिः हतैः राक्षसैः रामो यमलोकमिव सन्दर्भितवान् चकार इत्यर्थः । ग्रन्थ विदर्भे । रुद्रस्य आक्रीड़ क्रीडास्थानं श्मशानमिव अकरोत । अतनोदिति क्वचित् पाठः । भूमिं शैलैरिव अचिनोत् आच्छादितवान्, रक्षसां बृहत्त्वात् । चिनिञ् चित्याम् ॥ ६९

অনুবাদ। তিনি বৃহৎ বৃহৎ নিহত রাক্ষসদেহে যমালয়বৎ রণভূমি গ্রথিত করিলেন এবং শিবের ক্রীড়াভূমি শ্মশানের ন্যায় করিয়া ফেলিলেন, রাক্ষসগণের বৃহৎ দেহে সেই স্থান যেন পর্ব্বতে আচ্ছাদিত করিলেন। ৬৯

अस्तुवन् देवगन्धर्वा व्यस्मयन्त प्लवङ्गमाः ।
कपीन्द्रेऽतन्यत प्रीतिः पौलस्त्योऽमन्यताद्भुतम् ॥ ७०

अन्वयः । देवगन्धर्वा अस्तुवन्, प्लवङ्गमाः व्यस्मयन्त, कपीन्द्रे प्रीतिः अतन्यत, पौलस्त्य अद्भुतम् अमन्यत ॥ ७०

मल्लिनाथः । अस्तुवन्निति । देवगन्धर्वा अस्तुवन् । प्लवङ्गमा व्यस्मयन्त विस्मितवन्तः । कपीन्द्रे सुग्रीवे प्रीतिरतन्यत ततान । सुग्रीवोऽपि सन्तुष्ट इत्यर्थः । कर्मकर्त्तरि लङि तङ् । पौलस्त्यो विभीषणोऽद्भुतमाश्चर्यममन्यत ॥ ७०

भरतः । अस्तुवन्नित्यादि । देवा गन्धर्वाश्च तम् अर्थात् अस्तुवन् स्तुवन्ति स्म । कपयो विस्मयं प्राप्ताः । सुग्रीवे प्रीतिः विस्तृता । विभीषणश्च आश्चर्यं ज्ञातवान् इत्यर्थः ॥ ७०

অনুবাদ। দেবতা ও গন্ধর্ব্বেরা রামের স্তব করিতে লাগিলেন, বানরেরা বিস্মিত হইল, সুগ্রীবের আনন্দ বর্দ্ধিত হইল, বিভীষণ আশ্চর্য্য মনে করিলেন। ৭০

राक्षस्यः प्रारुदन्नुच्चैः प्राजुगुप्सन्त रावणम् ।
अमुह्यन् बालवृद्धाश्च * समरौदितरो जनः ॥ ७१

अन्वयः । राक्षस्यः उच्चैः प्रारुदन्, रावणं प्राजुगुप्सन्त, बालवृद्धाः च अमुह्यन्, इतरः जनः समरौत ॥ ७१

मल्लिनाथः । राक्षस्य इति । राक्षस्यो राक्षसस्त्रिय उच्चैः प्रारुदन् रुदितवत्यः । रावणं प्राजुगुप्सन्तागर्हन्त । "गुप्तिज्-

* "अमुह्यन्बालवृद्धाः" इति पाठान्तरम् ।

क्रिद्भ्यः सन्” इति गुपेर्निन्दायां सन्। तदन्तात्लङि तङि “झोऽन्तः”। बालवृद्धाश्चामुह्यन् भयादमूर्च्छन्। इतरो जनः स्त्रीबालवृद्धातिरिक्तः पौरजनः समरौत् सम्यगाक्रन्दत्। रु शब्दे। शपो लुक्। ‘उतो वृद्धिर्लुकि हलि’ इति वृद्धिः॥ ७१

भरतः। राक्षस्य इत्यादि। पत्यादिवधात् राक्षस्यो रोदनं चक्रुः। उच्चैः रावणं निन्दन्ति स्म। गुपेः क्रिजिजगुप इति निन्दायां सन्, इत्यनिषेधश्च। बालवृद्धं कर्तृ, भयात् अमुह्यत् मोहं प्राप, बालाश्च वृद्धाश्च इति समाहारः। इतरो राक्षसीबालवृद्धेभ्योऽन्यो जनः सरावं चकार। रुल ध्वनौ, सपूर्वः रविकृतस्तुतोऽर्हैर्तिः॥ ७२

অনুবাদ। রাক্ষসীরা উচ্চৈঃস্বরে রোদন এবং রাবণকে তিরস্কার করিতে লাগিল, বালক ও বৃদ্ধগণ ভয়ে মূর্চ্ছিত হইল, এবং অপর পুরবাসীরা সমস্বরে রোদন করিতে লাগিল। ৭১

**सर्वतस्त्वाभयं प्राप्नोन्नैच्छन्नृभ्यस्तु रावणः।**
**फलं तस्येदमभ्यायाद्दुरुक्तस्येति चाब्रुवन्॥ ७२**

अन्वयः। रावणः च सर्वतः अभयं प्राप्नोत्, नृभ्यः तु न ऐच्छत्, तस्य दुरुक्तस्य इदं फलम् अभ्यायात् इति च अब्रुवन्॥ ७२

मल्लिनाथः। सर्वत इति। रावणः सर्वतः सर्वस्मादमानुषवर्गादभयं प्राप्नोत्। ब्रह्मणो वरं लब्धवानित्यर्थः। नृभ्यो मानुषेभ्यस्तु नैच्छदनादरादभयं न वव्र इत्यर्थः। तस्य दुरुक्तस्य दुर्भाषितस्येदं फलमभ्यायादायातमिति चाब्रुवन्, लङ्काजना इति शेषः॥ ७२

भरतः। सर्वतस्त्वित्यादि। रावणः सर्वेभ्यो देवगन्धर्वादिभ्योऽभयं प्राप्तवान्, ब्रह्मणस्त्वधा इत्यर्थात्, नृभ्यो मनुष्येभ्यस्तु अभयम् असौ नेष्टवान्, ब्रह्माणं न प्रार्थितवान्, तेषां भक्ष्यत्वात्; तस्य दुरुक्तस्य दुष्टभाषितस्य वरप्रार्थनाकाले मनुष्यावज्ञासूचकस्य फलम् इदम् अभ्यायात उपगतम्, इत्येवं केचित् उक्तवन्तः। पूर्वश्लोकात् समरौदित्यस्य विभक्तिव्यत्ययेन अनुषङ्गः॥ ७२

অনুবাদ। ব্রহ্মার নিকট রাবণ মনুষ্য ভিন্ন সকলের নিকটেই অভয় বর লাভ করে, কিন্তু মানুষের নিকট অভয় বর প্রার্থনাই করে নাই, সেই দুর্বাক্যেরই ফল এই উপস্থিত, সমস্ত লঙ্কাবাসী ইহাই বলিতে লাগিল॥ ৭২

**ततोऽधावन्महाघोरं रथमास्थाय रावणः।**
**अध्मायत मही दध्मुस्तमारायन्त भीषणाः॥ ७३**

अन्वयः । ततः रावणः महाघोरं रथम् आस्थाय अधावत्, मही अधूयत, भीषणाः गृध्राः तम् आरार्य्यन्त ॥ ७३

मल्लिनाथः । तत इति । ततो रामपराक्रमानन्तरं रावणो महाघोरमतिभयङ्करं रथमास्थायाधावत् । रामं प्रतीति शेषः । अथास्य दुर्निमित्तान्याह—मही अध्मायताधूयत । धूञ् कम्पने । भौवादिः । भीषणा गृध्रास्तं रावणमारार्य्यन्त भृशमाच्छन् । ऋ गतौ । 'सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतीनामुपसंख्यानात्' अर्त्तेर्यङि 'याङ च' इति गुणे अर्य्येति स्थिते 'यपरस्य रेफस्य न प्रतिषेधः' इति वचनाद्रेफसहितस्य यकारस्य द्विवचने अभ्यासकार्य्ये अरार्य्येति यङन्ताल्लङि तङि अपि "ह्रोऽन्तः" । अजादित्वादाडागमे आरार्य्यन्तेति सिद्धम् ॥ ७३

भरतः । तत इत्यादि । तदनन्तरं महाघोरं रथम् आरुह्य रावणोऽधावत् वेगेन योद्धुं गतः । धावु ङ् जवे । सृजि परे तु सर्त्तेर्धावो वेगे स्मितीति सूत्रं कृत्वा ऋ गताविसस्य रूपम् वदन्ति, तत्त व्यर्थं, फलतो विशेषाभावात् । दुर्निमित्तान्याह—भूमिः अधूयत च । धूञ् ङ् विधूनने । भीषणा गृध्राः तम् अत्यर्थं कुटिलञ्च गताः । ऋ प्रापणे च, चकारात् गतौ । गत्यर्थादिति यङ्, सूच-सूत्रेत्यादिना वा पृथग्ग्रहणात्, स्याद्यर्त्तौ वा युर्यङिति गुणः । स्यादौ नवद्रोऽये इति यसंयोगविषये द्वित्वस्य निषेधाभावः । घोंऽनित इति खेर्दीर्घः ॥ ७३

अनुवाद । তাহার পর রাবণ অতি ভীষণ রথারোহণে রামের প্রতি ধাবিত হইল, কিন্তু তখন দুর্নিমিত্তসূচক ভূমিকম্প হইল ও ভীতিপ্রদ গৃধ্রাদি জন্তুগণ তাহার চারিদিকে বেষ্টন করিল। ৭৩

मेघाः सविद्युतोऽवर्षंश्चेलक्नोपं च शोणितम् ।
अवान् भीमा नभस्वन्तः प्रारुवन्नशिवाः शिवाः ॥७४

अन्वयः । सविद्युतः मेघाः चेलक्नोपं शोणितम् अवर्षन्, भीमाः नभस्वन्तः च अवान्, अशिवाः शिवाः प्रारुवन् ॥ ७४

मल्लिनाथः । मेघा इति । सविद्युतो विद्युत्वन्तो मेघाः शोणितं रक्तं चेलान् क्नोपयित्वा सिक्त्वा चेलक्नोपमवर्षन् । क्नूयी शब्दे उन्दने च इति धातोर्ण्यन्तात् "अर्त्तिह्री—"इत्यादिना पुगागमे 'चेले क्नोपेः' णमुल्प्रत्ययः । भीमाः प्रतिकूला नभस्वन्तो

शायवत्त्वावान् ववुः। जुसभावपक्षे "भोऽन्तः"। श्रशिवा अमङ्गलाः शिवाः शृगालाः प्रारुवन् ववाशिरे। रौतेर्लङि भोर्जस्युवङादेशः ॥७४

भरतः। मेघा इत्यादि। सविद्युतो मेघाः चेलक्नोपं वस्त्रक्नेदनप्रमाणं शोणितं ववर्षन्ति। यावता रुधिरेण वस्त्रं सिच्यते तावत्प्रमाणम् इत्यर्थः। क्नूयीङ् दुर्गन्धे, आर्द्रत्वे। दीर्घकारवानयं क्नूयी क्नायति ते विदेवय इमे सेविश्वासविसया इति च। णेः, क्नोयुत्वरी क्नूयोति पक् गुणश्च। "हसाल्लोप" इति यलोपः। चेलं क्नोपयति क्लेदयतीति, ढात् णम्। वर्षणक्रियाविशेषणम्। एतद्विशेषणादेतन्मानं गम्यते, अन्यथा एतांशवषस्य वैयर्थ्यं स्यात्। परे तु वस्त्रार्थाद्दृष्टिमाने क्नोपयतेः क्नाणमित्याहुः। स्वमतेऽपि णम् चेलस्य योगविभागात् तत्र चणम् स्यादेव, तदा चेलं क्नोपयन् इत्यर्थः। भीमा वायवो वान्ति स्म। द्विषविदात इत्यस्य पाक्षिकत्वान्मात्र उस्। शिवाः शृगाला अशुभसूचकं रवं चक्रुः॥ ७४

অনুবাদ। বিদ্যুৎসহ মেঘ সকল রক্তবর্ষণ করিল, সেই রক্তে লোকের বস্ত্র সমূহ সিক্ত হইল। বায়ু ভয়ঙ্কর ভাবে প্রবাহিত হইতে লাগিল এবং শৃগালিকাগণ অমঙ্গল রব করিল ॥৭৪

आटाट्यतावमत्यासौ दुर्निमित्तानि संयुगे।
अधुनोद्धनुरस्त्रौघैः पोर्णोनूयत विद्विषः॥ ७५

अन्वयः। असौ दुर्निमित्तानि अवमत्य संयुगे आटाट्यत, धनुः अधुनोत्, विद्विषः अस्त्रौघैः पोर्णोनूयत॥ ७५

मल्लिनाथः। आटाट्यतेति। असौ रावणो दुर्निमित्तान्यवमत्यानादृत्य संयुगे रणे आटाट्यत भृशमाटत्। अट गतौ। 'सूचिसूत्रिमूत्र्याट्यर्त्यशूर्णोतीनाम्—' इति यङि द्वितीयैकाचोर्द्वे वचनेऽभ्यासकार्ये यङन्ताल्लङि तङि शवादिदार्ये चाजादित्वादाडागमः। धनुरधुनोत् धुनोति स्म। धू विधूनने। स्वादिः। अस्त्रौघैः शरजालैः प्रोर्णोनूयत भृशमाच्छादयच्च। ऊर्णुञ् आच्छादने। नुवद्भावात् "सूचिमूत्रि—" इत्यादिना यङ्। अजादित्वाद्रेफवर्जितस्य द्वितीयैकाचो नुशब्दस्य द्विर्वचनम्। "गुणो यङ्लुकोः" इत्यभ्यासस्य गुणः। "अकृत्सार्वधातुकयोः—" इति दीर्घः। ततो यङन्ताल्लङि तङ्। आड्वृद्धिः॥ ७५

भरतः। आटाट्यतेत्यादि। एतानि दुर्निमित्तानि अवमत्य अवज्ञाय असौ रावणः भृशं कुटिलञ्च अगच्छत्। अट गतौ। सूच-सूत्रेति यङ् ,गत्यर्थादित्यादिना च।

संयुगे युद्धे धनुः अधुनीत् कम्पितवान्। धू ञ न कम्पे। शरौघैः द्विषः शत्रून् भृशं पुनः पुनर्वा आच्छादितवान्। ऊर्णु ञ आच्छादने। सूत्र-सूचेति यङ्। आटो नवद्वोऽग्रे इति निषेधात् रेफं विश्लिष्य नौर्णो द्वित्वम्। अयथ्य इत्यनेन यसंयोर्गादिस्थितस्य निषेधःभावः॥ ७५

অনুবাদ। রাবণ এই সকল দুর্নিমিত্ত অগ্রাহ্য করিয়া যুদ্ধক্ষেত্রে অতিশয় বিচরণ করিতে লাগিল এবং পুনঃ কম্পিত করিয়া অস্ত্রজালে অরি নিকর সমাচ্ছন্ন করিয়া তুলিল॥৭৫

व्यनाशयंस्ततः शत्रून् सुग्रीवास्ता महीभृतः।
ततो व्यरसदम्लायदध्यशेत महीतलम्॥ ७६
अश्च्योतद्रुधिरं तोयमभ्यलष्यच्च * विह्वलम्।
अशीयत च[नृ]मांसादां बलं सुग्रीवबाधितम्॥७७

अन्वय। ततः सुग्रीवास्ताः महीभृतः शत्रून् व्यनाशयन्, ततः सुग्रीवबाधितं मांसादां बलं, व्यरसन् अम्लायत, महीतलम् अध्यशेत, रुधिरम् अश्च्योतत, विह्वलं च (सत्) तोयम् अभ्यलष्यत् अशीयत॥ ७६—७७

मल्लिनाथः। अथ युग्मेनाह—व्यनाशयन्नित्यादि। ततो रावणविक्रमानन्तरं सुग्रीवेणास्ताः क्षिप्ता महीभृतः पर्वताः शत्रून् व्यनाशयन् विनाशयामासुः। ततः सुग्रीवबाधितं मांसादां बलं राक्षससैन्यं व्यरसदाक्रन्दत्। रस शब्दे। अम्लायत् म्लानम्। म्लै हर्षक्षये। शित्वात्वाभावादायादेशः। महीतलमध्यशेत तत्र पपातेत्यर्थः। "शीङः सार्वधातुके गुणः"॥ ७६

मल्लिनाथ। अश्च्योतदिति। रुधिरमश्च्योतदक्षरत्। श्च्युतिर् क्षरणे। विह्वलं सत्तोयमभ्यलष्यच्चाभिललाष चाहृष्यदित्यर्थः। "वा भ्राश—" इत्यादिना लघेर्विकल्पेन श्यन्। अशीयत व्यशीयत। शद्लृ शातने। "शदेः शितः" इति तङ्। "पाघ्रा—" इत्यादिना शीयादेशः॥ ७७

भरतः। व्यनाशयन्नित्यादि। तदनन्तरं सुग्रीवेणास्ताः क्षिप्ताः महीभृतः पर्वताः शत्रून् नाशितवन्तः। ततो नृमांसादां रक्षसां बलं सुग्रीवेण बाधितं सत् व्यरसत् आक्रन्दं चकार इत्युत्तरश्लोकेनान्वयः। रस शब्दे, म्लै कान्तिक्षये। भूतलम् अधिशेते स्म, निपतितम् इत्यर्थः। शीङो रे णः॥ ७६

* "तोयमभ्यपतातिविह्वलम्" इति पाठान्तरम्।

भरतः । अवमीतदित्यादि । रुधिरं रक्तम् अवमन, पानार्थं तोयं जलम् अतिविह्वलम् अतिकातरं यथा स्यात् तथा याचन्ते स्म ; अपीयत च अवसादं प्रापन् इत्यर्थः । स्मा दानेत्यादिना षीयादेशः । मतोऽपि समित्यादिना सम् ॥ ৭৭

অনুবাদ। তাহার পর সুগ্রীব নিক্ষিপ্ত পর্ব্বতগুলি শত্রুদিগকে নষ্ট করিল, অনন্তর সুগ্রীব কর্ত্তৃক আহত মাংসাশী রাক্ষসসৈন্য আর্ত্তনাদ করিতে লাগিল ও নিরানন্দে ভূতলে পতিত হইল। তাহারা রক্তবমন করিল ও বিহ্বলচিত্তে জল চাহিতে লাগিল, পরে অবসন্ন হইয়া পড়িল। ৭৬—৭৭

**विरूपाक्षस्ततोऽक्रीड़त् संग्रामे[संगरे] मत्तहस्तिना ।**
**मुष्टिनादालयत्तस्य मूर्धानं वानराधिपः ॥ ৭৮**

अन्वयः । ततः विरूपाक्षः संग्रामे मत्तहस्तिना अक्रीडत्, वानराधिपः तस्य मूर्द्धानं मुष्टिना अदालयत् ॥ ৭৮

मल्लिनाथः । विरूपेति । ततो विरूपाक्षो नाम राक्षसः संग्रामे मत्तहस्तिना वाहनेनाक्रीड़रद्व्यजृम्भत् । वानराधिपः सुग्रीवस्तस्य रक्षसो मूर्द्धानं मुष्टिनादालयद्दारयत् । दल विशरणे ॥ ৭৮

भरत. । विरूपाक्ष इत्यादि । ततो विरूपाक्षनामा राक्षसः सङ्गरे युद्धे मत्तहस्तिना क्रीड़ति स्म । तस्य मूर्द्धानं सुग्रीवो मुष्टिना विदारितवान । दल भि.भेदे ॥ ৭৮

অনুবাদ। তদনন্তর বিরূপাক্ষ রাক্ষস মদমত্ত গজে আরূঢ় হইয়া সিংহনাদ করিতে লাগিল, তখন বানররাজ সুগ্রীব মুষ্টি প্রহারে তাহার মস্তকচূর্ণ করিল। ৭৮

**अचूर्णयच्च यूपाक्षं शिलया तदनन्तरम् ।**
**संक्रुद्धो मुष्टिनातुभ्नादङ्गदोऽपि[लं] महोदरम् ॥৭৯**

अन्वयः । तदनन्तरं यूपाक्षं शिलया अचूर्णयत्, अङ्गदः अपि संक्रुद्धः ( सन् ) महोदरं मुष्टिना अतुभ्नात् ॥ ৭৯

मल्लिनाथः । अचूर्णयदिति । तदनन्तरं विरूपाक्षवधानन्तरं यूपाक्षं नाम राक्षसञ्च शिलयाचूर्णयत् चूर्णितवान् । "सत्यापपाश—" आदिसूत्राच्चूर्णयतेर्लङ् । अङ्गदोऽपि संक्रुद्धः सन् महोदरं राक्षसं मुष्टिनातुभ्नादहन् । क्र्यादिः ॥ ৭৯

भरतः । अचूर्णयच्चेत्यादि । विरूपाक्षवधानन्तरं वानराधिपः शिलया यूपाक्षं राक्षसं

चूर्णितवान्। संक्रुद्धोऽङ्गदोऽपि मुष्टिना महोदरम् अवधत् अत्यर्थम् अतुधात् अघात। तुध न च, चकारात् हिंसे॥ ७९

অনুবাদ। বিরূপাক্ষ বধের পর সুগ্রীব যূপাক্ষ রাক্ষসকেও শিলাপ্রহারে চূর্ণ করিল এবং অঙ্গদও অত্যন্ত ক্রুদ্ধ হইয়া মুষ্টি প্রহারে মহোদর রাক্ষসকে সংহার করিল। ৭৯

ततोऽकुष्णाद्दशग्रीवः क्रुद्धः प्राणान् वनौकसाम्।
अगोपायच्च रक्षांसि दिशश्चारीनभाजयत्॥ ८०

अन्वयः। ततः दशग्रीवः क्रुद्धः (सन्) वनौकसां प्राणान् अकुष्णात्, रक्षांसि अगोपायत्, च अरीन् च दिशः अभाजयत॥ ८०

मल्लिनाथः। तत इति। ततो विरूपाक्षवधानन्तरं दशग्रीवः क्रुद्धः सन् वनौकसां वानराणां प्राणानकुष्णात्कर्ष। कुष निष्कर्षणे। क्र्यादि.। रक्षांस्यगोपायदरक्षच्च। "गुपूधूप—" इत्यादिना आयप्रत्ययः। अरींश्च दिशोऽभाजयत् प्रापयत्। भजेर्ण्यन्ताल्लङ्॥ ८०

भरतः। तत इत्यादि। अनन्तरं क्रुद्धो रावणो वानराणां प्राणान् अकुष्णात् देहेभ्यो बहिश्चकार। कुश्र न निष्कर्षे। रक्षांसि रक्षितवान्। गुपू रक्षे। कम स्वती गुपूधूपेत्यायः। अरींश्च दिशः प्रापितवान्। भजेर्णिः प्रेरणे॥ ८०

অনুবাদ। বিরূপাক্ষ বধের পর রাবণ কুপিত হইয়া বনবাসী বানরগণের প্রাণনাশ করিল, সে আত্মীয় রাক্ষসগণের রক্ষা এবং শত্রুবর্গকে চারিদিকে বিতাড়িত করিল। ৮০

आलोकयत्स काकुत्स्थमधृष्णोद्घोरमध्वनत्।
धनुरभ्रामयद्भीममभीषयत च[वि]द्विषः॥ ८१

अन्वयः। सः काकुत्स्थम् आलोकयत्, अधृष्णोत्, घोरम् अध्वनत्, भीमं धनुः अभ्रामयत्, द्विषः अभीषयत च॥ ८१

मल्लिनाथः। आलोकयदिति। स रावणः काकुत्स्थमालोकयदपश्यत् लोकृ दर्शने। चुरादिः। अधृष्णोत् धृष्टः स्थितः। ञि धृषा प्रागल्भ्ये। घोरं भीममध्वनद् दध्वान। भीमं धनुरभ्रामयद्भ्रामितवान्। द्विषः शत्रूनभीषत भीषितवांश्च "भीस्म्योर्हेतुभये" इति तङ्। "भियो हेतुभये षुक्"॥ ८१

भरतः। आलोकयदित्यादि। स रावणः काकुत्स्थं दृष्टवान्। लोकृ दर्शने। तम् आलोक्य प्रगल्भते स्म। जि धृषा न प्रागल्भ्ये। घोरम् अभ्यनत् सिंहनादं चकार। भीमं धनुः भ्रामयामास। घटादिगणीत्यादिना अमन्तत्वात् ह्रस्वः। तान् द्विषः अमून् त्रासितवान्। भीर्भीषु वेति भीषार्दशी मध्व॥ ८१

अनुবাদ। রাবণ রামকে দেখিয়া ধৃষ্টতা প্রকাশ করিল, ভয়ঙ্কর শব্দ করিয়া উঠিল, ভীষণ ধনু ঘুরাইতে লাগিল এবং শত্রুবর্গের মনে ভয়ের সঞ্চার করিতে লাগিল। ৮১

**आस्कन्दल्लक्ष्मणं बाणैरत्यक्रामच्च तं द्रुतम्।**
**राममभ्यद्रवज्जिष्णुरस्कुनाच्चेषुवृष्टिभिः॥ ८२**

अन्वयः। जिष्णुः (रावणः) लक्ष्मणं बाणैः आस्कन्दत्, द्रुतं तम् अत्यक्रामत् रामम् अभ्यद्रवत्, इषुवृष्टिभिः अस्कुनात् च॥ ८२

मल्लिनाथः। आस्कन्ददिति। जिष्णुर्जयशीलो रावणो लक्ष्मणं बाणैरास्कन्ददाजघान। द्रुतं तं लक्ष्मणमत्यक्रामदतिक्रान्तश्च। "क्रमः परस्मैपदेषु" इति दीर्घः। राममभ्यद्रवदभिद्रुतः। द्रु गतौ। इषुवृष्टिभिरस्कुनादावृणोच्च। स्कुञ् आप्रवणे। आप्रवणमावरणम्। "स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च" इति चकारात् श्नाप्रत्ययः॥ ८२

भरतः। आस्कन्ददित्यादि। जिष्णुः जयशीलो रावणो बाणैः लक्ष्मणम् आस्कन्दत् पीड़ितवान्। स्कन्दिरो शोषणे गत्याम्। तथा लक्ष्मणं द्रुतम् अतिक्रान्तवान्। क्रमः पेऽपि धः। रामम् अभिमुखेन ययौ। द्रु स्रुतौ गतौ। बाणवृष्टिभिः तम् आच्छादितवान्। स्कु ग न ञ आप्लुतौ॥ ८२

অনুবাদ। জয়শীল দশানন বহু বাণপ্রহারে লক্ষ্মণকে আহত ও সত্বর তাঁহাকে অতিক্রম করিল। সে শীঘ্র রামের প্রতি ধাবিত হইল এবং বাণবৃষ্টিতে তাঁহাকে আচ্ছন্ন করিল। ৮২

**अपीड्दबाणवर्षं तच्छल्लै रामो निराकुलः।**
**प्रत्यस्कुभ्नो[नो]द्दशग्रीवं शरैराशीविषोपमैः॥ ८३**

अन्वयः। तद्बाणवर्षं रामः निराकुलः (सन्) भल्लैः अपीड्त, (तथा) आशीविषोपमैः शरैः दशग्रीवं प्रत्यस्कुभ्नोत्॥ ८३

মল্লিনাথঃ। অপৌহদিতি। তদ্রাবণমুক্তং বাণবর্ষং রামো নিরাকুলোঽনাকুলঃ সন্ ভল্লৈর্বাণবিশেষৈরপৌহদপাকরোৎ। ঊহ বিতর্কে। 'উপসর্গাদস্যত্যূহ্যোর্বা বচনম্' ইতি পক্ষে তিপ্। তথা আশীবিষোপমৈঃ সর্পকল্পৈর্বাণৈর্দশগ্রীবং প্রত্যস্কুভ্নোৎ প্রত্যাবৃণোৎ। স্কুনভু আবরণে। "স্তন্ভু—" ইত্যাদিনা শ্নুপ্রত্যয়ঃ। অস্কুশ্নাদীতি পাঠে—চকারাৎ শ্নাপ্রত্যয়ঃ॥ ৮৩

ভরতঃ। অপৌহদিত্যাদি। নিরাকুলো রামঃ তাং বাণবৃষ্টিং ভল্লৈঃ বাণবিশেষৈঃ অপনীতবান্। ঊহ ভ্ তর্কে। গৈবাঽস্মীহো ঢে চেতি অস্য পাক্ষিকত্বাদত্র পদম্। আশীবিষোপমৈঃ দুঃসহত্বাৎ সর্পতুল্যৈ বাণৈঃ দশগ্রীবং প্রত্যস্কুনোৎ আচ্ছাদিতবান্। "আশীঃ স্যাদহিদংষ্ট্রেঽপি"। তত্র বিষমস্যেতি মনীষাদিঃ। "আশীমিব কলামিন্দোঃ" ইতি দর্শনাৎ ইকারান্তমপি প্রকৃত্যন্তরম্॥ ৮৩

অনুবাদ। রামচন্দ্র নিরুদ্বেগে সেই বাণবৃষ্টি ভল্লাস্ত্র দ্বারা দূরীভূত করিলেন এবং সর্পসদৃশ ভীষণ শর-নিকরে দশাননকে আচ্ছন্ন করিলেন। ৮৩

**মণ্ডলান্যাটতাং চিত্রমচ্ছিন্তাং শস্ত্রসংহতীঃ।**
**জগদ্বাস্মা[ব্বিস্মা]পয়েতাং তৌ ন চ বীরাবসীদতাম্**

অন্বয়ঃ। বীরৌ তৌ (রামরাবণৌ) চিত্রং মণ্ডলানি আটতাং, শস্ত্রসংহতীঃ অচ্ছিন্তাং, জগৎ ব্যস্মাপয়েতাং, ন চ অসীদতাম্॥ ৮৪

মল্লিনাথঃ। মণ্ডলানীতি। বীরৌ তৌ রামরাবণৌ চিত্রমাশ্চর্যং যথা তথা মণ্ডলান্যাটতামাচরতাম্। অট গতৌ। আড়াগমঃ। শস্ত্রসংহতীরন্যোঽন্যশরজালান্যচ্ছিন্তাং চিচ্ছিদতুঃ। ছিদিরং রুধাদিঃ! তসস্তামাদেশঃ। জগল্লোকং ব্যস্মাপয়েতাং বিস্মাপিতবন্তৌ। স্ময়তের্ণ্যন্তাল্লঙি "ভীস্ম্যোর্হেতুভয়ে" ইতি তঙ্। "নিত্যং স্ময়তেঃ" ইত্যাত্বে পুগাগমঃ। তথাপি নাসীদতাং নাবসন্নৌ। "পাঘ্রা—" ইত্যাদিনা সদঃ সীদাদেশঃ॥ ৮৪

ভরতঃ। মণ্ডলানীত্যাদি। তৌ যুধ্যমানৌ রামরাবণৌ মণ্ডলানি আটতাং, চক্রবদ্ভ্রান্তৌ। অট গতৌ। অন্যোঽন্যম্ অস্ত্রসমূহান্ ছিন্নবন্তৌ। জগৎ বিস্মিতং চক্রতুঃ। স্মিঙোর্ঘাদিতি আ, মস্য, ক্রীঙ্জীনাং ণাবিতি পক্। ন চ খিন্নৌ, যতো বীরৌ। স্যাদানিতি সদিঃ সীদঃ॥ ৮৪

অনুবাদ। সেই বীরদ্বয় আশ্চর্যরূপ মণ্ডলাকারে ভ্রমণ করিতে

লাগিলেন। পরস্পর অস্ত্রজাল ছেদন করিয়া জগৎকে বিস্ময়ার্ণবে নিমগ্ন করিলেন। তথাপি কেহ অবসন্ন হইলেন না। ৮৪

**व्योम प्राचिनुतां बाणैः क्ष्मामक्ष्मापयतां ह [ग]तैः।**
**अभिन्त्तां तूर्णमन्योऽन्यं शिक्षाश्चातनुतां मुहुः ॥८५**

अन्वयः। (तौ) बाणैः व्योम प्राचिनुतां, हतैः (कपिराक्षसैः) क्ष्माम् अक्ष्मापयतां, तूर्णम् अन्योऽन्यम् अभिन्त्तां, मुहुः शिक्षाः च आतनुताम् ॥ ८५

मल्लिनाथः। व्योमेति। तौ वीरौ बाणैर्व्योमाकाशं प्राचिनुतामाच्छादयतामित्यर्थः। हतैः कपिराक्षसैः क्ष्मां भूमिमक्ष्मापयतामकम्पयताम्। क्ष्मायी विधूनने। "अर्त्तिह्री—" इत्यादिना पुकि यकारलोपः। तूर्णमन्योऽन्यमभिन्त्तां व्यदारयताम्। भिदेर्लङि तमस्तामादेशः। "श्नसोरल्लोपः"। चर्त्त्वं तकारद्वित्त्वम्। मुहुः शिक्षामभ्यासपाटवं चातनुतां व्यस्तारयताम् ॥ ८५

भरतः। व्योमेत्यादि। तौ बाणैः व्योम आकाशं प्राचिनुतां छादितवन्तौ। चिञ् चिञ् चित्याम्। प्रावृणुतामिति पाठ—वृङ् वृञ् वृतौ। गतैः गमनैः क्ष्मां कम्पितवन्तौ। क्ष्मायी ङ् विधूनने। जि., क्रीङ्गीति पुक्। छमाल्लोप इति यल्लोपः। तूर्णम् अन्योऽन्यं भिन्नवन्तौ। अघौ भिदिर् भिदि। सनीषादित्वात् सवर्णात् सवर्णस्य सवर्णे वा लोपः इति बोध्यम्। तेन एकतकारवानपि पाठः। शिक्षाश्च धनुषि कौशलानि मुहुः आतनुताम्। तन तुञ् विस्तारे ॥ ८५

অনুবাদ। তাঁহারা বাণবর্ষণে আকাশ আচ্ছন্ন করিলেন। নিহত কপিরাক্ষসের দেহভারে ভূতল কম্পিত হইল। সত্বর পরস্পর পরস্পরকে বিদীর্ণ করিয়া বারংবার অস্ত্রশিক্ষার কৌশল বিস্তার করিতে লাগিলেন। ৮৫

**सम[मा]धत्तासुरं शस्त्रं राक्षसः क्रूरविग्रहः।**
**तस्मा[त्तद्]चरन्महासर्पान् व्याघ्रसिंहांश्च भीषणान् ॥**

अन्वयः। (अथ) क्रूरविग्रहः राक्षसः (रावणः) आसुरं शस्त्रं समधत्त, तत् (शस्त्रं) भीषणान् महासर्पान् व्याघ्रसिंहान् च प्राक्षरन् ॥ ८६

मल्लिनाथः। समिति। अथ क्रूरविग्रहो राक्षस आसुरमसुरदेवताकमस्त्रं बाणं समधत्त धनुषि सन्दधे। "आभ्यस्तयोरातः" इत्याल्लोपः। "दधस्तथोश्च" इति भष्भावः। "झषः" इति प्रति-

षेधात् "झषस्तथो:—" इति न भवति। तदासुरमस्त्रं कार्त्तृ, भीषणान् महासर्पान् व्याघ्रान् सिंहांश्च प्राक्षरत्। असृजदित्यर्थ: ॥৮৬

भरत:। समाधत्तेत्यादि। क्रूराकृतिर्भीमविग्रही राक्षस: धनुषि असुरदैवतं अस्त्रं समाधत्त आरोपितवान्। डु धा ञ् लि धारणे पुष्टौ दाने, सम्पूर्व: सन्धाने। ह्रादौ रे डि:। श्नाघोराल्लोप्य इत्यालोप:, धो द धोऽन्तलोप इति खेर्धत्वम्। तत् अस्त्रं दंष्ट्रितं भीषणान् सर्पादीन् क्षरति स्म ॥ ৮৬

অনুবাদ। ক্রূরাকৃতি রাক্ষস রাবণ আসুরাস্ত্র সন্ধান করিল। সেই অস্ত্র হইতে ভয়ানক সর্প, ব্যাঘ্র ও সিংহাদি নির্গত হইতে লাগিল। ৮৬

न्यषेधत्पावकास्त्रेण रामस्तद्राक्षसस्तत:।
अदीव्यद्रौद्रमत्युग्रं मुसलाद्यगलत्तत: ॥ ৮৭

अन्वय:। राम: तत् पावकास्त्रेण न्यषेधत्, तत: राक्षस: अत्युग्रं रौद्रं (अस्त्रम्) अदीव्यत्, तत: मुसलादि अगलत् ॥ ৮৭

मल्लिनाथ:। न्यषेधदिति। रामस्तदासुरमस्त्रं पावकास्त्रेण न्यषेधन्न्यवारयत्। ततो राक्षसोऽत्युग्रं रौद्रमस्त्रमदीव्यद् व्यवहृतवान् प्रयुक्तवानित्यर्थ:। ततो रौद्रास्त्रात् मुसलादि मुसलतोमराद्यनेकमस्त्रजातमगलदक्षरदित्यर्थ: ॥ ৮৭

भरत:। न्यषेधदित्यादि। राम: तदा आसुरास्त्रं पावकास्त्रेण विनिवारितवान्। षिधु गत्यां, निपूर्वो निवारणे। गीक्ष इति षत्वम्। ततो राक्षसो रुद्रदैवतम् अत्युग्रम् अदीव्यत् तेन जिगीषाञ्चकार। दिवौ घे वेति करणे द्वौ। दिव्यु जिगीषेच्छापणिद्युतौ क्रीड़ागत्यो: मनाविह दिविरिति जग्रमल्ला। व्यनच् तयोति दीर्घ:। ततो रौद्रास्त्रात् मुषलादि प्रहरणं गलितम् ॥ ৮৭

অনুবাদ। রাম পাবকাস্ত্রদ্বারা আসুরাস্ত্র নিবারিত করিলেন, অনন্তর রাবণ অত্যুৎকট রৌদ্র অস্ত্র প্রয়োগ করিল, সেই রৌদ্রাস্ত্র হইতে নানাবিধ মুসল তোমরাদি অস্ত্র আবির্ভূত হইতে লাগিল। ৮৭

गान्धर्वेण न्यविध्यत्तत् क्षितीन्द्रोऽथ नराशन:।
सर्वमर्मसु काकुत्स्थमौर्ष्मत्तीक्ष्णै: शिलीमुखै: ॥৮৮

अन्वय:। क्षितीन्द्र: तत् (रौद्रास्त्रं) गान्धर्वेण न्यविध्यत्, अथ नराशन: तीक्ष्णै: शिलीमुखै: काकुत्स्थं सर्वमर्मसु और्ष्मत् ॥ ৮৮

मल्लिनाथः। गान्धर्वेणेति। जितेन्द्रो रामस्तद्रौद्रमस्त्रं गान्धर्वेण गन्धर्व्वास्त्रेण न्यविध्यन्न्यवारयदित्यर्थः। व्यध ताड़ने। "ग्रहिज्या—" इत्यादिना सम्प्रसारणम्। अथ नराशनो राक्षसो दिव्यास्त्रवैफल्यात् क्रुद्धः सन्निति भावः। तीक्ष्णैः शिलीमुखैः केवलबाणैः काकुत्स्थं रामं सर्वमर्म्मस्वपूरयत्। उभ पूरणे। तौदादिकः। आड़्वृद्धिः॥ ८८

भरतः। गान्धर्वेणेत्यादि। जितेन्द्रो रामो गन्धर्वदैवतेन अस्त्रेण तत् रौद्रास्त्रं विव्याध। व्यधौ य ताडे। ग्रहस्वपाद्यैरिरिति जिः। अथ नराशनो रावणः तीक्ष्णैः शिलीमुखैः बाणैः सर्वेषु मर्म्मस्थानेषु काकुत्स्थं पूरितवान्। उन्भमुभ य पूर्त्तौ। ढनृणां लग् वा मणाविति पक्षे नलोपाभावः॥ ८८

অনুবাদ। ভূপতি রাম গান্ধর্ব্ব অস্ত্রদ্বারা সেই রৌদ্রাস্ত্র নিবারণ করিলেন, অনন্তর দশানন কেবল সুতীক্ষ্ণ বাণরাজিদ্বারা রামচন্দ্রের সকল মর্ম্মস্থলই পরিপূর্ণ করিল। ৮৮

ततस्त्रिशिरसं तस्य प्राहत्स्वलक्ष्मणो ध्वजम्।
अमथ्नात् सारथिं चाशु भूरिभिश्चातुदच्छरैः॥८९

अन्वयः। ततः लक्ष्मणः तस्य त्रिशिरसं ध्वजं प्राहयन, सारथिम् च अमथ्नात्, आशु भूरिभिः शरैः अतुदत् च॥ ८९

मल्लिनाथः। तत इति। ततो लक्ष्मणस्तस्य रावणस्य त्रिशिरसं त्रिशिखं त्रिशूलाग्रं ध्वजं शरैः प्राहयदच्छिदत्। ओव्रश्चू छेदने। तौदादिकः। सारथिं चामथ्नात् जघानेत्यर्थः। क्र्यादौ मन्थ विलोड़ने। आशु भूरिभिः शरैरतुदच्च। तुद व्यथने॥ ८९

भरतः। ततः इत्यादि। तत तदनन्तरं लक्ष्मणः तस्य त्रिशिरसं त्रिशिख ध्वजं छिन्नवान्। अव्रूश्च छेदे। ग्रहस्वपाद्यैरिरिति जिः। सारथिञ्च हतवान्। म मन्थ च गाहे। भूरिभिः बहुभिः शरैः ताड़ितवान् तम् उत्यर्थात्॥ ८९

অনুবাদ। তাহার পর লক্ষ্মণ শরবর্ষণে রাবণের ত্রিশূলাগ্রধ্বজ ছেদন ও তাহার সারথিকে নিহত করিলেন, এবং তৎক্ষণাৎ বহুশরনিক্ষেপে তাহাকে ব্যথিতও করিলেন। ৮৯

अघ्नान् विभीषणोऽनुम्नात्स्यन्दनं चाच्छिणोद्द्रुतम्।
अ[ना]थुम्नाद्राक्षसो भ्रातुः शक्तिं चोदवृहद्गुरुम्॥

अन्वयः। विभीषणः अश्वान् अतुभ्नात्, द्रुतं स्यन्दनं च अक्षिणोत्, राक्षसः (रावणः) भ्रातुः (विभीषणस्य) अक्षुभ्नात्, गुरुं शक्तिं च उदवृहत्॥ ९०

मल्लिनाथः। अश्वानिति। विभीषणोऽश्वानतुभ्नात् हतवान्। क्र्यादौ तुभ हिंसायाम्। द्रुतं स्यन्दनं रथं चाक्षिणोद् बभञ्जेत्यर्थः। क्षिणु हिंसायाम्। तनादित्वादुप्रत्यये गुणः। राक्षसो रावणो भ्रातुर्विभीषणस्य। तं प्रतीत्यर्थः। सम्बन्धसामान्ये षष्ठी। अक्षुभ्नात् क्षुभितवान् गुरुं गुर्वीम्। "वोतो गुणवचनात्" इति विकल्पादनोकारः। शक्तिं कासूमुदवृहदुद्यतवान्। वृह उद्यमने तुदादिः॥ ९०

भरत। अश्वानित्यादि। तस्य अश्वान् विभीषणो हतवान्। तुभ ग च, चकारात् हिंसे। शीघ्रं स्यन्दनं च अक्षिणोत्। क्षण क्षिण दु ञ वधे। नोप्युङ्गी गुरिति गुणाभावः। एतावत्यपि रावणो न क्षोभं प्राप। क्षुभ ग च, चकारात् सञ्चलने, मनोवादित्वात् भकारतवर्गयुक्तस्य न णत्वमिति बोध्यम। भ्रातुः विभीषणस्य कृते गुर्वीं शक्तिम् अस्त्रविशेषम् उत्थापितवान्। वृ वृह उद्यमे। भ्रातुः उपरि नाक्षुभ्नात् शत्रुपचस्थितत्वादित्यन्ये योजयन्ति॥ ९०

অনুবাদ। বিভীষণ রাবণের অশ্বগুলিকে নিহত ও সত্বর রথগুলি ভগ্ন করিলেন। রাবণ ভ্রাতার প্রতি ক্রুদ্ধ হইল এবং মহতীশক্তি অস্ত্র উদ্যত করিল। ৯০

तामापतन्तीं सौमित्रिस्त्रिधाकृन्तच्छिलीमुखैः।
अशब्दायन्त पश्यन्तस्ततः क्रुद्धो निशाचरः॥ ९१
अष्टघण्टां महाशक्तिमुदयच्छन्महत्तराम्।
रामानुजं तयाविध्यत् स महीं व्यसुराश्रयत्॥ ९२

अन्वयः। आपतन्तीं तां (शक्तिं) सौमित्रिः शिलीमुखैः त्रिधा अकृन्तत्, पश्यन्तः (जनाः) अशब्दायन्त, ततः निशाचरः क्रुद्धः (सन्) अष्टघण्टां महत्तरां महाशक्तिम् उदयच्छत्, तया रामानुजम् अविध्यत्, सः (रामानुजः) व्यसुः (सन्) महीम् आश्रयत्॥ ९१—९२

मल्लिनाथः। तामिति। आपतन्तीं तां शक्तिं सौमित्रिः शिलीमुखैस्त्रिधाकृन्तदच्छिनत्। कृती छेदने, मुचादित्वान्नुम्। पश्यन्तस्तामी प्रेक्षमाणा अशब्दायन्त शब्दमकुर्वन् हाहाकारं चक्रुरि-

त्यर्थः। "शब्दवैर—" इत्यादिना करोत्यर्थे क्यङ्। तदन्ताल्लङ्। ततो निशाचरो रावणः क्रुद्धः सन्॥ ९१

मल्लिनाथः। 'अष्टेति। अष्टौ घण्टा यस्यास्तां महत्तरां परिमाणतोऽधिकां महाशक्तिं महतीं कासूमुदयच्छदुद्यतवान्। यमेर्लङि "इषुगमियमां छः"। अकर्त्रभिप्रायत्वात् "समुदाङ्भ्यः—" इति न तङ्। तयोद्यतया शक्त्या रामानुजं लक्ष्मणमविध्यत् प्राहरत्। स विद्धो रामानुजो व्यसुर्म्महीमाश्रयदाश्रितः। मह्यां पपातेत्यर्थः॥ ९२

भरतः। समापतन्तीमित्यादि। विभीषणोपरि आपतन्तीं तां शक्तिं लक्ष्मणो बाणैः प्रकारत्रयेण क्षिपति स्म। छेदो ग प छिदि। पश्यन्तः समरप्रेक्षका देवादयः शब्दं चक्रुः। शब्दसुखक्रष्टादीरिति क्य। तत इत्यादिकमुत्तरश्लोकेन सम्बध्यते॥ ९१

भरतः। अष्टघण्टामित्यादि। तदनन्तरं क्रुद्धो रावणो महाप्रमाणां शक्तिम् उदयच्छत उत्थापितवान्। कीदृशीम्?—अष्टौ घण्टा यस्याः ताः, प्रभावेण महत्तराम्। महतीशब्दात् तरप्प्रत्यये सति पुंवत्। स्यादानेति यमेर्य्यच्छः। तया शक्त्या रामानुजं लक्ष्मणम् अविध्यत् ताडितवान्। स लक्ष्मणो व्यसुः विगतप्राणः सन भूमिम् आश्रितवान्॥ ९२

অনুবাদ। সুমিত্রানন্দন বাণবর্ষণে উপস্থিত শক্তিকে তিনখণ্ডে ভগ্ন করিলেন। সমরদর্শকগণ এই অদ্ভুত সমর দর্শনে হাহাকার শব্দ করিতে লাগিল। তদনন্তর রাবণ ক্রুদ্ধ হইয়া অষ্টঘণ্টা সমন্বিত অতিমহতী মহাশক্তি উদ্যত করিল এবং সেই শক্তিদ্বারা লক্ষ্মণকে বিদ্ধ করিল, তিনি গতপ্রাণ হইয়া ভূতল আশ্রয় করিলেন। ৯১—৯২

**राघवस्याभृशायन्त सायकास्तैरुपद्रुतः।**
**ततस्तूर्णं दशग्रीवो रणात्क्ष्मां पर्य्यशेषयत्॥ ९३**

अन्वयः। राघवस्य सायकाः अभृशायन्त, ततः तैः उपद्रुतः दशग्रीवः तूर्णं रणात्क्ष्मां पर्य्यशेषयत्॥ ९३

मल्लिनाथः। राघवस्येति। राघवस्य सायका अभृशा भृशा अभवन् अभृशायन्त अतितीव्रा अभवन्नित्यर्थः। "भृशादिभ्यो भुवि—" इत्यादिना च्व्यर्थे क्यङन्ताल्लङ्। ततस्तैः सायकैरुपद्रुतः पीड़ितो दशग्रीवस्तूर्णं रणात्क्ष्मां रणभूमिं पर्य्यशेषयत् शेषयति स्म। स्वपलायनेन तामेव शेषितवानित्यर्थः। शिष असर्वोपयोगे इति चौरादिकः॥ ९३

भरत:। राघवस्येत्यादि। लक्ष्मणे पतिते सति राघवस्य शरा: पूर्वम् अप्यत्यां: तदानीं तीव्रा अभवन्, शीघ्रगतयो जाता इत्यर्थ:। भृशादिभ्यार्थे इति क्य:। तदनन्तरं तै: सायकै: उपद्रुतो दशग्रीव: तूर्णं शीघ्रं रणभूमिं पर्य्यशोषयत् त्यक्तवान। शुष शोषे अनुदात्तोपधोऽयम् ॥ ९३

অনুবাদ। তখন রাঘবের বাণসমূহও অতি তীব্রবেগ ধারণ করিল, তাহার পর রাবণ সেই শরসমূহে নিপীড়িত হইয়া তৎক্ষণাৎ রণভূমি ত্যাগ করিল। ৯৩

## अ[स]स्फुरद्[स्यो] दकर्षञ्च सौमित्रे: शक्तिमग्रज:।
## असिञ्चदोषधीस्ता या: समानीता हनूमता ॥ ९४

अन्वय:। सौमित्रे: अग्रज: अस्फुरत्, शक्तिं उदकर्षत् च, हनूमता समानीता: या: ओषधी:, ता: असिञ्चत् ॥ ९४

मल्लिनाथ:। अस्फुरदिति। सौमित्रेरग्रजो रामोऽस्फुरद्चेष्टत। शक्तिमनुजहृदयलग्नं शस्त्रायुधमुदकर्षदुद्धृतवांश्च। सस्फुरस्येति पाठे—स्फुरतीति स्फुरोऽन्त: स्फुरन् प्राणवायु:। इगुपधलक्षण: क:। तेन सह वर्त्तत इति सस्फुरस्यान्तर्लीनप्राणस्य सौमित्रे: शक्तिं हृदयलग्नां कासुमग्रजो राम उदकर्षदित्यादि योज्यम्। हनूमता समानीता आहृतास्ता: पूर्वोक्ता मृतसञ्जीविनीप्रमुखा ओषधीर्व्यासिञ्चदक्षरत्। षिचिर् क्षरणे ॥ ९४

भरत:। सस्फुरस्येत्यादि। सोऽग्रजो राम: सस्फुरस्य उच्छ्वसत: सौमित्रे: शक्तिं हृदि लग्नाम् उदकर्षत् आकृष्टवान्। स्फुर स्फुर स्फूर्त्तौ चले। पचादित्वादच्, कुटादित्वात् कुटादिभ्योऽञ्णिदितीति निषेधान्न गुण:। या ओषधयो हनूमता समानीता: ता ओषधी: असिञ्चत् क्षतदेशे इत्यर्थात्। षिच क्षरणे ॥ ९४

অনুবাদ। তখন অগ্রজ রামলক্ষ্মণের জন্য তৎসময়োপযোগি কর্ত্তব্য বিষয়ে চেষ্টিত হইলেন, তিনি লক্ষ্মণের হৃদয়বিদ্ধ শক্তি উদ্ধৃত করিলেন এবং হনুমান্ পূর্ব্বে মৃতসঞ্জীবনী প্রভৃতি যে সকল ঔষধি সংগ্রহ করিয়াছিলেন, সেইগুলি ক্ষতস্থানে সিঞ্চন করিলেন। ৯৪

## उदजीवत् सुमित्राभूर्भ्रातास्लिष्यत्तमायतम्।
## समघ्राघ्न्यु पाशिङ्क्षदपृच्छच्च निरामयम् ॥ ९५

अन्वय:। सुमित्राभू: उदजीवत्, भ्राता (राम:) आयतं तम् अश्लिष्यत्, मूर्द्धनि समघ्रात् उपाशिङ्क्षत्, निरामयं च अपृच्छत् ॥ ९५

मल्लिनाथः। उदिति। सुमित्रायां भवतीति सुमित्राभूर्लक्ष्मण उदजीवदुज्जीवितः। भ्राता रामस्तमुज्जीवितं लक्ष्मणमायातं दीर्घकालं यथा तथाश्लिषदालिङ्गत्। सम्यग्यथाघ्रातं मूर्द्धन्युपाघ्रिपदजिघ्रत्। घ्रिघि आघ्राणे। निरामयमनामयमपृच्छच्च व्यथाशान्तिमपृच्छदित्यर्थः॥ ९५

भरतः। उदजीवदित्यादि। सुमित्राभूः लक्ष्मणः उज्जीवितवान्; मातृनामग्रहणं परजितत्वेन अपकर्षात्। भ्राता राम आयतं दीर्घकालं तं लक्ष्मणम् आलिङ्गितवान्। श्लिषी य ल जि आलिङ्गने। मूर्द्धनि च सम्यक् आघ्रातवान्। घ्रिप्याघ्राणे; स्नेहाभिव्यञ्जकमिदम्। निरामयं पीड़ाया अभावञ्च पृष्टवान्। आमयस्याभाव इत्यव्ययीभावः॥ ९५

অনুবাদ। লক্ষ্মণ জীবিত হইলেন, রাম তাঁহাকে অনেকক্ষণ ধরিয়া আলিঙ্গন করিলেন এবং যথাবিধি মস্তকাঘ্রাণপূর্ব্বক শারীরিক নিরাময় সম্বন্ধে জিজ্ঞাসা করিতে লাগিলেন। ৯৫

पुनः[ततः]प्रोदसहन् सर्वे योद्धुमभ्यद्रवन् हरीन्[परान्]
अकृच्छ्रायत च प्राप्तो रथेनान्येन रावणः॥ ९६

अन्वयः। सर्वे पुनः योद्धुं प्रोदसहन्, रावणः अन्येन रथेन प्राप्तः हरीन् अभ्यद्रवत्, अकृच्छ्रायत च॥ ९६

मल्लिनाथः। पुनरिति। सर्वे रामादयः पुनर्भूयोऽपि योद्धुं प्रोदसहन् प्रोत्सेहिरे। षह मर्षणे इति धातोश्चौरादिकात् 'आधृषाद्वा' इति णिजभावपक्षे तङ्निमित्ताभावात्तिप्। भौवादिकात्तु तङेवेति पूर्वे व्याख्यातारः। भट्टमल्लस्तु 'तितिक्षतेऽधिकुरुते क्षान्तौ सहति सह्यति। मृष्यत्यामर्षति चेति आत्मनेऽपि चतुष्टयम्।' इत्याचष्ट। अथ रावणश्चान्येन रथेन प्राप्तो हरीन् कपीनभ्यद्रवदभ्यधावत्। द्रु गतौ। अकृच्छ्रायत कृच्छ्राय पापकर्मणेऽक्रामच्च। हन्तुं प्रवृत्तश्चेत्यर्थः। "कष्टाय क्रमणे" इत्यत्र 'सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम्" इति कृच्छ्रायधातोः क्यङन्तात्लङि तङ्। कण्वं पापम्॥ ९६

भरतः। तत इत्यादि। पुनः सर्वं एव रामादयो योद्धुं प्रोत्सहन्ते स्म। सह कि मर्षो, क्वनुबन्धत्वाद्वा चुरादिः। रावणोऽपि अन्येन रथेन सम्प्राप्तः सन् परान् शत्रून् अभ्यद्रवत् अभिमुखं गतः। आत्मनश्च कृच्छ्रम् इन्द्रजिद्वधादिजन्यं वेदितवान्। सुखादित्वात् अन्दसुखकष्टादेरिति वः। कष्टं कर्म करोतीति कष्टादिरित्यन्ये, तन्मते कूटयुक्तादिना पाप-

द्विः ; प्रत्यन्तरमिति क्वचित्पाठः, क्रन्दिग्रन्दस्य लयति पुरतो वर्त्तमानत्वात् क्रन्दवान् द्वया-चरति क्षेति धातुव्यक्तौ इति च इति केचित् ॥ ९६

অনুবাদ। তাহার পর আবার রাম প্রভৃতি সকলেই যুদ্ধ করিতে উৎসাহিত হইলেন। রাবণও অন্য রথে আরূঢ় হইয়া বানরসেনার প্রতি ধাবিত হইল এবং তাহাদিগকে প্রহার করিতে প্রবৃত্ত হইল। ৯৬

भूमिष्ठस्यासमं युद्धं रथस्थेनेति मातलिः।
आहरद्रथमत्युग्रं सशस्त्रं वास[मघ]वाज्ञया ॥ ९७

अन्वयः। भूमिष्ठस्य रथस्थेन ( सह ) युद्धम् असमम् इति वासवाज्ञया मातलिः अत्युग्रं रथम् आहरत् ॥ ९७

मल्लिनाथः। भूमीति। भूमौ तिष्ठतीति भूमिष्ठः पदातिः। 'सुपि स्थः' इति कप्रत्ययः। 'अम्बाम्बगोभूमि—' इत्यादिना षत्वे ष्टुत्वम्। तस्य रामस्य रथस्थेन रावणेन सह। पूर्ववत्कः। युद्धमसममसदृशमिति मत्वेति शेषः। गम्यमानार्थत्वादप्रयोगः। वासवाज्ञयेन्द्रादेशेन मातलिरिन्द्रसारथिरत्युग्रमतिभीषणं सशस्त्रं सायुधं रथमाहरदानयत् ॥ ९७

भरतः। भूमिष्ठस्येत्यादि। भूमिस्थितस्य रामस्य रथस्थितेन रावणेन सह युद्धम् असमम् अतुल्यम् अयुक्तमिति विचारयतो मघोन इन्द्रस्य आज्ञया मातलिः तस्य सारथिः सशस्त्रम् अत्युग्रं रथम् आहरत आनीतवान्। भूमौ तिष्ठतीति स्वनगनादिति कः, मनीषादित्वात् षत्वम् ॥ ९७

অনুবাদ। রামচন্দ্র পাদচারী, রাবণ রথারোহী, সুতরাং এই যুদ্ধ নিতান্ত অসঙ্গত, ইহা স্থির করিয়া ইন্দ্রের আদেশক্রমে মাতলি অত্যুগ্র একখানি সশস্ত্র রথ তথায় আনয়ন করিল। ৯৭

सोऽध्यष्ठीयत रामेण शस्त्रं पाशुपतं ततः।
निरास्यत दशास्यस्तच्छक्रास्त्रेणाजयन्नृपः ॥ ९८

अन्वयः। सः ( रथः ) रामेण अध्यष्ठीयत, ततः दशास्यः पाशुपतं शस्त्रं निरास्यत, नृपः ( रामः ) तत् शक्रास्त्रेण अजयत् ॥ ९८

मल्लिनाथः। स इति। स रथो रामेणाध्यष्ठीयताधिष्ठितः। तिष्ठतेः कर्मणि लङ्। 'उपसर्गात् सुनोति—' इत्यादिना अड्व्यवाये।

:पि पत्वम्। ततो दशास्यः पाशुपतं शस्त्रं पाशुपतास्त्रं निरास्थतो-ऽक्षिपत्। 'उपसर्गादस्यत्यूह्योर्वा वचनम्' इति तङ्। नृपो राम-स्तच्छक्राऽस्त्रेणाजयत्॥ ९८

भरतः। सोऽध्यष्ठीयतेत्यादि। स रथो रामेण अधिष्ठितः। कर्मणि यक्, दाणाने-ऽामित्यादिना ञ्णीः, गीक इति पत्वम्। ततो दशास्यः पशुपतिदैवतं शस्त्रं चिक्षिपवान्। शैवी-प्रीत इति पचे नम्। नृपो राम. तत् पाशुपतमस्त्रं शक्रास्त्रेण जितवान्॥ ९८

অনুবাদ। রামচন্দ্র সেই রথে আরূঢ় হইলেন, তখন দশানন পাশুপত অস্ত্র নিক্ষেপ করিল, রাজা রাম ইন্দ্রাস্ত্র বজ্রে সেই পাশুপতাস্ত্র জয় করিলেন। ৯৮

ततः शतसहस्रेण रामः प्रौर्णोन्निशाचरम्।
बाणानामक्षिणोद्धुर्यान् सारथिं चादुनोद्द्रुतम्॥९९

अन्वयः। ततः रामः बाणानां शतसहस्रेण निशाचरं प्रौर्णोत्, धुर्य्यान् अक्षिणोत्, द्रुतम् सारथिं च अदुनोत्॥ ९९

मल्लिनाथः। तत इति। ततो रामो बाणानां शतानां सहस्रेण लक्षेण निशाचरं रावणं प्रौर्णोदाच्छादयत्। "गुणोऽपृक्ते" इति गुणः। धुर्य्यान् रथाश्वानक्षिणोज्जघान। क्षिणु हिंसायाम्। तनादिः। द्रुतं सारथिं चादुनोत् दुनोति स्म। टुदुञ् परितापे। स्वादिः। 'ष्यादीनां ह्रस्वः'॥ ९९

भरतः। तत इत्यादि। तदनन्तरं रामो बाणानां शतसहस्रेण लक्षेण निशाचरं रावणं प्रौर्णोत् आच्छादितवान्। ऊर्णु ञ ञ आच्छादने। घ्यामिति गुणः। द्रुतं धुर्य्यान् रथाश्वान् अक्षिणोत् हिंसितवान्। अणक्षिण दु ञ् बधे। धुरं वहतीति ढयेकादिति यः, य्वंनघ्नतो-मुह्येनं दीर्घः। सारथिञ्च पीड़ितवान्॥ ९९

অনুবাদ। তাহার পর রামচন্দ্র লক্ষ বাণবর্ষণে রাক্ষসকে আচ্ছাদিত, রথের অশ্বগুলিকে বিনষ্ট এবং সত্বর সারথিকেও নিপীড়িত করিলেন। ৯৯

अदृश्यन्तानिमित्तानि प्राह्वलच्छितिमण्डलम्।
रावणः प्राह्विणोच्छूलं शक्तिं चेन्द्रीं महीपतिः॥१००

अन्वयः। (अथ रावणस्य) अनिमित्तानि अदृश्यन्त,—क्षितिमण्डलं प्राह्वलत्; (तदा) रावणः शूलं प्राहिणोत्, महीपतिश्च ऐन्द्रीं शक्तिं (प्राहिणोत्)॥ १००

मल्लिनाथः । अदृश्यन्तेति । अथ रावणस्याग्रे अनिमित्तानि दुर्निमित्तान्यदृश्यन्त । दृशेः कर्म्मणि लङ् । क्षितिमण्डलं भूगोलं प्राज्वलदकम्पत । ज्वल चलने । तद् दृष्ट्वा रावणः शूलं प्राहिणोत् प्रायुङ्क्त । हि गतौ । स्वादिः । "हिनुमीना" इति णत्वम् । महीपतौ राम ऐन्द्रीमिन्द्रदेवताकां तद्दत्तां वा शक्तिं प्राहिणोत् ॥ १००

भरतः । अदृश्यन्तेत्यादि । रावणेन अनिमित्तानि दुर्निमित्तानि दृष्टानि । कर्म्मणि यक् । क्षितिमण्डलं प्राज्वलत् चचाल । ज्वल ज्वल चाले । रावणः शूलं प्राहिणोत् क्षिप्तवान् । महीपतौ राम ऐन्द्रीं शक्तिं प्राहिणोत् । हि न वर्द्धने गतौ ॥ १००

অনুবাদ । তখন রাবণ নানাপ্রকার অশুভ লক্ষণ দেখিতে লাগিল—ভূতল কম্পিত হইল, তাহা দেখিয়া রাবণ শূল নিক্ষেপ করিল। ভূপতি রাম ঐন্দ্রাস্ত্র নিক্ষেপ করিলেন। ১০০

ताभ्यामन्योन्यमासाद्य समवाप्यत संशगः ।
लक्षेण पत्रिणां वक्षः क्रुद्धो रामस्य राक्षसः ॥ १०१
अस्तृणादधिकं रामस्ततोऽदेवत सायकैः ।
अक्लाम्यद्रावणस्तस्य सूतो रथमनाशयत् ॥ १०२

अन्वयः । ताभ्याम् अन्योऽन्यम् आसाद्य संशमः समवाप्यत, ( अथ ) राक्षसः क्रुद्धः पत्रिणां लक्षेण रामस्य वक्षः अस्तृणात् । रामः ततः ( रावणात् ) अधिकं सायकैः अदेवत, रावणः अक्लाम्यत, तस्य सूतः रथम् अनाशयत ॥ १०१—१०२

मल्लिनाथः । ताभ्यामिति । ताभ्यां शूलशक्त्यायुधाभ्यामन्योन्यमासाद्य प्राप्य संशमः संक्षयः समवाप्यत सम्प्राप्तः । आप्नोतेः कर्म्मणि लङ् । अथ राक्षसः क्रुद्धः पत्रिणां बाणानां लक्षेण शतसहस्रेण रामस्य वक्षः अस्तृणात् इत्युत्तरश्लोकस्थमाकृष्य योज्यम् । स्तृञ् आच्छादने । क्र्यादिः ॥ १०१

मल्लिनाथः । अस्तृणादिति । अथ रामस्ततो रावणादप्यधिकं सायकैरदेवत चिक्रीड । देविरयं भौवादिकः । रावणोऽक्लाम्यत् क्लान्तोऽमूर्च्छदित्यर्थः । तस्य रावणस्य सूतः सारथिः रथमनाशयद-दर्शनमगमयत् । अन्यतोऽनयदित्यर्थः ॥ १०२

भरतः । ताभ्यामित्यादि । शूलशक्तिभ्याम् अन्योऽन्यम् आसाद्य आश्लिष्य संशमः क्षयः प्राप्तः । कर्म्मणि यक् । संशमनं संशमः ; धञि जनेवधः शेम इति क्रस्वः । ततो रावणः क्रोधात् पत्रिणां बाणानां लक्षेण रामस्य वक्षो हृदयम् अस्तृणादित्युत्तरश्लोकेनान्वयः । स्तृ ञ छि आदने । प्वादेः स्त्रौ मे इति ह्रस्वः ॥ १०१

भरतः। अन्योन्यादि यादि। ततो रामो रावणमायकाधिकसायकैः धईवत क्रीड़ितवान्। ईह क ईश्वैः। रामेण इतो रावणोऽक्लाम्यत। क्लम् ग्लि मिर्ल्लांगी। तस्य तादृशस्य रावणस्य सूतः सारथी रथम् अनाययत् स्वामिजीवनेच्छया दूरम् अपनीतवान्। नम् सु यं नाम्नि णिः॥ १०२

अनुवाद। উভয়ের শূল ও শক্তি পরস্পর সংঘটিত হইয়া বিনষ্ট হইল, অনন্তর রাক্ষস ক্রুদ্ধ হইয়া লক্ষবাণে রামের বক্ষঃ আচ্ছন্ন করিল, রাম তাহা অপেক্ষা বহু বাণ লইয়া যুদ্ধক্রীড়া করিতে লাগিলেন। তখন রাবণ ক্লান্ত হইয়া পড়িল, তখন তাহার সারথি প্রভুজীবন রক্ষার জন্য রথ লইয়া পলায়ন করিল। ১০১—১০২

**राक्षसोऽतर्जयत् सूतं पुनश्चाढौकयद्रथम्।**
**निरास्येतामुभौ बाणानुभौ धुर्यानविध्यताम्॥ १०३**

अन्वयः। राक्षसः सूतम् अतर्जयत्, पुनः च रथम् अढौकयत्, उभौ (रामरावणौ) बाणान् निरास्येताम्, उभौ धुर्य्यान् अविध्यताम्॥ १०३

मल्लिनाथः। राक्षस इति। राक्षसः सूतमतर्जयत् किमर्थमिदं कष्टं कर्म कृतमित्यभर्त्सयत्। तर्जिभर्त्स्योरनुदात्तेत्त्वेऽपि तस्य चक्षिङादेशस्य ङित्करणाज्ज्ञापकादनित्यत्वज्ञापनात् परस्मैपदप्रयोगः। पुनश्च रथमढौकयद्रामान्तिकमगमयत्। तावुभौ रामरावणौ बाणान्निरास्येतामक्षिपताम्। 'उपसर्गादस्यत्यूह्योः' इति वा तङ्। अजादित्वादाडागमः। धुरं वहन्तीति धुर्य्यान् रथाश्वान्। "धुरो यड्ढकौ" इति यत्प्रत्ययः। अविध्यतां प्राहरतां चेत्यर्थः। व्यध ताड़ने। दिवादिः। "ग्रहिज्या—" इति सम्प्रसारणम्॥ १०३

भरतः। राक्षस इत्यादि। रावणः सूतं तर्जितवान्, रथापसारणेन लज्जोपादानात्। तर्ज क भ् तर्ज भर्त्सने। चुरादित्वात् आत्मनेपदित्वं चुर्थी णिर्वेति णिः, पाक्षिकत्वात् तदभावपक्षे ङनुबन्धादात्मनेपदं कानुबन्धान्नित्यमप्राप्तमिति चेत्? क्वचिदात्मनेपदिनोऽपि परस्मैपदित्वम्—"वविजति पाञ्चाली मध्यमं पाण्डुनन्दनम्" इत्यादि प्रयोगदर्शनात्, भीवादित्वात् प्रत्यवसानार्थास्तरिति: कर्म्मकर्तृत्वविवक्षया पुनः प्रेरणे णिरिति केचित्। पुनश्च रथम् अढौकयत् रामान्तिक प्रापितवान्। ढौक श्रौक तिक ङ् गत्याम्। प्रेरणे णिः। उभौ रामरावणौ बाणान् क्षिपन्तौ। णेर्वाऽसर्योरह इति मम्। ततो धुर्य्यान् अश्वान् अविध्यताम्॥ १०३

अनुवाद। রাবণ সারথিকে তিরস্কার করিতে লাগিল, তখন সে পুনরায় রামের নিকট রথ লইয়া উপস্থিত হইল। উভয়েই বাণবর্ষণ আরম্ভ করিলেন। উভয়েই রথের অশ্বগুলিকে প্রহার করিতে লাগিলেন। ১০৩

उभावकृन्ततां केतूनव्यथेतामुभौ न तौ।
अदीप्येतामुभौ धृष्णू प्रायुञ्जातां च नैपुणम् ॥ १०४

अन्वयः। उभौ ( परस्परं ) केतून् अकृन्ततां, तौ उभौ न अव्यथेताम्, उभौ अदीप्येताम् उभौ धृष्णू नैपुण्यं च प्रायुञ्जाताम् ॥ १०४

मल्लिनाथः। उभाविति। उभौ परस्परं केतून् ध्वजानकृन्ततामच्छिनत्ताम्। कृती छेदने। तुदादिः। न अव्यथेतां न भीतौ न चलितौ वा। व्यथ भयचलनयोः। अदीप्येतामराजतां, धृष्णू धर्षणशीलौ। "त्रसिगृधिधृषिक्षिपेः क्नुः"। उभौ नैपुणं कौशलं च प्रायुञ्जातां प्रयुक्तवन्तौ। युजिर् योगे ॥ १०४

भरतः। उभावित्यादि। तत उभौ रामरावणौ केतून् ध्वजान् अकृन्तताम्। कृती च च्छिदि। तौ उभौ न अव्यथेतां न भीतौ। व्यथ च भ ऋ दुःखे भासे भये। उभौ अदीप्येतां शोभितवन्तौ। दीपि य च दीपने। धृष्णू प्रगल्भौ नैपुणं युद्धकौशलं प्रयुक्तवन्तौ। युजिर्यौ ञ च युतौ। युजिर उद्धरच इति भं, निपुणस्य भावे विकारसङ्केति ष्यः ॥ १०४

অনুবাদ। উভয়ে উভয়ের ধ্বজা ছেদন করিলেন, কিন্তু উভয়ের মধ্যে কেহই ভীত বা বিচলিত হইলেন না, উভয়েই যুদ্ধে বিরাজ করিতে লাগিলেন। প্রগল্ভ বীরদ্বয় নিজ নিজ যুদ্ধনৈপুণ্য দেখাইতে লাগিলেন। ১০৪

उभौ मायां व्यतायेतां वीरौ नाश्राम्यतामुभौ।
मण्डलानि विचित्राणि क्षिप्रमाक्रामतामुभौ ॥ १०५

अन्वयः। उभौ मायां व्यतायेताम्, उभौ वीरौ न अश्राम्यताम्, उभौ विचित्राणि मण्डलानि क्षिप्रम् आक्रामताम् ॥ १०५

मल्लिनाथः। उभाविति। उभौ मायां कपटप्रयोगं च व्यतायेतां व्यतनुताम्। तायृ सन्तानपालनयोः। भ्वादिः। वीरावुभौ नाश्राम्यतां न श्रान्तौ। "शमामष्टानाम्—" इति दीर्घः। उभौ विचित्राणि मण्डलानि मण्डलचारौ क्षिप्रमाक्राम-तामाचरताम् ॥ १०५

भरतः। उभौ मायामित्यादि। उभौ मायां व्यतायेतां विस्तारितवन्तौ। तायृ ङ पालनसन्त्योः। नाश्राम्यतां न श्रान्तौ, यतो वीरौ। युध्यमानौ उभौ विचित्राणि मण्डलानि क्षिप्रम् आक्रामतां भ्रान्तौ। क्रमः पेऽपि घं: ॥ १०५

अनुवाद। উভয়েই রণ কাপট্যবিস্তার করিলেন, উভয়েই বীর, এইজন্য শ্রান্ত হইলেন না, উভয়েই বিচিত্র মণ্ডলাকারে ভ্রমণ করিয়া সত্বর পরস্পরকে আক্রমণ করিলেন। ১০৫

**न चोभावप्यलक्ष्येतां यन्तारावाहतामुभौ ।**
**स्यन्दनौ समपृच्येतामुभयोर्दीप्तवाजिनौ ॥ १०६**

अन्वयः। उभौ अपि न अलक्ष्येताम्, उभौ यन्तारौ च आहतां, दीप्तवाजिनौ उभयोः स्यन्दनौ समपृच्येताम् ॥ १०६

मल्लिनाथः। नेति। उभावपि नालक्ष्येतां मण्डलचारवेगादयमवेति न लक्षितौ। लक्षेः कर्मणि लङ्। उभौ रथिनौ कर्त्तारौ यन्तारावन्योऽन्यसारथी कर्मणी आहतां प्राहरताम्। हन्तेर्लङि तसस्तामादेशः। "अनुदात्तोपदेश:—" इत्यादिनानुनासिकलोपः। दीप्तवाजिनौ तेजिष्ठाश्वौ। दृप्तेति पाठे—बलिष्ठाश्वावित्यर्थः। उभयोः रामरावणयोः स्यन्दनौ रथौ समपृच्येतां संश्लेषितौ। प्रत्यासादितावित्यर्थः। पृची सम्पर्के। कर्मणि लङ् ॥ १०६

भरतः। न चेत्यादि। तौ उभौ न चालक्ष्येतां प्रेक्षकैर्न दृष्टौ। लक्ष क अ दर्शने। ऽङ्। कर्मणि यक्। तौ उभौ यन्तारौ सारथी सकर्मकत्वान्न मं, हन्तेरनिमत्वात् अनतमायमिमामिति नलोपः। उभयोः तयोः स्यन्दनौ संपृक्तौ। पृच धौ सम्पर्के। कर्मणि कर्मकर्त्तरि वा यक्। आमरादिना दीप्ता वाजिनोऽश्वाः ययोः स्यन्दनयोः ॥ १०६

अनुवाद। উভয়েই দ্রুত মণ্ডলাকারযুদ্ধহেতু দর্শক কর্তৃক লক্ষিত হইলেন না। পরস্পরেই পরস্পর সারথিকে প্রহার করিতে লাগিলেন তখন উভয় রথের তেজস্বী অশ্ব গুলি রথ সহ পরস্পর সংঘর্ষ আরম্ভ করিল। ১০৬

**ततो मायामयान्मूर्ध्नो राक्षसोऽप्रथयद्रणे ।**
**रामेणैकशतं तेषां प्राव्रश्च्यत शिलीमुखैः ॥ १०७**

अन्वयः। ततः रणे राक्षसः मायामयान् मूर्ध्नः अप्रथयत्, रामेण तेषाम् एकशतं शिलीमुखैः प्राव्रश्च्यत ॥ १०७

मल्लिनाथः। तत इति। ततो रणे राक्षसो मायामयान मूर्ध्नः शिरांस्यप्रथयत्। छेदे छेदे पुनः प्ररूढशिरस्कोऽभवदित्यर्थः॥ रामेण तेषां मूर्ध्नामेकशतमेकोत्तरशतं शिलीमुखैः शरैः प्राव्रश्च्यत वृक्णम्। ओव्रश्चू छेदने। कर्मणि लङ् ॥ १०७

भरतः । तत इत्यादि । तदनन्तरं रावणो मायामयान् मायास्वभावान् मूर्ध्नः शिरांसि अप्रथयत् विस्तारितवान्, स्वाभाविकमस्तकानां रक्षार्थं बहिर्वर्तीनि अन्यानि शिरांसि कृतवानिति भावः । प्रथ ष म ङ् ख्यातौ । घटादित्वात् ह्रस्वः । मयट् तद्रूपे । तेषां शिरसाम् एकाधिकं शतं रामेण प्राज्ञ्यत छिन्नम् । कर्म्मणि यक् ॥ १०७

অনুবাদ। তাহর পর রাবণ স্বাভাবিক মস্তকগুলির রক্ষার জন্য অনেকগুলি মায়া ( কপট ) মস্তকের আবিষ্কার করিল, রাম বাণদ্বারা তাহার মধ্যে একশত একটি মস্তক ছিন্ন করিলেন। ১০৭

**समक्षुभन्नुदन्वन्तः प्राकम्पन्त महीभृतः ।**
**सन्त्रासमबिभः शक्रः प्रैङ्खच्च क्षुभिता क्षितिः ॥१०८**

अन्वयः । उदन्वन्तः समक्षुभन्, महीभृतः प्राकम्पन्त, शक्रः सन्त्रासम् अबिभः, क्षितिः च क्षुभिता प्रैङ्खत ॥ १०८

मल्लिनाथ । समिति । उदन्वन्तः समुद्राः समक्षुभन् शिरःपातभरात् सञ्चलिताः । क्षुभ संचलने । क्र्यादिः । महीभृतः पर्वताः प्राकम्पन्ताचलन् । शक्र इन्द्रः सन्त्रासमबिभः । भृञो लङि "श्लौ" इति श्लुः । "भृञामित्" इत्यभ्यासस्येत्वम् । धातोर्गुणो रपरः । तिल्लोपे रेफस्य विसर्जनीयः । क्षितिश्च क्षुभिता सती प्रैङ्खत् दोलायते स्म । इखेर्भौवादिकाल्लङ् । इदित्वान्नुम् । आड्वृद्धिः ॥ १०८

भरतः । समक्षुभन्नित्यादि । छिन्नानां मूर्ध्नां पतनात् उदन्वन्तः समुद्राः संक्षोभिताः । क्षुभ्य न च, चकारात् सञ्चलि । मनीषादित्वात् णभावः । पर्वताः कम्पिताः शक्रः सन्त्रासं बभार, खड्गेनापि छिन्नानां शिरसाम् उत्क्षेपणात् । भृ ट् डु ञ भृतिपुष्ट्योः । ह्रादौ रे श्लिः । श्लावुभ्यासेत्ः, सार्वधातुक इति गुणः, हलङ्याभ्य इति दिपो लोपः । मस्तकभरात् प्रक्षुभित क्षितिः प्रैङ्खत कम्पिता । इखि ईखि गतौ । शक्र. प्रैङ्खत । क्षितिः प्रक्षुभिता इत्यन्ये ॥ १०८

অনুবাদ। রাবণ-মস্তকের পতনভরে সমুদ্র সকল ক্ষুব্ধ হইল, পর্ব্বতগুলি কম্পিত হইল, দেবরাজ উদ্বিগ্ন হইলেন এবং পৃথিবী ক্ষুভিত হইয়া দুলিতে লাগিল। ১০৮

**ततो मातलिना शस्त्रमस्मार्यत महीपतिः ।**
**वधाय रावणस्योग्रं स्वयम्भूर्यदकल्पयत् ॥ १०९**

अन्वयः । ततः "स्वयम्भूः रावणस्य वधाय उग्रं ( शस्त्रं ) यत् अकल्पयत्" मातलिना महीपतिः ( रामः ) [illegible] ॥ १०९

मल्लिनाथः। तत इति। ततः शिरःप्ररोहानन्तरं मातलिना महीपतिः रामः अस्त्रं वक्ष्यमाणास्त्रम्। "कर्मणि द्वितीया"। अस्त्रार्थित स्मारितः। स्मर्यतेर्बुद्धार्थत्वात् "गतिबुद्धि—" इत्यादिना अणि कर्त्तुः कर्म्मत्वमिति महीपतेः कर्म्मत्वम्। "कर्म्मणि द्वितीया" इत्यत्रानभिहिताधिकारादत्राभिहिते कर्म्मणि प्रथमा। अत्र शेषत्वाविवक्षायां न "अधीगर्थ—" इत्यादिना कर्म्मणि शेषे षष्ठी। किं तच्छस्त्रं तदाह—स्वयम्भूर्ब्रह्मा रावणस्य वधायोग्रं यदस्त्रमकल्पयदसृजत्॥ १०९

भरतः। तत इत्यादि। तदनन्तरं रावणस्य वधात् स्वयम्भूः ब्रह्मा यत् उग्रं अस्त्रम् अकल्पयत्, तत् अस्त्रं मातलिना महीपतिः रामोऽस्मार्थित स्मारितः। स्मृ स्मृतौ, ण्यन्तात् कर्म्मणि यक्। महीपतेरिति पाठे—भावे यक्, कर्म्मणि सम्बन्धविवक्षया वा षष्ठी॥ १०९

অনুবাদ। তাহার পর ব্রহ্মা রাবণের বধের জন্য যে উগ্রশস্ত্র সৃষ্টি করিয়াছিলেন, মাতলি শ্রীরামকে সেই অস্ত্র স্মরণ করাইয়া দিলেন। ১০৯

नभस्वान् यस्य वाजेषु फले तिग्मांशुपावकौ।
गुरुत्वं मेरुवद्यस्य देहः सूक्ष्मो वियन्मयः॥ ११०

अन्वयः। यस्य वाजेषु नभस्वान्, फले तिग्मांशुपावकौ, मेरुवत्, गुरुत्वं देहः वियन्मयः सूक्ष्मः॥ ११०

मल्लिनाथः। नभस्वानिति। किं च यस्यास्त्रस्य वाजेषु पत्त्रेषु। 'छदः पत्त्रो गरुद्वाजः' इति यादवः। नभस्वान् वायुर्वसतीति शेषः। एतेन वेग उक्तः। फले शल्ये तिग्मांशुपावकौ सूर्य्याग्नी। दुःसहत्वदुर्धर्षत्वे उक्ते। यस्य मेरुवन्मेरोरिव गुरुत्वं दुर्भरत्वम्। "तत्र तस्येव" इति वतिप्रत्ययः। मेरुसङ्काशमिति पाठे—मेरुगुरुत्वसङ्काशमित्यर्थः। यस्यास्त्रस्य देहः शरीरं वियन्मय आकाशात्मकोऽत एव सूक्ष्मोऽतीन्द्रियः॥ ११०

भरतः। नभस्वानित्यादि। यस्य अस्त्रस्य वाजेषु पत्त्रेषु नभस्वान् वायुः सन्निहित इत्यर्थात्, यस्य फलेऽग्रे तिग्मांशुपावकौ सूर्य्योऽग्निश्च, यस्य गुरुत्वं मेरुवत् मेरोरिव। मेरुसङ्काशमिति पाठे—मेरोः यद् गुरुत्वं तत्तुल्यम् इत्यर्थः। यस्य देहः सूक्ष्मः दिव्यदृष्टिदृश्यः अथच वियन्मय आकाशस्वभावः। अस्त्रमिति वक्ष्यमाणेनान्वयः॥ ११०

অনুবাদ। সে অস্ত্রের পক্ষদেশে বায়ু অগ্রভাগে সূর্য্য ও অনল অবস্থিত, তাহার গুরুত্ব মেরুতুল্য এবং তাহার দেহ আকাশতুল্য সূক্ষ্ম ছিল। ১১০

वा[रा]जितं गारुडैः पक्षैर्विश्वेषां धाम तेजसाम्।
स्मृतं तद्रावणं भित्त्वा सुघोरं भुव्यशाययत्॥ १११

अन्वयः। गारुडैः पक्षैः वाजितं, विश्वेषां तेजसां धाम, सुघोरं तत् (अस्त्रं) स्मृतं (सत्) रावणं भित्त्वा भुवि अशाययत्॥ १११

मल्लिनाथः। वाजितमिति। गारुडैः पक्षैस्तार्क्ष्यपक्षैर्वाजितं वाजवत् पक्षवत् यत् कृतम्। वाजवच्छब्दात् "तत्करोति—" इति ण्यन्तात्कर्मणि क्तः। णाविष्ठवद्भावात् "विन्मतोर्लुक्"। विश्वेषां तेजसां धाम सर्वदेवतातेजोमयमित्यर्थः। सुघोरमतिदारुणं तदस्त्रं स्मृतं ध्यातं तद्रावणं भित्त्वा भुवि भूतलेऽशाययदपातयदित्यर्थः। शीङो ण्यन्ताल्लुङ्॥ १११

भरतः। राजितमित्यादि। गरुडसम्बन्धिभिः पक्षैः राजितं दीप्तं, विश्वेषां तेजसां धाम स्थानं तत् अस्त्र रामेण स्मृत सुघोरम् अतिभीषणं रावणं हत्वा भुवि अशाययत् पातयामास इत्यर्थः। शी य निशाने। जिः प्रयणे। शांन्तासाङ्केति यत्॥ १११

অনুবাদ। গরুড় পক্ষযুক্ত সমস্ত তেজের আধার, অতি দারুণ সেই অস্ত্র রাম কর্ত্তৃক চিন্তিত হইবামাত্র রাবণকে বিদীর্ণ করিয়া ভূতলশায়ী করিল। ১১১

आबध्नन् कपिवदनानि संप्रहासं
प्राशंसत् सुरसमितिर्नृपं जितारिम्।
अन्येषां विगतपरिप्लवा दिगन्ताः
पौलस्त्योऽजुषत शुचं विपन्नबन्धुः॥ ११२

इति भट्टिकाव्ये तिङन्तकाण्डे लङ्विलसितो नाम
सप्तदशः सर्गः॥ १७

अन्वयः। कपिवदनानि संप्रहासम् आबध्नन्, सुरसमितिः जितारिं नृपं प्राशंसत्, अन्येषां दिगन्ताः विगतपरिप्लवाः (जाताः) विपन्नबन्धुः पौलस्त्यः शुचम् अजुषत॥ ११२

मल्लिनाथः। आबध्नन्निति। कपिवदनानि सुग्रीवादिमुखानि सम्प्रहासमाबध्नन् हर्षाद्धासमकुर्वन्नित्यर्थः। सुरसमितिः सुरसङ्घः जितारिं नृपं प्राशंसत्तुष्टाव। अन्येषां दिक्पालानां सम्बन्धिनो दिगन्तास्तत्तत्याख्यविभागा विगतपरिप्लवा वीतोपद्रवा जाताः। विपन्नबन्धुर्विनष्टभ्रातृकः पौलस्त्यो विभीषणः शुचं शोकमजुषत-

मजत। दृष्टस्यापि वृत्तिर्दुःसहेति भावः। प्रहर्षिणी वृत्तम्। 'म्नौ ज्रौ गस्त्रिदशयति प्रहर्षिणीयम्' इति लक्षणात्॥ ११२

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां भट्टिकाव्यव्याख्यायां
रावणवधा नाम लङ्कविलासाख्यः
सप्तदशः सर्गः॥ १७

भरतः। आवव्रुरित्यादि तस्मिन् हते सति कपीनां वदनानि सम्प्रसाद प्रसन्नताम् आवव्रुः। "सम्प्रकाश"मिति क्वचित् पाठः; "सम्प्रहास"मिति केचित्। सुरसमितिः देवानां सभा जितारिं नृपं प्राशंसत्। अन्येषां जनानां दिगन्ता रावणवधात् विगतपरिप्लवा निरुपद्रवा अभवन्, पौलस्त्यो विभीषणः विपन्नबन्धुः हतभ्रातृकः अचं शोकं शुचते स्म सेवितवान्। स्रं ज्ञौ त्रि शुच शुचि सेवे। प्रहर्षिणीच्छन्दः। लक्षणं यथा—"आशाभिर्मन-जरगाः प्रहर्षिणीयम्"॥ ११२

इति सर्वमहारिहरव्यासवंशसम्भवगौराङ्गमल्लीकाव्यमभीभरतसेनकृतायां
मुग्धबोधिन्यां भट्टिटीकायां रावणवधो नाम सप्तदशः सर्गः।

अनुवाद। रावণবধে সুগ্রীবাদি কপিগণের মুখমণ্ডল হাস্যময় হইল, দেবগণ শত্রুজয়ী রামের স্তব করিলেন, অপরাপর দিক্পালগণের অধিষ্ঠিত দিক্ সকল নিরুপদ্রব হইল, ভ্রাতৃমরণে বিভীষণ শোকসন্তপ্ত হইলেন। ১১২

সপ্তদশ সমাপ্ত॥

## अष्टादशः सर्गः।

**व्यश्नुते स्म ततः शोको नाभिसम्बन्धसम्भवः।**
**विभीषणमसावुच्चै रोदिति स्म दशाननम्॥ १**

अन्वयः। ततः नाभिसम्बन्धसम्भवः शोकः विभीषणं व्यश्नुते स्म, असौ (विभीषणः) दशाननम् उच्चैः रोदिति स्म॥ १

मल्लिनाथः। अथ लङ्कविलासमधिकृत्याह—व्यश्नुत इति। ततो रावणपातानन्तरं नाभिसम्बन्धसम्भव एकोदरसम्भूतः शोको विभीषणं व्यश्नुते स्म व्याप्नोत्। अशू व्याप्तौ। "लट् स्मे" इति भूतार्थे लट्। असौ विभीषण्णो दशाननं रावणं प्रत्युच्चैस्तारं रोदिति स्म विललाप। पूर्ववल्लट्। "रुदादिभ्यः सार्वधातुके" इतीट्॥ १

भरतः। अथ शोमनिक्तत्याह—अस्याः परमते लङ्केति संज्ञा।—व्यश्नुते इत्यादि। ततो रावणवधानन्तरं शोको विभीषणं व्यश्नुते स्म व्याप्तवान्। अश् ऊ ञ व्याप्तिसंहत्योः॥

क्ती ओनातीत इति भूते क्ती। कीदृश: शोक: ?—नाभिसम्बन्धेन शोभसम्बन्धेन सम्भव: उत्पत्ति. यस्य। असौ शोकार्त्तो विभीषण उच्चै: महाशब्देन दशाननं रोदिति स्म स चिर बद रोदि। पूर्ववद्भूते क्ती। कहीय इतीम्। १

অনুবাদ। রাবণ পতনের পর একোদরসম্ভূত শোক বিভীষণকে আচ্ছন্ন করিল, তিনি "হা দশানন" বলিয়া উচ্চৈঃস্বরে রোদন করিতে লাগিলেন। ১

**भूमौ शेते दशग्रीवो महार्हशयनोचित:।**
**नेक्षते विह्वलं मां च न मे वाचं प्रयच्छति ॥ २**

अन्वय:। महार्हशयनोचित. दशग्रीव: भूमौ शेते, विह्वलं मां च न ईक्षते, न वाचं मे प्रयच्छति ॥ २

मल्लिनाथ:। तदेवाह—भूमाविति। महार्हशयनोचित उत्तमशय्यार्हो दशग्रीवो भूमौ शेते विह्वलं शोकार्त्तं मां नेक्षते न पश्यति मे मह्यं वाचं न प्रयच्छति न मया सम्भाषत इत्यर्थ:। "पाघ्रा—"इत्यादिना दाणो यच्छादेश:। सर्वत्र "वर्त्तमाने लट्" इति लट्। विशेषस्तत्र तत्र वक्ष्यते ॥ २

भरत:। भूमावित्यादि। दिव्यशय्याश्यायी दशग्रीवो भूमौ शेते। शी ङ् स्व प्ने अवहूतभव्ये इति वर्त्तमाने क्ती। शीङो रे ग:। विह्वलं शोकव्याकुलं मां न ईक्षते न पश्यति। ईक्ष ङ् दर्शने। मह्य वाच न प्रयच्छति न ददाति। दाण दाने। ध्यादाणपेति यच्छादेश: ॥ २

অনুবাদ। যিনি মহামূল্য শয্যায় শয়নে অভ্যস্ত, আজ সেই দশানন ভূতলে শায়িত, শোকাতুর আমি, তথাপি আমাকে একটীবারও ফিরিয়া দেখিলেন না, কিংবা আমার কথার উত্তরও দিলেন না। ২

**विपाकोऽयं दशग्रीव संदृष्टोऽनागतो मया।**
**त्वं तेनाभिहित: पथ्यं किं कोपं न नियच्छसि ॥ ३**

अन्वय:। (हे) दशग्रीव! अयं विपाक: मया अनागत: (एव) संदृष्ट:, तेन पथ्यम् त्वम् अभिहित:, (तथापि) किं त्वं कोपं न नियच्छसि ॥ ३

मल्लिनाथ:। विपाक इति। हे दशग्रीव! अयमीदृग्मरणरूपो विपच्यत इति विपाक: फलं मया अनागत आगाम्येव संदृष्ट उपलब्ध:। तेन कारणेन पथ्यं हितमभिहित उक्तोऽसि। दुहादीनाम-प्रधाने कर्मणि क्त:। तथापि किं किमर्थं वा त्वं कोपं न निय-

च्छसि न वदसि। सामीप्ये वर्त्तमानप्रत्ययः। निवृत्तवानसीत्यर्थः। तस्येदं फलमिति भावः ॥ ३

भरतः। विपाक इत्यादि। हे दशग्रीव। अयम् अनागतो भविष्यन् विपाको मरणरूपो मया संदृष्टः सम्यक् उपलब्धः। तेन कारणेन पथ्यं सीतां मुञ्चेति हितं त्वम् अभिहित उक्तोऽसि। लोपीऽस्यसोरिति सलोपः। इदानीं मत एव किं कोपं न नियच्छसि नापनयसि? मम दोषो नास्त्येव। यमो ऽ विरतौ, नियूर्वोऽपनयने। यमा दाणपेति यच्छादेशः ॥ ३

অনুবাদ। হে দশগ্রীব। এইরূপ পরিণাম যে ঘটিবে, তাহা আমি পূর্ব্বেই জানিয়াছিলাম এবং সেই জন্য আমি তোমাকে অনেক হিতকথাও বলিয়াছিলাম, তথাপি তুমি কি জন্য ক্রোধসংবরণ করিলে না। ৩

**भजन्ति विपदस्तूर्णमतिक्रामन्ति सम्पदः।**
**ता[ते]न्म[म]दान्नावतिष्ठन्ते ये मते न्यायवादिनाम् ॥**

अन्वयः। ये न्यायवादिनां मते मदात् न अवतिष्ठन्ते, तूर्णं विपदः तान् भजन्ति, सम्पदः अतिक्रामन्ति ॥ ४

मल्लिनाथः। तदेवाह—भजन्तीति। ये तावन्न्यायवादिनां हितोपदेशकानां मते संमते मदात् मत्तादर्पान्नावतिष्ठन्ते तं मूढास्तूर्णं क्षिप्रमेव विपदो विपत्तीर्भजन्ति सम्पदः सम्पत्तीरतिक्रामन्त्युल्लङ्घयन्तीत्यर्थः ॥ ४

भरतः। भजन्तीत्यादि। ये स्वामिनो न्यायवादिनां मते मदात् अहङ्कारात् नावतिष्ठन्ते। प्रतिज्ञानिर्णयेत्यादिना अवपूर्वात् स्थो मम। तान् विपदस्तूर्णं भजन्ति सेवन्ते। भजो भो भागसेवनयोः। सम्पदः अतिक्रामन्ति त्यजन्ति। क्रमः पदपि घः। न्यायवादिनां माल्यवदादीनां यन्मतं त्वया नादृतं, तेन इयं विपत्, सम्पच्च गतेति भावः ॥ ४

অনুবাদ। যাহারা গর্ব্ববশতঃ ন্যায়বাদিদিগের মতে অবস্থান করে না, বিপদ সমূহ অচিরেই তাহাদিগকে আশ্রয় করে এবং সম্পত্তিও তাহাদিগকে ত্যাগ করিয়া থাকে। ৪

**अपथ्यमायतौ लोभादामनन्त्यनुजीविनः।**
**प्रियं शृणोति यस्तेभ्यस्तमृच्छन्ति न सम्पदः ॥ ५**

अन्वयः। अनुजीविनः लोभात् आयतौ अपथ्यम् आमनन्ति, यः तेभ्यः तत् (अपथ्यं) प्रियं शृणोति तं सम्पदः न ऋच्छन्ति ॥ ५

मल्लिनाथः। आप्तवाक्यातिक्रमिणो नश्यन्तीत्युक्तमिदमनाप्त-

वाक्यस्याविषोऽपीत्याह—अपथ्यमिति । अनुजीविनो भृत्या लोभात् स्वार्थलोभादायतावुत्तरकालेऽपथ्यमहितमामनन्त्युपदिशन्ति । यः स्वामी तेभ्योऽनाप्तेभ्यः प्रियं तत्कालमधुरं तदपथ्यं शृणोति तं प्रभुं सम्पदो नर्च्छन्ति । ऋ गतौ । "पाघ्रा—" इत्यादिना ऋच्छादेशः । प्रहस्तादिमूर्खवाक्यश्रवणान्नष्टोऽसीति भावः ॥ ५

भरतः । अपथ्यमित्यादि । अनुजीविनः प्रहस्तादिसदृशाः प्रायेण लोभात् स्वधया आयतौ उत्तरकाले अपथ्यम् अनिष्टफलम् आपाततः सुखश्राव्यत्वात्, प्रियं मधुरं आमनन्ति उपदिशन्ति । म्ना अभ्यासे । स्था-दाणेति मनादेशः । यः तेभ्यः प्रियं साधूक्तमिदमिति शृणोति । श्रौः श्रु धंरे जिम । सम्पदः तं न ऋच्छन्ति न गच्छन्ति । ऋ प्रापणे च । पूर्ववत् ऋच्छादेशः, ऋच्छधातो रूपं वा ॥ ५

অনুবাদ । ভৃত্যগণ অর্থলোভে আপাতমধুর অথচ ভবিষ্যতে অনিষ্টকর উপদেশ প্রদান করিয়া থাকে । কিন্তু যে মূর্খ প্রভু তাহাদের নিকট সেই অহিত কথা শ্রবণ করেন, সম্পদ সমূহ কদাপি তাহার নিকটে থাকে না ।৫

**प्राज्ञास्तेजस्विनः सम्यक् पश्यन्ति च वदन्ति च ।**
**तेऽभिभू[वन्ना]ता महाराज क्लाम्यन्ति विरमन्ति च ॥**

अन्वयः । प्राज्ञाः तेजस्विनः सम्यक् पश्यन्ति वदन्ति च, (हे) महाराज ! ते (माता-महादयः) (त्वया) अभिभूताः क्लाम्यन्ति विरमन्ति च ॥ ६

मल्लिनाथः । न केचिदस्माकमुपदेष्टार इत्याशङ्क्याह—प्राज्ञा इति । प्राज्ञाः प्रज्ञावन्तः । "प्रज्ञाश्रद्धार्चाभ्यो णः" इति मत्वर्थीयो णप्रत्ययः । तेजस्विनः प्रतापसम्पन्नाश्च । स्वपरबलविशेषज्ञाश्चेत्यर्थः । सम्यक् साधु पश्यन्ति कार्यसारमुत्प्रेक्षन्ते वदन्त्युपदिशन्ति च । हे महाराज ! ते मातामहादयोऽभिभूतास्त्वया निराकृताः क्लाम्यन्ति खिद्यन्ते विरमन्त्युदासते च । दुर्दान्तस्वामिसेवकानामीदृशो दशेति भावः ॥ ६

भरतः । प्राज्ञा इत्यादि । ये प्राज्ञाः तेजस्विनोऽस्मद्विधाः सम्यक् अविपरीतं साक्ष-हस्वा पश्यन्ति । दृशेः पूर्ववत् पश्यादेशः । आतिहितार्थं वदन्ति च । हे महाराज ! ते युष्मद्विधाः वक्तारोऽस्मद्विधाः त्वया अवज्ञाताः तिरस्कृताः सन्तः क्लाम्यन्ति खिद्यन्ते । क्लमु-मिद् जि ग्लानौ । शम्यांत्यमादीति घं: । विरमन्ति मौनम् आचरन्ति च । धि पं परानु-रूपतीव्याद्भिना विपूर्वरमः पम् । तदवश्यफलमिदमिति भावः ॥ ६

অনুবাদ । প্রাজ্ঞ এবং তেজস্বীরা সম্যক্রূপে কার্য্যের সার দেখিতে পান এবং সেইরূপ উপদেশও প্রদান করিয়া থাকেন । হে মহারাজ !

আপনি সেই মাতামহ মাল্যবান্ প্রভৃতিকে নিরাকৃত করায় তাঁহারা খিন্ন হইয়া উপদেশদানে বিরত হইয়াছিলেন ( আজ তাহারই এই ফল )। ৬

**लेढ़ि भेषजवन्नित्यं य: पथ्यानि कटून्यपि ।**
**तदर्थं सेवते चाप्तान् कदाचिन्न स सीदति ॥ ७**

अन्वय: । य: भेषजवत् कटूनि अपि पथ्यानि नित्यं लेढि, तदर्थं आप्तान् च सेवते, स कदाचित् न सीदति ॥ ७

मल्लिनाथ: । कस्तर्ह्यविनष्टो जीवतीत्यपेक्षायामाह—लेढ़ीति । यो राजा भेषजवदौषधवत् । 'भेषजौषधभैषज्यानि' इत्यमर: । कटून्यपि तत्कालतीक्ष्णान्यपि पथ्यानि परिणामसुखानि कार्य्याणि लेढ़ि शृणोतीत्यर्थ: । लिह आस्वादने । लटि शपो लुकि ढत्वादिकार्य्ये लघूपधगुण: । तदर्थं पथ्यपरिज्ञानार्थमाप्तान् वृद्धांश्च सेवते, स राजा कदाचिदपि न सीदति न नश्यति ॥ ७

भरत: । लेढ़ीत्यादि । य: स्वामी पथ्यानि सर्वदा हितानि कटून्यपि लेढि अभिलष्यति भेषजवत् तिक्तौषधमिव पिबति । लिहो ढ अ आस्वादे । हो ढ:, ढभात् तथोर्ध:, ढुलिरिति ढ़. । तदर्थं पथ्यार्थम् आप्तान् अविसंवादिन: सेवते, स कदाचित् न अवसीदति न अवसन्नी भवति । स्यादानेति सदे: सीद ॥ ७

অনুবাদ । যে রাজা ঔষধ তুল্য—আপততঃ কটু, কিন্তু পরিণাম হিতকর উপদেশ সর্ব্বদা শ্রবণ এবং হিতোপদেশলাভার্থ বিজ্ঞ বৃদ্ধগণের সেবা করেন, সে প্রভু কদাপি বিনষ্ট হন না। ৭

**सर्वस्य जायते मान: स्वहिताच्च प्रमाद्यति ।**
**वृद्धौ भव[ज]ति चापथ्यं नरो येन विनश्यति ॥ ८**
**द्वेष्टि प्रायो गुणेभ्यो यन्न च स्निह्यति कस्यचित् ।**
**वैरायते महद्भिश्च क्षीयते वृद्धिमांस्तत:[मानपि] ॥९**

अन्वय: । सर्वस्य वृद्धौ ( सत्यां ) मान: जायते, ( तत: ) स्वहितात्, प्रमाद्यति च, ( तत: ) अपथ्यं च भजति, येन ( अपथ्येन ) नर: विनश्यति । यत ( यस्मात ) वृद्धिमान् प्राय: गुणिभ्य: द्वेष्टि, कस्यचित् च न स्निह्यति, महद्भि: च वैरायते, तत: क्षीयते ॥ ८—९

मल्लिनाथ: । ननु व्ययमप्रमत्तस्य किं वृद्धसेवयेत्याशङ्क्य तदेव दुर्लभमित्याह—श्लोकद्वयेन । सर्वस्येति । सर्वस्यापि पुंसो वृद्धौ

सत्यां मानोऽहङ्कारो जायते, ततः स्वहितात् प्रमाद्यति स्खलति। 'शुगुप्साविरामप्रमादार्थानामुपसंख्यानात्' इदुयोगात्पञ्चमी। ततो-ऽपथ्यमपथ्यसेवनं च भवति येनापथ्येन नरो विनश्यति। तादृगपथ्यं भवति नाल्पमित्यर्थः॥ ८

मल्लिनाथः॥ द्वेष्टीति। किं च यद्यस्माद् वृद्धिमान् प्रायो गुणेभ्यो द्वेष्टि वृद्धसेवादिगुणान् द्वेष्टि। "क्रुधद्रुहेर्ष्या—" इत्यादिना सम्प्रदानत्वाच्चतुर्थी। कस्यचिच्च न स्निह्यति केनापि सह न स्निह्य-तीत्यर्थः। सम्बन्धसामान्ये षष्ठी। महद्भिर्वृद्धैः सह वैरायते वैरं करोति। "शब्दवैर—" इत्यादिना क्यङन्तात्तट्। ततः शीयते विनश्यति। शद्लृ शातने। "पाघ्रा—" इत्यादिना शदेः शीया-देशः। "शदेः शितः" इति तङ्॥ ९

भरतः। सर्वस्येत्यादि। प्रायेण वृद्धौ सत्यां सर्वस्य जनस्य मानी गर्वी जायते। जनी प्र ङ् जनने। स्वहितात प्रमाद्यति वृद्ध्या प्रमत्तमतित्वात। स्तौयम् उपकार न जानाति, मदेः शमादित्वात् दीर्घः। अपथ्यञ्च भजति सेवते। येन अपथ्येन विनाश गच्छति। णश लु यू नाशे॥ ८

भरतः। द्वेष्टीत्यादि। यः प्रभुः प्रायो गुणिभ्यो बहुपण्डितादिभ्यो द्वेष्टि। द्विषो ञ् वैरे। यस्मै दित्सेत्यादिना चतुर्थी। न च न कस्यचित् स्निह्यति प्रीयते, सम्बन्धविवक्षया षष्ठी। ष्णिह य ष ञि प्रीतौ। महद्भिः सह वैरायते वैरं करोति। शब्द-सुख-कष्टादि-भिरिति क्यः। तस्मात् कारणात् वृद्धियुक्तोऽपि शीयते विनश्यति। ष्वादानीति शदेः शीयादेशः॥ ९

অনুবাদ। প্রায় সকল লোকেরই বৃদ্ধি অবস্থায় ( ভাগ্যোদয়ে ) অহঙ্কার জন্মে, সে জন্য তাহারা নিজ হিত হইতে বিচ্যুত হয় এবং তজ্জন্য তাহাদের এরূপ অমঙ্গল ঘটে যে, একেবারে নষ্ট হইয়া থাকে। যেহেতু সম্পত্তিশালী লোকেরা প্রায়ই গুণের দ্বেষ করে, কাহাকেও ভাল বাসে না এবং মহাত্মা-দিগের সহিত শত্রুতা করিয়া থাকে, সেইজন্য তাহারা বিনষ্ট হয়। ৮—৯

**समाश्वसिमि केनाहं कथं प्राणिमि दुर्गतः।**
**लोकत्रयपतिर्भ्राता यस्य मे स्वपिति क्षितौ॥ १०**

अन्वयः। यस्य मे लोकत्रयपतिः भ्राता क्षितौ स्वपिति, दुर्गतः (सः) अहं केन समाश्वसिमि, कथं प्राणिमि॥ १०

मल्लिनाथः। समिति। यस्य मे लोकत्रयपतिर्भ्राता क्षितौ स्वपिति शेते, दुर्गतो दुर्दशापन्नः सोऽहं केनोपायेन समाश्वसिमि

स्वस्थो भवामि। तत्तावदास्ताम्। कथं प्राणिमि जीविष्यामि न कथञ्चिदित्यर्थः। सर्वत्र "रुदादिभ्यः सार्वधातुके" इतीट्॥ १०

भरतः। समाश्वसिमीत्यादि। केन प्रकारेण अहं समाश्वसिमि? रुदादित्वात् कर्त्तरीड् इति इम्। दुःखी अहं केन प्रकारेण प्राणिमि जीवामि? पूर्ववदिम्, प्राग्वर्त्ती च इत्यादिना णत्वम्। यस्य मे मम त्रैलोक्यस्य शासिता भ्राता रावणः क्षितौ स्वपिति शेते। पूर्ववदिम्। शीोऽस्मिनिति योज्यम्॥ १०

অনুবাদ। যাহার ভ্রাতা ত্রিভুবনেশ্বর হইয়া আজ ভূতলশায়ী হইল, সেই আমি দুর্দ্দশাপন্ন হইয়া কি উপায়ে আশ্বস্ত হইব এবং কি রূপেই বা জীবন-ধারণ করিব? ১০

**अहो जागर्त्ति कृच्छ्रेषु दैवं यद्बलभिज्जितः।**
**लुठ्यन्ति भूमौ क्लिद्यन्ति बान्धवा मे स्वपन्ति च॥**

अन्वयः। अहो, दैवं कृच्छ्रेषु जागर्त्ति! यत् बलभिज्जितः मे बान्धवा भूमौ लुठ्यन्ति क्लिद्यन्ति स्वपन्ति च॥ ११

मल्लिनाथः। अहो इति। अहो चित्रं दैवं कृच्छ्रेषु दुःखेषु विषये जागर्त्ति। दुःखोत्पादने नित्यं जागरूकमित्यर्थः। यद्-यस्माद्बलभिज्जित इन्द्रजायिनः। सम्पदादिना क्विप्। मे बान्धवाः कुम्भकर्णादयो भूमौ लुठ्यन्ति परिवर्त्तन्ते क्लिद्यन्ति पूयन्ति च। लुठिक्लिदौ दैवादिकौ। स्वपन्ति दीर्घं निद्रान्ति चेत्यर्थः। स्वपिरदादिः॥ ११

भरतः। अहो, इत्यादि। अहो आश्चर्यम्। कृच्छ्रेषु कष्टेषु विषयेषु दैवं किं जागर्त्ति चेष्टते? सदा दुःखानि कष्ट जनयति इत्यर्थः। यत् यस्मात्, बलभिज्जितः शक्रपराभव-कारिणोऽपि मम बान्धवा रावणादयो भूमौ लुठ्यन्ति लुठिता भवन्ति, क्लिद्यन्ते क्लेदयुक्ता भवन्ति, स्वपन्ति च महानिद्रां प्रविशन्ति इत्यर्थः॥ ११

অনুবাদ। হায়! দৈব সর্ব্বদাই দুঃখোৎপাদনে জাগরূক; কেন না আমার বান্ধবেরা ইন্দ্র-বিজয়ী হইয়াও আজ ভূলুণ্ঠিত, দুর্গন্ধযুক্ত ও মহানিদ্রায় নিদ্রিত হইল। ১১

**शिवाः कुष्णन्ति मांसानि भूमिः पिबति शोणितम्।**
**दशग्रीवसनाभीनां समदन्त्यामिषं खगाः॥ १२**

अन्वयः। दशग्रीवसनाभीनां मांसानि शिवाः कुष्णन्ति, शोणितं भूमिः पिबति, आमिषं खगाः समदन्ति॥ १२

मल्लिनाथः। शिवा इति। दशग्रीवसनाभीनां रावणसपिण्डा-नाम्। 'सपिण्डास्तु सनाभयः' इत्यमरः। "ज्योतिर्जनपद—" इत्या-दिना समानशब्दस्य सभावः। मांसानि शिवाः क्रोष्टारः कुष्णन्ति कर्षन्ति। कुष निष्कर्षणे क्र्यादिः। शोणितं भूमिः पिबति। आमिषं मांसशोणितातिरिक्तमान्त्रवपावसादिकं खगाः काकगृध्रा-दयः समदन्ति सम्यग्भक्षयन्ति॥ १२

भरतः। शिवा इत्यादि। दशग्रीवसनाभीनां रावणसजातीयानां मांसानि शिवाः शृगालाः कुष्णन्ति। भूमिः पृथिवी च तेषां रक्तं पिबति। खगाः पक्षिणः तेषाम् आमिषं मांसशोणितातिरिक्तं वसामज्जादिकं समदन्ति भक्षयन्ति। कुष निष्कर्षे॥ १२

অনুবাদ। আজ শৃগালেরা রাবণের জ্ঞাতিকুলের মাংস টানিয়া খাইতেছে, পৃথিবীদেবী রক্তরাশি পান করিতেছেন, শকুনি প্রভৃতি পক্ষিগণ বসা-মজ্জাদি ভক্ষণ করিতেছে। ১২

येन पूतक्रतोर्मूर्ध्नि स्थीयते स्म महाहवे।
तस्यापीन्द्रजितो दैवाद्ध्वाङ्क्षैः शिरसि लीयते॥ १३

अन्वयः। येन (इन्द्रजिता) महाहवे पूतक्रतोः (इन्द्रस्य) मूर्ध्नि स्थीयते स्म, तस्य इन्द्रजितः अपि शिरसि दैवात् ध्वाङ्क्षैः लीयते॥ १३

मल्लिनाथः। येनेति। येनेन्द्रजिता महाहवे महायुद्धे पूत-क्रतोरिन्द्रस्य मूर्ध्नि स्थीयते स्म स्थितम्। तिष्ठतेर्भावे लट्। "अपराचे च" इति स्मशब्दयोगे भूतानद्यतनापरोक्षार्थे लट्। पुरा-वृत्तस्यापरोक्षत्वात्। तस्य महावीरस्येन्द्रजितोऽपि शिरसि दैवादेववशाद् ध्वाङ्क्षैः काकैर्लीयते स्थीयत इत्यर्थः। लीङ् गतौ। दैवादिकः। भावे वर्त्तमाने लट् यक्॥ १३

भरतः। येनेत्यादि। येन इन्द्रजिता पूतक्रतोः इन्द्रस्य महाहवे महायुद्धे मूर्ध्नि अयतः स्थीयते स्म। दामागेष्ठागिति ईः। तस्यापि इन्द्रजितः शिरसि मस्तके दैवाद् ध्वाङ्क्षैः काकैः लीयते। ली ङ् य भां स्थिपि। उभयत्र भावे क्तो॥ १३

অনুবাদ। যে ইন্দ্রজিৎ মহাসমরে ইন্দ্রের মস্তকোপরি অবস্থান করিয়াছে, আজ দুর্দৈববিনবন্ধন সেই ইন্দ্রজিতেরই মস্তকে কাকগণ অবস্থান করিতেছে। ১৩

स्वर्भानुर्भास्करं ग्रस्तं निष्ठीवति कृताह्निक.[क्लिकः]।
अभ्युपैति पुनर्भूतिं रामग्रस्तो न कश्चन॥ १४

अन्वयः। स्वर्भानुः यस्तं भास्करं निष्ठीवति, सः अपि कृताशितः ( सन् ) पुनः भूतिम् अभ्युपैति, ( किन्तु ) रामग्रस्तः कश्चन न ( अभ्युपैति ) ॥ १४

मल्लिनाथः। स्वर्भानुरिति। स्वर्भानुः राहुः। 'तमस्तु राहुः स्वर्भानुः' इत्यमरः। ग्रस्तं कवलितं भास्करं भास्वन्तं निष्ठीवति निरस्यति। ष्ठिवु निरसने। भौवादिकः। सोऽपि कृताशितः सम्पादितराहुभोजनः सन् पुनर्भूतिं पुनरुत्पत्तिमभ्युपैति, रामग्रस्तस्तु कश्चनापि पुनर्भूतिं नाभ्युपैति ॥ १४

भरतः। स्वर्भानुरित्यादि। स्वर्भानुः राहुः यस्तं ग्रासीकृतं सूर्यं कृताह्निकः कृताशनः सन् निष्ठीवति निरस्यति। ष्ठिवुक्लमाचम इति दीर्घः। भ्वादादिषः इत्यादौ ष्ठिववर्जनात् ... यस्य सत्वम्। रामेण ग्रस्तोऽभिभूतः कश्चित् पुनर्भूतिं वृद्धिं नाभ्युपैति न प्राप्नोति। मेधौरनेधिष इति इणवर्जनात् ... ॥ १४

অনুবাদ। রাহু তেজস্বী সূর্য্যদেবকে গ্রাস করিয়া পুনর্ব্বার ত্যাগ করে, তাই সূর্য্যদেব রাহুগ্রস্ত হইয়াও পুনঃ অভ্যুদয় লাভ করিয়া থাকেন, কিন্তু রামচন্দ্র যাহাকে একবার গ্রাস করেন; সে আর অভ্যুদয় লাভ করিতে পারে না। ১৪

**त्वमजानन्निदं राजन्नीड़िषे स्म स्वविक्रमम्।**
**दातुं नेच्छसि सीतां स्म विषयाणां च नेशिषे ॥१५**

अन्वयः। ( हे ) राजन्! त्वम् इदम् अजानन् स्वविक्रमम् ईड़िषे स्म, सीतां दातुं न इच्छसि स्म, विषयाणां च न ईशिषे ॥ १५

मल्लिनाथः। त्वमिति। हे राजन्! त्वमिदं रामसामर्थ्यमजानन्नपश्यन् स्वविक्रममात्मपौरुषमेवेड़िषे स्तौति स्म। ईड़ स्तुतौ। "ईड़जनोर्ध्वे च" इति चकारात् सकारेऽपि परत इड़ागमः। सीतां दातुं प्रत्यर्पयितुं नेच्छसि अहङ्कारान्नाङ्गीकरोषि। विषयाणां शब्दानां नेशिषे स्म न प्रभवसि स्म। 'मोहं विधत्ते विषयाभिलाषः' इति भावः। "अधीगर्थ—" इत्यादिना कर्म्मणि षष्ठी। सर्वत्र "लट् स्मे"। "अपरोक्षे च" इति लट्। सर्वस्यास्य विभीषणेन प्रत्यक्षत्वादिति ॥ १५

भरतः। त्वमित्यादि। हे राजन्! त्वम् इदं यथोक्तम् अजानन् अहमेव शूर इति स्वविक्रमम् ईड़िषे स्म स्तुतवान्। ईड़ स्त स्तुतौ। ... इत्यादि ... इत्यादिना

इत्यादीन्। विषयाभावेन न ईशिषे न च यथेष्टं विनियुङ्क्षे। मध्यौ दक्षेतीम्। कर्मणि षष्ठी॥ १५

অনুবাদ। হে মহারাজ। তুমি রামের শক্তি না জানিয়াই নিজ পরাক্রমের প্রশংসা করিয়াছিলে, সেই অহঙ্কারে সীতাকে প্রত্যর্পণ কর নাই। সুতরাং শব্দাদি বিষয় ও ভয় করিতে পার নাই। ১৫

**मन्त्रे जातु ब्रुव[वद]न्त्यज्ञास्त्वं तानप्यनुमन्यसे।**
**कथं नाम भवांस्तत्र नावैति हितमात्मनः॥ १६**

अन्वयः। मन्त्रे जातु अज्ञाः ब्रुवन्ति, त्वं अपि तान् अनुमन्यसे, तत्रभवान् आत्मनः हितं कथं नाम न अवैति ? ॥ १६

मल्लिनाथः। मन्त्र इति। किं च मन्त्रे विचारकाले जातु कदापि अज्ञा मूढा एव ब्रुवन्त्युपदिशन्ति। त्वमपि तानेवानुमन्यसे आप्तत्वेनाङ्गीकरोषि। उभयमप्येतद्गर्हितमेवेत्यर्थः। "गर्हायां लडपिजात्वोः" इति गर्हायामपिजातुशब्दप्रयोगे लट्। तत्रभवान् सभवान्। "इतराभ्योऽपि दृश्यन्ते" इति भवदादियोगे सावविभक्तिस्त्रल्प्रत्ययः। आत्मनो हितं कथं नाम नावैति न जानाति। विदुषस्ते गर्हितमेतदित्यर्थः। "विभाषा कथमि लिङ् च" इति चशब्दात् कथं शब्दयोगे गर्हायां लट्॥ १६

भरतः। मन्त्र इत्यादि। मन्त्रणाविषये अज्ञा मूर्खा जातु कदाचित् वदन्ति वल्यन्ति। गर्हितम् एतत् अनधिकारात्। तानपि त्वम् अनुमन्यसे अनुमतवानसि। एतदपि गर्हितम्। जात्वपिभ्यां सदा चेप इति कौ। अज्ञा अपि वदन्तु तत्र भवान् रावणो विद्वानपि आत्मनो हितं नावैति नालोचितवान्। कथं नाम कथम् एतत् ? अन्याय्यम्। कथमा स्त्री च वेति कौ॥ १६

অনুবাদ। মন্ত্রণা সময়ে মূর্খেরাও কখন কখন উপদেশ দিয়া থাকে, তুমি তাহাদের সেই উপদেশ শ্রদ্ধেয় বলিয়া স্বীকার করিয়াছিলে ঐ উভয়ই গর্হিত হইয়াছে, তুমি মাননীয় হইয়া কেন যে তাহা বুঝিলে না, ইহাও ত নিন্দার কথা। ১৬

**आ[अ]पृष्टो नु ब्रवीति त्वां मन्त्रे मातामहो हितम्।**
**न करोमीति पौलस्त्य तदा मोहात्त्वमुक्तवान्॥ १७**

अन्वयः। मन्त्रे मातामहः आपृष्टः (सन्) त्वां हितं नु ब्रवीति, (हे) पौलस्त्य! तदा त्वं मोहात् 'न करोमि' इति उक्तवान्॥ १७

मल्लिनाथः । आपृष्ट इति । मन्त्रे मन्त्रविचारकाले मातामहो माल्यवानापृष्टः किमिदानीं कर्त्तव्यमिति पृष्टः सन् त्वां हितं सीतां प्रत्यर्पयेति शुभोदर्कं वाक्यं ब्रवीति नु ब्रवीति स्म। हे पौलस्त्य रावण! तदा त्वमापृष्ट आप्तवाक्यकरणं पृष्टो मोहात्तदाख्याय करोमीत्युक्तवान्। "नन्वोर्विभाषा" इति ननुशब्दयोरुपपदयोः पृष्टप्रतिवचने भूतार्थे लट्॥ १७

भरतः।० आपृष्ट इत्यादि। त्वया मन्त्रविषये प्रश्ने आपृष्टोऽपि मातामहो माल्यवान् स्वयम् उपेत्य त्वां हितं ब्रवीति उक्तवान्। अभिधानाद्वर्त्तमानसामीप्ये कौ। पितृवच्चेम् नु इति ईम्। हे पौलस्त्य! रावण! न करोमीति मोहात् अज्ञानात् त्वम् उक्तवान्॥१७

অনুবাদ। মাতামহকে মন্ত্রণাকালে কর্ত্তব্য জিজ্ঞাসা করিলে, তিনি তোমাকে সীতার্পণরূপ হিতকথাই বলিয়াছিলেন, কিন্তু পৌলস্ত্য! তখন তুমি মোহাভিভূত হইয়া "তাহা করিব না" এই কথাই বলিয়াছিলে। ১৭

त्वं स्म वेत्थ महाराज यत् स्माह न विभीषणः।
पुरा त्यजसि यत्क्रुद्धो मां निराकृत्य संसदि॥ १८

अन्वयः। (हे) महाराज! विभीषणः यत् आह स्म, (तत्) त्वं न वेत्थ स्म, (यस्मात्) क्रुद्धः (सन्) संसदि मां निराकृत्य पुरा त्यजसि॥ १८

मल्लिनाथः। त्वमिति। हे महाराज! विभीषणो यदाह स्म उक्तवांस्तत्त्वं न वेत्थ स्म न वेत्सि स्म हितत्वेन नाग्रहीरित्यर्थः। उभयत्रापि "लट् स्मे" इत्यपरोक्षे लट्। "विदो लटो वा" इति विदेर्लटि सिपस्थादेशः। ब्रुवः पञ्चानाम्—" इत्यादिना ब्रुवो लटि तिपो णलादेशः। कुतः? यद्यस्मात् क्रुद्धः सन् संसदि सभायां मां निराकृत्य पुरा पूर्वं त्यजसि अत्याक्षीरित्यर्थः। पुरि लुङ् चास्मे" इति स्मशब्दवर्जिते पुराशब्द उपपदे भूतानद्यतने लट्। 'अविवेकः परमापदां पदम्' इति भावः॥ १८

भरतः। त्वमित्यादि। हे महाराज! विभीषणो यदाह स्म उक्तवान्। पञ्च तिप् पञ्च णवाहयेति ब्रुवस्तिपः स्थाने णचे आहादेशश्च। तत्त्वं न वेत्थ न ज्ञातवान्, श्रुतवान् इत्यर्थः। वेत्तेः कोप टीपं वेति सिपस्थप्। यत् यस्मात् क्रुद्धः सन् त्वं सदसि सभायां मां पादप्रहारैश्च निराकृत्य पुरा पूर्वं त्यजसि त्यक्तवान्। यावत्पुराभ्यां भव्ये इत्यत्र चकाराध्याहारात् कौ कालातीत इत्यस्मात् अतीत इत्यनुवर्त्तत इति बोध्यम्; तेनात्र पुराशीने भूते कौ॥ १८

অনুবাদ। হে রক্ষোরাজ! আমি যাহা বলিয়াছিলাম, তাহা তুমি হিতকর বলিয়া গ্রহণ কর নাই, যেহেতু তুমি পূর্ব্বে ক্রুদ্ধ হইয়া সভামধ্যেই আমাকে পদপ্রহারে বিতাড়িত করিয়াছিলে। ১৮

हविर्जक्षिति निःशङ्को मखेषु मघवानसौ।
पत[प्रवा]ति स्वेच्छया वायुरुद्गच्छति च भास्करः १९

अन्वयः। असौ मघवान् मखेषु निःशङ्कः हविः जक्षिति, वायुः स्वेच्छया पतति, भास्करः च उद्गच्छति ॥ १९

मल्लिनाथः। हविरिति। असौ मघवानिन्द्रः। "मघवा बहुलम्" इति पक्षे त्रादेशः। "उगिदचाम्—" इति नुमागमः। संयोगान्तलोपस्यासिद्धत्वान्न नलोपः। मखेषु यज्ञेषु निःशङ्को हविराज्यादिकं जक्षिति भक्षयति। जक्ष भक्षहसनयोः "रुदादिभ्यः सार्वधातुके" इतीट्। वायुः स्वेच्छया पतति वाति। पततीति पुनातीत्यर्थः। भास्करश्चोद्गच्छति स्वेच्छया तपन्नुदेतीत्यर्थः ॥१

भरतः। हविरित्यादि। असौ मघवान् इन्द्रो निर्भयः सन् मखेषु यज्ञेषु हविः हवनीयं घृतादिकं जक्षिति भक्षयति। रुदादित्वादिम्। वायुः स्वेच्छया वाति गच्छति। भास्करः स्वेच्छया उद्गच्छति। "न वेद तं न यत्राग्नि वाते त्वयि विपर्य्ययः" इति चतुर्थश्लोकेनान्वयः, त्वयि सति एवं नासीदिति भावः ॥ १९

অনুবাদ। এখন দেবেন্দ্র যজ্ঞে নিঃশঙ্কচিত্তে ঘৃতাদিভোজন করিতেছেন, বায়ু ইচ্ছামত বহিতেছে, দিবাকরও ইচ্ছানুরূপ তাপ বিতরণ করিতে করিতে উদিত হইতেছেন। ১৯

धनानामीशते यक्षा यमो दाम्यति राक्षसान्।
तनोति वरुणः पाशमिन्दुनोदीयतेऽधुना ॥ २०

अन्वयः। अधुना यक्षाः धनानाम् ईशते, यमः राक्षसान् दाम्यति, वरुणः पाशं तनोति, इन्दुना उदीयते ॥ २०

मल्लिनाथः। धनानामिति। अधुना यक्षाः कुबेरादयो धनानामीशते प्रभवन्ति। स्वाम्यं लभन्त इत्यर्थः। "अधीगर्थ—" इत्यादिना कर्म्मणि शेषे षष्ठी। ईश ऐश्वर्य्ये। शपो लुकि "आत्मनेपदेष्वनतः" इति अदादादेशः। यमोऽन्तकोऽपि राक्षसान् दाम्यति [illegible]। दमु [illegible]। वरुणः पाशं तनोति [illegible]

प्रयुङ्क्ते इत्यर्थः। इन्दुना उदीयते। वृद्धिक्षयाभ्यामुदीयते न तु नित्यपूर्णेनेत्यर्थः। इणो भावे लट्। "अकृत्सार्वधातुकयोर्दीर्घः ॥२०

भरतः। धनानामित्यादि। यथा धनानाम् ईश्वते पालयन्ति। ईश्व लङ् ऐश्वर्ये। मान्तोऽदमनः। यमो राक्षसान् दाम्यति वशीकरोति। शमादित्वात् दीर्घः। वरुणः पाशं तनोति विस्तारयति। अधुना इदानीं शशिना उदीयते। भावे क्तो। अधुनेति सर्वत्र योज्यम्। पूर्वमेवं नासीदिति भावः॥ २०

অনুবাদ। এখন যক্ষেরা ধনের অধিপতি হইবে, যমরাজ রাক্ষসের শাস্তিবিধাতা হইবে, বরুণদেব নির্ভয়ে পাশ অস্ত্র ব্যবহার করিবে, চন্দ্রমা বৃদ্ধিক্ষয় অনুসারে উদিত হইবেন। ২০

**शाम्यत्यृतुसमाहारस्तपस्यन्ति वनौकसः।**
**न[नो]नमस्यन्ति ते बन्धून् वरिवस्यन्ति नामराः २१**

अन्वयः। ऋतुसमाहारः शाम्यति, वनौकसः तपस्यन्ति, अमराः ते बन्धून् न नमस्यन्ति न वरिवस्यन्ति॥ २१

मल्लिनाथः। शाम्यतीति। ऋतूनां समाहारः सम्भूयवृत्तिः शाम्यति निवर्त्तते किन्तु क्रमशो वर्त्तन्त इत्यर्थः। वनौकसो मुनयस्तपस्यन्ति विश्रब्धं तपश्चरन्ति। "कर्मणो रोमन्थ—" इत्यादिना क्यङ् तपसः परस्मैपदञ्च। अमरा देवाश्च ते तव बन्धून् न नमस्यन्ति पूर्ववन्न पूजयन्ति। न वरिवस्यन्ति न परिचरन्ति। "नमोवरिवश्चित्रङः क्यच्"। नमसः पूजायां वरिवसः परिचर्य्यायाम् ॥२१

भरतः। शाम्यतीत्यादि। ऋतूनां वसन्तादीनां समाहारः सम्भूयावस्थानं शाम्यति। वनौकसो मुनयः तपस्यन्ति तपः कुर्वन्ति। नमस्तपोवरिव इति क्यः। अमराः तव बन्धून् नो नमस्यन्ति न प्रणमन्ति। पूर्ववत् क्यः। न च वरिवस्यन्ति न परिचरन्ति तव बन्धूनां परिचर्य्यां न कुर्वन्ति इत्यर्थः। पूर्ववत् क्यः॥ २१

অনুবাদ। ঋতুসকল আর একসঙ্গে প্রবর্ত্তিত হইবে না, (পর্য্যায়ক্রমে প্রকাশ পাইবে) বনবাসী ঋষিরা নির্ভয়ে তপস্যা করিবেন, দেবতারা তোমার বন্ধুবান্ধবকে আর নমস্কার বা তাহাদের পরিচর্য্যাও করিবেন না। ২১

**श्रीश्च क्रु[नं ह्र]ष्यति लङ्कायां विरज्यन्ति समृद्धयः।**
**न वेद तन्न यस्यास्ति मृते त्वयि विपर्य्ययः॥ २२**

अन्वयः। लङ्कायां श्रीः च क्रुध्यति, समृद्धयः विरज्यन्ति, त्वयि मृते यस्य विपर्य्ययः न अस्ति तत् न वेद॥ २२

অনুবাদ। আরও দেখ ইন্দ্র নিজশক্তি প্রাপ্ত হইবেন, বিষ্ণু লক্ষ্মীকে নিজ আয়ত্ত করিবেন, দেবদন্তীরা আনন্দিত হইবেন এবং মেঘগণ আশ্চর্য্যরূপ উন্নতিলাভ করিবে। ২৩

**बिभ्रत्यस्त्राणि सामर्षा रणकाम्यन्ति चामरा: ।**
**चकासति च मांसादां तथा रन्ध्रेषु जाग्रति ॥२४**

अन्वय: । अमरा: सामर्षा: अस्त्राणि बिभ्रति, रणकाम्यन्ति च, चकासति च, तथा मांसादां रन्ध्रेषु जाग्रति च ॥ २४

मल्लिनाथ: । बिभ्रतीति । किं चामरा: सामर्षा: अस्त्राणि बिभ्रति धारयन्ति । रणमात्मन इच्छन्ति रणकाम्यन्ति च । "काम्यच्च" इति काम्यच्प्रत्यये तदन्ताद्धातोर्लट् । चकासति प्रकाशन्ते च, तथा मांसादां रक्षसां रन्ध्रेषु अवकाशेषु जाग्रत्य-वहधति । उभयत्रापि "जक्षित्यादय:—" इत्यभ्यस्तसंज्ञा । "अद-भ्यस्तात्" इति झस्यादादेश: ॥ २४

भरत: । बिभ्रतीत्यादि । अमरा: सामर्षा: सकोपा: सन्त: अस्त्राणि बिभ्रति धारयन्ति । णि टु डुभृञ् धारणपोषणयो: । ह्वादी रे हि । पृभामर्ह्रिं: खे रे । आत्मनो रण-मिच्छन्ति च । लि: काम्यक् स्वेच्छायाम् । चकासति दीप्यन्ते । चकास न् लु दीप्तौ । अदोऽद रे । तथा मांसादां राक्षसानां रन्ध्रेषु जाग्रति सावधाना भवन्ति । जागृ न् लु जागरे ॥ २४

অনুবাদ। দেবতারা সক্রোধে অস্ত্রধারণ করিয়া যুদ্ধ ইচ্ছা ও নির্ভয়ে বিরাজ করিবেন ও রাক্ষসের বিপদ্ রূপ অবকাশে অবস্থিত হইবেন। ২৪

**चञ्चूर्यन्तेऽभितो लङ्कामस्मांश्चाप्यतिशेरते ।**
**भूमयन्ति स्वसामर्थ्यं कीर्त्तिं न: कनयन्ति च ॥२५**

अन्वय: । लङ्काम् अभित: चञ्चूर्य्यन्ते, अस्मान् अपि अतिशेरते, च स्वसामर्थ्यं च भूम यन्ति. न: कीर्त्तिं कनयन्ति च ॥ २५

मल्लिनाथ: । चञ्चूर्य्यन्त इति । किञ्च लङ्कामभित उभयतो-ऽन्तर्बहिश्चेत्यर्थ: । "अभित:परित:—" इत्यादिना द्वितीया । चञ्चूर्य्यन्ते गर्हितं चरन्ति स्वच्छन्दं चरन्तीत्यर्थ: "लुपसद—" इत्या-दिना चरतेर्यङ्प्रत्यय: । "चरफलोश्च" इत्यभ्यासस्य नुगागम: । "उत्परस्यात:" इत्युत्वम् । "हलि च" इति दीर्घ: । अस्मानतिशेरते

च अतिक्रामन्ति च । "शीङो रुट्" इति रुडागमः । अस्मानर्थं स्वप्रभावं भूमयन्ति भूमवत्कुर्वन्ति बहूकुर्वन्तीत्यर्थः । भूमशब्दात्-त्वन्तात् 'तत्करोति' इति णिचि णाविष्ठवद्भावे विन्मतोर्लुकि टिलोपे च साधुः । नोऽस्माकं कीर्त्तिं कनयन्त्यल्पयन्ति च । अल्पशब्दात् 'तत्करोति' इति णिचि णाविष्ठवद्भावे "युवाल्पयोः कनन्यतरस्याम्" इत्यल्पशब्दस्य वा कनादेशः ॥ २५

भरत: । चमूर्ध्यन इत्यादि । अमरा इत्यनुषज्यते । बहाम् अभितः अभयतो बाह्यतोऽभ्यन्तरतश्च चमूर्थ्यन्ते गर्हितं चरन्ति परिभ्रमन्ति इत्यर्थः । गत्यर्थाद् गृ लुप चर चरेति यङ्, चरफलोश्चेति उक् इति खेर्गुण उक् उकारश्च । लङ्कामिति धिक्समयेति द्वी । तथा अस्मानपि अतिशेरते अतिक्रामन्ति । शिङो रेङ:, मान्ती रम्, मान्तीऽदनत: । स्वमामर्थं स्वशक्तिं भूमयन्ति वर्द्धयन्ति । बहोर्भावे भूमादेश:, भूयोभूमनभूयिष्ठा इति निपातनात् बहुशब्दस्य इमनप्रत्ययान्तस्य रूपम् । तं करोतीति लि: ह्यत्याख्याने णि: णौमंशेति णित्, टेर्लोप: । भावयन्तीति क्वचित् पाठ: । तदा बहुशब्दस्य औ भादेश:स्यादितिपर: । स्वमते भूधातोर्णान्तस्य रूपम् । एतावन्तं कालमनवस्थितत्वात् उज्ज्वलयन्ति इत्यर्थ: । भूयन्तीति क्वचित् पाठ: । तदा बहुशब्दस्य औ भूयादेशो वेति पर: । स्वमते बहुशब्दस्य ईयसौ भूय इति रूपम् । तस्मात् णि । बहुतरं कुर्वन्तीत्यर्थ: । तथा नोऽस्माकं कीर्त्तिं कनयन्ति अल्पयन्ति । अल्पशब्दात् णि: । युवाल्पौ कन् वेति कनादेश: ॥ २५

অনুবাদ। দেবতারা এখন লঙ্কার মধ্যে ও বাহিরে স্বচ্ছন্দ বিচরণ আমাদিগকেও অতিক্রমণ নিজশক্তি প্রসারণ এবং আমাদের কীর্ত্তি হ্রাস করিবেন। ২৫

दिशो व्यश्नुवते दृप्तास्त्वत्कृतां जहति स्थितिम् ।
चोदयन्ति च ते[न:]क्षुद्रा हसन्तित्वां[न्तस्त्वां]विपन्नतम्

अन्वय: । दृप्ता: ( ते सुरा: ) दिश: व्यश्नुवते, त्वत्कृतां स्थितिं जहति, क्षुद्रा: ते विपन्नतं त्वां हसन्ति चोदयन्ति च ॥ २६

मल्लिनाथ: । दिश इति । किञ्च दृप्तास्ते सुरा दिशो व्यश्नुवते सर्वा दिशो व्याप्नुवन्ति । त्वत्कृतां स्थितिं मर्य्यादां जहति त्यजन्ति । किञ्च क्षुद्रा अल्पास्ते विपन्नतं विपन्नं त्वां हसन्ति चोदयन्ति प्रत्युत त्वामेव क्षुद्रमाचक्षत इत्यर्थः । क्षुद्रशब्दात् 'तदाचष्टे' इत्यर्थे णिचि णाविष्ठवद्भावे "स्थूलदूर" इत्यादिना यणादिपरलोपः पूर्वस्य गुणश्च ॥ २६

भरतः । दिश इत्यादि । अत्रापि अमरा इत्यनुषज्यते । इमाः सन्तो दिशो व्यश्नुवते व्याप्नुवन्ति । अशू ङ व्याप्तिसंहत्योः । श्नुश्नोरित्युव् । मान्तोऽदनतः । त्वया कृतां स्थितिं व्यवस्थां जहति त्यजन्ति । ओ हाक् लि त्यागे । श्नाभ्योराल्लोप्यः । अन्तोऽदह्रेः । क्षुद्रा अल्पा अपि विपन्नं त्वां हसन्तो नीऽस्मान् क्षुद्रान् कुर्व्वन्ति आचक्षते वा । क्षुद्रशब्दात् पूर्व्ववत् णिः, वाढान्तिकेत्यादिना क्षोदादेशः । इमा दुष्टलोकाः, क्षुद्राः क्षुद्रलोका इत्यन्ये ॥२६

অনুবাদ। তাঁহারা সগর্ব্বে দশদিক্ ব্যাপ্ত হইবেন, তোমার ব্যবস্থা সকল ত্যাগ করিবেন, তাঁহারা ক্ষুদ্র হইলেও তোমাকে বিপন্ন দেখিয়া উপহাস করিবেন ও তোমাকেই ক্ষুদ্র বলিবেন। ২৭

**शमं शमं नभस्वन्तः पुनन्ति परितो जगत् ।**
**उज्जिहीषे महाराज त्वं प्रशान्तो न किं पुनः ॥ २७**

अन्वयः । नभस्वन्तः शमं शमं परितः जगत् पुनन्ति ; ( हे ) महाराज ! त्वं पुनः प्रशान्तः ( सन् ) किं न उज्जिहीषे ? ॥ २७

मल्लिनाथः । शमं शममिति । नभस्वन्तो वायवः शमं शमं शान्त्वा शान्त्वा । आभीक्ष्ण्ये णमुल् द्विर्वचनञ्च । परितो जगत् पुनन्ति प्रवहन्ति । शान्ता अपि पुनरुज्जिहत इत्यर्थः । हे महाराज ! त्वं पुनः प्रशान्तो निर्व्वाणः सन् किञ्चन किञ्चिदपि नोज्जिहीषे नोज्जीवसि । ओहाङ् गतौ । "भृञामित्" इत्यभ्यासस्येत्वम् । "ई हल्यघोः" इतीकारः ॥ २७

भरतः । शममित्यादि । नभस्वन्तो वायवः शमं शमं शान्त्वा शान्त्वा परितः सर्व्वतो जगत् पुनन्ति पवित्रयन्ति । पू ञ गि च, चकारात् शोधे । प्वादेः स्वो ने इति ह्रस्वः । णम् वाभीक्ष्ण्ये इति शमेर्णम् आभीक्ष्ण्ये द्वित्वं लोकतः सिद्धम् । हे महाराज ! त्वं पुनः प्रशान्तः सन् किं न उज्जिहीषे न उद्गच्छसि ? ओ हा ङ् लि गतौ । श्नाभ्योराल्लोप्य इति इः ॥ २७

অনুবাদ। বায়ু প্রশান্ত হইয়াও আবার জগতের সর্ব্বত্র মৃদুমন্দ বহিতে থাকে, কিন্তু মহারাজ! তুমি একবার প্রশান্ত হইয়াও কি পুনরায় উজ্জীবিত হইবে না। ২৭

**प्रोर्णोति शोकश्चित्तं मे सत्त्वं संशाम्यतीव मे ।**
**प्रमार्ष्टि दुःखमालोकं मुञ्चाम्यूर्जं त्वया विना ॥ २८**

अन्वयः । त्वया विना शोकः मे चित्तं प्रोर्णोति, मे सत्त्वं संशाम्यति इव ; दुःखम् आलोकं प्रमार्ष्टि, ऊर्ज्जं च मुञ्चामि ॥ २८

मल्लिनाथः। प्रोर्णौतीति हे महाराज! त्वया विना शोको मे चित्तं प्रोर्णौत्यावृणोति। मे मम सत्त्वं प्राणः। 'प्राणे बलेऽन्तःकरणे' इति सत्त्वार्थेषु यादवः। संशाम्यतीव विरमतीव। दुःखं शोक आलोकं प्रकाशं प्रमार्ष्टि लुम्पतीत्यर्थः। ऊर्जं बलम्। मुष्णामि॥ २८

भरतः। प्रोर्णौतीत्यादि। हे महाराज! शोको मे मम चित्तं प्रोर्णौति। ऊर्णोः पित्त्वे वृरिति पचे वृः, प्रोर्णौतीति पाठे—गुणाभावपचे रपिद्वत्तुत इति त्रिः। सत्त्वं शाम्यतीव शान्तमिव। दुःखं कर्तृ, आलोकम् आलोचनं प्रमार्ष्टि निरोधयति। मृजेरिक-ङितीति त्रिः। ऊर्जम् ऊर्जस्वलत्व मुष्णामि। मुष् लु श प औ मोचे। नुण्। न त्वया विना इति सर्वत्र योज्यम्॥ २८

অনুবাদ। হে মহারাজ! তোমার অভাবশোক আমার মনকে আবৃত করিতেছে, আমার জীবন যেন বহির্গত হইতেছে, দুঃখ আমার জ্ঞানালোক লোপ করিতেছে এবং আমি বলহীন হইয়া পড়িতেছি। ২৮

के न संविद्रते नान्यस्त्वत्तो बान्धववत्सलः।
विरौमि शून्ये प्रोर्णौमि कथं मन्युसमुद्भवम्॥ २९

अन्वयः। बान्धववत्सलः त्वत्तः अन्यः। (नास्तीति) के न संविद्रते, (अतः) शून्ये (सति) विरौमि, मन्युसमुद्भवं कथं प्रोर्णौमि?॥ २९

मल्लिनाथः। क इति। बान्धववत्सलो बन्धुप्रियस्त्वत्तोऽन्यो नास्तीति के वा न संविद्रते न विदन्ति। सर्वेऽपि विदुरित्यर्थः। "समो गम्यृच्छि—" इत्यादिना तङ्। "वेत्तेर्विभाषा" इति रुडागमः। अतः शून्ये रिक्ते सति विरौमि क्रन्दामि मन्युसमुद्भवं शोकोदयं कथं प्रोर्णौमि छादयामि वारयामीत्यर्थः॥ २९

भरतः। के नेत्यादि। त्वत्तोऽन्यो बान्धवेषु वत्सलः स्नेहवान् नास्ति, इति के जना न जानन्ति? समो गम्यृच्छेत्यादिना वेत्तेर्न। नात्मी रम् विदस्तु वेति पाक्षिकी रम्। अहं शून्ये बन्धुरहितप्रदेशे विरौमि शब्दं करोमि। रु ल ध्वनौ। रपिद्वत्तुत इति त्रिः। कथं केन प्रकारेण मन्युसमुद्भवं शोकोत्पादं प्रोर्णौमि आच्छादयामि? ऊर्णोः पिदित्यस्याप्रवृत्ति-पचे पूर्ववद् त्रिः॥ २९

অনুবাদ। তোমার তুল্য আর কেহ বন্ধুবৎসল নাই, ইহা কে জানে না? তাই আমি তোমার অভাবে রোদন করিতেছি? এই শোকরাশি কিরূপে নিবারণ করিব? ২৯

हेन विलिख्य विनिश्वस्य दीर्घमुष्णं च निश्वस्य स्वराकाशमालोक्य। 'स्वः स्वर्गे चान्तरिक्षे च' इति विश्वः। एते च भूमालेखनादयश्चिन्तानुभावाः। चिन्ता च सीतालोकालोकापवादशङ्कयेति द्रष्टव्यम् ॥ ८

मल्लिनाथः। उक्तवानिति। अलङ्कृतां सीतामानय। विधौ लोट्। इति विभीषणमुक्तवानिति योजना। अथ तेन विभीषणेन गत्वा सीतावासं प्राप्य प्रणम्य मैथिली मधुरं वच उक्ता। दुह्यादित्वादप्रधाने कर्म्मणि क्तः ॥ ९

भरतः। उक्त इत्यादि। एवमुक्ते सति राघवो जनापवादशङ्कया किं कर्त्तव्यमिति चिन्तयन् क्ष्मां लिखित्वा विनिश्वस्य स्वरालोक्य आकाशं दृष्ट्वा विभीषणम् उक्तवान् इत्यन्वयः। भूमिलिखनादिकं चिन्तया भवतीति जात्युक्तिः। भावस्तु अयम्—आगतेन्द्रियस्य रावणस्य वशा सीता कथं ग्राह्या? लोको मां किं वदिष्यति? अविचारेण त्यागेऽपि महादोषः; तस्मात् समानयतु, विचार्य्य यद्युक्तं तत् कर्त्तव्यमिति ॥ ८

भरतः। उक्तवानित्यादि। अलङ्कृतां सीतां त्वम् आनय। विधौ लोट्। इति विभीषणम् उक्तवान् इत्यन्वयः। तदनन्तर विभीषणेन गत्वा प्रणम्य मधुरं वाक्यं सीता प्रोक्ता ॥ ९

অনুবাদ। হে কাকুৎস্থকুলনন্দন! আপনার দর্শনোৎসুক সীতাদেবীকে আনয়ন করুন; রামচন্দ্র ইহা শুনিয়া পাদাঙ্গুষ্ঠাঙ্গুলী দ্বারা ভূমিলিখন, দীর্ঘ উষ্ণ নিশ্বাস ত্যাগ এবং আকাশ নিরীক্ষণ পূর্ব্বক বিভীষণকে এই কথা বলিলেন যে, সীতাকে অলঙ্কারে সজ্জিত করিয়া আনয়ন কর। তখন বিভীষণ সীতা সমীপে গমন পূর্ব্বক তাঁহাকে প্রণাম করিয়া সুমধুর বাক্যে বলিলেন। ৮—৯

**जहीहि शोकं सन्धेहि प्रीतये मानसं पुनः। ***
**रावणे जहिहि द्वेषं जहाहि प्रमदावनम् ॥१०**

अन्वयः। (हे देवि!) शोकं जहीहि, पुनः मानसं प्रीतये संधेहि, रावणे द्वेषं जहिहि, प्रमदावनं जहाहि ॥ १०

मल्लिनाथः। जहीहीति। हे देवि! शोकं पतिवियोगदुःखं जहीहि त्यज। पुनर्भूयोऽपि मानसं प्रीतये सन्तोषाय सन्धेहि धेहि। "घ्वसोः—इत्येत्वाभ्यासलोपौ। रावणे द्वेषं वैरं जहिहि। तस्य मरणान्तत्वादिति भावः। प्रमदावनं जहाहि इतो निर्ग-

* "जहीहि शोकं वैदेहि" इति पाठान्तरम्।

त्यजेत्यर्थः । ओहाक् त्यागे । सर्वत्र विधौ लोट् । सेर्हिरादेशः । "जहातेश्च" इति विकल्पादित्वमीत्वञ्च । "आ च हौ" इत्यात्वं चेति त्रैरूप्यम् ॥ १०

भरतः । जहीहीत्यादि । हे वैदेहि । शोकं जहीहि त्यज । ओहाङ्गताविति जहातेरौ । प्रीणयै प्रीत्यर्थं पुनः मानसं धेहि घटय । डुधाञ् धारणे धाञो धेः । रावणविषयं द्वेषं जहिहि तस्य हतत्वात् । दरिद्रो जिहीष्व इत्यादिना पक्षे ङि. । प्रमदावनम् अशोकवनिकां जहाहि । हौ क्ङा चेति पक्षे ङा । सर्वत्र विधौ लोट् ॥ १०

অনুবাদ। হে দেবি পতিবিয়োগ! দুঃখ ত্যাগ করুন, পুনর্ব্বার মনকে প্রীত করিতে চেষ্টা করুন, রাবণের প্রতি দ্বেষ ত্যাগ করুন এবং অশোকবন হইতে নির্গত হউন। ১০

स्नाह्यालिम्प च * धूपाय निवस्स्वाविध्य च स्रजः ।
रत्नान्यामुञ्च सन्दीप्ते हविर्जुहुधि पावके ॥ ११

अन्वयः । (त्वं) स्नाहि, आलिम्प च धूपाय निवस्स्व, स्रजः आविध्य च, रत्नानि आमुञ्च, सन्दीप्ते पावके हविश्च जुहुधि ॥ ११

मल्लिनाथः । अथ युग्मेन सीतायाः कर्त्तव्यमाह—स्नाहीत्यादि । स्नाहि बाह्यान्तरशुद्ध्यर्थमाप्लवस्वेत्यर्थः । 'आप्लवः स्नानञ्च' इत्यमरः । ष्णा शौचे । अपो लुकि सेर्हिरादेशः । आलिम्प चन्दनादिना गात्रमनुलिम्पेत्यर्थः । लिप उपदेहे । तुदादिः । "अतो हेः" इति हेर्लुक् । धूपाय श्रीवासादिधूपेनाङ्गं संस्कुर्वित्यर्थः । एतच्च स्नानान्तरकृत्यम् । धूप सन्तापे । "गुपू धूप—" इत्यादिना आयप्रत्ययान्तात् लोटि शपि हेर्लुक् । निवस्स्व वस्त्रमाच्छादय । वस आच्छादने । अदादिः । लोटि "थासः से । "सवाभ्यां वामौ" । धातुप्रत्ययसकारयोः श्लिष्टता । स्रजो माल्यानि चाविध्य ग्रथान । व्यध ताड़ने । दिवादिः । उपसर्गवशादर्थान्तरत्वम् । "ग्रहिज्या—"इत्यादिना सम्प्रसारणम् । हेर्लुक् । रत्नानि रत्नाभरणान्यामुञ्च प्रतिमुञ्च धारयेत्यर्थः । सन्दीप्ते प्रज्वलिते पावके हविराज्यादिकं जुहुधि जुहुतात् "हुझल्भ्यो हेर्धिः" ॥ ११

* "स्नाह्यनुलिम्प" इति पाठान्तरम् ।

भरत:। स्नाहीत्यादि। स्नाहि स्नानं कुरु, ततोऽनुलेपनं चन्दनादिना कुरु। लिपि:-मुचादि:। धूपाय आत्मानं धूपान्वितं कुरु। धूप तापे। कम कान्तौ गुपधूपेत्याय:। विवस्त्र वस्त्रं परिधेहि। वस स्रज् सूनी। स्रजं मालाञ्च आविध्य परिधेहि। व्यध्यौ ताडे, आङ्पूर्व: परिधाने। ग्रहजयपाद्योरिति जि:। रत्नानि आमुञ्च परिधत्स्व। सन्दीप्ते पावके हविर्जुहुधि। हुझल्भ्यो हेर्धि:॥ ११

অনুবাদ। বহিঃ শুদ্ধির জন্য স্নান চন্দনাদিলেপন, শ্রীনিবাসাদি ধূপে অঙ্গসংস্কার, বস্ত্রপরিধান মালা পরিধান, রত্নাভরণধারণ এবং প্রজ্বলিত অগ্নিতে ঘৃতাহুতি প্রদান করুন। ১১

अद्धि सत्[त्वं] पञ्चगव्यं च छिन्धि संरोधजं तम:।
आरोह शिविकां हैमीं छिषां जहि मनोरथान्॥१२

अन्वय:। (त्वं) सत् पञ्चगव्यं च अद्धि, संरोधजं तम: छिन्धि, हैमीं शिविकाम् आरोह, छिषां मनोरथान् जहि॥ १२

मल्लिनाथ:। अद्धीति। सदनुपहतं गोरिमानि गव्यानि गोमयादीनि। "गवादिभ्यो यत्" इति प्राक्क्रीतीयार्थेन यत्प्रत्ययेन सम्बन्धसामान्यं लक्ष्यते। तानि पञ्च समाहृतानि पञ्चगव्यम्। पात्रादित्वात् स्त्रीत्वप्रतिषेध:। तच्चाद्धि आभ्यन्तरशुद्ध्यर्थं भक्षय। अद भक्षणे। हेर्धिरादेश:। संरोधजं निरोधजं तम: शोकम्। 'तम: शोके गुणान्तरे' इति विश्व:। छिन्धि त्यजेत्यर्थ:। छिदेर्लोटि सिपि हेर्धि:। हैमीं सौवर्णीम्। विकारार्थे "नस्तद्धिते" इति टिलोप:। शिविकामारोह। छिषां मनोरथान् जहि उन्मूलय। हन्तेर्लोटि सेर्हिरादेशे "हन्तेर्ज:" इति जादेश:। सर्वत्र विधौ परिनियोगकरणे वा लोट्। अत्र प्रथमं स्नानं तत: पञ्चगव्यप्राशनं ततो होमस्ततोऽनुलेपनमित्यादिक्रमो द्रष्टव्य:। अर्थाच्चेति न्यायेन पाठक्रमादर्थक्रमस्य बलीयस्त्वादिति॥ १२

भरत:। अद्धि त्वमित्यादि। शरीरशुद्ध्यर्थं पञ्चगव्यं गोघृतादिकम् अद्धि भक्षय। अद लौ भक्षे। हुझल्भ्यो हेर्धि:। गोरेतानि गव्यानि, विकारमर्हन्ति च्य: जोदोतोऽव्यदिति अव्यहावात् यत्नायवायाव इत्यव्। पञ्चानां गव्यानां समाहार इति पात्रादित्वान्न ईप्। संरोधो बन्दीकरणं तज्जनितं तम: शोकं छिन्धि अपनय। छिदे रुधादित्वात् श्नम्। हेर्धि:। हैमीं स्वर्णमयीं शिविकां नरयानम् आरोह। आरूढ़ा सती छिषां मनोरथान् अभिलाषान् जहि नाशय। अशे शिश्वाधीति हिप्रत्यस्य हन्तेर्जादेश:। सर्वत्र विधौ निमन्त्रणे वा लोट्॥ १२

অনুবাদ। অন্তঃশুদ্ধির জন্য বিশুদ্ধ পঞ্চগব্য ভক্ষণ, অবরোধের জন্য দুঃখ ত্যাগ, স্বর্ণ শিবিকায় আরোহণ এবং শক্র লোকের বাসনা বিনষ্ট করুন। ১২

**तृणेढु तद्वियोगोत्थां राजन्यानां पतिः शुचम्।**
**भवताद्देवि युक्ता * त्वमत ऊर्ध्वं स्ववेश्मनि॥१३**

अन्वयः। राजन्यानां पतिः तद्वियोगोत्थां शुचं तृणेढु, (हे) देवि ! त्वम् अत ऊर्ध्वं स्ववेश्मनि युक्ता भवतात्॥ १३

मल्लिनाथः। तृणेढ्विति। किञ्च राजन्यानां पतिः राजराजो रामस्त्वद्वियोगोत्थां त्वद्विरहजन्याम्। "सुपि स्थः" इति कः। "उदः स्थास्तम्भोः पूर्वस्य" इति पूर्वसवर्णादेशः। शुचं शोकं तृणेढु हिनस्तु। तृह हिंसायाम्। लोटि तिपि एरुत्वम्। "हो ढः"। तकारस्य "झषस्तथोः—इति धत्वम्। ततः ष्टुत्वे ढलोपः। हे देवि ! अत ऊर्ध्वं स्ववेश्मनि स्वगृहे युक्ता पतियुक्ता भवताद्भव। आशिषि लोट्। सेर्ह्यादेशे "तुह्योः—" इति तातङादेशः॥ १३

भरतः। तृणेढ्वित्यादि। राजन्यानां क्षत्रियाणां पतिः रामः त्वद्वियोगात् उत्थितां शुचं तृणेढु हन्तु। स्थानान्तरादिति स्थो कः, उदःस्थः स्थास्तम्भोरिति सलोपः। अतोऽनन्तरकालात् ऊर्द्ध्वं स्ववेश्मनि अयोध्यायां त्वं पत्या अवियुक्ता भवतात् भूयाः। उभयत्राशिषि लो अन्तोत्तमत्व वाशिषि॥ १३

অনুবাদ। রাজরাজেশ্বর রাম আপনার বিয়োগসম্ভূত শোক দূর করুন। হে দেবি! ইহার পর আপনি নিজগৃহে চিরকালের জন্য পতির সহিত মিলিত থাকুন। ১৩

**दीक्षस्व सह रामेण त्वरितं तुरगाध्वरे।**
**ईक्षस्व पत्या प्रीतेन प्रीत्या प्रेक्षस्व राघवम्॥१४**

अन्वयः। रामेण सह त्वरितं तुरगाध्वरे दीक्षस्व, प्रीतेन पत्या ईक्षस्व, प्रीत्या राघवं प्रेक्षस्व॥ १४

मल्लिनाथः। दीक्षस्वेति। रामेण सह त्वरितं तुरगाध्वरेऽश्वमेधे दीक्षस्व दीक्षाख्यं संस्कारं भज। आशिषि लोट्। प्रीतेन मुदितेन पत्या भर्त्रा ईक्षस्व प्रेक्ष्यस्व। ईक्षेः कर्मणि लोट यकि

* "भवताद्वियुक्ता" इति पाठान्तरम्।

शासः से। "सवाभ्याम्—"इत्येकारस्य वादेशः। त्वं च प्रीता राघवमीक्षस्व पश्य। निमन्त्रणे लोट्॥ १४

भरतः। दीक्षस्वेत्यादि। तुरगाध्वरे अश्वमेधे रामेण सह त्वरितं त्वं दीक्षस्व दीक्षिता भूयाः। प्रीतेन पत्या इक्ष्यस्व दृष्टा भूयाः। कर्म्मणि यक्। त्वमपि प्रीता सती राघवं प्रेक्षस्व। सर्व्वत्राशिषि गौ॥ १४

অনুবাদ। রামের সহিত সত্বর অশ্বমেধ-যজ্ঞে দীক্ষিত হউন, পতি প্রীতি-পূর্ণনেত্রে আপনাকে দর্শন করুন, আপনিও প্রীতিসহকারে শ্রীরামচন্দ্রকে অবলোকন করুন। ১৪.

अयं नियोगः पत्युस्ते कार्या नात्र विचारणा।
भूषयाङ्गं प्रमाणं चेद्रामं गन्तुं यतस्व च॥ १५

अन्वयः। अयं ते पत्युः नियोगः, अत्र विचारणा न कार्य्या, प्रमाणं चेत् अङ्गं भूषय, रामं गन्तुं यतस्व च॥ १५

मल्लिनाथः। अयमिति। हे देवि! अयं स्नानादिस्ते पत्युः रामस्य नियोग आज्ञा। अत्रास्मिन्नर्थे विचारणा विमर्शो न कार्य्या। प्रमाणं चेद्रामनियोगः कर्त्तव्यश्चेदित्यर्थः। अङ्गं शरीरं भूषय प्रसाधय। रामं गन्तुं यतस्व प्रवर्त्तस्व। निमन्त्रणे लोट्॥१५

भरतः। अयं नियोग इत्यादि। तव पत्युः अयं स्नानादौ नियोग आज्ञा। अत्रार्थे किं कर्त्तव्यमिति विचारणा न कार्य्या। यदि तव रामः प्रमाणं तदा अङ्गं भूषय स्नानादिपूर्व्वकम् अलङ्कुरु, रामान्तिकं गन्तुं यतस्व यत्नं कुरु॥१५

অনুবাদ। হে দেবি! এই স্নান, ভূষণ-পরিধানাদি করিবার জন্য আপনার পতির আদেশ, এ বিষয়ে ইতস্ততঃ করিবেন না। যদি পতির আদেশ পালনীয় মনে করেন, তবে গাত্র বিভূষিত করুন এবং রামের নিকট যাইতে যত্নবতী হউন। ১৫

मुदा संयुङ्क्ष्व काकुत्स्थं स्वयं चाप्नुहि संमदम्।
उपेह्यूर्ध्वं मुहूर्त्तात्स[त्त्वं]देवि राघवसन्निधिम्॥१६

अन्वयः। काकुत्स्थं मुदा संयुङ्क्ष्व, (त्वं) स्वयं च सम्मदं आप्नुहि, (हे) देवि! मुहूर्त्तात् ऊर्ध्वं राघवसन्निधिम् उपेहि च॥ १६

मल्लिनाथः। मुदेति। काकुत्स्थं रामं मुदानन्देन संयुङ्क्ष्व

मिश्रय। मोदयेत्यर्थः। यु मिश्रणे। अदादिः। श्नपो लुक्। ङित्त्वान्न गुणः। स्वयं त्वं च सम्मदमानन्दमाप्नुहि। हे देवि! मुहूर्त्तादूर्ध्वं राघवसन्निधिं रामसमीपम्। "उपसर्गे घोः किः" इति कर्म्मणि किप्रत्ययः। उपेहि स्म। "स्मे लोट्" इति स्मशब्दोपपदादूर्ध्वंमौहूर्त्तिकार्थादिण: प्राप्तकाले लोट्। एतत्कालातिक्रमे रामस्य त्वयि विरक्तताशङ्का स्यादिति भावः॥ १६

भरतः। मुदेत्यादि। इतो गत्वा रामं मुदा हर्षेण संयुहि संमिश्रय। यु ल मिश्रणे। स्वयञ्च सम्मदं हर्षं प्राप्नुहि। प्रार्थनायामाशिषि वा लोट्। संयुक्तनोर्हेर्लोपाभावः। हे देवि! अस्मात् मुहूर्त्तात् ऊर्द्धं राघवसन्निधिं त्वम् उपेहि गमिष्यसि। विधिनिमन्त्रणेत्यादिना प्राप्तकाले लोट्। राघवसन्निधिं गन्तुं प्राप्तकालासीत्यर्थः॥ १६

অনুবাদ। আপনি কাকুৎস্থ রামকে আনন্দিত করুন, এবং স্বয়ং আনন্দিতা হউন। হে দেবি! আপনি মুহূর্ত্ত পরেই রামের নিকট উপস্থিত হইবেন। ১৬

ऊर्ध्वं मुहूर्त्तादङ्गोऽङ्ग स्वामिनी स्म भव क्षितेः।
राजपत्नी नियोगस्थमनुशाधि पुरीजनम्॥ १७

अन्वयः। अङ्ग! (त्वम्) अङ्गः मुहूर्त्तात् ऊर्द्धं क्षितेः स्वामिनी भव स्म, राजपत्नी (त्वं) नियोगस्थं पुरीजनम् अनुशाधि॥ १७

मल्लिनाथः। ऊर्ध्वमिति। अङ्ग भो देवि! त्वं मुहूर्त्तादूर्ध्वं क्षितेः स्वामिनी भव स्म। पूर्ववल्लोट्। राजपत्नी त्वं नियोगस्थमाज्ञावर्त्तिनं पुरीजनमयोध्यानगरवासिजनमनुशाधि कर्म्मसु नियुङ्क्ष्व। शासु अनुशिष्टौ। प्रार्थनायां लोट्। "शा हौ" इति शादेशः। तस्यासिद्धवद्भावे "हुझल्भ्यो हेर्धिः"॥ १७

भरतः। ऊर्द्धमित्यादि। अङ्गेति सानुनयसम्बोधनेऽव्ययम्। मुहूर्त्तात् ऊर्द्धं त्वं क्षितेः स्वामिनी भव। पूर्ववत् प्राप्तकाले लोट्। क्षितेः स्वामिनी भवितुं प्राप्तकालासीत्यर्थः। राजपत्नीनियोगस्थं मदादेशाज्ञाकरणतत्परं पुरीजनम् अयोध्यासीनम् अनुशाधि आज्ञापय। आशिषि लोट्। शास ल् लु शासने। अस्मि धिशाधिहन्यस्तिशाधि हिना॥ १७

অনুবাদ। হে দেবি! আপনি মুহূর্ত্ত পরেই ক্ষিতি মণ্ডলের অধীশ্বরী হইবেন। আপনি রাজমহিষী হইয়া আজ্ঞাধীন অযোধ্যাবাসীদিগকে স্ব স্ব কর্ম্মে নিযুক্ত করিবেন। ১৭

उत्तिष्ठस्व मते पत्युर्यतस्वालङ्कृतौ तथा ।
प्रतिष्ठस्व च संद्रष्टुं द्रष्टव्यं तं महीपतिम् ॥ १८

अन्वयः । पत्युः मते उत्तिष्ठस्व, तथा अलङ्कृतौ यतस्व, द्रष्टव्यं तं महीपतिं संद्रष्टुं प्रतिष्ठस्व च ॥ १८

मल्लिनाथः । उत्तिष्ठस्वेति । पत्युर्मते सम्मते विषये उत्तिष्ठस्व उत्सहस्वेत्यर्थः । उत्थानमुत्साहः । "उदोऽनूर्ध्वकर्म्मणि" इति तङ् । तथालङ्कृतौ प्रसाधने च यतस्व प्रवर्त्तस्व । द्रष्टव्यं तं महीपतिं रामं सद्रष्टुं प्रतिष्ठस्व प्रयाहि । प्रार्थनायां लोट् । "समवप्रविभ्यः स्थः" तङ् ॥ १८

भरतः । उत्तिष्ठस्वेत्यादि । मत्समीपे आगम्यतामिति पत्युर्मते अभिप्रेते उत्तिष्ठस्व घटस्व । उदोऽनूर्द्ध्वे इति तङ् । तथा अलङ्करणे यतस्व, दर्शनार्हं महीपतिं रामं सन्द्रष्टुञ्च प्रतिष्ठस्व । प्रतिष्ठानिर्वर्तयेत्यादिना तङ् । सर्वत्र प्रार्थनायां लोट् ॥ १८

অনুবাদ। পতির অভিপ্রেত বিষয়ে উৎসাহান্বিতা ও অলঙ্কার-ধারণে প্রবৃত্তা হউন এবং দ্রষ্টব্য সেই মহীপতি রামকে দেখিতে গমন করুন। ১৮

अनुष्ठाय यथो[यादि]द्दिष्टं नियोगं जनकात्मजा ।
समारूढवती यानं पट्टांशुकवृतानना ॥ १९

अन्वयः । जनकात्मजा यथोद्दिष्टं नियोगम् अनुष्ठाय पट्टांशुकवृतानना (सती) यानं समारूढवती ॥ १९

मल्लिनाथः । अनुष्ठायेति । जनकात्मजा सीता यथोद्दिष्टं यथोक्तं नियोगं स्नानादिभर्त्रादेशमनुष्ठाय कृत्वा पट्टांशुकेन वृतानना कोऽपि मा द्राक्षीदिति संवृतमुखी सती यानं शिविकां समारूढवती ॥ १९

भरतः । अनुष्ठायेत्यादि । पत्युः यथादिष्टं नियोगं स्नानादिकम् अनुष्ठाय कृत्वा जनकात्मजा लज्जया पट्टांशुकेन आवृतानना सती यानं समारूढवती ॥ १९

অনুবাদ। জানকী সীতা যথোক্ত নিয়মে পতির আদিষ্ট স্নানাদি অনুষ্ঠান পূর্ব্বক লজ্জায় পট্টবস্ত্রে মুখমণ্ডল আবৃত করিয়া শিবিকায় আরোহণ করিলেন। ১৯

लज्जानता विसंयोगदुःखस्मरणविक्लवा[ह्वला]।
साम्रा गता[त्वा]न्तिकं पत्युर्दीना रुदितवत्यसौ ॥२०

अन्वयः। लज्जानता विसंयोगदुःखस्मरणविक्लवा साम्रा पत्युः अन्तिकं गता दीना असौ रुदितवती ॥ २०

मल्लिनाथः। लज्जेति। लज्जया नता नम्रमुखी विसंयोगस्य वियोगस्य स्मरणेन विक्लवा विह्वला अत एव सास्रा सबाष्पा पत्युरन्तिकं गता दीना ग्रोच्यासौ सीता रुदितवती रुरोद ॥ २०

भरतः। लज्जानतेत्यादि। असौ लज्जया अवनता सीता पत्युरन्तिकं गत्वा सास्रा सती रुदितवती। यतो वियोगदुःखस्य पूर्वानुभूतस्य स्मरणेन विह्वला, अत एव दीना। विह्वलेति। ह्वल चाले। पचादित्वादच्। विक्लवेति पाठे—क्लव भ ज च भये ॥ २०

अनुवाद। লজ্জায় অধোবদনা সীতা বিয়োগ-দুঃখ স্মরণে বিহ্বল হইলেন এবং সবাষ্পনেত্রে স্বামীর নিকট উপনীত হইয়া কাতরভাবে রোদন করিতে লাগিলেন। ২০

प्राप्तचारित्र्यसन्देहस्ततस्तामुक्तवान्नृपः।
इच्छातो * नाददे सीते त्वामहं गम्यतामतः ॥२१

अन्वयः। ततः नृपः प्राप्तचारित्र्यसन्देहः ताम् उक्तवान् ;—सीते! अहम् इच्छातः त्वां न आददे, अतः गम्यताम् ॥ २१

मल्लिनाथः। प्राप्तेति। ततः सीतागमनानन्तरं नृपो रामः प्राप्तश्चारित्रे पातिव्रत्ये सन्देहो येन स सन् तां सीतामुक्तवान्। किमिति? हे सीते! अहमिच्छातो रागतो नाददे न परिगृह्णामि। त्वत्परिग्रहेच्छा मे नास्तीत्यर्थः। "इच्छार्थेषु लिङ्लोटौ" इति ददातेर्लोटि तङ्। "एत ऐ." इत्येकारस्योत्तमस्यैकारः। अतोऽस्माद्धेतोर्गम्यतां यथेच्छं गच्छेत्यर्थः। गमेर्भावे लोट् ॥ २१

भरतः। प्राप्तेत्यादि। तदनन्तरं रावणेन इयम् उपभुक्ता न वेति प्राप्तः सीताचारित्र्यसन्देहो येन स नृपो रामः तां सीताम् उक्तवान्। चरित्रमेव चारित्र्यं, स्वार्थे ष्यञ्, सन्देहविशेषणम्। मे मम इयम् इच्छा, त्वाम् अहं नाददे न गृह्णीयाम्। गौ चेच्छ.र्थेरिति कामोक्तौ गौ विधाविति विद्यासागरः, प्रार्थनाविवक्षयेति दुर्गः। अतो ईप्सितदेशं त्वया गम्यतामिति ॥ २१

* "इच्छा मे नाददे" इति पाठान्तरम्।

অনুবাদ। সীতা সমীপাগতা হইলে নৃপ রাম সীতাচরিত্রে সন্দেহ করিয়া তাঁহাকে বলিলেন, সীতে! আমি ইচ্ছা করিয়া তোমাকে গ্রহণ করিতে পারি না, অতএব তুমি যথেচ্ছ গমন কর। ২১

**रावणाङ्कपरि[म्लि]क्लिष्टा त्वं हृल्लेखकरी मम।**
**प्री[म]तिं बधान सुग्रीवे राक्षसेन्द्रं गृहाण वा ॥२२**

अन्वयः। रावणाङ्कपरिक्लिष्टा त्वं मम हृल्लेखकरी सुग्रीवे प्रीतिं बधान, राक्षसेन्द्रं वा गृहाण ॥ २२

मल्लिनाथः। स्वस्येच्छाभावे हेतुमाह—रावणेति। रावणस्याङ्के उत्सङ्गे परिक्लिष्टा परिमर्दिता त्वं मम हृल्लेखकरी हृदयव्यथाकारिणी। अतो नेच्छामीत्यर्थः। "कृञो हेतु—" इत्यादिना हेतावानुलोम्येन वा टप्रत्ययः। "हृदयस्य हृल्लेखयदण्लासेषु" इति हृदयस्य हृदादेशः। का तर्हि मे गतिरत आह—सुग्रीवे प्रीतिं प्रेम बधान कुर्वित्यर्थः। राक्षसेन्द्रं विभीषणं वा गृहाण स्वीकुरु। उभयत्र "हलः श्नः शानज्झौ" इति शानजादेशे हिलुक् ॥ २२

भरतः। रावणाङ्केत्यादि। पूर्वोक्तं हेतुद्वयं—हरणसमये रावणाङ्क परिक्लिष्टा परिमर्दिता त्वं मम हल्लेखकरी चेतःपीडाकरी। हृदी लेखं खण्डनं करोतीति हृत्कृष्टः। "चित्तन्तु चेतो हृदयं स्वान्तं हृन्मानसं मनः" इत्यमरवचनं, हृच्छब्देन समासः। परे तु हृदयस्य हृल्लासादाविति सूत्रं कृत्वा लेखस्य लासादित्वात् हृदयशब्दस्य हृदादेशमाहुः। लासादौ हृच्छब्दस्य प्रयोगोऽभिधानात् हृदयशब्दस्य त्वप्रयोगोऽनभिधानादिति स्वमतं साधु लाघवात्। क्व गन्तव्यमित्याह—सुग्रीवे मतिं बधान कुरु। बन्धी ग बन्धे। राक्षसेन्द्रं विभीषणं वा गृहाण इत्याशयो ही ॥ २२

অনুবাদ। তুমি রাবণের ক্রোড়ে পরিমৃদিতা হওয়ায় আমার হৃদয়ে ব্যথা দিয়াছ। এক্ষণে তুমি সুগ্রীবে প্রীতিস্থাপন অথবা রক্ষোরাজ বিভীষণকে গ্রহণ কর। ২২

**यथान भरताद्भोगान् लक्ष्मणं प्रतृणीष्व वा।**
**कामाद्वा याहि मुच्यन्तामाशा रामनिबन्धनाः ॥२३**

अन्वयः। वा भरतात् भोगान् यथान, लक्ष्मणं वा प्रवृणीष्व, कामात् वा याहि, रामनिबन्धनाः आशाः मुच्यन्ताम् ॥ २३

मल्लिनाथः। यथानेति। अथवा भरताद्भोगान् सुखान्ययान

भुङ्क्ष्व । भुज भोजने । पूर्ववच्छानजादेशे ङ्लुक् । लक्ष्मणं वा प्रवृणीष्व । वृञ् वरणे । क्र्यादिकः । कामादयथेच्छं वा याहि । रामनिबन्धना रामविषया आशा अभिलाषा मुच्यन्तां त्यज्यन्ताम् । सर्वत्र "प्रैषातिसर्ग—" इत्यादिनातिसर्गे लोट् । अतिसर्गः कामचाराभ्यनुज्ञा ॥ २३

भरतः । भजस्वेत्यादि । भरताद्वा भोगान् भजस्व भुङ्क्ष्व । भुज प भोजने । ङ्मासाने द्वौ । लक्ष्मणं वा वृणीष्व । वृ ञ्ञि ञ इत्याम् । क्र्यादित्वात् श्नः । कामात् स्वेच्छया वा यत्र कुत्रापि याहि गच्छ । रामनिबन्धना आशाः त्वया मुच्यन्तां, पुनरपि रामो नेष्यति इत्याशाः त्यज्यन्ताम् इत्यर्थः । विधौ गौ ॥ २३

অনুবাদ। অথবা ভরতের নিকট ভোগসুখ উপভোগ কর, কিংবা লক্ষ্মণকে বরণ কর, অথবা ইচ্ছা মত স্থানে যাও। রামবিষয়ক আশা ত্যাগ কর। ২৩

क्व च ख्यातो रघोर्वंशः क्व त्वं परगृहोषिता ।
अन्यस्मै हृदयं देहि नानभीष्टे घटामहे ॥ २४

अन्वयः । ख्यातः रघोः वंशः क्व, परगृहोषिता त्वं च क्व, अन्यस्मै हृदयं देहि, अनभीष्टे न घटामहे ॥ २४

मल्लिनाथः । त्यागे हेतुमाह—क्व चेति । ख्यातो निष्कलङ्कत्वेन लोकविख्यातो रघोर्वंशः क्व, परगृहोषिता परगृहवासकलङ्किता त्वं क्व ? नानयोर्योगो घटत इत्यर्थः । अस्मादन्यस्मै पुंसे हृदयं देहि । अन्यं भजेत्यर्थः । वयन्तु अनभीष्टेऽरुचितेऽर्थे न घटामहे न युज्यामह इत्यर्थः । उभयत्राप्यतिसर्गे लोट् ॥ २४

भरतः । क्व चेत्यादि । परित्यागे हेतुरयं, ख्यातो लोकविदितो रघुवंशः क्व ? परगृहस्थिता त्वञ्च क्व ? उभयं परस्परविरुद्धमिति भावः । अतोऽन्यस्मै चित्तं देहीति विधिः, अनभीष्टेऽनुचिते वस्तुनि वयं न घटामहे ॥ २४

অনুবাদ। কোথায় ভুবনবিখ্যাত নিষ্কলঙ্ক রঘুবংশ আর কোথায় পরগৃহবাসকলঙ্কিতা তুমি? অতএব অন্য পুরুষে চিত্ত সমর্পণ কর, আমি অনভিপ্রেত কার্য্যে যোগদান করিতে পারি না। ২৪

यथेष्टं चर वैदेहि पन्थानः सन्तु ते शिवाः ।
कामास्तेऽन्यत्र तायन्तां विघ्नन्तां त्यज मद्गताम् ॥ २५

अन्वयः। वैदेहि ! यथेष्टं चर, ते पन्थानः शिवाः सन्तु, ते कामाः अन्यत्र तायन्तां, मद्गता विशङ्कां त्यज ॥२५

मल्लिनाथः। यथेष्टमिति। हे वैदेहि ! यथेष्टं चर गच्छ। अतिसर्गे लोट्। ते तव पन्थानः शिवाः क्षेमाः सन्तु। आशिषि लोट्। ते तव कामा अभिलाषा अन्यत्र पुरुषान्तरे तायन्तां वर्द्धयन्ताम्। अतिसर्गे लोट्। मत्कृतां मया करिष्यमाणाम्। आशंसायां भूतवत्प्रत्ययः। विशङ्कामनिष्टागमशङ्कां त्यज। प्राप्तकाले लोट्। शङ्कात्यागस्यायं काल इत्यर्थः ॥ २५

भरतः। यथेष्टमित्यादि। हे वैदेहि। यथेष्टं चर यथेष्टचारिणी भव। विधौ णी। यथेष्टं चरन्त्याः तव पन्थानः शिवा निःशङ्का भवन्तु। आशिषि णी। तव कामा अभिलाषा अन्यत्र तायन्तां स्फीता भवन्तु। तायृङ् पालनसन्तत्योः। आशिषि णी। मयि यथेष्टचारिण्यां रामः किं करिष्यतीति मद्गताम आशङ्कां त्यज। विधौ णी ॥ २५

অনুবাদ। বৈদেহি। তুমি নিজের ইচ্ছানুসারে বিচরণ কর, তোমার গমন পথ নিষ্কণ্টক হউক, তোমার অভিলাষ পুরুষান্তরে বর্দ্ধিত হউক, তুমি আমা হইতে শঙ্কা ত্যাগ কর। ২৫

ततः प्रगदिता वाक्यं
मैथिलाभिजना नृपम्।
स्त्रीसामान्येन सम्भूता
शङ्का मयि विमुच्यताम् ॥ २६

अन्वयः। ततः मैथिलाभिजना नृपं वाक्यं प्रगदिता,—स्त्रीसामान्येन सम्भूता शङ्का मयि विमुच्यताम् ॥ २६

मल्लिनाथः। तत इति। ततो रामवाक्यानन्तरं मैथिलो जनकोऽभिजनः प्रभवो यस्याः सा सीता नृपं रामं वाक्यं प्रगदिता प्रगदितुं प्रवृत्ता। "आदिकर्म्मणि क्तः कर्त्तरि च"। तदेवाह—स्त्रीसामान्येन स्त्रियश्चपला इति सामान्यतः सम्भूता शङ्काविश्वासो मयि विषये विमुच्यताम्। प्रार्थनायां लोट् ॥ २६

भरतः। तत इत्यादि। तद्वचनानन्तरं मैथिलाभिजना मिथिलादेशे सम्भूता सीता नृपं रामं प्रगदितुं प्रवृत्ता। घे आदिके क्तः। जनः पचादित्वात् अच्। अभिजनः

পূর্ব্বাব্দর ইতি বর্দ্ধমান:। "কুলাস্যভিজনান্বয়ী" ইত্যমর:। স্ত্রীসামান্যেন যোষিদন্তর-সাধারণ্যেন সম্ভূতা শঙ্কা মযি বিমুচ্যতাম্। প্রার্থনায়াং লোট্॥ ২৬

অনুবাদ। রামের বাক্যাবসানে মৈথিলী তাঁহাকে বক্ষ্যমাণ কথাগুলি বলিতে লাগিলেন—সাধারণ স্ত্রীলোকই চঞ্চল, আমার প্রতি এইরূপ শঙ্কা ত্যাগ করুন। ২৬

দৈবাদ্বিভীহি কাকুৎস্থ
জিহ্রীহি চ [ত্বং] তথা জনাত্।
মিথ্যা মামভিসংক্রুধ্যন্ন-
বশাং শত্রুণা হৃতাম্॥ ২৭

অন্বয়:। কাকুৎস্থ। শত্রুণা হৃতাম্ অবশাং মাং মিথ্যা অভিসংক্রুধ্যন্ দৈবাদ্ বিভীহি, তথা জনাত্ জিহ্রীহি॥ ২৭

মল্লিনাথ:। দৈবাদিতি। হে কাকুৎস্থ! শত্রুণা হৃতাং বলাদ্-হৃতামবশাং তন্নিরাসাসমর্থাং মাং মিথ্যা অসতী ত্বমিতি মিথ্যাভি-যুজ্যাভিসংক্রুধ্যন্ মহ্যং ক্রুধ্যন্নিত্যর্থ:। "ক্রুধদ্রুহোরুপসৃষ্টয়ো: কর্ম্ম" ইতি সম্প্রদানত্বাপবাদেন কর্ম্মত্বম্। দৈবাদ্বিভীহি। তথা জনাজ্জনং বীক্ষ্য। ল্যব্লোপে পঞ্চমী। জিহ্রীহি লজ্জস্ব। হ্রী লজ্জা-যাম্। উভয়ত্র হের্ঙিত্বান্ন গুণ:। অদুষ্টায়াং মযি দোষমারোপয়তা ত্বয়া দৈবাদ্ভেতব্যং লোকতো হ্রেতব্যং চেত্যর্থ:॥ ২৭

ভরত:। দৈবাদিত্যাদি। হে কাকুৎস্থ। অবশাং পরায়ত্তাং রাবণায়ত্তাং বা শত্রুণা হৃতাং মাম্ অভিসংক্রুধ্যন্ দোষং বিনা মহ্যং কুপ্যন্। দৈবাত্ অধর্ম্মাত্ বিভীহি ভয়ং কুরু। ঞিভী ভি ভীত্যাম্। দরিদ্রো ঙিদ্বৎস ইত্যাদিনা পক্ষে ঙি:। তথা জনাত্ লোকাত্ জিহ্রীহি লজ্জিতো ভব, জনং বীক্ষ্যেত্যর্থ:। যবর্থে পঞ্চমী। বিধৌ লোট্। ক্রুধদ্রুহোরুপসর্গে সম্প্রদানস্য কর্ম্মত্বমিতি পর:। ত্বমতে ক্রিয়াগ্রাহ্যত্বং বিবক্ষ্যম্॥ ২৭

অনুবাদ। কাকুৎস্থ! শত্রু আমাকে বলপূর্ব্বক ধরিয়াছিল, আমার শক্তি না থাকায় তাহার অধীন হইয়াছিলাম, আমাকে অসতী মনে করিয়া আপনি বৃথা আমার উপর ক্রুদ্ধ হইতেছেন এবং অধর্ম্মকে ভয় করিতেছেন ও লোকসমাজে লজ্জিত হইতেছেন। ২৭

चेतसस्त्वयि वृत्तिर्मे [वृत्तिं मे]
शरीरं रक्षसा हृतम् ।
विदांकुर्वन्तु सम्यञ्चो देवा:
सत्यमिदं वच: ॥ २८

अन्वय: । त्वयि मे चेतस: वृत्ति:, शरीरं रक्षसा हृतम्, सम्यञ्च: देवा: इदं वच: मम सत्यं विदांकुर्वन्तु ॥ २८

मल्लिनाथ: । स्वस्यादुष्टतामेवाचष्टे—चेतस इति । त्वयि मे चेतसो वृत्ति: । शरीरमेव रक्षसा हृतम् । सम्यगञ्चन्तीति सम्यञ्च: समवर्त्तिनो देवा: पृथिव्यादय: । अञ्चे: क्विन् । "समः समि" इति सम्यादेश: । इदं वचो मम वाक्यं सत्यं विदांकुर्वन्तु विदन्तु । त एव सुचारित्रशुद्धौ साक्षिण इत्यर्थ: । इति विद ज्ञाने । प्रार्थनायां लोट् । विदांकुर्वन्त्वित्यन्यतरस्याम्" इति विकल्पादाम्प्रत्ययादि-निपातनात्साधु: ॥ २८

भरत: । चेतस इत्यादि । शङ्का विमुच्यतामिति पूर्वोक्ते हेतुद्वयं, रक्षसा मम चित्तं न हृतं किन्तु शरीरमेव हृतं, चेतसस्तु वृत्ति: त्वयि स्थिता ; न चेत एवं, तदा देवा: सम्यञ्च: सर्वत्र वर्त्तमाना इद मम सत्यं वचो विदांकुर्वन्तु जानन्तु। डाम् वा व्यां व्यामिति वैशेडामि, सममञ्चतीति क्विप्, सहसमिर इति सम्यादेश: ॥ २८

অনুবাদ। রাক্ষস আমার দেহই হরণ করিয়াছিল, কিন্তু আমার মনোবৃত্তি আপনাতেই ন্যস্ত ছিল। সর্ব্বব্যাপী দেবগণ আমার এই বাক্য সত্য বলিয়া অবগত হউন, কেন না তাঁহারাই শুদ্ধি ও অশুদ্ধির সাক্ষী। ২৮

त्वं पुनीहि पुनीहीति
पुनन् वायो जगत्त्रयम् ।
चरन् देहेषु जन्तू [भूता]नां
विद्धि मे बुद्धि [ढ्ग] विप्लवम् ॥ २९

अन्वय: । वायो ! पुनीहि पुनीहि इति जगत्त्रयं पुनन् जन्तूनां देहेषु चरन् त्वं मे बुद्धिविप्लवं विद्धि ॥ २९

मल्लिनाथः । सम्प्रति तानेव देवानेकैकशः प्रार्थयते—त्वमिति । हे वायो ! पुनीहि पुनीहीति पुनः पुनः भृशं वा पुनासीति जगत्त्रयं पुनन् शोधयन् जन्तूनां प्राणिनां देहेषु चरन् वर्त्तमानस्त्वं मे मम बुद्धिविप्लवं चित्तदोषं विद्धि जानीहि । ज्ञात्वा तत्फलं प्रापयेत्यर्थः । प्रार्थनायां लोट् । अत्र "क्रियासमभिहारे लोट् लोटौ हिस्वौ वा च तध्वमोः" इति लोट् । तस्य च सर्वत्र वैकल्पिकौ सर्वलकारापवादिनौ हिस्वावादेशौ तत्र परस्मैपदे हिरादेशः । 'क्रियासमभिहारे द्वे भवतः' इति वचनात् द्विवचनं "यथाविध्यनुप्रयोगः पूर्वस्मिन्" इति पुनातेरनुप्रयोगः ॥ २९

भरतः । त्वमित्यादि । हे वायो ! त्वं जगत्त्रय पुनीहि पुनीहीति पुनन् भृशं पुनः पुन र्वा पुनासीत्यर्थः । मुहुर्भृशार्थे हितस्वध्वमिति सर्वस्मिन् काले हिः, वीप्सायां द्वित्वं लोकतः सिद्धम् । पुनर्हि त्वस्याप्रयोगोऽप्यभिधानात्, इति हेतोः जगत्पवित्रीकरणाय भूतानां प्राणिनां देहेषु चरन् । मम बुद्धेः अविप्लवम् अव्यभिचारं विद्धि जानीहि ॥ २९

অনুবাদ । হে বায়ুদেব ! আপনি বারংবার পবিত্র করিবেন—এই ইচ্ছায় ত্রিভুবনকে পবিত্র পূর্ব্বক প্রাণিগণের শরীরে বর্ত্তমান আছেন ; অতএব আপনিই আমার চিত্তদোষ অবগত হইতেছেন ; এক্ষণে আপনি আমার বুদ্ধির দোষগুণ জানিয়া তাহার ফল প্রদান করুন । ২৯

**खमट द्यामटाटोर्वीमित्यटन्त्योऽतिपावनाः ।**
**यूयमापो विजानीत मनोवृत्तिं शुभां मम ॥ ३०**

अन्वयः । अतिपावनाः आपः ! खम् अट, द्याम् अट, उर्वीम् अट, इति अटन्त्यः यूयं मम मनोवृत्तिं शुभां विजानीत ॥ ३०

मल्लिनाथः । खमिति । अत्यन्तं पावयन्ति शोधयन्तीत्यतिपावनाः क्लीबभावविवक्षान्त्यः । अथवात्यन्तं पावनं शोधकं शोधकत्वधर्मो यासु ता इति बहुव्रीहिः । अनुपसर्जनाधिकारादनीकारः । हे आपः ! खमन्तरिक्षलोकमट । द्यां द्युलोकमट । उर्वीं भूलोकमट । अन्तरिक्षादित्रयमटाम इत्येवाटन्त्यो यूयं मम मनोवृत्तिं शुभां शुद्धां विजानीत । जानातेः प्रार्थनायां लोटि यस्य तादृशः । अत्र अन्तरिक्षादिकर्मकारकभेदेनाटनक्रियाभेदादनेकक्रियोपलक्षणसमुच्चयसम्भवात् "समुच्चयेऽन्यतरस्याम्" इति लोट् लोटौ

यथायोगं ङितौ च। "समुच्चये सामान्यवचनस्य" इत्यत्र पूर्वोक्ता-टनक्रियाविशेषानुगताटनक्रियासामान्यस्यानुप्रयोगः॥ ३०

भरतः। खमटेत्यादि। हे आपः! यूयम् अतिपावना अतिपवित्राः। खम् आकाशं वा स्वर्गम्, उर्वीं भूमिञ्च अटत्यः। अटः पूर्ववत् सदा ङिः। इति हेतोः मम शुभ्रां मनो-वृत्तिं यूयं विजानीत। प्रार्थनायां गौ॥ ३०

অনুবাদ। হে অতি পবিত্র জল! তুমি আকাশ, পাতাল ও পৃথিবীতে পরিভ্রমণ কর, অতএব তুমি আমার পবিত্র মনোবৃত্তি জানিতে পারিতেছ। ৩০

**जगन्ति धत्स्व धत्स्वेति दधती त्वं वसुन्धरे।**
**अवेहि मम चारित्रं नक्तन्दिवमविच्युतम्॥ ३१**

अन्वयः। वसुन्धरे! धत्स्व धत्स्व इति जगन्ति दधती त्वं मम चारित्रं नक्तन्दिवम् अविच्युतम् अवेहि॥ ३१

मल्लिनाथः। जगन्तीति। हे वसुन्धरे! धत्स्व धत्स्व दधे दधे धारयामि धारयामीत्येव जगन्ति दधती धारयन्ती त्वं मम चारित्रं नक्तन्दिवमविच्युतं कदाप्यस्खलितमवेहि जानीहि। प्रार्थ-नायां लोट्। अत्र क्रियासमभिहार इत्यादि सर्वं पूर्ववत्। केवल-मात्मनेपदे लोटः स्वादेशः॥ ३१

भरतः। जगन्तीत्यादि। हे वसुन्धरे! जगन्ति धत्स्व धत्स्व त्वं दधती भृशं पुनः पुनः वा जगन्ति दधामीत्यर्थः। आशीरिति धाञ आत्मेप्यः। अभ्यात्तस्यादिजक्षादिति सेर्लुकम्। इति हेतोः त्वं मम चारित्रं चरित्रं नक्तन्दिवम् अविच्युतं रात्रौ दिवा च अस्खलितम् अवेहि जानीहि। प्रार्थने गौ। नक्तन्दिवमिति अचिभ्रुवादित्वात् साध्यम्॥ ३१

অনুবাদ। বসুন্ধরে! তুমি ত্রিভুবন ধারণ করিতেছ, তুমিই আমার চরিত্র দিবারাত্র অবিচ্যুত জানিতে পারিতেছ। ৩১

**रसान् संहर दीप्यस्व ध्वान्तं जहि नभो भ्रम।**
**इतीहमानस्तिग्मांशो वृत्तं ज्ञातुं घटस्व मे॥ ३२**

अन्वयः। तिग्मांशो! रसान् संहर, दीप्यस्व, ध्वान्तं जहि, नभः भ्रम, इति ईह-मानः त्वं मे वृत्तं ज्ञातुं घटस्व॥ ३२

मल्लिनाथः। रसानिति। हे तिग्मांशो भास्कर! रसानुदकानि संहर संहरामि। दीप्यस्व दीप्ये। ध्वान्तं जहि हन्मि। नभः त्वं भ्रम भ्रमामि। इतीहमानो लोकहितार्थं चेष्टमानस्त्वं मे वृत्तं ज्ञातुं घटस्व प्रवर्त्तस्वेत्यर्थः। प्रार्थनायां लोट्। अत्र "समुच्चयेऽन्यतरस्याम्" इति संहाराद्यनुगतसामान्यस्येहनस्यानुप्रयोगः॥ ३२

भरतः। रसानित्यादि! हे तिग्मांशो सूर्य! त्वम् ईहमानः चेष्टमानो रसान् जलानि संहरसि दीप्यसे ध्वान्तं हंसि नभो भ्रमसि। सर्वत्र मुहुर्मुहुरर्थत्वविवक्षया हिस्वौ। क्रियासमुच्चये हिस्वौ क्रियासामान्यस्यानुप्रयोग इति ईहतेरनुप्रयोगः इति परे। इति ईहीः मम वृत्तं चरित्रं ज्ञातुं घटस्वेति प्रार्थना॥ ३२

অনুবাদ। হে ভাস্কর! তুমি জল শোষণ কর, প্রদীপ্ত হও, অন্ধকার নষ্ট কর, আকাশে ভ্রমণ কর, এইরূপে তুমি জগতের হিতের জন্য সর্ব্বদা চেষ্টা করিয়া থাক, অতএব তুমিই আমার চরিত্র জানিতে পারিতেছ। ৩২

स्वर्गे विद्यस्व भुव्यास्स्व
भुजङ्गनिलये भव।
एवं सत्त्वं [वसन्] नभाकाश
संबुध्यस्य कृताकृतम्॥ ३३

अन्वयः। आकाश! स्वर्गे विद्यस्व, भुवि आस्स्व, भुजङ्गनिलये भव, एवं सत् त्वं मम कृताकृतं सम्बुध्यस्व॥ ३३

मल्लिनाथः। स्वर्ग इति। हे आकाश! स्वर्गे विद्यस्व विद्ये। भुवि आस्स्व आसे। भुजङ्गनिलये पाताले भव भवामि। इत्येवं सर्वत्र सत् वर्त्तमानं त्वं मम कृताकृतं च। "विप्रतिषिद्धं चानधिकरणवाचि" इति वैभाषिको द्वन्द्वैकवद्भावः। संबुध्यस्व सम्यगवगच्छ। प्रार्थनायां लोट्। अत्र "समुच्चयेऽन्यतरस्याम्" इति लोट्, लोटो यथायोगं हिस्वौ च। "समुच्चये सामान्यवचनस्य" इत्यनुप्रयोगः। सदिति सत्तायां विद्यत्याद्यनुगतसामान्यरूपत्वात्॥ ३३

भरतः। स्वर्ग इत्यादि। हे आकाश! त्वमपि वसन् स्वर्गे विद्यस्व भुवि तिष्ठसि भुजङ्गनिलये पाताले वससि। पूर्ववत् भृशार्थत्वविवक्षया हिस्वौ। एवं ममापि कृतमकृतञ्च कार्य्यं बुध्यस्वेति प्रार्थना॥ ३३

হে আকাশ! তুমি স্বর্গে মর্ত্তে পাতালে সর্ব্বত্রই বিদ্যমান, তুমি এইরূপে সর্ব্বত্র বিদ্যমান থাকিয়া আমার কৃত ও অকৃত কর্ম্ম সম্যক্‌ভাবে জানিতে পারিতেছ। ৩৩

चितां कुरु च सौमित्रे
व्यसनस्यास्य भेषजम् ।
रामस्तुष्यतु मे वाद्य पापात्
[मां] मुष्णातु वानलः ॥ २४

अन्वयः। सौमित्रे! अस्य व्यसनस्य भेषजं चितां कुरु, अद्य रामः मे तुष्यतु, पापात् अनलः वा मुष्णातु ॥ २४

मल्लिनाथः। इत्थं पृथिव्यादिप्रार्थनानन्तरं लक्ष्मणं प्रार्थयते—चितामिति। हे सौमित्रे! ममास्य व्यसनस्य दूषणस्य भेषजं प्रतीकारं चितां काष्ठसञ्चयं कुरु रचय। विधौ प्रार्थनायां वा लोट्। अद्य रामो मे तुष्यतु निष्पापास्मि चेदिति शेषः। पापाद्धेतोरनलः मुष्णातु प्राणान्मोचयतु वा दहत्वित्यर्थः। मुष मुष स्तेनमोचनपूरणेष्विति क्र्यादौ ॥ २४

भरतः। चितामित्यादि। हे सौमित्रे! मम व्यसनस्य मिथ्यादूषणस्य भेषजं प्रतिक्रियां चितां कुरु। विधौ लो। अद्य वह्नौ विशुद्धायां मयि रामः तुष्यतु अनलो वा पापां मां मुष्णातु दहतु। आमन्त्रणे लो। मुषेरनेकार्थत्वादत्र दाहार्थः; स दाहार्थस्तु भौवादिक एव। यदुक्तम्—"मुष स तेकपूर्त्यौश्च मुषुदाह्यम्। रलावि"ति ॥ २४

অনুবাদ। সৌমিত্রে! আমার এই দোষের প্রতীকারস্বরূপ চিতা নির্ম্মাণ কর। যদি অগ্নি পরীক্ষায় বিশুদ্ধা হই, তবে অদ্য রামচন্দ্র আমার প্রতি সন্তুষ্ট হইবেন, আর যদি পাপ করিয়া থাকি, তাহা হইলে অনল আমাকে দগ্ধ করিবেন। ৩৪

राघवस्य मतेनाथ लक्ष्मणेनाचितां चिताम् ।
दृष्ट्वा प्रदक्षिणीकृत्य रामं प्रगदिता वचः ॥ २५

अन्वयः। अथ राघवस्य मतेन लक्ष्मणेन आचितां चिताम् दृष्ट्वा (सीता) प्रदक्षिणीकृत्य रामं वचः प्रगदिता ॥ २५

मल्लिनाथः । राघवस्येति । अथ सीताप्रार्थनानन्तरं राघवस्य मतेन रामानुमत्या । भावे क्तः । लक्ष्मणेनाचितामारचितां चितां ज्वलितामिति शेषः । दृष्ट्वा प्रदक्षिणीकृत्य रामं वचः प्रगदिता प्रगदितुं प्रवृत्ता । "आदिकर्म्मणि क्तः कर्त्तरि च" ॥ ३५

भरतः । राघवस्येत्यादि । अथ अनन्तरं राघवस्य मतेन अनुज्ञया अनुज्ञातेन वा लक्ष्मणेन आचितां रचितां चितां दृष्ट्वा प्रदक्षिणीकृत्य सीता रामं वचः प्रगदिता कथयितुं प्रवृत्ता ॥ ३५

অনুবাদ। সীতার এই প্রার্থনায় রামের অনুমতিক্রমে লক্ষ্মণ চিতা প্রজ্বলিত করিলেন, তদ্দর্শনে সীতা অগ্নি প্রদক্ষিণ পূর্ব্বক রামকে পরবর্ত্তী বাক্যগুলি বলিতে লাগিলেন। ৩৫

प्रवपाणि वपुर्वह्नौ रामाहं शङ्किता त्वया ।
सर्वे विदन्तु शृण्वन्तु भवन्तः सप्लवङ्गमाः ॥ ३६

अन्वयः । राम ! त्वया शङ्किता, अहं वपुः वह्नौ प्रवपाणि, सप्लवङ्गमाः सर्वे भवन्तः विदन्तु शृण्वन्तु ॥ ३६

मल्लिनाथः । प्रेति । हे राम ! त्वया शङ्किता दुष्टेति सन्दिग्धाहं वपुर्वह्नौ प्रवपाणि । आमन्त्रणे लोट् । "आनि लोट्" इति णत्वम् । सप्लवङ्गमाः पूर्वप्रार्थितदेवरक्षोगणानामप्युपलक्षणम् । सर्वे भवन्त इति रामलक्ष्मणयोः पूजायां बहुवचनम् । शृण्वन्तु विदन्तु साक्षात् कुर्वन्तु चेत्यर्थः । प्रार्थनायां लोट् ॥ ३६

भरतः । प्रवपाणीत्यादि । हे राम ! दुष्टेति शङ्किता अहं वह्नौ वपुः प्रवपाणि क्षिपाणि । निमन्त्रणे लोट् । प्रागवन्नी च इत्यादिना णत्वम् । हे अत्र सन्निहिता देवादयः भवन्तः प्लवङ्गमैः सह वक्ष्यमाणं मद्वचनं शृण्वन्तु । ते च सर्वे तदर्थं जानन्तु इति प्रार्थये ॥ ३६

অনুবাদ। হে রাম ! আপনি আমাকে দুষ্টা বলিয়া সন্দেহ করিয়াছেন তাই আমি অগ্নিতে দেহ বিসর্জ্জন করিতেছি, এক্ষণে রাক্ষস, মনুষ্য, বানরগণ সহ আপনারা সকলেই অবগত হউন এবং প্রত্যক্ষ করুন। ৩৬

मां दुष्टां ज्वलितवपुः प्लुषाण वह्ने
संरक्ष क्षतमलिनां सुहृद्यथा वा ।

एषाहं क्रतुषु वसोर्यथाज्यधारा
त्वां प्राप्ता विधिवदुदीर्णदीप्तिमालम् ॥ ३७

इति भट्टिकाव्ये तिङन्तकाण्डे लोट्प्रदर्शनो
नाम विंशतितम: सर्ग: ॥

अन्वय:। वह्ने ! दुष्टा मां ज्वलितवपु: प्लुषाण, अतमलिनां वा सुहृद् यथा रक्ष ; एषा अहं क्रतुषु वसो: आज्यधारा यथा त्वां उदीर्णदीप्तिमालं विधिवत् प्राप्ता ॥ ३७

मल्लिनाथ:। मामिति। हे वह्ने ! दुष्टां चेन्मां ज्वलितवपु: सन् प्लुषाण दहेत्यर्थ:। धातुरुक्त:। "हल: श्न:—" इति शानजादेशे। हलुक्। अतमालनां वा निष्पापां चेत् सुहृद्यथा मित्रमिव रक्ष। एषाहं क्रतुषु वसोर्धनस्य फलभूतस्य सम्बन्धिनो वसोर्धारां जुहोति वसोर्मे धारा सदिति सत्साधनत्वे विधानात्। अथ चाङ्गेषु फलश्रुतेरर्थवादत्वात् वसोरग्नेर्विष्णोश्च देवताया: सम्बन्धिनोत्यर्थ:। "अथ किंदेवता वसोर्धारेति।" "अग्निर्वसुस्तस्यैषा धारा विष्णुर्वसुस्तस्यैषा धारा" इति श्रुते:। आज्यधारा यथा घृतधारेव उदीर्णदीप्तिमालमूर्ध्वोद्गतज्वालाजालं त्वां विधिवद्यथाशास्त्रं प्राप्ता इति अववदन्ती पावकं प्रविष्टेत्यर्थ:। उपमोत्प्रेक्षयो: संसृष्टि: ॥३७

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहामहोपाध्याय-
कोलाचलमल्लिनाथसूरिविरचिते भट्टिकाव्यव्याख्याने
सर्वपथीनाख्याने लोड्विलासे सीतावाङ्मपरि-
शुद्धिर्नाम विंश: सर्ग: ॥ २०

भरत:। मां दुष्टामित्यादि। हे वह्ने ! यदि अहं दुष्टा तदा ज्वलितशरीर: सन् मां दुष्टां प्लुषाण दह। पूर्ववत्। यदि अहं च्युतमलिना अष्टपापा। अच्युतचरितामिति क्वचित्पाठ:। तदा मां सुहृदिव रक्ष। आमन्त्रणे प्रार्थने वा लोट्। एषा अहम् उदीर्णदीप्तिमालम् उन्नतज्वालासमूहं त्वां विधिवत् सम्यक् प्राप्ता क्रतुषु यज्ञेषु वसो: आज्यधारेव ॥ ३७

इति महामहोपाध्यायहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरतसेन-
कृतायां मुग्धबोधिन्यां भट्टिटीकायां सीतापरिशुद्धिर्नाम
विंशतितम: सर्ग: ॥ २०

অনুবাদ। হে অগ্নিদেব! যদি আমি দুশ্চরিত্রা হইয়া থাকি, তাহা হইলে তুমি প্রজ্বলিতরূপে আমাকে দগ্ধ কর, অথবা নিষ্পাপ হইলে বন্ধুর ন্যায় আমাকে রক্ষা কর। উদ্গতাশিখ বহ্নিতে বসুধারাবৎ প্রযুক্ত ঘৃতধারার ন্যায় এই আমি তোমাতে যথাবিধি প্রবেশ করিলাম। ৩৭

# एकविंशः सर्गः ।

समुत्क्षिप्य ततो वह्निर्मैथिलीं राममुक्तवान् ।
काकुत्स्थ दयितां साध्वीं त्वमाशङ्किष्ठाथाः कथम् ॥१

अन्वयः । ततः वह्निः मैथिलीं समुत्क्षिप्य रामम् उक्तवान्—काकुत्स्थ ! त्वं साध्वीं दयितां कथम् आशङ्किष्ठाथाः ॥ १

मल्लिनाथः । अस्मिन् सर्गे लृङ्विलासमधिकृत्याह—समुत्क्षिप्येति । ततः सीताया वह्निप्रवेशानन्तरं वह्निर्मैथिलीं सीतां समुत्क्षिप्य हस्ताभ्यामूर्ध्वमुन्नमय्य राममुक्तवान् । किमिति ? हे काकुत्स्थ ! त्वं साध्वीं पतिव्रतां दयितां कथमाशङ्किष्ठथाः कथं शङ्कितवान् । गर्हितमेतत्कथं कृतमित्यर्थः । अत्र गर्हाकथंशब्दयोर्लिङ्निमित्तयोः सम्भवात् "लिङ्निमित्ते लृङ् क्रियातिपत्तौ" । "भूते च" । "गर्हायाम्—" इति चानुवृत्तौ "विभाषा कथमि लिङ् च" इति भूते गर्हायां च विकल्पाल्लृङ् । कुतश्चिद्वैगुण्यात् क्रियायामनभिनिर्वृत्तिः क्रियातिपत्तिः । वैगुण्यं च सामग्र्यभावो विरुद्धप्रत्ययोपनिपातो वा । इह चासाधुत्वशङ्काविरुद्धसाधुत्वप्रत्ययोपनिपातादसाधुत्वशङ्कनक्रियातिपत्तिः । सामान्यतः क्रियातिपत्तौ लिङ्निमित्ते लृङ् । एते च विशेषाः क्रमशोऽनुसन्धेयाः ॥ १

भरतः । अथ शीमधिकृत्योच्यते । तस्याः परमते लृङिति संज्ञा ।—तामुत्क्षिप्येत्यादि । ततोऽनन्तरं वह्निः तां मैथिलीम् उत्क्षिप्य हस्ताभ्याम् आकाशे उद्धृत्य राममुक्तवान् । किं तदित्याह—हे काकुत्स्थ ! दयितां प्रियां साध्वीं पतिव्रतां त्वं कथम् आशङ्कितवान् ? तत् अयुक्तम् आशङ्कितम् । व्यर्थात्मनि शीति शी । अत्र आत्वर्थस्यानिष्पत्तिर्वाक्यादेव गम्यते ॥ १

অনুবাদ । সীতা অগ্নিতে প্রবেশ করিলে অগ্নিদেব তাঁহাকে দুই হস্তে ধারণ পূর্ব্বক উত্তোলন করিয়া রামকে বলিলেন—হে কাকুৎস্থ ! তুমি সাধ্বী স্ত্রীর প্রতি দোষাশঙ্কা করিতেছ কেন ? ১

नाभविष्यदियं शुद्धा यद्यपाख्य[धक्ष्य]महं ततः।
नैवैनां [न चैनां]पक्षपातो मे धर्मादन्यत्र राघव ॥२

अन्वयः। अहम् एनां यदि न एव अपाख्यं, ततः इयं शुद्धा न अभविष्यत्, राघव! अयं पक्षपातः धर्मात् अन्यत्र मे नास्ति ॥ २

मल्लिनाथः। नेति। अहमेनां यदि नैवापाख्यं नैवारक्षिषं ततस्तस्मादरक्षणाद्धेतोरियं शुद्धेति ख्याता नाभविष्यत्। रक्षिता तु मया शुद्धेति ख्यातेत्यर्थः। न च पक्षपातान्मया रक्षितेत्याह—अयमिति। हे राघव! अयं पक्षपातो ममता धर्मादन्यत्र मे नास्ति। पा रक्षणे। भू सत्तायाम्। "भूते च" इति भूतार्थे लृङ्। अरक्षणाशुद्धिख्यानयोर्हेतुहेतुमद्भावो लिङ्निमित्तम्। "हेतुहेतुमतोर्लिङ्" इति विधानात्। सामग्र्यभावेनाशुद्धिख्यानानिष्पत्तेः क्रियातिनिष्पत्तिश्च ॥ २

भरतः। आयक्षा व्यावर्त्तयन्नाह—नाभविष्यदित्यादि। यदि इयं सीता शुद्धा नाभविष्यत् न भूतवती, तदा अहम् एनाम् अधक्ष्यं दग्धवानस्मि। दहो दाहे। दाहेऽहं, अभावात्सेति धः। हे राघव! धर्म्मात् अन्यत्र मे मम पक्षपातो नास्त्येव अपि तु धर्म्मे स्थित एव ॥ २

অনুবাদ। আমি যদি ইঁহাকে রক্ষাই না করিতাম, তাহা হইলে ইনি শুদ্ধচরিত্রা বলিয়া প্রসিদ্ধা হইতেন না। হে রাঘব! ধার্ম্মিক ভিন্ন আমার পক্ষপাত (মমতা) অন্য কোথাও হয় না। ২

अपि तव रिपुः सीतां नार्थयिष्यद्दुर्मतिः। *
क्रूरं जात्ववदिष्यच्च जातुस्तोष्यच्छ्रियं स्वकाम् ॥ ३
सङ्कल्पं नाकरिष्यच्च तवेयं शुद्धमानसा।
सत्यामर्षमवाप्यास्त्वं राम सीतानिबन्धनम् ॥ ४

अन्वयः। तव रिपुः दुर्दुर्मतिः अपि सीतां न अर्थयिष्यत् जातु क्रूरं न अवदिष्यत, जातु स्वकां श्रियं न अस्तोष्यत् च;—राम! इयं शुद्धमानसा सङ्कल्पं न अकरिष्यत् च सीतानिबन्धनं सत्यामर्षं त्वम् अवाप्स्यः ॥ ३—४

---

* "नार्थयिष्यत दुर्मतिः" इति पाठान्तरम्।

मल्लिनाथः । अथ सर्वसाक्षी भगवान् पावकः सीताशुद्धिप्रदर्शनाय सीतारावणयोः परस्परमसम्बन्धवृत्तं तत् श्लोकद्वयेनाह—अपीत्यादि । तत्र तस्मिन् सम्भाषणसमये । "सतम्याख्रल्" । जयमङ्गलाकारस्तु तत्र रिपुः स भवान् रिपुः रावणः । भवच्छब्दोऽर्थाद्गम्यते । तेन "इतराभ्योऽपि दृश्यन्ते" इति त्रल् इत्याह—तदतिक्लिष्टम् । भवदादिशब्दप्रयोग एव तद्विधानादार्थिकत्वायोगाद्दुष्टस्य रिपोस्तथाविशेषणायोगाच्च । हे राम ! रिपुर्दशास्योऽदुर्मतिरदुष्टबुद्धिः । यच्छब्दवर्यादिति शेषः । अपि बाढं सीतां नार्थयिष्यत् मां भजेत्यर्थमर्थनं प्राथनां नाकरिष्यत् । अर्थयतेरात्मनेपदित्वात् अर्थशब्दात् तत्करोतिण्यन्तात् "उताप्योःसमर्थयोर्लिङ्" इत्यत्र वाढार्थापिशब्दे लिङ्निमित्तं तत्र"वोताप्योः" इति वाशब्दानुवृत्तानित्यं भूते क्रियातिपत्तौ लृङ् । अजादित्वादाडागमः । दुर्मतित्वेनादुर्मतित्वप्रयुक्ता प्रार्थना क्रियातिपत्तिः । किं च नाहमवकल्पयामि न सम्भावयामि यद्यदुर्मतिरभविष्यज्जातु कदापि क्रूरं परुषं न चावदिष्यत् । जातु स्वकां श्रियं सम्पदं न नास्तोष्यत् स्तुतवांश्च । अत्र "जातुयदोर्लिङ्" इति उक्तजातुशब्दयोगोऽनवक्लृप्तिश्च लिङ्निमित्तं पूर्ववत् । दुर्मतित्वात् तद्विरुद्धक्रूराभिवदनस्वसम्पत्तिस्तवनक्रियातिपत्तौ भूते वा लृङ् ॥ ३

मल्लिनाथः । सङ्कल्पमिति । हे राम ! इयं सीता शुद्धमानसा शुद्धचित्ता नाभविष्यच्च न भूना । नञो व्यवहितान्वयः । भवनक्रियाध्याहारश्च । तत्र रावणे सङ्कल्पमकरिष्यत् कृतवती चेति नावकल्पयामि न सम्भावयामि । किं चेय शुद्धमानसा नाभविष्यत्त्वं च सीतानिबन्धनं सीतागोचरं सत्यामर्षं यथार्थकोपमवाप्स्यसि अवाप्तवानसि । एतन्नमर्षयामीत्यर्थः । पूर्ववदनवक्लृप्तिर्लिङ्निमित्तम् । उभयत्रामर्षः । "अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि" इत्यत्र तयोस्तन्निमित्तत्वमुक्तम् । सीतायाः शुद्धमानसत्वात्संकल्पनसत्यामर्षणप्राप्तिक्रियातिपत्तिः । "वोताप्योः" इति वाशब्दानुवृत्तेरुभयत्र भूते वा लृङ् ॥ ४

नार्थयिष्यत न प्रार्थितवान् ? अपि तु प्रार्थितवानेव। क्रूरं परुषं जातु कदाचित् नावदिष्यत् नोक्तवान् ? अपि तु उक्तवान् एव। स्वकाम् आत्मीयां श्रियं न अश्लाघिष्यत् ? अपि तु मम ईदृशी महती सम्पत्तिरिति स्तुतवान् एव। अत्र निषिद्धस्य प्रार्थनादिधात्वर्थस्य अनिष्पत्तिरुक्ती। ३

भरतः। मङ्कल्पमित्यादि। तव इत्थं प्रयतमाने रावणे सङ्कल्पं सङ्गमाभिप्रायम् इयं सीता नाकल्पिष्यत् न कृतवती, यत इयं शुद्धमानसा। शुद्धहृदयत्वात् धात्वर्थस्यानिष्पत्तिः। हे राम! सीतानिबन्धनम् अमर्षं क्रोधम् अवाप्स्यः अवाप्तवानसि। इदं मया, सङ्कल्पक्रियायामसत्यां क्रोधस्यानिष्पत्तिरत्र वाक्यात् गम्यते ॥ ४

অনুবাদ। যদি তখন ( প্রতারক কথার সময়ে ) রাবণ দুষ্টবুদ্ধি না হইত, তবে নিশ্চয় সীতাকে প্রার্থনা করিত না, কদাপি কর্কশ কথা বলিত না, এবং কখনও নিজ সম্পত্তির গৌরব করিত না, রাম! সীতা যদি বিশুদ্ধস্বভাব না হইতেন, এবং পাপ-বিষয়ে সঙ্কল্প করিতেন, তাহা হইলে আপনি ইঁহার প্রতি যথার্থই কোপ করিতে পারিতেন। ৩-৪

**त्वयाद्रक्ष्यत किं नास्याः शीलं संवसता चिरम्।**
**अदर्शिष्यन्त वा चेष्टाः कालेन बहुनापि[न]किम् ॥५**

अन्वयः। चिरं संवसता त्वया अस्याः शीलं किं न अद्रक्ष्यत, बहुना अपि कालेन चेष्टाः वा किं न अदर्शिष्यन्त ॥ ५

मल्लिनाथः। त्वयेति। किं च चिरं संवसता सह वसता त्वया तस्याः शीलं सद्वृत्तं नाद्रक्ष्यत किं न ज्ञातं किमित्यर्थः। दृशेः कर्मणि लृङि चिण्वदिडभावपक्षे रूपम्। न च मनोवृत्तिदुर्ज्ञानेत्याह—बहुनापि कालेन चेष्टा मनोवृत्तिव्यञ्जका कायारम्भा वा नादर्शिष्यन्त न दृष्टाः किमित्यर्थः। दृशेस्तत्रैव चिण्वदिटि रूपम्। 'शीलं संवसता ज्ञेयं तच्च कालेन भूयसा' इत्याशयाभिज्ञतोऽपि त्वयावगतमेवेति गर्हितमेतदुक्तमित्यर्थः। "किंवृत्ते लिङ्लृटौ" इत्युक्तयोगर्हानिमित्तयोर्लिङ्निमित्ते क्रियातिपत्तौ भूते वा लृङ्। चिरसंवासलक्षणशीलचेष्टोपलम्भकारणसम्भवात्तद्विकृततदनुपलम्भक्रियातिपत्तिः ॥ ५

भरतः । त्वयेत्याह । अस्याः सीतायाः शीलं चरितं चिरं चिरकालं संवसता सहवासं कुर्वता त्वया किं नाद्रक्ष्यत नोपलब्धम् अभूत् ? अपि तु उपलब्धमेव । चेतो मनोवृत्तं नोपलब्धमिति चेदाह—अस्याः चेष्टा क्रिया वा, किं बहुना कालेन नादर्शिष्यत ? अपि तु दृष्टा एव । अत्र शीलचेष्टादर्शनस्य धात्वर्थस्य संवासेनानिष्पत्तिर्वाक्यात् अन्यतं । हनयहृहय च इति पदं मिश्र् ॥ ५

অনুবাদ। আপনি এতকাল একত্র বাস করিয়াও কি ইঁহার সৎস্বভাব জানিতে পারেন নাই ? এই বহুকালেও কি ইঁহার মনের অনুরূপ শারীরিক বৃত্তি দেখিতে পান নাই ? নিশ্চয়ই দেখিয়াছেন। ৫

**यावज्जीवमशोचिष्यो नाहास्यश्चेदिदं तमः ।**
**भानुरप्यपतिष्यत्क्ष्मामक्षोभिष्यत चेदियम् ॥ ६**

अन्वयः । इदं तमः न अहास्यः चेत् यावज्जीवम् अशोचिष्यः, इयम् अक्षोभिष्यत चेत् भानुः अपि क्ष्माम् अपतिष्यत् ॥ ६

मल्लिनाथः । यावदिति । इदं तमः परगृहवाससमावादियमशुद्धेति विपरीतज्ञानं नाहास्यश्चेत् न हास्यसि न त्यक्ष्यसि चेत् यावज्जीवमशोचिष्यः शोचिष्यसि । तमःशोकयोर्हेतुहेतुमद्भावे लिङ्निमित्ते स्वोपदेशेन तमःशोकोत्पत्तिप्रतिबन्धात् क्रियातिपत्तौ च भविष्यदर्थे नित्यं लृङ् । किं चेयमक्षोभिष्यतचलिष्यच्चेत् भानुरपि क्ष्मामपतिष्यत् भुवि निपतेदित्यर्थः । तद्वदुत्पातप्रायमस्याश्चापलमसम्भावितमित्यर्थः । दृष्टान्तर्जानतासम्भावनाबुद्धा प्रतिबन्धात्तद्विरुद्धसम्भावनाबुद्धिक्रियातिपत्तिः । सीताचापलमानुपातयोर्हेतुहेतुमद्भावो लिङ्निमित्तम् । भूते लृङ् ॥ ६

भरतः । यावज्जीवमित्यादि । चेत् यदि इदं तमः परगृहोषिता सीता न परिशुद्धेति शोकावहज्ञानं त्वं नाहास्यः न त्यक्ष्यसि, तदा यावज्जीवम् अशोचिष्यः शोकं करिष्यसि । अन्यच्च, चेत् यदि इयं सीता अक्षोभिष्यत दुश्चेष्टा अभविष्यत्, तदा भानुरपि ऊर्द्ध्वगामी सन्मानपि क्ष्मां पृथिवीं अपतिष्यत् तत्र पतितोऽभवदित्यर्थः ॥ ६

অনুবাদ। "সীতা পরগৃহে বাস করিয়াই দুশ্চরিত্রা হইয়াছেন" এইরূপ ভ্রমাত্মক ধারণা যদি আপনি ত্যাগ না করেন, তাহা হইলে আজীবন অনুতাপ ভোগ করিবেন, অধিক কি ইনি যদি বিচলিত হইতেন, তাহা হইলে সূর্য্যদেবও ভূতলে পতিত হইতেন। ৬

समपत्स्यत राजेन्द्र स्त्रैणं यद्यत्र चापलम् ।
लोकपालाश्च नायास्यन् मूर्त्तिमन्तः कलिद्रुहः * ॥ ७

अन्वयः। राजेन्द्र! स्त्रैणं चापलं अत्र समपत्स्यत यदि, कलिद्रुहः लोकपालाः च मूर्त्तिमन्तः न आयास्यन् ॥ ७

मल्लिनाथः। समेति। किं च—हे राजेन्द्र! रामचन्द्र! स्त्रीणां सम्बन्धि स्त्रैणं स्त्रीषु सम्भावितम्। "स्त्रीपुंसाभ्याम्—" इति नञ्प्रत्ययः। चापलं चारित्रस्खलनम् अत्र समपत्स्यत सम्पन्नं चेत् कलिद्रुहः पापासहिष्णवो लोकपालाश्च मूर्त्तिमन्तो विग्रहवन्तः सन्तो नायास्यन् नागमिष्यन्। आगताश्च ततः शुद्धेति विवक्षितोऽर्थः। चापलादिकपालानागमयोर्हेतुहेतुमद्भावोऽत्र लिङ्निमित्तम्। आगमप्राप्तिप्रत्यक्षेणानागमनात् क्रियातिपत्तिः। भूते लृङ् ॥ ७

भरतः। समेत्यादि। हे राजेन्द्र! अत्र सीतायां यदि स्त्रैणं स्त्रीसम्बन्धि चापलं चाञ्चल्यं समपत्स्यत सम्पन्नम् अभूत्, तदा अमी कलिद्रुहः पापद्वेषशीला लोकपाला इन्द्रादयो मूर्त्तिमन्तो नायास्यन् आगता नाभूवन् ॥ ७

অনুবাদ। হে নৃপচূড়ামণি! যদি স্ত্রীজনোচিত চরিত্র-স্খলন ইঁহাতে সম্ভবপর হইত, তাহা হইলে পাপকার্য্যে অসহিষ্ণু লোকপালগণ মূর্ত্তিমান্ হইয়া কখনই আগমন করিতেন না। ৭

आश्चर्यं यच्च यत्र स्त्री
कृच्छ्रेऽवर्त्स्यन्मते तव ।
वासादस्यां विपन्ना[नष्टा]यां
किं किमालप्स्यथाः फलम् ॥ ८

अन्वयः। यच्च यत्र स्त्री कृच्छ्रे तव मते अवर्त्तिष्यत् आश्चर्यं, किं च वासात् अस्यां विपन्नायां किं फलम् आलप्स्यथाः ? ॥ ८

मल्लिनाथः। किं च नात्र स्त्रीसामान्यबुद्धिः कार्य्येत्याह—आश्चर्य्यमिति। यच्चयत्रयोरेकस्यैव लिङ्निमित्तत्वात्तथैव योज्यते।

---

* "लोकपाला इहायास्यन्सती नामी कलिद्रुहः" इति पाठान्तरम्।

यत्र यत्र वा स्त्री स्त्रीत्वे सति कृच्छ्रेऽतिदुष्करे तव मतेऽभिप्राये-ऽग्निप्रवेशरूपेऽवर्त्स्यदवर्त्तिष्ट तदाश्चर्य्यं चित्रमित्यर्थः। कृच्छ्रत्व-गम्यस्य चित्रीकरणस्य स्पष्टार्थमाश्चर्य्यग्रहणम्। वृतु वर्त्तने इति धातोर्यच्चयत्रयोरन्यतरोपपदाच्चित्रीकरणे गम्यमाने क्रियातिपत्तौ भूते लृङ्। स्त्रीणां सामान्यतः कृच्छ्राभिप्रायानुवृत्तिसामग्र्यभावा-त्तदनुवृत्तिक्रियातिपत्तिः। इयं तु तत्रापि प्रवृत्तेति चित्रीकरणम्। किं चैवं त्वयि क्रुद्धे त्रासात् स्त्रैणाद्भयादस्यां विपन्नायां प्रच्छन्नं मृतायां किं नाम फलमप्राप्स्यथा लप्स्यसे। न किञ्चिदवकल्पयामि। "अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि" इत्यपिशब्दात् किंवृत्तमनवक्लृप्तिश्च लिङ्निमित्तमुक्तं, तस्मिन् क्रियातिपत्तौ लभेर्भविष्यति नित्यं लृङ्। मरणातिरिक्तफलप्राप्तिसामग्र्यभावात्तदतिपत्तिः। किं किलेति पाठः प्रामादिकः। "किं किलास्त्यर्थेषु लृट्" इत्यस्यालिङ्निमि-त्तत्वादिति ॥ ८

भरतः। आश्चर्य्यमित्यादि। तव मतेऽभिप्राये यत्र देशे काले वा स्त्री योषित् यत्र कृच्छ्रे एवंविधे व्यसनेऽवर्त्स्यत् वर्त्तमानाऽभवत्, तत् आश्चर्य्यम्। न ह्येवंविधे कथञ्चित् पति-व्रता वर्त्तेत इति भावः। स्त्रीवर्त्तमानक्रियाया असामग्र्यात् धात्वर्थानिष्पत्तिः। अन्यच्च, स्वस्त्री परगृहोषिता दुष्टा इत्यतो विधित्सेति यदाह—त्रासात् अस्यां विपन्नायां मृतायां त्वं नाम किं फलम् अलप्स्यथाः नाह दुष्टेति सीतायाः त्रासाभावेन विपत्तेरभावात् फललाभस्यानिष्पत्तेः ॥ ८

অনুবাদ। আপনার মতানুসারে স্ত্রীলোক যে এই দুষ্কর অগ্নিপ্রবেশ করিয়াছেন, ইহা অতি আশ্চর্য্যের বিষয়। আপনি এরূপ ক্রুদ্ধ হইলে যদি ইনি অবলাজনসুলভ ভয়ে বা লজ্জায় গোপনে আত্মহত্যা করেন, তাহাতেই বা আপনি কি ফললাভ করিবেন! ৮

**यत्र यत्रामरिष्यत् स्त्री साध्वसाद्दोषवर्जिता।**
**तदसूयारतं[तौ]लोके तस्या वाच्यास्पदं मृषा ॥ ९**

अन्वयः। यत्र यत्र दोषवर्ज्जिता स्त्री साध्वसात् अमरिष्यत्, तत् असूयारते लोके तस्याः मृषा वाच्यास्पदं ( अभविष्यत् ) ॥ ९

मल्लिनाथः। न केवलं फलाभावः प्रत्युतानिष्टफलमेव स्यादित्याह—यत्रेति। यत्र यत्र वा दोषवर्जितैव स्त्री साध्वसादमरिष्यत्

तन्मरणमसूयारते गुणेषु दोषाविष्करणपरे लोके तस्याः सुतायाः मृषा वाच्यास्पदं दुष्टत्वादेव मृतेति मिथ्यापवादहेतुरभविष्यदिति शेषः। तच्चातिगर्हितमित्यभिप्रायः। अत्र यच्चयत्रशब्द उपपदं गर्हा च लिङ्निमित्तम्। अत्र भूते लृङ्। अदुष्टायाः साध्वसलक्षण-सामग्र्यभावान्मरणक्रियातिपत्तिस्तदभावादपवाद-क्रियातिपत्तिश्च ॥ ९

भरतः। यथेत्यादि। यत्र यत्र दोषवर्ज्जिता सुचरित्रा पतिव्रता स्त्री साध्वसात् अमरिष्यत् यदा मृता तस्याः सुतायाः असूयावद्दे दोषाविष्करणरते लोके वाच्यास्पदं वचनीयाश्रयं तन्मरणं तथा मिथ्या भविष्यति। पतिव्रतायाः साध्वसाभावात् मरणक्रियाया अनिष्पत्तिः ॥ ९

অনুবাদ। যদি নির্দ্দোষ স্ত্রীলোক ভয়ে প্রাণত্যাগ করে, সেই মৃত্যু অসূয়াপ্রধান জগতে, মৃতা রমণীর পক্ষে "অমুক দুশ্চরিত্রা ছিল বলিয়া আত্মঘাতী হইয়াছে" এইরূপ মিথ্যা অপবাদের কারণ হইয়া পড়ে। ৯

अमंस्यत भवान् यद्वत्तथैतच्चेत्[व च] पिता तव।

नागमिष्यद्विमानस्थः साक्षाद्दशरथो नृपः ॥ १०

अन्वयः। भवान् यद्वत् अमंस्यत, एतत् चेत् तथा तव पिता नृपः दशरथः विमानस्थः साक्षात् नागमिष्यत् ॥ १०

मल्लिनाथः। अमंस्यतेति। भवान् यद्वद्यथामंस्यत दुष्टेत्यमंस्था एतन्मननं तथा चेत्तव पिता दशरथो नृपः साक्षात् प्रत्यक्षेण नागमिष्यत्। दोषभवनदशरथानागमनयोर्हेतुहेतुमद्भावो लिङ्निमित्तम्। अग्निपरिशुद्धिज्ञानाद्विरुद्धप्रत्ययात् क्रियातिपत्तिः। भूते लृङ् ॥ १०

भरतः। अमंस्यतेति। भवान् यत्र अमंस्यत दुष्टा इयमिति यत्र ज्ञातवान्, तत्तथैव चेत् यदि तदा तव पिता दशरथो विमानस्थः सन् साक्षात् प्रत्यक्षं नागमिष्यत् नागतवान्, अस्या दुष्टत्वाभावात् मरणस्यानिष्पत्तिः दुष्टत्वज्ञानेन गमनस्यानिष्पत्तिः ॥ १०

অনুবাদ। আপনি সীতাবিষয়ে যেরূপ মনে করিয়াছেন, ইহা যদি সত্য হইত, তাহা হইলে আপনার পিতা রাজা দশরথ রথারূঢ় হইয়া প্রত্যক্ষভাবে আসিতেন না ॥ ১০

नाकल्पस्यत्संनिधिं स्थाणुः शूली वृषभवाहनः ।
अ[ना]न्वभाविष्यतान्येन मैथिली चेत्पतिव्रता ॥ ११

अन्वयः । पतिव्रता मैथिली अन्येन न अन्वभाविष्यत चेत्, शूली वृषभवाहनः स्थाणुः सन्निधिं न अकल्प्स्यत् ॥ ११

मल्लिनाथः । नेति । पतिव्रता मैथिली अन्येन पुरुषान्तरेणान्वभाविष्यत चेदनुभुक्तोपभुक्ता चेत् । भवतेः कर्मणि लृङ् । चिण्वदिटि वृद्धिः । शूली शूलहस्तो वृषभवाहनो वृषभारूढः स्थाणुरीश्वरः सन्निधिं सन्निधानं नाकल्प्स्यन्नाक यिष्यदित्यर्थः । अन्तर्भावितणिजर्थोऽयं प्रयोगः । क्लृपू सामर्थ्ये । पूर्ववल्लिङ्निमित्तक्रियातिपत्त्योर्लृङ् । "लुटि च क्लृपः" इति चकारात् स्ये परस्मैपदम् । "तासि च क्लृपः" इति चकारादनिट् ॥ ११

भरतः । नाकल्प्स्यदित्यादि । पतिव्रता मैथिली चेत् यदि लक्ष्मणोऽन्येन न अन्वभाविष्यत अनुभूता नाभूत, तदा अयं शूली वृषभवाहनो ध्वजचिह्नः स स्थाणुः महादेवः सन्निधिं सन्निधानं नाकल्प्स्यत् न कल्पितवान् । सीतायाः पतिव्रतात्वात् अन्यानुभवस्यानिष्पत्तिः अनुभूतत्वे सन्निधिकल्पनस्यानिष्पत्तिः । वृद्धौ नेम् पे इति वचनात् क्लृपेः पम् । इनयदहव इति श्रुतौ मिश् ॥ ११

অনুবাদ । পতিব্রতা মৈথিলী যদি অন্যপুরুষ কর্তৃক উপভুক্তা হইতেন, তাহা হইলে শূলপাণি বৃষভবাহন শিব কখনও নিকটে আসিতেন না ॥১১

आनन्दयिष्यदागम्य[त्य]कथं त्वामरविन्दसत् ।
राजेन्द्र विश्वसूर्धाता चारित्रे सीतायाः[तया]च्युते॥१२

अन्वयः । राजेन्द्र ! अरविन्दसत् विश्वसृः धाता सीतायाः चारित्रे च्युते कथम् आगम्य त्वाम् आनन्दयिष्यत् ॥ १२

मल्लिनाथः । आनन्दयिष्यदिति । हे राजेन्द्र राजराज ! अरविन्दे सीदतीत्यरविन्दसत् पद्मासनः, विश्वं सूते इति विश्वसृद्विश्वस्रष्टा उभयत्र "सत्सूद्विष—" इत्यादिना क्विप् । धाता ब्रह्मा सीतायाश्चारित्रे पातिव्रत्ये च्युते सति कथमागम्य त्वामानन्दयिष्यत् । अर्हितत्वादित्यर्थः । "विभाषा कथमि लिङ् च" इति कथंशब्दो गर्हा च लिङ्निमित्तम् । चारित्रच्युत्यभावादानन्दादिक्रियातिप्रत्तिः ॥ १२

भरतः। आनन्दयिष्यदित्यादि। हे राजेन्द्र! सीतया चारित्रे नष्टे सति अरविन्दसत् पद्मासनो ब्रह्मा विश्वसृट् स्रष्टा धाता समस्तभुवनस्य धारयिता आगत्य त्वां कथम् आनन्दयिष्यत् दर्शनाशीर्वादादिभिः कथम् आनन्दितवान्? पतितसंसर्गो हि निन्दाम् आवहति, सीतायाः सतचरित्रत्त्वं आनन्दस्योत्पत्तिः॥ १२

अनुवाद। হে রাজরাজেশ্বর! সীতার চরিত্র নষ্ট হইলে কি পদ্মাসন বিশ্বস্রষ্টা বিধাতা আসিয়া আশীর্ব্বাদে আপনাকে আনন্দিত করিতেন? ॥ ১২

**प्रणमन् ब्रह्मणा प्रोक्तो राजकाधिपतिस्ततः।**
**नाशोत्स्यत् मैथिली लोके नाचरिष्यदिदं यदि॥ १३**

अन्वयः। ततः राजकाधिपतिः प्रणमन् ब्रह्मणा प्रोक्तः—मैथिली इदं न आचरिष्यत् चेत् लोके न अशोत्स्यत्॥ १३

मल्लिनाथः। प्रणमन्निति। ततोऽग्निवाक्यानन्तरं राजकानां राजसमूहानामधिपतो रामः प्रणमन् ब्रह्माणं वन्दमानो ब्रह्मणा चतुर्मुखेन प्रोक्तः। किमिति? मैथिली सातिदमग्निप्रवेशकर्म्म नाचरिष्यद्यदि लोके नाशोत्स्यन्न शुद्धा भवेत्। अत्राग्निप्रवेशशोधनयोर्हेतुहेतुमद्भावो लिङ्निमित्तम्। शुद्धिहेत्वग्निप्रवेशोपनिपातादशोधनक्रियातिपत्तिः॥ १३

भरतः। प्रणमन्नित्यादि। प्रणमन् ब्रह्मणे प्रणामं कुर्वन्। राजकाधिपती राजसमूहाधिपो रामो ब्रह्मणा प्रोक्तः। किं तदित्याह—मैथिली यदि इदं वह्निप्रवेशनं न आचरिष्यत् नानुष्ठितवती तदा लोके नाशोत्स्यत् शुद्धा नाभूत्। शुद्धौ शोधे। चान्वर्थस्यानिष्पत्तिरवक्यान गम्यते॥ १३

अनुवाद। অগ্নির বাক্যাবসানে নৃপকুলেশ্বর রাম ব্রহ্মাকে প্রণাম করিলেন, তখন ব্রহ্মা তাঁহাকে কহিলেন যে, সীতা যদি এই অগ্নিপ্রবেশকার্য্য না করিতেন, তাহা হইলে জগতে সুচরিত্রা বলিয়া শুদ্ধিলাভ করিতে পারিতেন না ॥ ১৩

**नाशोत्स्याम वयं शुद्धामीहाधास्यन्न चेद्भवान्।**
**किं वा चित्रमिदं युक्तं भवान् यदकरिष्यत॥ १४**

अन्वयः। भवान् इह न अधास्यत् चेत् वयं शुद्धां नाशोत्स्याम, युक्तम् अकरिष्यत यत् इदं वा किं चित्रम्॥ १४

मल्लिनाथः । नेति । हे राजन् ! भवानिहाग्नौ नाधास्यचेत् सीतां नाहितवान् । न प्रवेशितवांश्चेदित्यर्थः । तर्हि वयं शङ्कां संशयेऽपि संशयं नामोक्ष्याम न मुञ्चेम । अतो युक्तं कृतमित्यर्थः । स्वयं सर्वज्ञोऽपि लोकाभेदेन वयमित्याह । परमार्थतस्तु लौकिका न विश्वस्युरित्यर्थः । अग्न्याधानशङ्कात्यागयोर्हेतुहेतुमद्भावे लिङ्-निमित्तम् । अनाधानक्रियायास्तद्विरुद्धाधानादतिपत्तिः । किं च भवान् युक्तं न्याय्यमकरिष्यत कृतवानिति यत् इदं वा किं चित्रम् । चित्रमिति नावकल्पयामीत्यर्थः । अत्र किंवृत्तमप्यवक्लृप्तिश्च लिङ्-निमित्तम् । राज्ञो हितकरणरूपत्वात् चित्रक्रियातिपत्तिः । तत्र भूते वा लृङ् ॥ १४

भरतः । नामोक्ष्यामेत्यादि । यदि भवान् इह वह्नौ सीतां नाधास्यत् न धारितवान्, तदा तस्यां शङ्कां वितर्कं वयमपि नामोक्ष्याम न मुक्तवन्तः । अत धात्वर्थस्यानिष्पत्तिर्लृङाद्-गम्यते । इदं किं वा चित्रं किम् आश्चर्यं यत् भवान् युक्तम् अकरिष्यत कृतवान्, युक्त-करणत्वेन चित्रीकरणस्यानिष्पत्तिः ॥ १४

अनुवाद । यदि आपनि एই अनले सीताके निक्षिप्त ना करितेन, ताहा हइले सीतार शुद्धि सत्त्वेओ आमरा सन्देह त्याग करिते पारिताम ना ; आपनि प्रकृत कार्य्याइ करियाछेन, इहाते आर आश्चर्य्य कि आछे ॥१४

**प्रावर्त्तिष्यन्त चेष्टाश्चेदा[द]याथातथ्यवत्तव ।**
**अनुशास्ये त्वया लोके रामावर्त्स्यंस्तरां ततः ॥ १५**

अन्वयः । राम ! तव चेष्टा आयथातथ्यवत् प्रावर्त्तिष्यन्त चेत् ततः त्वया अनुशास्ये लोके अवर्त्स्यं स्तराम् ॥ १५

मल्लिनाथः । प्रावर्त्तिष्यन्तेति । किं च हे राम ! तव चेष्टा व्यापारा यथातथं यथार्थम् । 'यथार्थं तु यथातथम्' इत्यमरः । यथार्थेऽव्ययीभावः । नपुंसकह्रस्वः । ततो नञ्समासे अयथातथम् । ततो ब्राह्मणादित्वात्ष्यञ्प्रत्यये "यथातथायथापुरयोः पर्यायेण" इति विकल्पान्नञ्पूर्वपदवृद्धौ आयथातथ्यम् । तद्वदायथातथ्यवत् । सत्यन्तं क्रियाविशेषणम् । अयथार्थमयथातथेत्यर्थः । प्रावर्त्तिष्यन्त चेत् प्रवृत्ताश्चेत् । ततस्तवापरोक्षप्रवृत्तेस्त्वयानुशास्ये शासनीये लोकेऽप्यवर्त्स्यंस्तराम् । यथा राजा तथा प्रजेति न्यायादतिमात्र

प्रावर्तिष्यन्त। तादृशचेष्टाः प्रवर्त्तेरन्नित्यर्थः। वृतु वर्त्तने। "वृद्‌भ्यः स्यसनोः" इति तिप्। "तिङश्च" इति तमप्। "किमेत्तिङव्यय—" इत्यादिना तिङ्‌न्तादामुप्रत्ययः। रामचेष्टाप्रवृत्तिलोकचेष्टाप्रवृत्त्यो-र्हेतुहेतुमद्भावो लङ्‌निमित्तम्। असमीक्ष्यकारणापत्तिपातात्समीक्ष्य-कारणक्रियातिपत्तौ भविष्यति लङ्॥ १५

भरतः। प्रावर्तिष्यन्तेत्यादि। हे राम! तव अवस्थाकारिणः चेत् यदि चेष्टाः कार्य्याणि यथायथतया प्रावर्तिष्यन्त, यथा अन्यस्य असमीक्ष्यकारितया प्रवर्तन्ते तद्वत् प्रवृत्ता अभूवन्, तदा यथायथप्रवर्त्तनात् त्वय्यनुरागे दुष्टव्यवस्थायां ख्याप्यमाने लोके एवंविधा चेष्टा अत्यन्तं तराम् अतिशयेन प्रवृत्ता अभविष्यन्। किमव्ययेति च तराम्। अत्र तात्पर्य-स्यानिर्णयनिर्वाक्यादवगम्यते॥ १५

अनुवाद। হে রাম! যদি আপনার কার্য্যকলাপ যথাযোগ্য ন্যায়সঙ্গত না হইত, তাহা হইলে আপনার শাসনাধীন প্রজারাও অধিকতর আপনাতে একান্ত অনুরক্ত থাকিত না॥ ১৫

**प्रणमन्तं वचो[ततो]राममुक्तवानथ[निति]शङ्करः।**
**किं नारायणमात्मानं नाभोत्स्यत भवानजम्॥१६**

अन्वयः। अथ शङ्करः प्रणमन्तं रामं वचः उक्तवान्;—भवान् आत्मानम् अजं नारा-यणं किं न अभोत्स्यत?॥ २६

मल्लिनाथः। प्रणमन्तमिति। अथ ब्रह्मवचनानन्तरं शङ्करः प्रणमन्तं राममुक्तवान्। किमिति? भवानात्मानं न जायत इत्यजमनादिनिधनं नारायणमादिपुरुषं नाभोत्स्यत न बुद्धवान् किम्। अत्र किंवृत्तं लिङ्‌निमित्तम्। नारायणत्वानवबोध-क्रियायास्तादृक्कबोधोत्पादनादतिपत्तिः॥ १६

भरतः। प्रणमन्तमित्यादि। ततो ब्रह्मवचनानन्तरं, प्रणमन्तं शङ्कराय प्रणामं कुर्वन्तं रामं शङ्कर उक्तवान्। किं तदित्याह—भवान् अजं नारायणस्वभावम् आत्मानं किं नाभो-त्स्यत बुद्धवान्? अपि तु तथाविधं कर्म कुर्वन् ज्ञातवानेव। बुधौ च वेदने। अभा-नातेति भः। अत्र नारायणबोधस्यानिष्पत्तिः॥ १६

अनुवाद। ब्रह्मार कथा शेष हइले, शङ्कर—प्रणत रामके एइ कथा बलिलेन ये, आपनि कि आपनाके अनादिनिधन नारायण बलिया बुझिते पारेन नाइ?। १७।

कोऽन्योऽकर्त्स्यदिह प्राणान् दृप्तानां वा[च]सुरद्विषाम्
को वा विश्वजनीनेषु कर्मसु प्रायति[घटि]ष्यत ॥ १७

अन्वयः । इह अन्यः कः वा दृप्तानां सुरद्विषां प्राणान् अकर्त्स्यत, कः वा विश्वजनीनेषु कर्मसु प्रायतिष्यत ? ॥ १७

मल्लिनाथः । नारायणत्वमेवाह—क इति । इह लोके अन्यो नारायणादन्यः को वा दृप्तानां सुरद्विषां राक्षसानां प्राणानकर्त्स्यत् अच्छेत्स्यत् । कृती छेदने । को वा विश्वजनीनेषु विश्वस्मै जनाय हितेषु । "आत्मन्विश्वजन—" इत्यादिना खः । कर्मसु सेतुबन्धनादिकृत्येषु प्रायतिष्यत प्रयतेत । प्राघटिष्यत इति पाठेऽप्ययमेवार्थः । अत्रापि क इति किंवृत्तं लिङ्निमित्तम् । नारायणत्वबोधनादकर्त्तनाप्रयतनक्रियातिपत्तिः । तत्र भूते लृङ् ॥ १७

भरतः । नारायणत्वं दर्शयति—कोऽन्य इत्यादि । यदि भवान् नारायणो न स्यात्, तदा तस्मात् अन्यः क इह जगति दृप्तानां सुरद्विषां रक्षसां प्राणान् अकर्त्स्यत् भिन्नवान् ? न कोऽपि इत्यर्थः । अन्यच्च, विश्वजनीनेषु सर्वलोकहितेषु कर्म्मसु वा कः प्राघटिष्यत चेष्टितवान् न कोऽपीत्यर्थः ॥ १७

অনুবাদ । এই জগতে নারায়ণ ভিন্ন কে বা গর্ব্বিত রাক্ষসগণের প্রাণ নষ্ট করিয়াছে, কে বা জগতের হিতকার্য্যে যত্নবান হইয়াছে ? । ১৭ ।

दैत्यघ्नये महाराज यच्च यच्चाघटिष्यथाः ।
समाप्तिं जातु तत्रापि किं नानेष्यस्त्वमीहितम् ॥ १८

अन्वयः । महाराज ! दैत्यघ्नये यत्र यत् ईहितं न अघटिष्यथाः, जातु तत्र समाप्तिम् अपि किं न अनेष्यः ? ॥ १८

मल्लिनाथः । दैत्य इति । हे महाराज ! त्वं दैत्यघ्नयेऽसुरवधे निमित्ते यत्रावतारे यदीहितं यच्चेष्टितं अघटिष्यथा अकृथाः । जातु कदा तत्रावतारे समाप्तिमपि नानेष्यः न नेष्यसि । तत्किं सर्वं घटिष्यसि समापयिष्यसि चेदित्यर्थः । "जातुयदोर्लिङ्" इति जातुयच्छब्दानवक्लृप्तिश्च लिङ्निमित्तम् । निजरूपबोधादघटनाया अतिपत्तिः । भविष्यति लृङ् ॥ १८

भरतः । दैत्यघ्नये इत्यादि । हे महाराज ! दैत्यघ्नये दैत्यवधनिमित्तं यत्र त्वम्

अघटिष्यथा: अनुष्ठितवानसि । तत् जातु कदाचित् त्वम् इङ्गितम् ईप्सितं किं समाप्तिं पूर्त्तां न अनैषी: न नीतवानसि ? अपि तु नीतवानेव । अत्र घटनक्रियाया: समाप्तिक्रियायाश्च ज्ञानानुपलम्भलाद्दनिष्पत्ति: ॥ १८

अनुবাদ। মহারাজ! আপনি অসুর-বধের নিমিত্ত যে অবতারে যে অভিপ্রেত কার্য্য করিয়াছেন, আপনি কি সেই অবতারে তাহা সমাপ্ত করেন নাই? । ১৮ ।

तातं प्रसाद्य कैकेय्या भरताय प्रपीड़ितम् ।
सहस्रचक्षुषं रामो निनंसु: परिदृष्टवान् ॥ १९

अन्वय: । राम: भरताय कैकेय्या प्रपीडितं तातं प्रसाद्य सहस्रचक्षुषं निनंसु: परिदृष्टवान् ॥ १९

मल्लिनाथ: । तातमिति । रामो भरताय भरतराज्यार्थं कैकेय्या प्रपीड़ितं वरप्रार्थनया क्लिशितं तातं पितरं दशरथं प्रसाद्य कैकेयीविषयरोषत्याजनेनन प्रसन्नं कृत्वा सहस्रचक्षुषं सहस्राक्षमिन्द्रं निनंसुर्नमितुमिच्छु: परिदृष्टवान् ॥ १९

भरत: । तातमित्यादि । तातं दशरथं प्रसाद्य कैकेयीविषये चित्तमालिन्यं त्याजयित्वा राम: सहस्रचक्षुषम् इन्द्रं दृष्टवान् । तातम् कीदृशं ?—कैकेय्या भरतार्थं राज्येऽभिषिञ्चतामिति प्रपीड़ितम् । निनंसु: प्रणामं कर्त्तुमिच्छु: ॥ १९

অনুবাদ। রাম ভরতকে রাজ্যাভিষিক্ত করিবার নিমিত্ত কৈকেয়ী কর্ত্তৃক বরপ্রার্থনায় সনির্ব্বন্ধ প্রপীড়িত পিতা দশরথকে প্রসন্ন করিয়া সহস্রাক্ষ ইন্দ্রকে প্রণাম করিবার জন্য তাঁহার সহিত সাক্ষাৎ করিলেন। ১৯।

प्रेता वरेण शक्रस्य प्राणन्त: कपयस्तत: ।
संजाता: फलिनानम्ररोचिष्णुद्रुमसद्रव: ॥ २०

अन्वय: । तत: प्रेता: कपय: शक्रस्य वरेण प्राणन्त: फलिनानम्ररोचिष्णुद्रुमसद्रव: संजाता: ॥ २०

मल्लिनाथ: । प्रेता इति । तत इन्द्रदर्शनानन्तरं प्रेता रणे पूर्वं मृता: कपय: शक्रस्य वरेण प्रसादेन प्राणन्तो जीवन्त: सन्त: । अन प्राणने । शट: शत्रादेश: । फलिना: फलवन्त: । "फलबर्हाभ्यामिनच्" । अत एवानम्रा: फलभरेणानता अत एव रोचिष्णव:

शोभनाश्च तेषु द्रुमेषु सद्रव: सदनशीला: सञ्जाता:। निषण्णा इत्यर्थ:। "दाधेट्सिशदसदो रु:" इति सदो रुप्रत्यय:॥ २०

भरत:। प्रेता इत्यादि। ततोऽनन्तरं प्रसन्नस्य शक्रस्य वरेण युद्धे प्रेता: कपय: प्राणन्तो जीवन्त: सञ्जाता:। कीदृशा:?—फलिना: फलवन्त:। अत एव फलभारेण आनम्रा आनमनशीला रोचिष्णवो रोचिनशीला ये द्रुमा: तेषु सद्रव: सदनशीला:। सद-गत्यवसादनयो: षदिति सदे रु:॥ २०

अनुवाद। इन्द्रदर्शन लाभের পর পূর্ব্বে রণে মৃত বানরগণ ইন্দ্রের বরে জীবিত হইয়া ফলভারাবনত অতি সুন্দর বৃক্ষোপরি উপবিষ্ট হইল। ২০।

भ्रमरकुलाकुलोल्वणसुगन्धिसपुष्पतरु-
स्तरुणमधूकसम्भवपिशङ्गिततुङ्गशिख:।
शिखरशिलान्तरालपरिक्लृप्तजलावसर:
सरसफलश्रियं विततवान्स सुवेलगिरि:॥ २१

अन्वय:। भ्रमरकुलाकुलोल्वणसुगन्धिसपुष्पतरु: तरुणमधूकसम्भवपिशङ्गिततुङ्गशिख: शिखरशिलान्तरालपरिक्लृप्तजलावसर: स: सुवेलगिरि: सरसफलश्रियं विततवान्॥२१

मल्लिनाथ:। भ्रमरेति। भ्रमरकुलैराकुला व्याप्ता उल्वण-सुगन्धयोऽत्यन्तसुरभिगन्धय: सपुष्पास्तरवो यस्मिन् स:। तरुणानां प्रत्यग्राणां मधूकानां मधूकपुष्पाणां सम्भवेनोद्भवेन पिशङ्गिता: पिशङ्गीकृतास्तुङ्गशिखा उन्नतशिखराणि यस्य स:। शिखरशिलाना-मन्तरालेषु परिक्लृप्ता निष्पन्ना जलावसरा जलप्रसरा यस्मिन् स:। सुवेलगिरि: सुवेलाद्रि: सरसफलानां श्रियं समृद्धिं विततवान् वितताम। पादान्तादियमकम्। नर्दटकवृत्तम्। 'यदि भवतो नजौ भजजला गुरु नर्दटकम्' इति लक्षणात्॥ २१

भरत:। भ्रमरकुलेत्यादि। सुवेलगिरि: चिरेण सरसानां फलानां श्रियं वितत-वान्। कीदृश:?—भ्रमरसमूहेन व्याप्ता उल्वणशीघ्रगन्धयुक्ता: पुष्पसहिता तरवो यत्र, अभिनवानां मधूकपुष्पाणां सम्भवोऽस्तित्वं तेन पिशङ्गिता तुङ्गा उच्चा: शिखा यस्य, शिखरशिलान्तरालेषु परिक्लृप्ता जलावसरा जलधारा यत्र॥ २१

अनुवाद। তৎকালে সুবেল পর্ব্বত অলিকুলে আকুলিত এবং অত্যন্ত সুগন্ধ পুষ্পান্বিত তরুগণে শোভিত ছিল, এই সকল সুন্দর নবীন শিখরশ্রেণি

অভিনব মধূক পুষ্পের বিকাশে পিঙ্গল বর্ণ ধারণ করিয়াছিল, তাহার চূড়াস্থিত শিখাগুলির মধ্য দিয়া জলধারা প্রবাহিত হইতেছিল ; তাহাতে সেই পর্ব্বত সরস ফলের শোভা বিস্তার করিয়াছিল ; তাহাতে যেন বোধ হইতে লাগিল, সুবেল গিরি একটী পক্ক রসাল ফল, তাহার রসপানের জন্য ভ্রমর ছুটাছুটী করিতেছে, অত্যন্ত সুগন্ধি কুসুমিত তরুগণে সেই ফলের গন্ধ উৎপাদন করিতেছে, অভিনব মধূক পুষ্পোদ্গমে সেই ফলের পক্কতাসূচক পিঙ্গল বর্ণ প্রস্তুত করিতেছে, পর্ব্বত শিখর দিয়া প্রবাহিত জলধারাই যেন সেই ফলের রসধারা হইয়াছে। ২১।

**সংবাদ্ভিঃ সকুসুমরেণুভিঃ সমীরৈ-**
**রানম্রৈর্বহু[বর]ফলশালি[ধারি]ভির্বনান্তৈঃ।**
**শ্চ্যোতদ্ভির্মধুপটলৈশ্চ বানরাণা-**
**মাপ্যানো রিপুবধসম্ভবঃ প্রমোদঃ॥ ২২**

অন্বয়ঃ। বানরাণাং রিপুবধসম্ভবঃ প্রমোদঃ সংবাদ্ভিঃ সকুসুমরেণুভিঃ সমীরৈঃ বহুফলশালিভিঃ আনম্রৈঃ বনান্তৈঃ শ্চ্যোতদ্ভিঃ মধুপটলৈঃ চ আপ্যানঃ॥ ২২

মল্লিনাথঃ। সংবাদ্ভিরিতি। বানরাণাং রিপুবধসম্ভবো রিপুবধপ্রভবঃ প্রমোদ আনন্দঃ সংবাদ্ভিঃ সংচরদ্ভিঃ। বাতের্লটঃ শত্রাদেশঃ। সকুসুমরেণুভিঃ সুগন্ধিভিরিত্যর্থঃ। সমীরৈর্মারুতৈর্বহুফলশালিভিরতএবানম্রৈর্বনান্তৈর্বনভাগৈঃ শ্চ্যোতদ্ভিঃ স্রবদ্ভির্মধুপটলৈঃ ক্ষৌদ্রমণ্ডলৈশ্চাপ্যানঃ প্রবৃদ্ধঃ। ওপ্যায়ী বৃদ্ধৌ। কর্ত্তরি ক্তঃ। ওদিত্বাত্নিষ্ঠানত্বম্। যকারলোপঃ। ব্যবস্থিতবিভাষাবচনাৎ সোপসর্গস্য প্যায়ঃ পীভাবো ন ভবতি। প্রহর্ষিণীবৃত্তম্॥ ২২

ভরতঃ। সংবাদ্ভিরিত্যাদি। বানরাণাং রিপুবধসম্ভবঃ প্রমোদঃ সমীরাদিভিঃ আপ্যানো বৃদ্ধিং গতঃ। কীদৃশৈঃ সমীরৈঃ?—সংবাদ্ভিঃ সম্যগবৈপরীত্যেন বহদ্ভিঃ, পুষ্পরাগসহিতৈঃ। বনান্তৈঃ কীদৃশৈঃ—বরফলশালিভিঃ উত্তমফলযুক্তৈঃ, অত এব আনম্রৈঃ আনমনশীলৈঃ। মধুপটলৈঃ কীদৃশৈশ্চ?—শ্চ্যোতদ্ভিঃ স্রবদ্ভিঃ॥ ২২

অনুবাদ। ঐ পর্ব্বতে কুসুমরেণুসমন্বিত সমীরণ সম্যক্ প্রবাহিত এবং বহু ফলভারাবনত বৃক্ষ হইতে প্রচুর মধু নির্গত হওয়ায় বনান্তভাগ বানরগণের শত্রুবধসম্ভূত আনন্দ সমধিক বর্দ্ধিত করিয়া দিয়াছিল। ২২।

**মায়াস্যঃ স্বফলভরেণ ভঙ্গুরত্বং**
**[illegible]নিবর্যাচিতা [illegible]**

सामोदाः क्षितितलसंस्थितावलोप्या
भोक्तॄणां श्रममुदयं न नीतवत्यः॥ २१

इति भट्टिकाव्येतिङन्तकाण्डे लक्षणप्रदर्शनो नाम
एकविंशतितमः सर्गः॥ २१

अन्वयः। स्वफलभरेण भङ्गुरत्वम् आयान्त्यः सामोदाः भृङ्गालीनिचयचिताः क्षितितल-संस्थितावलोप्याः तत्रत्याः लताः भोक्तॄणां श्रमम् उदयं न नीतवत्यः॥ २१

मल्लिनाथः। आयान्त्य इति। स्वेन फलभरेण भङ्गुरत्वं भङ्गुरशीलत्वम्। "भञ्जभास—" इत्यादिना घुरच्। आयान्त्यः प्राप्नुवत्यस्तथा फलिता इत्यर्थः। सामोदा मनोहरगन्धवत्योऽत एव भृङ्गालीनिचयैश्चिता व्याप्ताः क्षितितलसंस्थितैरनारुह्यैवावलोप्या अपलोप्तुमपचेतुं शक्याः करप्रचेया इत्यर्थः। लताः शाखाः। 'स्त्री शाखालते' इत्यमरः। भोक्तॄणामपहर्तॄणां वानराणां श्रमं श्रान्तिमुदयमुन्नमं न नीतवत्यः किं तु प्रथमं निन्युरित्यर्थः। नयतिर्द्विकर्मकः। "विनीतवत्य" इति पाठे—उदयमुदितम्। एतेरयतेर्वा पचाद्यच्। श्रममपनिन्युरित्यर्थः। एतच्च प्रहर्षिणीवृत्तम्॥ २१

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचिते भट्टिकाव्यव्याख्याने सर्वपथीनाख्याने एकविंशः सर्गः॥ २१

भरतः। आयान्त्य इत्यादि। तत्रत्या लताः भोक्तॄणां श्रमम् उदयं वृद्धिं न नीतवत्यः न प्रापिताः, अपनीतवत्य इत्यर्थः। विनीतवत्य इति क्वचित् पाठः। कीदृश्यः लताः?—फलभरेण भङ्गुरत्वं स्वयमेव भेद्यत्वम् आयान्त्यः प्राप्नुवत्यः, भ्रमरश्रेणीसमूहव्याप्ताः, आमोदयुक्ताः, क्षितितलसंस्थितैरेव अवलोप्याः अवलोप्तुं शक्याः। २१

इति सर्वेश्वरहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरतसेनकृतायां मुग्धबोधिन्यां भट्टिटीकायामेकविंशतितमः सर्गः॥ २०

অনুবাদ। তত্রত্য বৃক্ষশাখাগুলি নিজ ফলভরে ভঙ্গুরত্ব প্রাপ্ত হইয়াছিল (ভাঙ্গে ভাঙ্গে হইয়াছিল) এবং মনোহর গন্ধসমন্বিত বলিয়া ভ্রমরকুল তাহাতে পরিব্যাপ্ত ছিল। তরুসকল ফলভরে এরূপ নত হইয়াছে যে ভূমিতল হইতেই তাহার ফল চয়ন করা যাইত, এইজন্য তাহারা ফলভোজী বানরগণের শ্রম বৃদ্ধি না করিয়াই যেন শ্রম দূরই করিয়াছিল। ২৩।

একবিংশ সর্গ সমাপ্ত।

## द्वाविंशः सर्गः ।

**ततो रामो हनूमन्तमुक्तवान् हृष्टमानसः[म्] ।**
**अयोध्यां श्वः प्रयातासि कपे भरतपालिताम् ॥ १**

अन्वयः । ततः हृष्टमानसः रामः हनूमन्तम् उक्तवान् ;—कपे ! भरतपालिताम् अयोध्यां श्वः प्रयातासि ॥ १

मल्लिनाथः । अथ लुड्विलासमधिकृत्याह—तत इति । ततः सीतान्वेषणानन्तरं हृष्टमानसो रामो हनूमन्तमुक्तवान् । हे कपे ! भरतपालितामयोध्यां श्वः परेद्युः प्रयातासि गन्तासि गमिष्यसी-त्यर्थः । प्रपूर्वाद्यातेरनद्यतनभविष्यति लुट् । विशेषस्तत्र तत्र वक्ष्यते ॥ १

भरतः । अथ डौमधिकृत्योच्यते, तस्याः परमते लुट् संज्ञा । तत इत्यादि । ततः सीतान्वेषणानन्तरं रामो हनूमन्तम् उक्तवान् । कीदृशम् ?—प्रमुदितहृदयं स्वामिकार्यस्य निष्पादितत्वात् । किम् उक्तवान् इत्याह—हे कपे ! भरतरक्षिताम् अयोध्यां रामपुरीं श्वोऽनागतेऽह्नि प्रयातासि गमिष्यसि । भवद्भूतभव्ये वर्तते भविष्यति डौ । भविष्यत्सामान्ये ल्यः विधानात् श्व इत्यस्य न वैयर्थ्यम् ॥ १

অনুবাদ । সীতার পরীক্ষার পর রামচন্দ্র সন্তুষ্টচিত্তে হনূমান্‌কে বলিলেন, হে কপিবর ! আগামী দিবস তুমি ভরত-পালিত অযোধ্যায় গমন করিবে । ১ ।

**গাহি[ধি]তাসে নভো ভূয়ঃ স্ফুটন্মেঘঘটাবলি ।**
**ঈক্ষিতাসেঽম্ভসাং পত্যুঃ পয়ঃ শিশিরশীকরম্ ॥ ২**

অন্বয়ঃ । ( হে কপে ! ) ভূয়ঃ স্ফুটন্মেঘঘটাবলি নভঃ গাহিতাসে, শিশিরশীকরম্ অম্ভসাং পত্যুঃ পয়ঃ ঈক্ষিতাসে ॥ ২

মল্লিনাথঃ । গাহিতাস ইতি । হে কপে ! ভূয়ঃ পুনরপি স্ফুটন্ত্যস্ত্বদ্গতিবেগবাতাহত্যা বিশীর্যমাণা মেঘঘটাবলয়ো মেঘ-বৃন্দপঙ্ক্তয়ো যস্মিং স্তন্নভো গাহিতাসে প্রবেক্ষ্যসি । গাহূ বিলোড়নে । শিশিরশীকরমম্ভসাং পত্যুঃ পয়ঃ ঈক্ষিতাসে দ্রষ্টাসি ॥ ২

भरतः। गाहिताहे इत्यादि। भूयः पुनरपि नभः आकाशं गाहितासे। वायु आत्म प्रतिच्छायमयीः। कीदृशं नभः? स्फुटन्त्यः खण्डशो भवन्त्यः मेघघटा मेघपङ्क्तयो यत्र। अथवा पयः समुद्रस्य शीतल-कणकं जलम् ईक्षितासे ॥ २

অনুবাদ। হে কপে। তুমি পুনর্বার নভোমণ্ডলে প্রবেশ করিবে এবং দেখিবে যে, তোমার গমনবেগসম্ভূত বায়ুর আঘাতে মেঘসকল খণ্ড খণ্ড ও সমুদ্রের জল শীকরকণায় পরিণত হইয়াছে। ২

**सेवितासे प्लवङ्ग त्वं महेन्द्राद्रेरधित्यकाः।**

**व्युत्क्रान्तवर्त्मनो भानोः सहज्योत्स्नाः कुमुद्वतीः ॥३**

अन्वयः। प्लवङ्ग! भानोः व्युत्क्रान्तवर्त्मनः महेन्द्राद्रेः सहज्योत्स्नाः कुमुद्वतीः अधित्यकाः त्वं सेवितासे ॥ ३

मल्लिनाथः। सेवितास इति। प्लवेर्गच्छतीति प्लवङ्ग कपे! 'खच्प्रकरणे गमेः सुप्युपसंख्यानं खच्च डिद्वाच्यः' इति गमः खचि मुमागमः टिलोपश्च। भानोर्व्युत्क्रान्तवर्त्मन औन्नत्येनातिक्रान्तभानुमार्गस्येत्यर्थः। सापेक्षत्वेऽपि गमकत्वात्समासः। महेन्द्राद्रेः सम्बन्धिनीः सहजाज्ज्योत्स्नाश्चन्द्रमण्डलसान्निध्यात् सचन्द्रिकाः। "वोपसर्जनस्य" इति सहशब्दस्य विकल्पादसभावः। कुमुदान्यासु सन्तीति कुमुद्वतीः कुमुदप्रायाः। 'कुमुद्वान् कुमुदप्रायः' इत्यमरः। "कुमुदनडवेतसेभ्यो ड्मतुप्" इति ड्मतुप्प्रत्यये टिलोपः। "मादुपधायाः—" इति वकारः। अधित्यका ऊर्ध्वभूमीः। 'भूमिरूर्ध्वमधित्यका' इत्यमरः। "उपाधिभ्याम्—" इत्यादिना त्यकन्प्रत्ययः। सेवितासे सेविष्यसे। अनद्यतने लुट् ॥ ३

भरतः। सेवितासे इत्यादि। हे प्लवङ्ग! हनूमन्! महेन्द्रपर्वतस्य ऊर्ध्वभूमीः सेवितासे। महेन्द्राद्रेः कीदृशस्य?—भानोः सूर्यस्य उल्लङ्घितमार्गस्य उच्चत्वात्। अधित्यकाः कीदृशीः?—ज्योत्स्नाकुमुद्वतीभ्यां सह वर्त्तमानाः ॥ ३

অনুবাদ। হনূমান্। তুমি সূর্য্যের গতিরোধক এবং চন্দ্রসান্নিধ্য বশতঃ জ্যোৎস্নাসমন্বিত কুমুদপূর্ণ মহেন্দ্র পর্ব্বতের উপরি ভূমিতে বিশ্রাম করিয়া আনন্দভোগ করিবে। ৩।

चन्दनद्रुमसंछन्ना निराकृतहिमश्रथाः।
दर्शितारस्त्वया ताश्च मलयोपत्यकाः शुभाः॥ ४

अन्वयः। चन्दनद्रुमसंछन्ना निराकृतहिमश्रथाः शुभाः ताः मलयोपत्यकाः त्वया दर्शितारः॥ ४

मल्लिनाथः। चन्दनेति। चन्दनद्रुमैः संछन्नाः हिमस्य श्रथो हिमश्रथो हिमसारः। श्रथ विमोचनप्रतिहर्षयोरिति धातोः "श्रवोदेवौप्रश्रथहिमश्रथाः" इति घञ्नलोपौ वृद्ध्यभावश्च निपात्यते इति काशिका। स तिरोहितोऽभिभूतो याभिस्ताः। ततस्तयोर्विशेषणसमासः। चन्दनसम्पर्काद्धिमादपि शीतला इत्यर्थः। शुभाः शोभनास्ताः पूर्वदृष्टा मलयस्योपत्यका आसन्नभूमयश्च। पूर्ववत्तच्छब्दानुप्रत्ययः। त्वया दर्शितारः श्वो द्रक्ष्यन्ते। "स्यसिच्—" इत्यादिना दृशेः कर्मणि चिण्वदिटि रूपम्॥ ४

भरतः। चन्दनद्रुमेत्यादि। त्वया ताः पूर्वं दृष्टा मलयाद्रेः आसन्नभूमयो द्रष्टव्याः। कृत्यबहुत्वञ्च इति णिच्। कीदृश्यः?—चन्दनवृक्षव्याप्ताः अत एव शुभाः सुखदत्वात्। निराकृतो हिमश्रथः चन्द्रो याभिः। हिमं श्रथ्नाति मुञ्चति इति हिमश्रथः। अत्र न लोपं इत्यत्र घञन्तस्य श्रवेधावौरित्यादिना निपातनाद्रूपम्॥ ४

अनुवाद। চন্দনতরুবৃত হওয়ায় শৈত্যগুণে যাহারা চন্দ্রকেও পরাভূত করিয়াছে, তাদৃশ শোভমান সেই পূর্ব্বদৃষ্ট মলয়াচলের উপত্যকাসকল— তাহাও কল্য দেখিতে পাইবে। ৪।

प्रतन्व्यः कोमला विन्ध्ये सहितारः स्यदं न ते।
लताः स्तवकशालिन्यो मधुलेहिकुलाकुलाः॥ ५

अन्वयः। विन्ध्ये प्रतन्व्यः कोमलाः स्तवकशालिन्यः मधुलेहिकुलाकुलाः लताः ते स्यदं न सहितारः॥ ५

मल्लिनाथः। प्रतन्व्य इति। विन्ध्ये विन्ध्याद्रौ प्रतन्व्यः कृशाः कोमला मृदुलाः स्तवकशालिन्यः कुसुमगुच्छमनोहरा अत एव मधुलेहिकुलाकुला मधुपवृन्दाकीर्णा लतास्ते तव स्यदं गतिवेगम्। "स्यदो जवे" इति स्यन्देर्घञ्नलोपौ वृद्ध्यभावश्च। न सहितारो न सोढारो न सहिष्यन्ते। तनुत्वात् कोमलत्वात् स्तवकभरितत्वाच्चेत्यर्थः। "तीषसह—" इत्यादिना सहेर्विकल्पादिडागमः॥ ५

भरत: । प्रतन्व्य: इत्यादि । विन्ध्यपर्व्वते लता: ते तव खदं वेगं न सहिष्यन्त। कीदृश्य: ?—प्रतन्व्य: अतिकृश्या:, कोमला मृद्व:, स्तवकयुक्ता: अत एव भ्रमर-समूहव्याप्ता: ॥ ५

অনুবাদ। ভৃঙ্গকুলব্যাপ্ত বিন্ধ্যাচলের কুসুমগুচ্ছধারিণী মনোহারিণী অতি কৃশ মৃদু লতাসকল তোমার গমনবেগ সহ্য করিতে পারিবে না। ৫।

**द्रष्टासि प्रीतिमानारात् सखिभि: सह सेविताम् ।**
**सपत्त्रपातं किष्किन्ध्यां पूर्वक्रीड़ां स्मरन् मुहु: ॥ ६**

अन्वय: । सखिभि: सह सेवितां किष्किन्ध्यां मुहु: पूर्व्वक्रीड़ां सपत्त्रपातं स्मरन् प्रीतिमान् आरात् द्रष्टासि ॥ ६

मल्लिनाथ: । द्रष्टासीति । सखिभि: सुहृद्भि: सह सेवितां भुक्तां किं धीयतेऽस्यामिति किष्किन्ध्यां गुहां सुग्रीववसतिम् । "पारस्करप्रभृतीनि च संज्ञायाम्" इति निपातनात् साधु: । मुहु: पूर्वक्रीड़ामत्रानैवं क्रीड़ितमिति सपत्त्रपातं साभिमानं स्मरन् प्रीतिमान् प्रीतियुक्त: सन् आरात् दूरे समीपे वा द्रष्टासि द्रक्ष्यसि ॥ ६

भरत: । द्रष्टासीत्यादि । आरात् दूरे मित्रै: सहानुभुतां किष्किन्ध्यां सपत्त्रपातं सानुरागं यथा स्यात् तथा त्व पूर्वक्रीडां मुहु: वारंवारं स्मरन् प्रीतियुक्त: सन् द्रष्टासि वर्त्तोऽकिद्दिति व: ॥ ६

অনুবাদ। তুমি যে কিষ্কিন্ধ্যার সুহৃদগণ সমভিব্যাহারে বহুবার ক্রীড়া করিয়া আনন্দ উপভোগ করিতে, অনুরাগ সহ সেই ক্রীড়া মনে করিয়া প্রীতিলাভ করিবে ও অদূরে সেই কিষ্কিন্ধ্যা দেখিতে পাইবে। ৬।

**त्वया सन्दर्शितारौ ते माल्यवद्दण्डकावने ।**
**उपद्रुतश्चिरं द्वन्द्वैर्ययो: क्लिशितवानहम् ॥ ७**

अन्वय: । माल्यवद्दण्डकावने ते त्वया सन्दर्शितारौ, ययो: अहं चिरं द्वन्द्वै: उपद्रुत: क्लिशितवान् ॥ ७

मल्लिनाथ: । त्वयेति । तव पूर्वानुभुते माल्यवांश्च दण्डकावनं च ते गिरिकानने त्वया सन्दर्शितारौ 'संद्रक्ष्यते । दृशे: कर्मणि लुटि चिण्वदिटि च "लुट: प्रथमस्य डारौरस:" इत्याताम्रो रावा-

देशः। ययोर्गिरिवनयोरहं चिरं सीतातीतभूतो द्वन्द्वैः शीतोष्णादिदुःखैः। 'द्वन्द्वं युग्मं हिमोष्णादिमिथुनं कलहे रहः' इति यादवः। उपप्लुतः पीड़ितः सन् क्लिशितवान् क्लिष्टवान्। "क्लिशः क्लानिष्ठयोः" इति विकल्पादिट्। क्त्वावन्न गुणः॥ ७

भरतः। त्वयेत्यादि। माल्यवान् पर्वतो दण्डकावनञ्च ते द्रष्टव्ये। द्वन्द्वद्वयञ्च च इति मिथ। ययोः माल्यवद्दण्डकावनयोः चिरं चिरकालं द्वन्द्वैः सीतावियोगजैः दुःखैः उपद्रुतः सन् अहं क्लिशितवान्। पुंक्लिशेति पदे द्वम्॥ ७

অনুবাদ। যে দণ্ডকারণ্য ও মাল্যবান্ পর্ব্বতে আমি বহুদিন যাবৎ শীতগ্রীষ্মাদি দুঃখে উৎপীড়িত হইয়া কষ্ট পাইয়াছিলাম, তুমি সেই মাল্যবান্ পর্ব্বত ও দণ্ডকারণ্য দেখিতে পাইবে। ৭

आम्नारौ भवता रम्यावाश्रमौ हरिणाकुलौ।
पुण्योदकौ[कौ]द्विजाकीर्णौ सुतीक्ष्णशरभङ्गयोः॥ ८

अन्वयः। रम्यौ हरिणाकुलौ पुण्योदकौ द्विजाकीर्णौ सुतीक्ष्णशरभङ्गयोः आश्रमौ भवता आम्नारौ॥ ८

मल्लिनाथः। आम्नाराविति। रम्यौ हरिणाकुलौ मृगाकीर्णौ पुण्योदकौ पवित्रजलौ द्विजैर्हरितादिभिराकीर्णौ सुतीक्ष्णशरभङ्गयोर्मुन्योराश्रमौ भवता त्वया आम्नारौ आप्स्येते आमन्त्र्यावित्यर्थः। आप्नोतेः कर्मणि लुट्। तास्यातामौ रावादेशः॥ ८

भरतः। आम्नाराविन्यादि। भवता सुतीक्ष्णशरभङ्गयोः मुन्योः आश्रमौ प्राप्स्यौ। कीदृशौ?—रमणीयौ, मृगव्याप्तौ, पुण्यजलविप्रव्याप्तौ॥ ८

অনুবাদ। তুমি রমণীয় হরিণপরিপূর্ণ পবিত্রজলসম্পন্ন এবং দ্বিজগণাকীর্ণ সুতীক্ষ্ণ ও শরভঙ্গের আশ্রমদ্বয় দেখিতে পাইবে। ৮।

अतिक्रान्ता त्वया रम्यं दुःखमवेस्तपोवनम्।
विचित्र[पवित्र]चित्रकूटाद्रौ त्वं स्थातासि कुतूहलात्

अन्वयः। रम्यम् अवेः तपोवनं त्वया दुःखं अतिक्रान्ता, विचित्रे चित्रकूटे अद्रौ त्वं कुतूहलात् यातासि॥ ९

मल्लिनाथः। अतिक्रान्तेति। रम्यमवेस्तपोवनं त्वया दुःखं यथा तथा अतिक्रान्ता। रम्यतया दुस्त्यजत्वात्

क्लेशेनातिक्रंस्यसे यास्यते। क्रमि: कर्म्मणि लुट्। "स्नुक्रमोरना-त्मनेपदनिमित्ते" इत्यात्मनेपदे इटप्रतिषेध:। विचित्रेऽद्भुते चित्र-कूटाद्रौ त्वं स्यातासि कुतूहलादद्भुतदर्शनकौतुकात् स्थास्यसि॥ ९

भरत:। अतिक्रान्तेत्यादि। अत्रे: मुने: रम्यं तपोवनं त्वया दु:खं यथा स्यात् तथा अतिक्रान्ता अतिरमणीयत्वात् कष्टेन त्वं त्यक्ष्यसीति भाव:। पवित्रे चित्रकूटपर्वते च त्वं कुतूहलात् स्यातासि इत्यर्थ:॥ ९

অনুবাদ। তুমি অত্রিমুনির মনোহর তপোবন অতিদুঃখেই ত্যাগ করিবে। কেন না সেই তপোবন এত রমণীয় যে তাহা ত্যাগ করিতে দুঃখ হইবে। কুতুহলসহকারে বিচিত্র চিত্রকূটাচলে গমন করিবে। ৯।

तत: परं भरद्वाजो भवता दर्शिता मुनि:।
द्रष्टारश्च जना: पुण्या यमुनाम्बुहतांहस:॥ १०

अन्वय:। तत: परं भवता भरद्वाज: मुनि: दर्शिता, यमुनाम्बुहतांहस: पुण्या: जना: द्रष्टार:॥ १०

मल्लिनाथ:। तत इति। तत: परं चित्रकूटदर्शनानन्तरं भवता भरद्वाजो मुनिर्दर्शिता द्रक्ष्यते। दृशि: कर्म्मणि लुटि तासि चिण्वदिट्। यमुनाम्बुहतांहसो यमुनाजलसेवालुप्तपापा अत एव पुण्या: पवित्रा जना द्विजा विप्राश्च द्रष्टारो द्रक्ष्यन्ते द्रष्टव्या इत्यर्थ:। दृशि: कर्म्मणि लुटि चिण्वदिडभावपक्षे रूपम्॥ १०

भरत:। तत इत्यादि। तत: चित्रकूटगमनात् परं भरद्वाजो मुनि: त्वया द्रष्टव्य:। तत्र पुण्ययुक्ता जनाश्च द्रष्टारो द्रष्टव्या:। यमुनाजलविनाशितपापा:॥ १०

অনুবাদ। চিত্রকূট দর্শনের পর তুমি ভরদ্বাজ মুনি এবং তত্রত্য যমুনা-জলসেবনে বিগতপাপ পবিত্রাত্মা ব্রাহ্মণ ও অন্যান্য লোকদিগকে দেখিতে পাইবে। ১০।

स्यन्त्वा स्यन्त्वा दिव: शम्भोर्मूर्ध्नि स्कन्त्वा क्षितिं गताम्
गाहितासेऽथ पुण्यस्य गङ्गां मूर्त्तिमिव द्रुताम्॥ ११

अन्वय:। अथ दिव: स्यन्त्वा स्यन्त्वा शम्भो: मूर्ध्नि स्कन्त्वा क्षितिं गतां द्रुतां पुण्यस्य मूर्त्तिम् इव गङ्गां गाहितासि॥ ११

मल्लिनाथ:। स्यन्त्वेति। अथ भरद्वाजदर्शनानन्तरं दिवो

अशोकात् स्यन्त्वा स्यन्त्वा पुनः पुनः स्यन्दित्वा। स्यन्दू प्रस्रवणे। "आभीक्ष्ण्ये णमुल् च" इति चकारादाभीक्ष्ण्ये क्त्वाप्रत्ययः। 'आभीक्ष्ण्ये द्वे भवतः' इत्युपसंख्यानाद्‌द्विर्वचनम्। पौनःपुन्यं भृशार्थो वा आभीक्ष्ण्यम्। शम्भोर्मूर्ध्नि स्कन्त्वा गत्वा पतित्वेत्यर्थः। स्कन्दिर्गतिशोषणयोः। अनिट्। "क्त्वि स्कन्दिस्यन्दोः" इत्युभयत्र नलोपप्रतिषेधः। क्षितिं गतां द्रुतां द्रवरूपेण स्थितां पुण्यस्य सुकृतस्य मूर्त्तिं विग्रहमिव स्थितां गङ्गां भागीरथीं गाहितासि गाहिष्यसे॥ ११

भरतः। स्यन्त्वेत्यादि। अथ अनन्तरं गङ्गां गाहितासे तस्याम् अवगाहं करिष्यसि। कीदृशीम्?—दिवः स्वर्गात् स्यन्त्वा स्यन्त्वा स्रुत्वा स्रुत्वा शम्भोः शिरसि मूर्ध्नि स्कन्त्वा गत्वा क्षितिं गतां, पुण्यस्य द्रवीभूतां मूर्त्तिमिव। न क्तिन् स्कन्दस्यन्द इति क्त्विनिषेधात् नलोपाभावः॥ ११

অনুবাদ। ভরদ্বাজ দর্শনান্তে স্বর্গবিগলিতা শম্ভুশিরোপতিতা ভূমিতলাবতীর্ণ পুণ্যপ্রতিমারূপিণী গঙ্গায় অবগাহন করিবে। ১১।

**तमसाया महानीलपाषाणसदृशत्विषः।**
**वनान्तान् बहु मन्तासे नागराक्रीड़साक्षिणः[शाखिनः]**

अन्वयः। महानीलपाषाणसदृशत्विषः तमसायाः नागराक्रीड़साक्षिणः वनान्तान् बहु मन्तासे॥ १२

मल्लिनाथः। तमसाया इति। महानीलपाषाणसदृशत्विषः इन्द्रनीलशिलासच्छायायास्तमसायास्तमसानद्याः सम्बन्धिनो नागराणां पौराणामाक्रीड़साक्षिणो विहारद्रष्टॄन् वनान्तान् वनप्रदेशान् बहु मन्तासे बहु मंस्यसे। मन ज्ञाने। लुटि "थासः से"। "तासस्त्योः—" इति सलोपः॥ १२

भरतः। तमसाया इत्यादि। त्वं तमसाया नद्याः वनान्तान् वनप्रदेशान् बहु मन्तासे श्लाघितासे। कीदृशान्? अतिनीलत्वात् महानीलप्रस्तरतुल्यकान्तीन्, नागराणाम् आक्रीड़ाः शाखिनः उद्यानवृक्षा यत्र। "साक्षिण" इति पाठे—नागराणाम् आक्रीड़ं रमणीसाक्षिणः॥ १२

অনুবাদ। তুমি তমসা, তীরস্থিত নীলকান্ত মণিবৎ কান্তিসম্পন্ন নগরবাসীদিগের ক্রীড়ার সাক্ষীস্বরূপ বনান্তপ্রদেশগুলি দেখিয়া অতিশয় প্রশংসা করিবে। ১২।

नगरस्त्रीस्तनन्यस्तधौतकुङ्कुमपिञ्जराम् ।
विलोक्य सरयूं रम्यां गन्ताऽयोध्या त्वया पुरी ॥ १३

अन्वयः । नगरस्त्रीस्तनन्यस्तधौतकुङ्कुमपिञ्जरां रम्यां सरयूं विलोक्य त्वया अयोध्या पुरी गन्ता ॥ १२

मल्लिनाथः । नगरेति । नगरस्त्रीणां स्तनेषु न्यस्तैर्धौतैर्जलक्रीड़ाकाले क्षालितैःकुङ्कुमैः पिञ्जरां रम्यां सरयूं विलोक्य त्वयाऽयोध्या पुरी गन्ता गंस्यते गन्तव्येत्यर्थः । गमेः कर्म्मणि लुट् ॥ १२

भरतः । नगरेत्यादि । नगरस्त्रीणाम् अयोध्यास्त्रीणां स्तनेषु पूर्वं न्यस्तं पश्चात् धौतं यत् कुङ्कुमं तेन पिञ्जरां रमणीयां सरयूं नदीं विलोक्य त्वया अयोध्या पुरी गन्तव्या ॥ १२

अनुवाद। অতঃপর তুমি নগরবাসী স্ত্রীলোকদিগের স্তনধৌত কুঙ্কুমরঞ্জিত রমণীয়াকৃতি সরয়ূ দর্শনান্তে অযোধ্যায় উপনীত হইবে। ১৩

आनन्दितारस्त्वां दृष्ट्वा प्रष्टारश्चावयोः शिवम् ।
मातरः सह मैथिल्या तोष्टा च भरतः परम् ॥ १४

अन्वयः । मातरः त्वां दृष्ट्वा आनन्दितारः, मैथिल्या सह आवयोः शिवं प्रष्टारः, भरतः अपि परं तोष्टा ॥ १४

मल्लिनाथः । आनन्दितार इति । अथ मातरः कौसल्यादयस्त्वां दृष्ट्वानन्दितार आनन्दिष्यन्ति । मैथिल्या सहावयोः शिवं क्षेमं प्रष्टारः प्रक्ष्यन्ति च । भरतश्च परमत्यन्तं तोष्टा सन्तोक्ष्यति ॥ १४

भरतः । आनन्दितार इत्यादि । तव अयोध्यायां त्वां दृष्ट्वा मातरः कौसल्याद्या आनन्दितारः आनन्दिता भविष्यन्ति । मैथिल्या सहितयोः आवयोः रामलक्ष्मणयोः शिवं कल्याणं प्रष्टारः । प्रच्छी प्र श्नोप्से । भरतः परम् अत्यर्थं तोष्टा तोष्यति ॥ १४

अनुवाद। মাতৃগণ তোমাকে দেখিয়া আনন্দিত হইবেন এবং মৈথিলীর, আমার ও লক্ষ্মণের মঙ্গল জিজ্ঞাসা করিবেন, ভরতও সাতিশয় সন্তুষ্ট হইবে। ১৪

आख्यातासि हतं शत्रुमभिषिक्तं विभीषणम् ।
सुग्रीवस्यार्जितं मित्रं सर्वांश्चागामुकान् द्रुतम् ॥ १५

अन्वयः। शत्रुं हतं, विभीषणम् अभिषिक्तं, सुग्रीवं च मित्रम्, अन्यांश्च, सर्वान् च द्रुतम् आयानुयान् आख्यातासि ॥ १५

मल्लिनाथः। आख्यातासीति। शत्रुं रावणं हतं, विभीषणं चाभिषिक्तं लङ्काराज्ये स्थापितं, सुग्रीवं च परमं मित्रं परमसुहृद, सर्वानन्यांश्च द्रुतमागामुकानागन्तॄन्। "लषपत—" इत्यादिना गमेरुकञ्प्रत्ययः। आख्यातास्याख्यास्यसि। सर्वमेतदाख्यातमित्यर्थः ॥ १५

भरतः। आख्यातासीत्यादि। एतानि आख्यातासि वक्ष्यसि। सर्वान् अन्यान् द्रुतं शीघ्रम् आगमनशीलांश्च ॥ १५

অনুবাদ। তখন তুমি ব'লবে, শত্রু রাবণ নিহত ও বিভীষণ লঙ্কা রাজ্যে অভিষিক্ত হইয়াছেন, রাম সুগ্রীবকে বন্ধুরূপে লাভ করিয়াছেন এবং সকলেই অচিরে আগমন করিবেন। ১৫

गन्तारः परमां प्रीतिं पौराः श्रुत्वा वचस्तव।
ज्ञात्वैतत् सन्मुखीनश्च मा[स]मेता भरतो द्रुत[म्रुव]म्॥

अन्वयः। पौराः तव वचः श्रुत्वा परमां प्रीतिं गन्तारः, ज्ञात्वा भरतः एतत् द्रुतं माम् सम्मुखीनः च एता ॥ १६

मल्लिनाथः। गन्तार इति। पौरास्तव वचः श्रुत्वा परमां प्रीतिं गन्तारो गमिष्यन्ति। एतत्सर्वं ज्ञात्वा भरतश्च द्रुतं मां प्रति सम्मुखीनोऽभिमुख एता आगन्ता। आङ्पूर्वादिणः कर्त्तरि लुट्॥ १६

भरतः। गन्तार इत्यादि। तव एतद्वचनं श्रुत्वा पौराः पुरवासिजनाः परमां प्रीतिं गन्तारः गमिष्यन्ति। एतत् मदागमनं श्रुत्वा भरतोऽपि सम्मुखीनः सन् समेता समागमिष्यति ॥ १६

অনুবাদ। পুরবাসীরা তোমার কথা শুনিয়া অতিশয় প্রীতিলাভ করিবে এবং ভরতও এই সকল শুনিয়া অচিরে আমার সম্মুখে উপস্থিত হইবে। ১৬

गते त्वयि पथानेन वयमप्याह्निताह्वहे।
[illegible] धृतिं प्राप्ते भूयो भवति सम्मा[illegible] ॥१७

अन्वयः। अनेन पथा त्वयि गते वयम् अपि आंहिताम्हे, भूयः भवति सम्मुखे प्राप्ते अहं धृतिं लब्धाहे ॥ १७

मल्लिनाथः। गत इति। अनेनोक्तेन पथा त्वयि गते सति वयमप्यांहिताम्हे आगमिष्यामः। अहि गतौ। लुटि तङि मर्हिङि तासि टेरेत्वम्। इदित्वान्नुम्। अजादित्वादाट्। भूयश्च त्वयि सम्मुखे प्राप्ते सत्यहं धृतिं सन्तोषं लब्धाहे लप्स्ये। लभेर्लुटि टेरेत्वे "ह एति" इति तासः सकारस्य हकारः। "झषस्तथोर्धोऽधः" ॥ १७

भरत:। गते त्वयीत्यादि। त्वयि गते सति अनेन ख्यातेन पथा वयमपि आंहिताम्हे आगमिष्यामः। अहि ङ गतौ। भूयः पुनरपि भवति त्वयि सम्मुखे प्राप्ते सति अहं धृतिं लब्धाहे प्राप्स्यामि ॥ १७

অনুবাদ। তুমি এই এই পথ দিয়া গমন করিলে আমরাও পশ্চাতে আসিব, পুনর্ব্বার তুমি সম্মুখে উপস্থিত হইলে আমি সন্তোষ লাভ করিব। ১৭

गते तस्मिन् गृहीतार्थे रामः सुग्रीवराक्षसौ।
उक्तवान् श्वोऽभिगन्तास्थो युवां सह मया पुरम् ॥१८

अन्वयः। तस्मिन् गृहीतार्थे गते रामः सुग्रीवराक्षसौ युवां मया सह श्वः पुरम् अभिगन्तास्थः इति उक्तवान् ॥ १८

मल्लिनाथः। गत इति। तस्मिन् हनूमति गृहीतार्थेऽवधृतकार्य्यार्थे गते सति रामः सुग्रीवराक्षसौ सुग्रीवविभीषणौ युवामपि मया सह श्वः परेऽह्नि पुरमयोध्यानगरीमभिगन्तास्थः गमिष्यथ इत्युक्तवान्। गमेर्लुटि थसि तासिप्रत्ययः ॥ १८

भरत:। गते तस्मिन्नित्यादि। तस्मिन् गृहीतप्रयोजने हनूमति गते सति रामः सुग्रीवविभीषणौ उक्तवान्। किं तदित्याह—श्वः प्रातः मया सह युवां पुरम् अयोध्या गन्तास्थः गमिष्यथः ॥ १८

অনুবাদ। সেই হনূমান্ কর্ত্তব্যাবধারণ পূর্ব্বক প্রস্থান করিলে রাম—সুগ্রীব ও বিভীষণকে বলিলেন, তোমরা দুইজন আমার সহিত আগামী কল্য অযোধ্যানগরীতে গমন করিবে। ১৮

द्रष्टास्थस्तत्र तिस्रो नो [मे] मातॄस्तुष्टान्तरात्मनः।
अ[था]त्यन्तीनं सखित्वञ्च प्राप्तास्थो भरताग्रयम्॥१९

अन्वयः। तत्र तुष्टान्तरात्मनः नः तिस्रः मातॄः द्रष्टास्थः, भरताग्रयम् अत्यन्तीनं सखित्वं च प्राप्तास्थः॥ १९

मल्लिनाथः। द्रष्टास्थ इति। तत्रायोध्यायां तुष्टान्तरात्मनः तुष्टान्तरङ्गान् नोऽस्माकं तिस्रो मातॄर्जननीः। "न षट् स्वस्रादिभ्यः" इति निषेधात् "ऋन्नेभ्य—" इति न ङीप्। द्रष्टास्थः द्रक्ष्यथः। दृशेः कर्त्तरि लुटि थसि तास्। "व्रश्च—" आदिना षत्वम्। भरताग्रयं भरतविषयमत्यन्तं गाम्यत्यन्तीनमात्यन्तिकम्। "अवारपार—" इत्यादिना खप्रत्ययः। सखित्वं सख्यं च प्राप्तास्थः प्राप्स्यथः। आप्नोतेर्लुटि थसि तास्॥ १९

भरतः। द्रष्टास्थ इत्यादि। तत्र अयोध्यायां नोऽस्माकं प्रसन्नमनसः तिस्रो मातॄः युवां द्रष्टास्थः द्रक्ष्यथः। अत्यन्तगं भरताग्रयं सखित्वं मित्रत्वञ्च प्राप्तास्थः प्राप्स्यथः॥ १९

অনুবাদ। সেখানে আমাদের সন্তুষ্টান্তঃকরণ মাতৃত্রয়কে দেখিতে পাইবে এবং ভরতের নিকট অত্যন্ত বন্ধুত্ব লাভ করিবে। ১৯

नैवं विरहदुःखेन वयं व्याघानितास्महे।
श्रमोऽनुभविता नैवं भवद्भ्यां च वियोगजः॥ २०
एवं युवां मम प्रीत्यै कल्पतास्थः कपिराक्षसौ।
गन्तुं प्रयतितासाथे प्रातः सह मया यदि॥ २१

अन्वयः। कपिराक्षसौ। प्रातः मया सह गन्तुं प्रयतितासाथे यदि, एवं वयं विरहदुःखेन न व्याघानितास्महे; एवं भवद्भ्यां वियोगजः श्रमः न अनुभविता, एवं युवां मम प्रीत्यै कल्पतास्थः॥ २०—२१

मल्लिनाथः। अथ युग्मेनाह—नैवमित्यादि। हे कपिराक्षसौ सुग्रीवविभीषणौ! प्रातःश्वः प्रभाते मया सह गन्तुं प्रयतितासाथे प्रयतिष्येथे यदि। यती प्रयत्ने। एवं सति वयं विरहदुःखेन भवद्वियोगदुःखेन न व्याघानितास्महे न व्याहनिष्यामहे। हन्ते कर्मणि लुटि तासि चिण्वदिट् वृद्धिः। "हो हन्तेः—" इति

इकारस्य षत्वं च । एवं सति भवद्भ्यां च वियोगजोऽस्मद्विरहजन्यः श्रमः क्लेशो नानुभाविता नानुभविष्यते । अनुपूर्वाद्भवतेः कर्म्मणि लुटि पूर्ववत्तासि चिण्वदिटि वृद्धिः । एवमिति । एवं मया सह प्रस्थाने सति युवां मम प्रीत्यै सन्तोषाय कल्प्तास्थः कल्पिष्येथे संपत्स्येथे इत्यर्थः । क्लृपू सामर्थ्ये । "लुटि च क्लृपः" तङभावपक्षे "तासि च क्लृपः" इतीट्प्रतिषेधः । लपरो लघूपधगुणः । 'क्लृपेः सम्पद्यमाने चतुर्थी वक्तव्या' । शेषं व्याख्यातम् ॥ २०।२१

भरतः । नैवमित्यादि श्लोकद्वयम् । हे कपिराक्षसौ ! सुग्रीवविभीषणौ ! प्रातः मया सह गन्तुं प्रयतितासाथे प्रयत्नं करिष्यथ इति वक्ष्यमाणश्लोकेनान्वयः । एवं सति तदा विरहदुःखेन युष्मद्वियोगकष्टेन वयं न व्याबाधिताश्महे न पीड़िताश्महे । कर्म्मणि लुट् । ञ्यवस्यहस च इति चिण्, स्येटौ चञ् चिणि चेति च: । इण् वर्ज्जनेन चिणो वर्ज्जनात् न ञ्यवहाद् ! "संयोजिताश्महे" इति क्वचित् पाठः । भवद्भ्यां मद्विरहजातः श्रमो नैव अनुभाविता नानुभविष्यते । पूर्ववच्चिण् । एवं सति युवां मम प्रीत्यै कल्प्तास्थः । नेम् पे स्या: इति क्लृपी स्याः पे इमनिषेधात् आमुभयपदित्वं गम्यते ॥ २०।२१

অনুবাদ। হে কপিবর! হে রাক্ষসরাজ! যদি তোমরা প্রাতঃকালে আমার সহিত যাইতে যত্ন কর, তাহাহইলে আমরা তোমাদের বিরহদুঃখে দুঃখিত হইব না এবং তোমরাও আমাদের বিয়োগজনিত বেদনা অনুভব করিবে না, বরং এইরূপ হইলে তোমরা আমাদের সন্তোষ সম্পাদন করিবে। ২০—২১

उक्तवन्तौ ततो रामं वचः पौलस्त्यवानरौ ।
अनुग्रहोऽयं काकुत्स्थ गन्तास्वो यत् त्वया सह ॥२२

अन्वयः । ततः पौलस्त्यवानरौ रामं वचः उक्तवन्तौ—काकुत्स्थ ! त्वया सह गन्तास्वः इति यत् अयम् अनुग्रहः ॥ २२

मल्लिनाथः । उक्तवन्ताविति । ततो रामवाक्यानन्तरं पौलस्त्यवानरौ विभीषणसुग्रीवौ रामं वचो वाक्यमुक्तवन्तौ । किमिति ? हे काकुत्स्थ ! त्वया सह गन्तास्वः गमिष्याव इति यत् अयमनुग्रहो महान् प्रसादः ॥ २२

भरतः । उक्तवन्तावित्यादि । ततो रामवचनानन्तरं पौलस्त्यवानरौ रामं वचः उक्त...

मन्ती। किं तदित्याह—हे काकुत्स्थ! आवां त्वया सह गन्तारः गमिष्यावः। अयं तव अनुग्रहः प्रसादः॥ २२

অনুবাদ। রামের কথার পর বিভীষণ ও সুগ্রীব রামকে এই কথা কহিলেন যে, হে কাকুৎস্থকুলনন্দন! আপনার সহিত আমরা গমন করিব, এবং যাহা বলিলেন, ইহাতে আমাদের প্রতি আপনার পরম অনুগ্রহ। ২২

**अनुमन्यास्वहे नावां भवन्तं विरहं त्वया।**
**अपि प्राप्य सुरेन्द्रत्वं किमु प्रत्तं त्वयास्पदम्॥ २३**

अन्वयः। सुरेन्द्रत्वं प्राप्य अपि आवां भवन्तं त्वया विरहं न अनुमन्यास्वहे; त्वया प्रत्तम् आस्पदं किमु?॥ २३

मल्लिनाथः। अन्विति। हे राम! सुरेन्द्रत्वं प्राप्याप्यावां भवन्तं सन्तं त्वया विरहं नानुमन्यास्वहे। त्वया प्रत्तं दत्तम्। "अच उपसर्गात्तः" इति दस्तकारादेशः। आस्पदं प्रतिष्ठां किमु। "आस्पदं प्रतिष्ठायाम्" इति निपातनात् सुडागमः। त्वां विनेन्द्रं पदमपि न रोचयामहे किमुत पदार्थान्तरमित्यर्थः। इति लुङ्-विलासः॥ २३

भरतः। अनुमन्यास्वहे इत्यादि। सुरेन्द्रत्वं प्राप्यापि आवां त्वया सह भवन्तम् उत्पद्यमानं विरहं न अनुमन्यास्वहे। प्राप्येत्यत्र प्राप्ताविति क्वचित् पाठः। त्वया किम् आस्पदं प्रभुत्वम् आवाभ्यां न प्रत्तं न दत्तम्? राज्यं प्राप्तवन्तावेव॥ २३

অনুবাদ। হে রাম! আমরা ইন্দ্রত্ব পাইলেও আপনার সহিত বিরহ উৎপাদন করিতে ইচ্ছা করি না, তখন আপনার প্রদত্ত সামান্য রাজ্যসম্পদের কথা আর কি বলিব। ২৩

**ततः कथाभिः समतीत्य रात्रि[दोषा]**
**मारुह्य सैन्यैः सह पुष्पकं ते।**
**संप्रस्थिता वेगवशादगाधं**
**सं[प्र]क्षोभयन्तः सलिलं पयोधेः॥ २४**

अन्वयः। ततः ते कथाभिः रात्रिं समतीत्य सैन्यैः सह पुष्पकम् आरुह्य वेगवशात् अगाधं पयोधेः सलिलं संक्षोभयन्तः संप्रस्थिताः॥ २४

मल्लिनाथः। पुनः प्रकीर्णकमेवाधिकृत्याह—तत इत्यादि। ततः संवादानन्तरं ते सर्वे कथाभिरिष्टालापैः रात्रिं समतीत्य नीत्वेत्यर्थः। सैन्यैः सह पुष्पकमारुह्य वेगवशात् पुष्पकवेगवाताहतिबलादित्यर्थः। अगाधं पयोधेः सलिलं संक्षोभयन्तः सन्तः सम्प्रस्थिता अयोध्यां प्रति प्रस्थिता इत्यर्थः॥ २४

भरतः। ततः इत्यादि। ततोऽनन्तरं कथाभिः वाक्यैः दीर्घां रात्रिं समतीत्य गमयित्वा ते श्रीरामविभीषणादयः सैन्यैः सह पुष्पकं विमानम् आरुह्य वेगवशात् समुद्रस्य अगाधम् अतिविस्तरं जलं प्रक्षोभयन्तः अयोध्यां सम्प्रस्थिताः सम्यक् प्रस्थानं कृतवन्तः॥ २४

অনুবাদ। উক্তপ্রকার কথোপকথনের পর তাঁহারা বিবিধ ইষ্টালাপে নিশা অতিবাহিত করিয়া সৈন্যগণসহ পুষ্পকারোহণে অতিবেগে গমন বশতঃ সমুদ্রের অগাধ জল সংক্ষোভিত করিয়া অযোধ্যাভিমুখে প্রস্থান করিলেন। ২৪।

सेतुं महेन्द्रं मलयं च[स]विन्ध्यं
समाल्यवन्तं गिरिमृष्यमूकम्।
सदण्डकारण्यवतीं च पम्पां
रामः प्रियायाः कथयन् जगाम॥ २५

अन्वयः। रामः सेतुं, महेन्द्रं, मलयं, विन्ध्यं, माल्यवन्तं गिरिम् ऋष्यमूकं, सदण्डकारण्यवतीं पम्पां च प्रियायाः कथयन् जगाम॥ २५

मल्लिनाथः। सेतुमिति। राम एष सेतुरेष महेन्द्र इति सेत्वादीन् प्रियायाः कथयन् जगाम॥ २५

भरतः। सेतुमित्यादि। रामः प्रियाया निकटे तानि कथयन् जगाम॥ २५

অনুবাদ। রামচন্দ্র সীতাকে এই সেই সেতু, এই সেই মলয়, মহেন্দ্র, বিন্ধ্য, মাল্যবান্, ঋষ্যমূক পর্ব্বত, এই সেই দণ্ডকারণ্য এবং এই সেই পম্পা-সরোবর এই সকলের বিবরণ বলিতে বলিতে গমন করিলেন। ২৫।

एते ते मुनिजनमण्डिता दिगन्ताः
शैलोऽयं स्थगितपथः[लङ्घितवनः] सचित्रकूटः।

गङ्गेयं सुतनु विशालतीर्थ[र]रम्या
मैथिल्या रघुनन्दनो दिशन्ननन्द ॥ २६

अन्वयः। सुतनु! एते ते मुनिजनमण्डिताः दिगन्ताः, अयं सः चित्रकूटः स्खलितपथः शैलः, विशालतीर्थरम्या इयं गङ्गा मैथिल्याः दिशन् रघुनन्दनः ननन्द ॥ २६

मल्लिनाथः। एत इति। हे सुतनु सुगात्रि! ऊकारान्तोत्तरपदो बहुव्रीहिः। ततः सम्बुद्धौ नदीह्रस्वः। एते परिदृश्यमानास्ते पूर्वानुभूता मुनिजनमण्डिता दिगन्ताः। अयं स चित्रकूटः स्खलितपथः शैलः। विशालतीर्थरम्या इयं सा भागीरथी। इत्यादि मैथिल्या दिशन् सीतायाः कथयन् रघुनन्दनो ननन्द ॥ २६

भरतः। एते इत्यादि। रघुतनयो रामो मैथिल्या इति दिशन् कथयन् ननन्द। किम् इत्याह—हे सुतनु! ते पूर्वम् अनुभूता मुनिजनैः शोभिता दिगन्ताः, सोऽयं मनोहरः चित्रकूटपर्वतः। सा इयं महातीरेण रमणीया गङ्गा। तीरेत्यत्र तीर्थेति पाठे—महातीर्थैः रमणी इत्यर्थः ॥ २६

অনুবাদ। হে সুন্দরি! তুমি যাহা পূর্ব্বে দেখিয়াছিলে, মুনিজনবিমণ্ডিত দিক্‌সমূহ, এই সেই চিত্রকূট পর্ব্বত, যেখানে ভরত আমাদের গতিরোধ করিয়াছিল; এই সেই বিস্তীর্ণ সোপানে রমনীয় গঙ্গা; রঘুনন্দন মৈথিলীকে এই সকল দেখাইতে দেখাইতে অতিশয় আনন্দিত হইলেন। ২৭।

शिञ्जानभ्रमरकुलाकुलाग्रपुष्पाः
शीताम्भःप्रविलयसंप्लवालवालाः [तिलीनाः]।
एते ते सुतनु पुरीजनोपभोग्या
दृश्यन्ते नयनमनोरमा वनान्ताः ॥ २७

अन्वयः। शिञ्जानभ्रमरकुलाकुलाग्रपुष्पाः, शीताम्भःप्रविलयसंप्लवालवालाः, पुरीजनोपभोग्याः, नयनमनोरमाः ते वनान्ताः हे सुतनु। एते दृश्यन्ते ॥ २७

मल्लिनाथः। शिञ्जानेति। शिञ्जानैर्गुञ्जद्भिर्भ्रमरकुलैराकुलान्यग्रपुष्पाणि शिखाग्रकुसुमानि येषां ते। शीताम्भसां प्रविलयेनान्तःप्रवेशेन संप्लवानि समन्तात् प्लुतानि आलवालानि येषां ते। पुरीजनानामयोध्याजनानामुपभोग्याः। नयनानि मनांसि च रम

यन्तीति तथोक्ताः । कर्म्मधारय् । ते पूर्वानुभूताः वनान्ता वनप्रदेशाः हे सुतनु ! एते दृश्यन्ते । अयोध्यासमीपं प्राप्ताः स्म इत्यर्थः ॥ २७

भरतः । स्निग्धानीत्यादि । हे सुतनु ! एते ते वनान्ता दृश्यन्ते । कीदृशाः ?— स्निग्धैः कलं ध्वनद्भिः भ्रमरसमूहैः व्याप्तानि अग्रपुष्पाणि येषां ; प्रविलीयन्ते संश्लिष्यन्ते यत्र स प्रविलयः कुल्याः, शीताम्भश्च असौ प्रविलयश्चेति तेन यः संप्लव आप्लावनं तेन अतिलीनाः कुल्यया अभिषिच्यमानमूलत्वात् पुरीजनोपभोग्याः, सौन्दर्य्यात् नयन-मनोरमाः ॥ २७

অনুবাদ। হে সুতনু ! এই বনভাগস্থ তরুসমূহের অগ্রস্থিত পুষ্পগুলি গুঞ্জনকারী ভৃঙ্গকুলে পরিব্যাপ্ত, শীতল জল বনমধ্যে প্রবিষ্ট হওয়ায় আলবাল-সকল সিক্ত, অযোধ্যাবাসী লোকের উপভোগ্য এবং নয়ন-মনোহর বনপ্রদেশ সকল যাহা তুমি পূর্ব্বে দেখিয়াছিলে, ঐ তাহা দেখা যাইতেছে। আমরা অযোধ্যার নিকটেই আসিয়াছি। ২৭।

स्थानं नः*पूर्वजानामधिकमियमतः प्रेयसी पूरयोध्या
दूरादालोक्यते या हुतविविधहविःप्रीणिताशेषदेवा ।
सोऽयं देशो रुदन्तं पुरजनमखिलं यत्र हित्वा प्रयातौ
आवां सीते वनान्तं सह धृतधृतिना लक्ष्मणेन क्षपान्ते ॥

अन्वयः । नः पूर्वजानां स्थानम्, अतः अधिकं प्रेयसी अयोध्या पूः इयम् दूरात् आलोक्यते ।—या हुतविविधहविःप्रीणिताशेषदेवा, स देशः अयं यत्र रुदन्तम् अखिलं पुरजनं हित्वा सीते ! आवां क्षपान्ते धृतधृतिना लक्ष्मणेन सह वनान्तं प्रयातौ ॥ २८

मल्लिनाथः । स्थानमिति । नोऽस्माकं पूर्वजानां मनुप्रभृतीनां स्थानं वसतिः अत एवाधिकतरमत्यन्तं प्रेयसी प्रियतमा अयोध्या पूर्नगरी इयं दूरादालोक्यते दृश्यते । या पूर्हुतैर्विविधैर्हविर्भिराज्यादिभिः प्रीणितास्तर्पिता अशेषदेवा यया सा । किञ्च स देशोऽयं दृश्यते यत्र देशे रुदन्तमखिलं पुरजनं हित्वा त्यक्त्वा हे सीते ! आवां त्वं चाहं चेत्यर्थः, क्षपान्ते प्रभाते धृतधृतिना धृतसन्तोषेण लक्ष्मणेन सह वनान्तं प्रयातौ । स्रग्धरावृत्तम् । 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्' इति लक्षणात् ॥ २८

भरतः । स्थानं न इत्यादि । हे सुतनु ! सा इयं पुरी दूरादालोक्यते । असौ

* "पूर्वजानामियमधिकमसौ प्रेयसी" इति पाठान्तरम् ।

अयोध्या योऽस्माकं पूर्वजानाञ्च पितृपितामहादीनाञ्च स्थानम्। अतिशयं मे यस्यां प्रियतमा साऽयोध्या हुतै: विविधै: हविर्भि: आज्यादिभि: प्रीणिता तर्पिता अमरा देवा यत्र साऽदृश्यते। हे सीते! सोऽयं देश:,—यत्र रुदन्तम् अखिलं पुरजनं हित्वा त्यक्त्वा अपाया रात्रे: अन्ते प्रतुष्टचित्तेन लक्ष्मणेन सह आवां वनान्ते प्रयातौ गतौ ॥ २८

অনুবাদ। হে সুন্দরি! যে অযোধ্যা যথাবিধি আহুত ঘৃতাদি পবিত্র দ্রব্যে দেববৃন্দকে প্রীত করিয়াছে এবং আমাদের পূর্ব্ব পুরুষ মনুপ্রভৃতির বাসভূমি প্রিয়তম অযোধ্যানগরী ঐ দূরে দেখা যাইতেছে, যেখানে সন্তুষ্টচিত্ত লক্ষ্মণের সহিত আমরা প্রত্যূষে সমগ্র পুরবাসীদিগকে রোদন করিতে দেখিয়াও ত্যাগ করিয়া বনে গমন করিয়াছিলাম, ঐ সেই দেশ দেখা যাইতেছে। ২৮।

तूर्याणामथ नीस्वनेन सकलं लोकं समापूरयन्
विक्रान्तै: करिणां गिरीन्द्रसदृशां क्ष्मां
क्ष्माप[कम्प]यन् सर्वत: ।
सानन्दाश्रुविलोचन: प्रकृतिभि: सार्धं सहान्त:पुर:
संप्राप्तो भरत: समारुतिरलं नम्र: समं मातृभि: ॥२९

अन्वय:। अथ तूर्याणां निस्वनेन सकलं लोकं समापूरयन् गिरीन्द्रसदृशां करिणां विक्रान्तै: सर्व्वत: क्ष्मां क्ष्मापयन् सानन्दाश्रुविलोचन: भरत: प्रकृतिभि: सार्धं सहान्त:पुर: समारुति: मातृभि: समं सम्प्राप्त: अलं नम्र: ॥ २९

मल्लिनाथ:। तूर्याणामिति। अथानन्तरं तूर्याणां वाद्यानां निस्वनेन सकलं लोकं समापूरयन् गिरीन्द्रसदृशां मेरुकल्पानां करिणां गजानां विक्रान्तै: पादविक्षेपै: सर्वत: क्ष्मां क्षितिं क्ष्मापयन् कम्पयन्। क्ष्मायी विधूनने। ण्यन्तात्शट: प्रत्ययादेश:। "अर्त्तिह्री—" इत्यादिना पुगागम:। यकारलोप:। सानन्दास्रे आनन्दवाष्पयुक्ते विलोचने यस्य स भरत: प्रकृतिभि: प्रजाभिरमात्यैश्च सार्द्धं सहान्त:पुर: सावरोध: समारुति: सहनूमान् मातृभि: कौशल्यादिभि: समं सम्प्राप्त: सन् अलमतिभक्त्या नम्र: प्रह्व: । शार्दूलविक्रीडितं वृत्तम्। लक्षणमुक्तम् ॥ २९

भरत:। तूर्याणामित्यादि। अथ अनन्तरं रामयानं प्राप्य प्रकृतिभि: अमात्यै: सार्द्धम्, अन्त:पुरेण सहितो मारुतिना हनूमता सहित:, मातृभि: सह भरत: सम्प्राप्त

आगत: । कीदृश: ?—तूर्य्याणां चतुर्विधवाद्यानां निस्वनेन ध्वनिना सकलं त्रीणं भुवनं समापूरयन् । गिरीन्द्रसदृशां कुलपर्वततुल्यानां करिणां हस्तिनां विक्रान्तै: चिक्रमै: पादनिक्षेपै: वा, क्ष्मां पृथिवीं सर्वत: सर्वां कम्पयन् चालयन्, तथ् कौरिति द्वितीयायाखस् । आनन्दाश्रुवहिते विलोचने यस्य तादृश:, नमनशील: ॥ २९

अनुवाद। তদনন্তর ভরত হনূমানের নিকট রামের আগমনবার্ত্তা শ্রবণে আনন্দাশ্রুপূর্ণলোচনে বিবিধ বাদ্যধ্বনিতে ত্রিভুবন পরিপূর্ণ করিয়া গিরিরাজতুল্য মহাগজের পাদসঞ্চারে ক্ষিতিতল বিকম্পিত করিতে করিতে প্রকৃতিপুঞ্জ, অমাত্যগণ, হনূমান ও মাতৃগণ সমভিব্যাহারে শ্রীরামসমীপে উপস্থিত হইয়া ভক্তিভরে প্রণত হইলেন। ২৯।

**अथ ससंभ्रमपौरजनावृतो**
**भरतपाणिधृतोज्ज्वलचामर: ।**
**गुरुजनद्विजवन्द्यभिनन्दित:**
**प्रविशति स्म पुरं रघुनन्दन: ॥ ३०**

अन्वय: । अथ रघुनन्दन: ससम्भ्रमपौरजनावृत: भरतपाणिधृतोज्ज्वलचामर: गुरुजनद्विजवन्द्यभिनन्दित: पुरं प्रविशति स्म ॥ ३०

मल्लिनाथ: । अथेति । अथ भरतप्रणत्यनन्तरं रघुनन्दनो राम: ससम्भ्रमै: सत्वरै: पौरजनैरावृत: परिवारित: । भरतपाणिना धृतं कम्पितमुज्ज्वलममलं चामरं यस्य स: । गुरुजनेन मातृवर्गेण द्विजैर्वसिष्ठादिभिर्वन्दिभि: स्तुतिपाठकैश्चाभिनन्दित: प्रशंसित: स्वां पुरीमयोध्यां प्रविशति स्म प्रविष्ट: । द्रुतविलम्बितवृत्तम् । 'द्रुतविलम्बितमाह नभौ भरौ' इति लक्षणात् ॥ ३०

भरत: । अथेत्यादि । अथ अनन्तरं रघुनन्दनो राम: पुरम् अयोध्यां प्रविष्टवान् । कीदृश: ?—ससम्भ्रमेण सादरेण पौरजनेन आवृतो वेष्टित: । ससम्भ्रमेत्यत्र ससम्मदेति क्वचित् पाठ: । सम्मदो हर्ष: । पुन: कीदृश: ?—भरतपाणिना धृतम् उज्ज्वलं चामरं यस्य, गुरुजनै: द्विजै: वन्दिभि: स्तुतिपाठकैश्च अभिनन्दित: श्लाघित: ॥ ३०

अनुवाद। ভরত প্রণত হইলে পুরবাসীগণ সসম্ভ্রমে রঘুনন্দনকে বেষ্টন করিয়া রহিল, ভরত স্বহস্তে শুভ্র চামর ব্যজন করিতে লাগিলেন; গুরুজন, মাতৃবর্গ, বশিষ্ঠাদি ব্রাহ্মণও স্তুতিপাঠক কর্ত্তৃক অভিনন্দিত হইয়া শ্রীরাম নিজ রাজধানী অযোধ্যাপুরীতে প্রবেশ করিলেন। ৩০

प्रविधाय धृतिं परां [पुरी] जनानां
'युवराजं भरत' ततोऽभिषिच्य।
अघटे तुरगाध्वरेण यष्टु
कृतसंभारविधिः पतिः प्रजानाम् ॥ २१

अन्वयः। ततः प्रजानां पतिः जनानां परां धृतिं प्रविधाय भरतं युवराजम् अभिषिच्य कृतसम्भारविधिः तुरगाध्वरेण यष्टुं अघटे ॥ २१

मल्लिनाथः। प्रविधायेति। ततः पुरप्रवेशानन्तरं प्रजानां पती राजा रामः जनानां प्रजानां परां धृतिं प्रविधाय सम्यक्-पालनेन परमानन्दमुत्पाद्य भरतं युवराजमभिषिच्य युवराजं कृत्वेत्यर्थः। कृतः सम्भारविधिर्यज्ञसम्पादनं येन स सन् तुरगाध्वरेण अश्वमेधयागेन। जातावेकवचनम्। तुरगाश्वमेधैरित्यर्थः। 'अश्वमेधशतैरिष्ट्वा ब्रह्मलोकं गमिष्यति' इति वाल्मीकिवचनात्। यष्टुं देवान् पूजयितुं अघटे घटते स्म प्रवृत्त इत्यर्थः ॥ २१

भरतः। प्रविधायेत्यादि। ततोऽनन्तरं प्रजानां पती रामः पुरीजनानां धृतिं प्रविधाय दानसंवादनादिभिः प्रकृष्टां कृत्वा युवराजं भरतम् अभिषिच्य यौवराज्ये भरतस्य अभिषेकं कृत्वा कृतसम्भारविधिः कृतयज्ञोचितसामग्रीकः सन् तुरगाध्वरेण अश्वमेधेन यज्ञेन यष्टुं यागं कर्तुं अघटे चेष्टितवान् ॥ २१

कुन्तमितरथविद्यावैभवाश्वगोष्ठीवरहरिहरखानख्यातवंशाम्बुधीन्दुः।
भुवनविदितकीर्तिः सेनगौराङ्गतो योऽजनि स भरतसेनो भट्टिटीकाञ्चकार ॥

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लिकात्मजश्रीभरतसेनकृतायां मुग्धबोधिन्यां
भट्टिटीकायां पुरप्रवेशो नाम द्वाविंशतितमः सर्गः ॥ २२

समाप्तश्चायं भट्टिग्रन्थः।

অনুবাদ। প্রজানাথ রাম নগরপ্রবেশের পর প্রজাগণের পরম প্রীতি সম্পাদন করিয়া ভরতকে যৌবরাজ্যে অভিষিক্ত করতঃ যজ্ঞীয় দ্রব্যসকল সংগৃহীত করিয়া শত অশ্বমেধ যজ্ঞ দেবপূজায় প্রবৃত্ত হইলেন। ৩১

इदमधिगतमुक्तिमार्गचित्रं
विवदिषतां वदतां च सन्निबन्धात्।
जनयति विजयं सदा जनानां
युधि सुसमाश्रितमैश्वरं यथास्त्रम् ॥ २२

अन्वयः । उक्तिमार्गैश्चित्र' सुसमाहितम् इदम् अधिगतं 'युधि ऐश्वरम् धनुः' यथा उक्तिमत्त्वात् विवदिषतां वदतां च जनानां सदा विजयं जनयति ॥ ३२

मल्लिनाथः । इत्थं नायकाभ्युदयान्तं काव्यमुक्त्वा सम्प्रति प्रेक्षावत्प्रवृत्त्यर्थं स्वकाव्यस्य सप्रयोजनतामाह—इदमिति । उक्तिमार्गैर्भणितिभङ्गिभिश्चित्रमद्भुतं सुसमाहितं गुणालङ्कारपरिष्कृतमिदं काव्यमधिगतं परिशीलितं सत् युधि अधिगतमुक्तिमार्गमवगतमोचनप्रकारं तत्र तत्र चित्रमद्भुतं चित्राढ्यं वा सुसमाहितं सुष्ठु धनुषि संहितमैश्वरमस्त्रं यथा पाशुपतमिव सन्निबन्धात् सम्यग्गुम्फनात् 'अन्यत्र सम्बन्धमात्रं' ... हेतोः विवदिषतां विवदितुं विजिगीषुमिच्छतां ... जनानां वक्तृजनानामन्यत्र जिगीषुजनानामित्यर्थः । सदा जयं वादे जयमन्यत्र युद्धे जयं जनयति प्रयच्छति ॥ ३२

অনুবাদ। বিবিধ বাক্যভঙ্গিদ্বারা বিচিত্র গুণালঙ্কারে বিরচিত এইকাব্য-পরিশীলিত হইলে যুদ্ধে ধনুকে আরোপিত পাশুপতাস্ত্র যেমন বিজয়েচ্ছু বীরগণকে সর্ব্বদাই জয়প্রদান করে, সেইরূপ এই কাব্যও বিচিত্রভাষী বক্তাগণের জয়দান করিবে। ৩২

**दीपकल्पः[तुल्य]प्रबन्धोऽयं शब्दलक्षणचक्षुषाम् ।**
**हस्तादर्श[मर्श] इवान्धानां भवेद्व्याकरणादृते ॥३३**

अन्वयः । अयं प्रबन्धः शब्दलक्षणचक्षुषां दीपकल्पः, व्याकरणादृते अन्धानां हस्तादर्श इव भवेत् ॥ ३३

मल्लिनाथः । सम्प्रति वैयाकरणस्यैवात्राधिकार इत्याह—दीपेति । अयं मत्कृतः प्रबन्धः काव्यसन्दर्भः शब्दलक्षणं व्याकरणं तदेव चक्षुर्येषां वैयाकरणानां दीपकल्पो दीपतुल्यः । वैयाकरणानामयं प्रबन्धश्चक्षुष्मतां दीप इवोपकरोतीत्यर्थः । व्याकरणादृते तद्रहितानामित्यर्थः अन्धानां हस्तादर्शः करस्थदर्पण इव भवेत् । अवैयाकरणस्यायं प्रबन्धोऽन्धस्यादर्श इव नोपकरोतीत्यर्थः ॥ ३३

অনুবাদ। আমার কৃত এই কাব্যসন্দর্ভ ব্যাকরণরূপ চক্ষুষ্মান্ ব্যক্তি অর্থাৎ ব্যাকরণবেত্তা পণ্ডিতগণের পক্ষে প্রদীপতুল্য, ব্যাকরণ অনভিজ্ঞদিগের পক্ষে অন্ধের হস্তস্থিত দর্পণের ন্যায় বিফল হইবে। ৩৩

व्याख्यागम्यमिदं काव्यमुत्सव: सुधियामलम्।
हता दुर्मेधसश्चास्मिन् विद्वत्प्रियतया मया॥ ३४

अन्वय:। इदं काव्यं व्याख्यागम्यं, सुधियाम् अलम् उत्सव:, मया विद्वत्प्रियतया अस्मिन् दुर्मेधस: हता:॥ ३४

मल्लिनाथ:। किं चेदं काव्यं न सर्वसुलभमित्याह—व्याख्येति। इदं काव्यं व्याख्यया व्याख्यानेनैव गम्यं गुरुमुखवेद्यमित्यर्थ:। एवमेव सुधियां विदुषामलमत्यन्तमुत्सव आनन्द:। मया विद्वांस: प्रिया यस्य तस्य भावस्तत्ता तया विद्वत्प्रियतया विद्वल्लुब्धतयेत्यर्थ:। अत्रास्मिन् काव्ये विषये दुर्मेधसो दुर्बुद्धयो मूढा:। "नित्यमसिच् प्रजामेधयो:" इत्यसिच्प्रत्यय:। हता उपेक्षिता:। विदुषामेवात्र प्रवेशोऽस्तु, मा भूदविदुषां तत: किमिति भाव:॥ ३४

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहामहोपाध्यायकोला-चलमल्लिनाथसूरिविरचिते भट्टिकाव्यव्याख्याने सर्वपथीनाख्याने तिङन्तकाण्डे लुङ्विलासो नाम द्वाविंश: सर्ग:॥ २२

इति भट्टिकाव्ये द्वाविंशतितम: सर्ग:।

অনুবাদ। এই কাব্যখানি গুরুমুখের ব্যাখ্যা দ্বারাই সুখবোধ্য, সুধীগণই ইহাতে নিরতিশয় আনন্দলাভ করিবেন, ইহা বিদ্বান্ লোকেরই প্রিয়বস্তু, এইজন্য আমি ইহাতে মূর্খদিগকে বঞ্চিত করিয়াছি। ৩৪

काव्यमिदं विहितं मया वलभ्यां
श्रीधरसेन[सूनु]नरेन्द्रपालितायाम्।
कीर्त्तिरतो भवतान्नृपस्य तस्य।
प्रेमकर: क्षितिपो यत: प्रजानाम्॥ ३५

अन्वय:। मया श्रीधरसेननरेन्द्रपालितायां वलभ्यां इदं काव्यं विहितं, यत: क्षितिप प्रजानां क्षेमकर: अत: तस्य नृपस्य कीर्त्ति: भवतात्॥ ३५

অনুবাদ। আমি শ্রীধরসেন নৃপপালিত বলভী-নগরীতে অবস্থানকালে এই কাব্যখানি রচনা করিয়াছি, কারণ ঐ নৃপতি প্রজালোকের হিতৈষী অতএব সেই নরপতির কীর্ত্তি নির্ম্মল শোভিত হউক। ৩৫

দ্বাবিংশ সর্গ সমাপ্ত।

श्री तत्सत्। श्री तत्सत्॥ श्री तत्सत्॥